**नत्वा फणीशं नागेशस्तनुतेऽर्थप्रकाशकम्**
**मनोरमोमार्द्धदेहं लघुशब्देन्दुशेखरम् ॥३॥**

**ग्रन्थसमाप्तिग्रन्थप्रचारादिप्रतिबन्धकदुरितप्रशमाय समुचित-**

---

याचकानामित्यादिना विशेषणत्रयेण। चिकीर्षितस्य महाभाष्यगूढार्थप्रकाशनस्य महाभाष्यकृत्प्रसादाधीनतया "साधुमञ्जलिकर्मणेति" न्यायमनुस्मरंस्तन्नमस्कारात्मकमङ्गलमातनोति। नत्वा फणीशमिति। फणिनामीशः पतञ्जलिस्तस्यानन्तांशत्वात् ॥

यत्त्वादौ पतञ्जलिनामकीर्तनरूपमङ्गले सत्यपि "आशीर्नमस्क्रियावस्तुनिर्देशो वापि तन्मुख" मित्यभियुक्तोक्तेर्नत्यात्मकमपि मङ्गलम्प्रतिपादयतीति व्याचख्युस्तन्न। अभियुक्तोक्तेरथेत्यादिमङ्गलासंग्रहात् काव्यारम्भमङ्गलमात्रविषयकतया प्रकृतानुपयोगात्। शास्त्रनिबन्धनेषु सर्वत्र नमस्कारात्मकमङ्गलस्यैव दृष्टचरत्वात्। नागेशइति। स्वनामोत्कीर्तनं कीर्त्यनुवृत्त्यर्थम्। न "चात्मनामे"ति निषेधश्शङ्क्यः। "श्राद्धे विवाहे सङ्कल्पेऽथापत्कालादिषु क्वचित्। स्वनामग्रहणङ्कुर्वञ्छ्रेयस्कामोऽप्यदोषभा"गित्यत्रादिपदेन प्रतिज्ञायास्सङ्ग्रहेणादोषात्। अत एव "गोनर्दीयस्त्वाह" "रामो द्विर्नाभिभाषत" इत्यादयस्स्वरसत उपपद्यन्ते। येत्वत्रोपायान्तरान्वेषिणस्ते मान्याः। अन्वेषणप्रकाराश्च परिभाषेन्दुटिप्पणीतोऽवसेयाः। स्मृतिप्राप्तनिषेधस्य लौकिकयुक्तिभिः परिहर्तुमनौचित्यात्। तनुत इति। कीर्तिरूपफलस्य कर्तृगामित्वेनात्मनेपदम्। अर्थप्रकाशकमित्यनेन स्वग्रन्थस्य सर्वसिद्धान्तप्रकाशकत्वम्, "मनोरमोमार्धदेह" मित्यनेनागतार्थता च सूचिते। लघुशब्देन्दुशेखरमित्युक्त्येतोपि विशेषजिज्ञासुभिर्बृहच्छेखरतोऽवसेय इति सूचयति। अनुबन्धचतुष्टयं यथायथमूहनीयम्। दुरितप्रशमायेति। मङ्गलस्य विघ्नध्वंस एव फलम्। समाप्तिस्तु बुद्धिप्रतिभादिकारणकलापादेव। कार्यमात्रंप्रति क्लृप्तकारणभावेन प्रतिबन्धकात्यन्ताभावेनैव कार्योपपत्तौ तत्सहभूतस्य विघ्नध्वंसस्य समाप्तिम्प्रत्यन्यथासिद्धत्वेन कारणत्वायोगेन मङ्गलस्य समाप्तिकारणत्वे विघ्नध्वंसस्य तज्जन्यजनकत्वघटितव्यापारत्वासम्भवान्मङ्गलस्य समाप्तिकारणतावादस्यानौचित्यमितिभावः। समु-

ऋषित्रयनमस्काररूपं मङ्गलमाचरन् शिष्यशिक्षायै व्याख्यातृश्रोतॄणामनुषङ्गतो मङ्गलाय च निबध्नाति । मुनित्रयमिति । कारक-

---

चितेति । तत्त्वञ्चैतच्छास्त्रप्रवर्तकऋषित्रयकर्मकत्वेनेति बोध्यम् । अनुषङ्गश्च फलान्तरेच्छया कृतस्य फलान्तरसम्बन्धः । निबध्नातीति । निबन्धनञ्च तद्बोधकशब्दस्य ग्रन्थघटकत्वम् । कारकविभक्तेरिति । उपपदविभक्तेरिति न्यायात् । बलवत्त्वादिति । नन्वत्र पुंवद्भावः कथम् । आकडारसूत्रस्थभाष्यपर्यालोचनया गुणवचनसंज्ञायास्तद्धितान्तेऽभावात् । "त्वतलो"रिति सूत्रे तादृशगुणवचनानामेव ग्रहणस्य वक्ष्यमाणत्वात् । नच कृत्तद्धितसमासेभ्यस्सम्बन्धाभिधानम्भावप्रत्ययेनेत्यभियुक्तोक्त्या बलवच्छब्दादपि त्वप्रत्यये बलसम्बन्धस्यैव प्रतीत्या तस्य स्त्रीपुंससाधारण्येन स्त्रीलिङ्गशब्दप्रतिपाद्यकारकविभक्तावन्वये न बाधकम् । अत एव "पृथिव्या गन्धवत्त्वं लक्षण" मित्यादयस्सङ्गच्छन्त इति वाराणसेयोक्तरीत्या निर्वाह इति वाच्यम् । बलसम्बन्धस्योभयसाधारणत्वेऽपि स्त्रीलिङ्गशब्दघटितवाच्यस्यैव स्त्रियामन्वयौचित्यात् । अत एव "शरदःकृतार्थतेत्यादौ सामान्ये नपुंसकमित्यन्यादृशमेव समाधानमभियुक्तानां सङ्गच्छत" इति चेन्न । "कुक्कुट्यादीनामण्डादि"ष्विति वार्तिकप्रत्याख्यातृभाष्यरीत्या प्रथमं स्त्रीत्वाविवक्षायां स्त्रीप्रत्ययाप्राप्त्या पश्चादेकार्थीभावमहिम्ना तदप्राप्त्या निरुक्तरूपसिद्धेः । सामान्ये नपुंसकमिति वा समाधेयमिति भट्टोक्तरीत्या निर्वाहात् ॥

स्यादेतत् । नमःपदार्थान्वयविवक्षायाञ्चतुर्थी, कृधात्वर्थान्वयविवक्षायान्द्वितीयेति तयोर्विषयभेदात् कृतंबाध्यबाधकभावविचारेण । अत एव 'रावणाय नमस्कुर्या'दिति भट्टिप्रयोगस्सङ्गच्छते । नच स्वरादिपठितस्य सत्त्वार्थकस्य स प्रयोग इति वाच्यम् । तस्यागतित्वेन सत्त्वाऽनापत्तेः । नच

**विभक्तेर्बलवत्त्वाद् द्वितीया । परिभाषयेति । नमःशब्दस्य बुद्धिस्थ-**

---

तत्र सविसर्गपाठ एव जयमङ्गलानुरोधात् कल्प्यत इति वाच्यम् । "स्वयम्भुवे नमस्कृत्ये"त्यादौ समासानुरोधेन गतित्वस्यावश्यकतया तत्र चतुर्थ्यर्थे निरुक्त-विषयविभागस्यावश्यकत्वात् । तस्माद्विनिरूप एव मूलाशय इति चेन्न । द्योतकवाचकसमभिव्याहारे तदर्थविषयताया अविशेषादुभयप्रयोज्यत्वस्वीकारेण नमःपदस्य निपाततया द्योतकत्वेन कृधातुप्रयोज्यविषयतायान्नमःपदप्रयोज्य-त्वाव्याघातेन नमःपदप्रयोज्यविषयतानिरूपितविषयताप्रयोजकत्वेन तात्पर्य-विषयाच्चतुर्थ्यांति "नमस्त्वस्त्वि"त्यस्यार्थेन कृधात्वर्थान्वयविवक्षायामपि चतुर्थी-प्रसङ्गेन बाध्यबाधकभावविचारस्यावश्यकत्वात् । न चैवंसति स्वयम्भुवे नमस्कृत्येत्यादौ चतुर्थ्यनुपपत्तिरिति वाच्यम् । अनुकूलयितुमित्यध्याहारेण कर्मत्वाविवक्षया वा तत्समर्थनात् । यत्तु स्वस्त्यादिसाहचर्याद्वाचकस्य नम-श्शब्दस्य ग्रहणम् । प्रकृते तु द्योतकत्वेन न चतुर्थीप्रसक्तिरिति तन्न । "नमोवरिव" इतिसूत्रस्थभाष्यविरोधेनानित्यायास्सहचरितपरिभाषाया:प्रकृत-सूत्रेऽप्रवृत्तेः । तत्र हि "नमस्यति देवा" नित्यादावुपपदविभक्तेरितिन्यायेन चतुर्थी वारिता । साहचर्याश्रयणे तत्रापि क्यचा वाचकत्वेन नमसो द्योतक-त्वेन चतुर्थ्यप्राप्त्या तदसङ्गतिस्स्पष्टैव । यत्तु साहचर्यं नात्र व्यवस्थापक-मन्यथाऽजन्तत्वादिना साहचर्यग्रहणापत्तौ दूषणगणपात इति तन्न । विवक्षित-धर्मेणैव साहचर्यस्य व्यवस्थापकत्वात् । अन्यथा परिभाषाया निर्विषयत्वापत्तेः ।

**बुद्धिस्थपरामर्शकत्वादिति** । बुध्या सन्निधापितानां प्राचां परा-मर्शकत्वादित्यर्थः । बुद्धिविषयतावच्छेदकत्वोपलक्षितधर्मावच्छिन्ने शक्तत्वा-दित्यर्थकथनन्तु न सम्यक् । पूर्वपरामर्शकत्वस्थलेऽपि तस्याव्याघातेन भेदेन व्यवहारासङ्गत्यापत्तेः । ममतु तादृशधर्मावच्छिन्नस्य पूर्वनिर्दिष्टत्वबुद्धि-

परामर्शकत्वात् प्राचामुक्तीस्तिरस्कृत्येत्यर्थः । मुनित्रयोक्तीर्विचार्येत्यर्थो वा । परिभावस्तिरस्क्रियेति कोशात्तिरस्कारार्थकस्य धातोर्विचारार्थ-

---

सन्निहितत्वभेदाद्भेदेन व्यवहारस्सङ्गच्छते । तिरस्कृत्येति । ननु परिपूर्वकभूधातोरेव वक्ष्यमाणकोशबलात्तिरस्कारार्थत्वलाभेन णिजर्थाविवरणादिदंन्यूनम् । नच णिचोद्योतकत्वं शङ्क्यम् । तत्पक्षस्य णिजर्थस्याप्राधान्यापत्त्यादिदूषणैर्णिजन्ते ग्रन्थकृतैव दूषयिष्यमाणत्वेनैतद्ग्रन्थस्य तदभिप्रायकतानौचित्यादिति चेन्न । तिरस्कारार्थकपरिभावशब्दात्तत्करोतीति णिजिति स्वीकारेण तिरस्कारं कृत्वेत्यर्थेऽस्यार्थस्य फलितत्वेनादोषात् । यत्तु "परिभवतेस्तिरोभवनं णिचोव्यापारश्चार्थ इति विवरणं सम्यगेवे"ति । यदपि "निवृत्तप्रेषणाद्धातोर्हेतुमण्णिजि"ति । तत्सर्वं तिस्कारार्थकस्य धातोरित्यादिवक्ष्यमाणग्रन्थस्वारस्यभञ्जकतयोपेक्ष्यम् । विचार्येत्यर्थोवेति । वाशब्दस्समुच्चये । तथाचावृत्त्योभयतात्पर्यकत्वमस्येति भावः । तेन न सकृदुच्चरितन्यायावकाशः । कोशात्तिरस्कारार्थकस्येति । ननु कोशे घजन्तस्यैवार्थविवरणं, नतु धातोः । अतएव परिभवशब्दपाठस्सार्थकः । तथाच कोशाद्धात्वर्थत्वनिश्चयः कथमिति चेन्न । अत्यन्तरूढातिरिक्तेष्ववयवार्थासंसृष्टार्थानुभवस्य क्वाप्यदृष्टचरत्वेन भावप्रत्ययानाम्पदसाधुत्वमात्रोपयोगित्वमिति विशेषदर्शिनान्धातोस्तदर्थकत्वनिश्चयस्य कोशात्सम्भवात् । कोशात्तिरस्कारार्थत्वेन निश्चितस्य परिपूर्वकभूधातोस्सम्बन्धी यो धातुर्हेतुमण्ण्यन्तस्तस्य विचारार्थकत्वेऽपि न बाधकम् । धातूनामनेकार्थत्वेन परिभवतेर्विषयत्वापत्त्यर्थकत्वेन णिचा तदनुकूलव्यापारलाभेन तत्सङ्गतेरिति विशिष्टार्थः । एतेन यस्य तिरस्कारार्थत्वम्परिभवतेर्न तस्य विचारार्थकत्वं यस्य तत्त्वं ण्यन्तस्य न तस्य तिरस्कारार्थकत्वमितीदमसङ्गतमित्यपास्तम् । तिरस्कारार्थस्येतिव्यधिकरणषष्ठीति तात्पर्यात् । केचित्तु घटकत्वं षष्ठ्यर्थः तथाच परिभावशब्दघटकपरिभावितिवान्तस्य णिलोपटिलोपयो-

**कत्वेऽपि न बाधकम् । धातूनामनेकार्थत्वात् । अत एव "परौ भुवोऽवज्ञाने" इति सङ्गच्छते । एतेन स्वग्रन्थस्य प्राचीनग्रन्थैरगतार्थता**

---

धातुत्ववत इत्यर्थः । धातुत्वसम्पत्तिश्चानेकार्थत्वलाभायेति व्याचख्युस्तन्न । 'उपसर्गसमानाकार'मितिन्यायेन परिभावित्यस्य धातुत्वस्य दुर्निरूपत्वात् । धातूनामनेकार्थत्वप्रवादस्यौपदेशिकधातुमात्रविषयकत्वेन प्रकृतानुपयोगाच्च । यदुक्तं "तिरस्कारार्थकपरिभावशब्दघटकभूधातोरित्यर्थ" इति, तत्तु 'यस्य तिरस्कारार्थकत्व' मित्यादिदोषदूषिततयोपेक्ष्यम् । णिचोद्योतकतापक्षस्तु निराकृत एवाधस्तात् । अतएव । परिभवतेस्तिरस्कारार्थातिरिक्तार्थसत्त्वादेव । धातूनामनेकार्थत्वादेवेत्येव वार्थः । प्रमाणानां सामान्ये पक्षपातित्वात् । संगच्छत इति । अन्यथा व्यावर्त्याभावात्तद्वैयर्थ्यं स्पष्टमेव ॥

परेतु धातूनामनेकार्थत्वञ्चिन्त्यम् । तत्त्वे सतितात्पर्येऽबाधितयावदर्थप्रतीतेरिष्टापत्तावर्थनिर्देशस्यवैयर्थ्यापत्तेः । अवज्ञान इतितु प्रायशः परिशब्दस्य सर्वत इत्यर्थकत्वेन प्रसिद्धेरिहापि तथैवेति भ्रमवारणायेत्याहुस्तन्न । अर्थनिर्देशस्योपलक्षणत्वस्यान्यत्रोक्तत्वेन तस्य नियामकत्वायोगात् । भूवादिसूत्रे भाष्ये भ्वेधितिसङ्घातस्य धातुसंज्ञावारणाय कृतेन "परिमाणग्रहण"श्चेति वार्तिकेनार्थनिर्देशस्यापाणिनीयत्वबोधनात् । दृश्यतेच निर्दिष्टार्थातिरिक्तार्थकत्वं लोकेऽनुभवतीत्यादौ । नच तत्रोपसर्गवशात्तदर्थप्रतीतिः । तेषां द्योतकत्वेन धातोरेवानुभवार्थकत्वात् । अत एवानुभूयत इत्यादौ कर्मणिलकारादिसिद्धिरित्यन्यत्र स्पष्टम् । नदी वहतीत्यादौ तावताप्यनिर्वाहात् । अतएव "धातोरर्थान्तरेवृत्ते" रित्यादि सङ्गच्छते । एकधातुनिष्पन्नानां विभिन्नार्थकानां विनोपसर्गम्बहूनां लोके दर्शनाच्च । "अनेकार्था अपि धातव" इति भाष्यादस्यार्थस्योक्तत्वाच्च । भाष्येऽपिशब्दाद्यथाप्रयोगमेवार्थविशेषो निर्णेतव्य इत्यस्य लाभादतिप्रसङ्गाभावात् । एवञ्चसत्यवज्ञान इतिच स्वारस्यमधिरोहतीति सुधीभिराकलनीयम् ।

आवृत्त्यार्थद्वयस्वीकारफलंदर्शयति । **एतेनेत्यादिना** । **इदमस्तुसन्नि-**

**समूलत्वञ्च ध्वनितम् । भाविनोऽपि बुद्ध्या विषयीकरणादियमिति निर्देशः । सिद्धान्तप्रकाशकत्वेनातिदुरूहग्रन्थान्तरेभ्यः सिद्धान्तज्ञाने जायमानस्य क्लेशरूपसन्तापस्य शामकत्वेन च कौमुदीसा-**

---

कृष्टमित्युक्त्या वक्ष्यमाणस्यासन्निकृष्टत्वादिदमा निर्देशो नोचित इत्यतआह **भाविनोपीति** । अर्थस्येति शेषः । ग्रन्थस्येति शेष इति तु न सम्यक् । पदसन्दर्भात्मकस्य ग्रन्थस्यैकबुद्ध्युपारोहस्य वक्तुमशक्यत्वात् । इयमिति-स्त्रीलिङ्गनिर्देशस्तु ग्रन्थबोधकस्त्रीलिङ्गकौमुदीशब्दसामानाधिकरण्यानुरोधेन । एतेनोपमानगतलिङ्गारोपादिति परास्तम् । उपमानगतलिङ्गारोपस्योपमेये क्वाप्यदृष्टत्वात् । "यत्तूपमाया लिङ्गभेदजदुष्टत्वनिरासायारोप" इति । तदपि न, अत्रोपमालङ्कारस्य व्यङ्ग्यत्वेन सादृश्यमूलकेतरालङ्कारेषु तस्य दोषत्वस्वीकारेऽपि चन्द्र इव मुखमिति प्रसिद्धस्थलानुरोधेनोपमालङ्कारे दोषत्वाभावस्य सर्वालङ्कारिकसमयसिद्धतया तन्निरसनोपायान्वेषणवैफल्यात् । एतद्ग्रन्थस्य कौमुदीसादृश्यप्रयोजकन्धर्मन्दर्शयति । **सिद्धान्तप्रकाशकत्वेनेत्यादिना** । **शामकत्वेनेति** । शम आलोचन इति चुरादिपठितात् स्वार्थणिजन्ताण्वुलि रूपम् । धातूनामनेकार्थत्वान्नार्थासङ्गतिः । दैवादिकात्तु "नोदात्तोपदेशे"तिवृद्धिनिषेधाण्णिच्यपि मितां ह्रस्वापत्त्या नेदं रूपम् । यद्वा शमक एव शामक इति स्वार्थेऽण् । एतेन प्रामाणिकग्रन्थैरगतार्थता सूचिता ॥

अथ "प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तत" इत्यभियुक्तोक्त्या ग्रन्थप्रणयनप्रयोजनं कीर्तिः । सा चाध्येतॄणामध्ययनप्रवृत्त्यधीना । तत्र प्रयोजकमनुबन्धचतुष्टयम्, तत्त्वञ्च ग्रन्थाध्ययनप्रवृत्तिप्रयोजकत्वम्, ग्रन्थाध्ययनप्रवृत्तिप्रयोजकज्ञानविषयत्वं वेति तत्प्रदर्शनमावश्यकमिति ग्रन्थकर्तृसमयः । अनुबन्धाश्च विषयप्रयोजनसम्बन्धाधिकारिणः । तत्र विषयप्रदर्शनं विषयस्य

**दृश्यम्। अनेन वैयाकरणसिद्धान्ता विषयाः तज्ज्ञानं प्रयोजनं, तज्जिज्ञासुरधिकारीत्यादि सूचितम्॥**

---

ज्ञातताज्ञानस्य प्रवृत्तिप्रतिबन्धकस्य निवर्तनेन प्रवृत्तौ परम्परयोपयुज्यते। प्रयोजनश्च साक्षात्। अधिकारीच प्रवृत्तिकारणीभूतकृतिसाध्यत्वज्ञाने। सम्बन्धश्च यथायथं कृतिसाध्यत्वज्ञानादाविति। यद्वा कृतिसाध्यत्वज्ञानेष्टसाधनत्वज्ञानयोः प्रवृत्तिकारणयोरनुबन्धचतुष्टयस्य यथायथं भानमिति तस्य प्रवृत्तिप्रयोजकत्वन्तज्ज्ञानविषयत्वं वा स्पष्टम्। तथाच सिद्धान्तकौमुदीत्यनेन सूचितन्तद्विवृणोति। **एतेनेत्यादिना। वैयाकरणसिद्धान्ता विषया इति।** ग्रन्थजन्यज्ञानविषयस्यैव ग्रन्थविषयत्वात्। अतएव कौस्तुभे वैदिका लौकिकाश्च साधवश्शब्दा इह विषय इति, उद्योते च शब्दज्ञानरूपे प्रयोजने उक्ते विषयोऽप्युक्तः। शास्त्रजन्यज्ञानविषयस्यैव शास्त्रविषयत्वादिति चोक्तम्। अत एव वेदान्तस्य ब्रह्मात्मैक्यं विषयः, तर्कशास्त्रस्य सप्तपदार्था विषय, इत्यादयोऽभियुक्तानां व्यवहारास्सङ्गच्छन्ते। एतेन प्रवृत्त्युद्देश्यस्यैव विषयरूपानुबन्धत्वस्यौचित्येन सिद्धान्तज्ञानस्यैव तत्त्वेनेदं चिन्त्यमित्यपास्तम्। "प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तत" इति न्यायेन प्रवृत्त्युद्देश्यस्य प्रयोजनत्वलाभाच्च। एतेन तज्ज्ञानं प्रयोजनमित्यपि व्याख्यातम्। यत्तु इदंचिन्त्यम्, वैयाकरणसिद्धान्तज्ञानस्य तदध्ययनरूपत्वेन तस्य कौमुदीप्रणयनप्रयोजनत्वेन ग्रन्थाध्ययनप्रवृत्तौ प्रयोजनत्वाभावात्। अन्यप्रयोजनज्ञानेनान्यत्र प्रवृत्तेरयुक्तत्वात्। तस्मात् रक्षोहादीनि भाष्योक्तानि प्रयोजनानि वक्तुमर्हाणीति, तन्न, रक्षादीनां प्रयोजनप्रयोजनत्वस्य शब्दज्ञानस्य साक्षात् प्रयोजनत्वस्य च प्रदीपोद्योतकाराभ्यां व्यवस्थापितत्वात्। अध्ययनस्य गुरुवाक्यश्रवणरूपत्वेन तस्य सिद्धान्तज्ञानरूपत्वकथनासङ्गतेश्च। **तज्जिज्ञासुरिति।** ग्रहणधारणपटुद्विज

**अइउण्। एषां क्रमबोधकत्वेऽप्यादिरन्त्येनेत्यनेनैकवाक्यतया वृत्तिपरिच्छेदकत्वेन संज्ञासूत्रत्वम्। क्रमस्य संज्ञाद्वारैवोपयोगात्।**

---

इति शेषः। एतेन मूर्खाणां चण्डालादीनामप्यधिकारित्वप्रसङ्गादिदं चिन्त्यमित्यपास्तम्। यत्तु अधीतकाव्यकोशादिर्द्विजोऽधिकारीति। तन्मन्दम्। जिज्ञासाभाववतोऽधिकारित्वस्यानङ्गीकारात्॥

ननु "संज्ञा च परिभाषा च" त्याद्यभियुक्तोक्तसूत्रविभागे माहेश्वरसूत्राणां कुत्रान्तर्भाव इत्यत आह। एषामित्यादि। क्रमबोधकत्वेऽपीति। क्रमविशिष्टवर्णोपस्थापकत्वेपीत्यर्थः। शास्त्रे क्रमवैशिष्ट्येनोपस्थितानामेव वर्णानामुपयोगात्। अन्यथेको यणचीत्यादौ यथासंख्यसूत्रेण निर्वाहस्य स्थानेऽन्तरतम इतिसूत्रे भाष्यकृत्कृतस्यासङ्गतिस्स्पष्टैव। एतेनेदश्चिन्त्यम्। क्रमे शक्त्यभावेन तद्बोधकत्वासम्भवात्। नच क्रमो नामानुपूर्वी; तथाचानुपूर्व्यवच्छिन्नविषयताकप्रत्यक्षजनकत्वेऽपीत्येवार्थ इति वाच्यम्। सर्वेषामपि सूत्राणान्तथाभूतत्वेनोपादानवैयर्थ्यात्। अथ क्रमवैशिष्ट्येन ज्ञायमानानामेवैषाम्प्रत्याहारबोधकपदघटितसूत्रजन्यबोधधर्मिकाप्रामाण्याज्ञानानास्कन्दितत्वोपयोगित्वेऽपीत्यर्थः। यथा अइउणित्यादेरिकोयणचीत्यादिशास्त्रजबोधधर्मिकाप्रामाण्यज्ञानानास्कन्दितत्वोपयोगिता क्रमवैशिष्ट्येन ज्ञायमानस्यैव, नतु उइअण् इत्यादिव्युत्क्रमवैशिष्ट्येन ज्ञायमानस्य। एतदेवाभिप्रेत्यान्यथेणादिप्रत्याहारे उकारादीनामग्रहणमकारादीनाञ्च ग्रहणम्प्रसज्येतेतिभावमाविश्चक्रुर्ज्योत्स्नाकाराः, न तथान्येषाम्। तेषामादैज्वृद्धिरिति व्युत्क्रमेण ज्ञायमानत्वेऽपि वाक्यार्थबोधोपयोगितासम्भवात्। तेषामपि व्युत्क्रमे पारायणादावदृष्टहानिरिति त्वन्यदिति चेदेतावता कथञ्चित् योजनासम्भवेऽप्युपादानस्य प्रयोजनविरहादेव हेयत्वादिति प्रकाशकृदुक्तिः परास्ता। वृत्तिपरिच्छेदकत्वेनेति। शब्दशास्त्रीयसंज्ञापदनिष्ठशक्तिग्राहकत्वेने-

**एकवाक्यता चादिरकारादिरन्त्येनेता तत्सहशेन णकारादिना सहो-च्चार्यमाण आद्यन्ताक्षिप्तानां संज्ञेति । स्वौजसित्यादीनामप्येतदेक-वाक्यतया सुबादिसंज्ञासूत्रत्वं स्वादिविधायकत्वञ्चेति बोध्यम् ।**

---

त्यर्थः । एवञ्च तस्यापत्यमित्यादेश्शक्तिग्राहकत्वेऽपि नातिप्रसङ्गः । **एकवा-क्यताचादिरिति** । अइउणिति समुदायस्यादिरकारोऽन्त्येन णकारादिना सहो-च्चार्यमाणोऽइउणितिसमुदायस्य संज्ञेत्येवं कौस्तुभोक्तरीत्यैकवाक्यता बोध्या । अइउणित्यादेराद्यन्तविशेषणतया भानम् । एतेषामादिरन्त्येनेत्यस्य च मिलित्वा शक्तिग्राहकत्वेन प्रत्येकं सूत्रत्वेन च विनिगमनाविरहादुभयोरपि संज्ञासूत्रत्व-मिति भावः । एतेन संज्ञासूत्रेणैकवाक्यतया न संज्ञासूत्रत्वसाधिका । अन्यथा विधिशास्त्रेणैवान्ततस्सर्वशास्त्राणामेकवाक्यतायास्सत्त्वेन विधिशास्त्रत्वप्रसङ्गात् । किञ्चाकारादीनामादिपदार्थत्वेन तयोरेकवाक्यताया असम्भवः । पदपदार्थ-योरेकवाक्यतायाः क्वाप्यनभ्युपगमात् । तथा चैषां संज्ञासूत्रत्वव्यवस्थापनमनु-चितम् । किन्त्विष्टबुद्ध्यर्थश्च वर्णानामुपदेश इति भाष्यप्रामाण्यात् अस्साधुरि-त्येवं क्रमेण साधुत्वबोधकतया विधिसूत्रत्वमित्यपास्तम् । अइउणित्येतदुपस्थि-तसमुदायस्यादिपदोपस्थितावयवेऽन्वयेन परस्परनिरूप्यनिरूपकभावापन्नविष-यताप्रयोजकपदघटितत्वरूपपदैकवाक्यतायास्सत्त्वाच्च । इष्टबुद्ध्यर्थश्चेत्यस्य 'आ-गमाश्च विकाराश्च प्रत्ययास्सहधातुभिः । उच्चार्यन्ते ततस्तेषु नेमे प्राप्ताः कला-दयः' इत्यनेन भाष्ये प्रत्याख्यातप्रायत्वेन तत्प्रामाण्येन साधुत्वविधायकत्वस्य दूरापास्तत्वाच्च । संवृतादीनाम्प्रतिषेध इत्यस्मिन्प्रत्याख्यात इष्टबुद्ध्यर्थश्चेत्यपि प्रत्याख्यातप्रायमेवेत्यनेनास्यार्थस्योद्योते स्फुटीकृतत्वाच्च । अतएव कौस्तुभे वर्णोपदेशस्यासाधारणम्फलन्तु प्रत्याहारनिष्पत्तिरित्युक्तम् । अत्रत्यं तत्त्वं सुधी-भिराकलनीयम् । प्रसङ्गादाह । **संज्ञासूत्रत्वं स्वादिविधायकत्वञ्चेति** ॥

एषु संहिताया अविवक्षया न संहिताकार्यम् । अनुकरणत्वेन सौत्र-

---

यत्तु घटपृथिव्यप्तेजोवाय्वाकाशकालदिगात्ममनांसि दश विधानि द्रव्याणीति व्यवहारवारणाय स्वसमभिव्याहृतपदार्थतावच्छेदकव्याप्यमिथोविरुद्धयावद्धर्मबोधनस्यैव विधापदार्थत्वाभ्युपगमेन प्रकृते संज्ञात्वविधित्वयोरेकत्र स्वीकारे तयोरविरोधात् परस्परविरुद्धत्वघटितविधापदार्थस्य बाधितत्वात् षड्विधं सूत्रलक्षणमित्यभियुक्तोक्तेरसाङ्गत्यापत्तेरित्यनेन एतेनेत्यादिपूर्वोक्तयुक्तिभिश्चास्य चिन्त्यतामाहुस्तन्मन्दम् । विधापदार्थस्य परस्परविरोधघटितत्वे सव्यभिचारेत्यादिदुष्टहेतुविभागवाक्यस्य मणिकृदुक्तस्यासाङ्गत्यापत्तेः । स्वसमभिव्याहृतपदार्थतावच्छेदकदुष्टहेतुत्वव्याप्यदोषाणां वायुर्गन्धवान् स्नेहादित्यादौ समावेशात् । एवम्पुनस्त्रिविधश्शरीरेन्द्रियविषयभेदादिति सङ्ग्रहकारोक्तिरपि भज्येत । शरीरत्वविषयत्वयोश्शरीररूपविषये समावेशात् । प्रमेयत्वस्य केवलान्वयित्वेन तस्य केनापि धर्मेण विरोधाभावात् प्रमाण प्रमेयेत्यादिपदार्थविभागप्रतिपादकगौतमीयसूत्रस्यासाङ्गत्यापत्तेश्च । एतेनेत्यादिनोक्तयुक्तीनां निराकृतपूर्वत्वाच्च । शेषे इति सूत्रस्य विधित्वाधिकारत्वयोस्सर्वसम्मतत्वेन तत्राप्येतद्दोषस्य गलेपतितत्वाच्च । नच विभागे विभाज्यभेदस्य हेतुतया प्रकृते तदभावेनायं विभागोऽनुचित इति वाच्यम् । विभाजकधर्मभेदस्यापि विभागहेतुताया उपधेयसङ्करेऽप्युपाधेरसङ्कर इति वदता मणिकृताभ्युपगतत्वेनादोषात् । प्रकृते च विभाजकयोस्संज्ञासूत्रत्वविधिसूत्रत्वयोर्भेदेन न विभागानुपपत्तिः। शेषे इति सूत्रानुरोधात्त्वयाप्येतदवश्याश्रयणीयमेव। घटत्वादिविशेषधर्माणान्द्रव्यत्वव्याप्यानामसर्वज्ञदुर्ज्ञेयतया तत्तद्धर्मैर्विभागस्य कर्तुमशक्यत्वात्तादृशविभागवाक्यस्यैवाभावेन परस्परविरोधनिवेशफलस्य गगनकुसुमायमानत्वादिति ध्येयम् ॥

नन्वक्षरसमाम्नायेऽकारात् सुपि रुत्वयत्वयलोपेषु सन्ध्यप्राप्तावपि इकार

ऋकारयो "रिकोऽसवर्णे" "ऋत्यक" इति प्रकृतिभावेन सिद्धावपि एकारादेरयादिर्दुर्वारा । न चाकारादेस्सुपि पदत्वेन समासग्रहणनियम्यकोटिप्रवेशेन विशिष्टस्य प्रातिपदिकत्वानापत्त्या णादिरित्वार्थं प्रातिपदिकत्वोपवर्णनं वक्ष्यमाणमसङ्गतं स्यादिति वाच्यम् । सूत्रान्त्यवर्णेभ्यो विभक्त्युत्पत्त्यनङ्गीकारेण सुबन्तोत्तरावयवकत्वाभावेन नियम्यकोटावप्रवेशादित्यत आह । **संहिताया अविवक्षयेति** । एवं चानयैव रीत्या निर्वाहेऽकारादेरुपायान्तरेण मन्ध्यभावकथनं विफलमिति नियमव्यावर्त्यताभावस्मूपपाद इति भावः ॥

ननु वाक्य एव संहिताया विवक्षाधीनतया एतेषां प्रातिपदिकत्वस्य वक्ष्यमाणतया वाक्यत्वाभावेन कथं तदविवक्षा । न चैतेषां ब्रह्मोपदेशत्वपक्षे वाक्यत्वं सुस्थमिति वाच्यम् । तदभिप्रायकत्वे समासग्रहणकृतनियमेन प्रातिपदिकत्वानापत्त्या वक्ष्यमाणस्य प्रातिपदिकत्वस्याऽसांगत्यप्रसङ्गादिति चेन्न । वाक्यपदेनैकपदातिरिक्तस्य विवक्षणेनादोषात् ॥

अथैकसूत्रे संहिताया अविवक्षा वक्तुमशक्या । एकयोगत्वस्य संहितापाठेनेतीको गुणेति सूत्रे उद्योते व्यवस्थापितत्वेन संहिताया अविवक्षायां सूत्रभेदापत्तेः । अत एवेको यणचीत्यादौ सौत्रत्वान्ङमुड्वारणं ग्रन्थकृतस्संगच्छते । अन्यथा संहिताऽविवक्षयैव वारयेत् । तयोर्य्वावचिसंहितायामिति प्रारभ्याऽऽध्यायपरिसमाप्तेस्संहिताधिकारस्य वक्ष्यमाणत्वात् । नच प्रतिवर्णं साधुत्वविधायकतया सूत्रत्वमिष्टमेव । चतुर्दशसूत्रीत्वव्यवहारस्त्वनुबन्धचतुर्दशत्वप्रयोज्य औपचारिक इति वाराणसेयोक्तरीत्या निस्तार इति वाच्यम् । साधुत्वविधायकत्वपक्षस्य निरस्तपूर्वत्वात् । प्रत्येकं सूत्रत्वे प्रत्येकोपदेशे तात्पर्यस्य वक्तव्यतया प्रतिवर्णमुपदेशत्वापत्त्या इकारादिषु पुनःपुनरकारोच्चारणस्य प्रतिवर्णमित्संज्ञापरित्राणार्थमावश्यकतयाऽन्यफलकताकथनस्याऽसंगत्यापत्तेश्च । न

त्वाच्च वर्णेभ्यो न विभक्त्युत्पत्तिः । कारप्रत्ययोऽपि न, बाहुलकात् ॥

---

न्दिकेश्वरकृतकाशिकाया "मत्र सर्वत्र सूत्रेषु अन्त्यं वर्णचतुर्दश"मित्यत्र सर्वत्रेति सूत्रविशेषणस्वारस्येन सूत्रभेदस्य वक्तुमशक्त्वात् । स्वारसिकस्य चतुर्दश सूत्रीव्यवहारस्यौपचारिकत्वकथनस्यायुक्तत्वाच्चेति चेन्मैवम् । एकयोगत्वे संहितापाठस्य हेतुतयोपन्यासेन संहितापाठस्यैकयोगत्वव्याप्यताया लाभेऽपि तत्समनैयत्यस्य तद्व्यापकताया वा निरुक्तोद्योततोऽलाभेन संहिताया अविवक्षायां सूत्रभेदे मानाभावात् । यद्वाऽनुकरणत्वेन सौत्रत्वाच्चेति मध्यमणिन्यायेनोभयान्वयि । सौत्रत्वादित्यस्य सूत्रघटकत्वादित्यर्थः । चो हेतौ । यतस्सूत्रघटकत्वमतोऽनुकरणत्वम् । सूत्रघटकानां लक्ष्यस्थाऽनुकरणत्वात् । अनुकरणत्वेनेत्यस्य निपातानुकरणत्वेनेत्यर्थः । एवंच प्रकृतिवदनुकरणमित्यातिदेशेन निपातत्वम् । यद्वा 'अनुकरणं चानितिपर'मिति निपातत्वम् । तेन प्रगृह्यत्वे संहिताकार्याभाव इति भावः । एवंच सौत्रत्वादित्यणपि स्वरसत उपपद्यते । अन्यथैतेषां छन्दस्त्वस्य व्यवस्थापयिष्यमाणत्वेन छन्दस्त्वादित्येव वदेत् । एतेन छन्दोवत्सूत्राणीत्यतिदेशप्रवर्तकं सौत्रत्वं कुत उक्तमिति शङ्का परास्ता । उत्तरत्र त्वनुकरणत्वेनेत्युक्त्याऽनुकार्यानुकरणयोरभेदविवक्षायां प्रातिपदिकत्वाभाव इति भावः । भेदविवक्षायांतु सौत्रत्वादिति पाणिनिसूत्रमूलभूतत्वात् छन्दस्त्वादित्यर्थकतयाऽन्वेति । छन्दस्त्वादिति वक्तव्य एवमुक्तिस्तु पूर्वान्वयानुरोधेन, पूर्वोक्तारुचेर्हेत्वन्तरोपन्यासः । एवंच कौस्तुभोक्तार्थस्सर्वोऽपि संगृहीतो भवतीति ध्येयम् । **न विभक्त्युत्पत्तिरिति** । प्रातिपदिकत्वप्रतिबन्धद्वारेति भावः । "गुणे त्वन्याय्यकल्पने'तिन्यायेन विधिबाधकल्पनायोगात् । नच प्रतिसूत्रं प्रातिपदिकत्वस्य वक्ष्यमाणतया तदवयवत्वेन लुकेष्टसिद्धेरयं प्रयासो विफल इति वाच्यम् । तथासति समासग्रहणकृतनियमेन विशिष्टस्य प्रातिपदिकत्वानापत्तेः । विशिष्टात्सुपोऽनुत्पत्तये निरुक्तोपायस्य तवाप्याश्रयणीयत्वाच्च । ननु विशिष्ट

प्रातिपदिकत्वानुरोधेन समुदायतात्पर्यस्याऽवश्यकतयाऽवयवानां नान्तरीयकतया तत्र तात्पर्ये मानाभावादर्थवत्त्वाभावेन न स्वाद्युत्पत्तिः। अतएव कारप्रत्ययोऽपि न। नच वर्णानामुपदेश इति भाष्येण तत्रापि तात्पर्यमिति वाच्यम्। तथासति हकारादिषु पुनः पुनरकारोच्चारणस्यान्यफलकत्वस्य वक्ष्यमाणस्यासंगत्यापत्तेः। एवंच विभक्तिकारप्रत्ययवारणप्रयासो विफल एवेति चेन्न। समुदायतात्पर्येऽपि प्रत्येकमपि तद्विषयतायास्सत्त्वेनावयवानामप्यर्थवत्त्वानपायात्। अतएव वक्ष्यमाणरीत्या "भवतष्ठक्छसा" वित्यादिसमुदायतात्पर्यस्थलेऽवयवसुबन्तत्वनिबन्धनद्वन्द्वनिर्देशस्संगच्छते। वर्णानामुपदेश इति भाष्यमप्येतदाशयकमेव। इत्संज्ञायान्तु तात्पर्यविषयतापर्याप्तिविवक्षणात् हकारादिषु पुनः पुनरकारोच्चारणस्यान्यफलकताकथनस्य नासंगतिरित्यादि सुधियो विभावयन्तु। कारप्रत्ययोऽपि नेति। वर्णत्वेन लोके व्यवहृताद्वर्णं प्राधान्येनाभिधित्सिते कारप्रत्यय इति वर्णात्कार इत्यस्यार्थेन तत्प्राप्तिः। सच जायमानो "न पुनरन्तरेणाच"मित्याद्युच्चैरुदात्त इति सूत्रस्थभाष्येण "अकारव्यवेता व्यञ्जनाना"मिति तैत्तिरीयप्रातिशाख्यप्रामाण्येन हल्भ्योऽकारव्यवहितो भवति। एतेन तदर्थनिरूपणे शाखाचङ्क्रमणं कुर्वन्तो वर्णत्वव्याप्यधर्मविशिष्टात् कारप्रत्यय इत्यर्थः। वैशिष्ट्यं च स्वावच्छिन्नविषयताकबोधतात्पर्यकत्वस्वानाश्रयीभूतो य उच्चारणार्थकाजितरो वर्णस्तदघटितत्वैतदुभयसम्बन्धेन। उच्चारणार्थकेकारेण सह किकार इत्यादाविष्टापत्तिः। यद्वा द्वितीयसम्बन्धेऽच्स्थानेऽकारो निवेशनीयः। अन्येतु, वैशिष्ट्यं च स्वावच्छिन्नविषयताकप्रत्यक्षजनकघटितत्व, स्वावच्छिन्नविषयताकशाब्दबोधजनकत्वप्रकारकतात्पर्येणोच्चारितत्व, स्वावच्छिन्ननिरूपितशक्त्यधिकरणसमभिव्याहृतं यत् स्वावच्छिन्ननिरूपितशक्त्यनधिकरणेतरत् तदघटितत्वैतत्त्रितयसम्बन्धेन, किकार, इत्यस्यानिष्टत्वे तु स्ववृत्तिश्रावणप्रत्यक्षविषयतावच्छेदकधर्मावच्छिन्नविषयताकबोधतात्पर्येणोच्चारितत्वस्त्वेतरोच्चार-

यत्तु "उपजीव्यविरोधात् सन्धिर्न । तथा ह्यजादिसंज्ञाग्रह-काले "आद्गुणः"इत्यादीनामनिष्पत्त्या तदप्रवृत्तावविकृतरूपाकारादिषु गृहीताजादिपदशक्तिः पश्चादच्प्रत्याहारे ज्ञाते उपेन्द्र इवात्रापि तत्प्रवृत्तौ विरुद्ध्येत । न हि सन्धिकार्ये कृतेऽविकृतरूपश्रवणं

---

णार्थाकारेतरवर्णाघटितत्वैतदुभयसम्बन्धेन वर्णविशिष्टात् कारप्रत्ययो भवतीत्यर्थ इत्यादि क्लिश्यन्तः परास्ताः । शाब्दबोधे शब्दस्यापि प्रकारतया भानमिति वैयाकरणसिद्धान्ते वासुदेववाचकाशब्दात्प्रत्ययस्य तावतापि दुर्वारत्वात् ।

यदपि स्ववृत्तिवर्णत्वव्याप्यजात्यवच्छिन्नविशेष्यताप्रयोजकतापर्याप्त्यधि-करणघटितत्व, स्वनिष्ठवर्णत्वव्याप्यजात्यवच्छिन्नविशेष्यताप्रयोजकतापर्याप्त्य-धिकरणेतराघटितत्वैतदुभयसम्बन्धेन वर्णविशिष्टात् कारप्रत्यय इत्यर्थ इति तदपि स्थवीयः । पूर्वोक्तदोषस्य दुर्वारत्वात् । अच्त्वहल्त्वादेर्जातित्वाङ्गीकारे स्वपदेनाकारादीनां ग्रहणे तन्निष्ठाच्त्वादिजातिमादायाजादिपदेभ्यः कार-प्रत्ययस्य दुर्वारत्वाच्चेत्यादि सुधीभिराकलनीयम् । अन्कारः स्वधाकार इत्या-दितु वषट्कार इति सौत्रप्रयोगात् क्वचिदन्यतोऽपीति ज्ञापनेन, घञन्तस्येदं रूपमिति स्वीकारेण वा सुसाधम् । यत्त्वनिनस्मन् ग्रहणानीति परिभाषयैतेषु वर्णत्वातिदेशादन्कार इति सिद्धमिति तन्न । तुल्ययुक्त्या इन्कार इत्या-देरापत्तेः ॥

स्वरसन्धिस्तु वर्णोपदेशकालेऽजादिसंज्ञानामनिष्पादान्न भवतीति कैय-टोक्तं तु न युक्तं, तुल्यास्येत्यादौ सवर्णसंज्ञाफलदीर्घवत् सन्धिकार्यप्रवृत्तौ बाधकाभावादिति कौस्तुभोक्तं निराचिकीर्षुणा रत्नकोशकारेणोद्भावितं तदा-शयमनूद्य दूषयति । यत्त्वित्यादिना । उपजीव्यविरोधादिति । अयं भावः । आदिरन्त्येनेत्यनेनाक्षरसमाम्नायश्रुतेष्वविकृतेषु शक्तिग्रहे पश्चात्सन्धौ

**भवति" इति । तन्न । पुनरुच्चपदस्यार्थान्तरे शक्त्यग्रहेण तद्विरोधाभावात् । न च सन्धौ सन्देहः । व्याख्यानतो निर्णयसम्भवात् ॥**

---

विशेषणस्याविकृतत्वस्य विनाशेऽजादिसंज्ञोपजीव्याविकृताकारादिविनाशः स्पष्ट एव, श्रुतेष्वेव शक्तिग्रहादिति । एवतदेवाभिप्रेत्योक्तमविकृतरूपश्रवणं भवतीति । **विरोधाभावादिति** । अयं भावः । आदिरन्त्येनेत्यनेनाऽविकृताकारत्वादिना शक्तिर्न बोध्यते । किन्त्वकारादिचकारान्तसमुदायघटकबोध्यतावच्छेदकधर्मोपलक्षितात्वादिना, तथा चाविकृतत्वस्य शक्यतावच्छेदककोटावप्रवेशेन तस्योपजीव्यत्वाभावेनतद्विरोधस्याकिंचित्करत्वादिति । यत्त्वविकृताकारादिश्रवणमुपजीव्य जातश्शक्तिग्रहस्स्वोपजीव्याविकृताकारादिश्रवणं न विहन्तीति रत्नकोशकाराशयः । तथाचेदं दूषणं निमित्तादपराद्धेषोर्धानुष्कस्येव वल्गितमनुकरोतीतीदमयुक्तमित्याचार्याः । यदपि अविकृताकारादिष्विति ग्रन्थस्याऽयमाशयः अविकृताकारादिष्विति सतिसप्तमी, ज्ञायमानेष्विति शेषः । तथाच तेषु ज्ञायमानेषु सत्स्वेव गृहीता याऽजादिपदशक्तिरित्यर्थः । अर्थादजादिपदशक्तिग्रहंप्रति अविकृताकारादिश्रावणप्रत्यक्षत्वेन कारणता, पश्चात्सन्धौ चाविकृताकारादि श्रावणं न भविष्यतीत्युपजीव्यविरोधः । एतदेव नचेत्यादि श्रवणंभवतीत्यन्तेन ध्वनितमिति तदनुयायिनश्चोचुः । तन्न । शक्तिग्रहेऽविकृताकारत्वादिश्रावणत्वेन कारणताया अभावात् । शक्तिज्ञानस्यादिरन्त्येनेति सूत्रजबोधात्मकतया तत्र च पदज्ञानविधयाऽकारादिबोधजनकत्वेन तात्पर्यविषयीभूतसमुदायज्ञानस्यैव कारणत्वात् । अन्यथा स्वादिसूत्रेऽपि सन्ध्यभावप्रसङ्गादित्यलम् । ननु शक्तिनिश्चयमुपजीव्य प्रवृत्तं सन्धिकार्यं तन्निश्चयविरोधिसंशयजनकमित्येवोपजीव्यविरोध इत्यत आह । **न चेत्यादि** । **व्याख्यानत इति** । पाणिनिप्रभृतिगुरुशिष्यपरम्परावगतव्याख्यानादित्यर्थः ॥

**ननु चतुर्दशसूत्र्यामक्षरसमाम्नाय इतिव्यवहारानुपपत्तिराम्नायसमाम्नायशब्दयोर्वेदे एव प्रसिद्धेरित्यत आह । माहेश्वराणीति । महेश्वरादागतानीत्यर्थः । महेश्वरप्रसादलब्धानीति फलितम् । एवञ्चैवमानुपूर्वीका श्रुतिरेवैषा । तत्प्रसादात्पाणिनिना लब्धा । श्रुतिमूलकत्वादस्यैव वेदाङ्गत्वम् । अत्र प्रमाणं—"येनाक्षरसमाम्नायमधिगम्य महेश्वरात् । कृत्स्नं व्याकरणं प्रोक्तम्" इति शिक्षावचनम् । "लण्सूत्रे णकारविषयाचार्यप्रवृत्तिर्ज्ञापयति—व्याख्यानत इति" इत्यादावाचार्यपदेन महेश्वरः । अनुबन्धाश्च**

---

अस्य व्याकरणस्य व्याकरणान्तरापेक्षया प्राशस्त्यलाभार्थमेतन्मूलभूतचतुर्दशसूत्र्यां श्रुतित्वं व्यवस्थापयति । नन्वित्यादिना । आम्नायशब्दोपादानं दृष्टान्तार्थम् । आगतानीत्यनेनापौरुषेयत्वं सूचितम् । यद्यपि महेश्वरकर्तृकत्वं न श्रुतित्वविघटकम् । पुरुषसूक्ते वेदानां "ऋचस्सामानि जज्ञिरे" इत्यादिनेश्वरकर्तृकत्वश्रुतेः । शास्त्रयोनित्वादिति सूत्रस्य तदभिप्रायकतयापि भगवच्छङ्करपादैर्व्याख्यातत्वाच्च । तथाप्यनादित्वप्रतिपादकमतान्तरसाधारण्यायैवमुक्तम । श्रुतिमूलकत्वादिति । श्रौतशब्दानां साकल्येन साधुत्वबोधकत्वाच्चेत्यपि बोध्यम् । अन्येषां केषांचिल्लौकिकमात्रविषयत्वं केषांचिद्वैदिकैकदेशमात्रविषयकत्वमेवेति न तानि पाणिनीयवल्लोकवेदसाधारण्येनोपकारकाणीति भावः । ध्वनितं चेदं लौकिकानां वैदिकानां चेति वदता भष्यकृता । स्पष्टं चेदं कौस्तुभे । अतएव शिक्षायां कृत्स्नमिति व्याकरणविशेषणं स्वारस्यमधिरोहति ॥

**अस्यैव वेदाङ्गत्वमिति ।** एवकारो व्याकरणान्तरव्यवच्छेदकः । यत्तु "परेतु श्रुतिमूलकत्वमेव यदि वेदाङ्गत्वहेतुः तर्हि ज्योतिरादेस्तद्विरहेण

**महेश्वरकृता एवेत्यनुपदं स्फुटीभविष्यति। "ञमङणनम्" इत्यत्र मकारप्रत्याख्यानपरं भाष्यं तु, किमदृष्टार्थमेव तदुच्चारणमुत दृष्टार्थमपीत्येवंविचारपरम्। सर्वत्र प्रत्याख्यानमेवम्परमेव। अन्यथाऽङ्गानामपि पारायणे धर्मश्रवणेन तत्र तत्र पाणिनिन्यासप्रत्याख्यानस्याप्यसङ्गतिः स्यात्। तदुक्तम् "इको यणचि" इति सूत्रे—**

---

तत्त्वानुपपत्तिर्यदि श्रुत्युपयोगित्वमपि, तदा व्याकरणान्तरस्यापि प्रयोगसाधुत्वबोधनद्वारा तदुपयोगितायास्तुल्यत्वात्, तैत्तिरीयशाखायामैन्द्रव्याकरणस्यापि प्रशंसादर्शनेन तस्यापि वेदमूलत्वप्रयुक्तवेदाङ्गत्वधर्मोव्याप्त्यैवकारोपादानानुपपत्तिः। किंच श्रुतिमूलकत्वस्य वेदाङ्गताहेतुत्वे मन्वादिस्मृतीनामपि तदापत्तौ वेदस्य षडङ्गत्वानुपपत्तिः। किंचैतस्यैव वेदाङ्गत्वे एतत् प्रणयनात् प्राग्वेदस्य पञ्चाङ्गत्वापत्तिः। तस्मादिदं चिन्त्यमिति प्राहुस्तन्न। साकल्येन श्रौतशब्दसाधुत्वस्यैतच्छास्त्रमात्रबोधितत्वस्य प्रागुपदर्शिततयाऽस्यैव वेदाङ्गत्वौचित्यात्। नहि किंचिदंशविकलमङ्गं भवितुमर्हति मन्वादिस्मृतीनां वेदार्थस्मारकत्वेऽपि वेदोपयोगित्वाभवात्। शिक्षाद्यन्यतमत्वस्य निवेशाद्वा न तासामङ्गत्वमिति नाङ्गाधिक्यप्रसङ्गः। तत्तद्व्याकरणानां सादितया सर्वव्याकरणप्रणयनप्राक्कालस्यापि सुवचतया तदानीं पञ्चाङ्गत्वापत्तेस्तत्रापि परिहरणीयतया तौल्याच्च। किंच चतुर्दशसूत्र्याः श्रुतित्वेनानादितया तत्र पाणिनीयस्य बीजवटन्यायेन सत्त्वान्न पूर्वोक्तदोषावकाशः। इन्द्रव्याकरणस्य श्रुतौ प्राशस्त्यबोधनेऽपि श्रुतिमूलकत्वालाभादस्य यथाकथंचिदप्यनादित्वस्य वक्तुमशक्यत्वात्। ज्योतिश्शास्त्रे श्रुतिमूलकत्वाभावेऽपि साध्याधिकरणे सर्वत्र हेतुसत्त्वस्यानपेक्षणाच्च। ऋग्वेदे दशग्रन्थेष्वस्यैव पाठस्योपलम्भादन्येषां तथाऽनुपलम्भाच्च। एतेनैवकारोऽप्यर्थ इति क्लिश्यन्तःपरास्ता इति दिक्॥

नन्वनुबन्धानां महेश्वरकृतत्वे तदपेक्षया पतञ्जलेरधिकज्ञत्वस्य वक्तु-

"सामर्थ्ययोगान्नहि किञ्चिदत्र पश्यामि शास्त्रे यदनर्थकं स्यात्" इति ।

किञ्चिद् दृष्टादृष्टार्थवत्, किञ्चिच्छुद्धादृष्टार्थवत्, सर्वथाऽनर्थकं न किञ्चिदिति तदर्थः । वृद्धिसूत्रस्थे—"वर्णेनाप्यनर्थकेन न भवितव्यम्" इति भाष्यग्रन्थेऽनर्थकत्वं बोध्यार्थराहित्यरूपमिति ननिष्प्रयोजनत्वरूपानर्थक्येन तत्र तत्र प्रत्याख्यानपरभाष्यासङ्गतिः अत एव "सोऽयमक्षरसमाम्नायः पुष्पितः फलितश्चन्द्रतारकवत् प्रतिमण्डितो ब्रह्मराशिः" इति भाष्यमुपादायोक्तं भर्तृहरिणा । "यथैवेदमव्युच्छिन्नं चन्द्रतारकादि, एवमस्याक्षरसमाम्नायस्य न कश्चिदाधुनिकः कर्तास्ति । एवमेव वेदपारम्पर्येण स्मर्यमाण" इति । आधुनिकः शरीरी । पुष्पितत्वं तन्मूलकशब्दशास्त्रद्वारेण । शब्द-

---

मशक्यत्वेन भाष्यकृत्कृतस्य मकारप्रत्याख्यानस्यासंगतिरिति शङ्कां परिहरति । अमङ्णनमित्यादिना । सामर्थ्ययोगादिति । सम्यक्प्रयोजनसंबन्धादित्यर्थः । स्वार्थे ष्यञ्, योगजसामर्थ्यादिति वार्थः । राजदन्तादित्वात् पूर्वनिपातः । अस्याः श्रुतित्वे प्रमाणान्तरमाह । अत एवेत्यादि । यत्तु वस्तुतो नैतद्वेदत्वसाधकम्, तथाहि । महाप्रलये चन्द्रादेर्नाशात्तद्दृष्टान्तेनानश्वरमित्यर्थोऽव्युच्छिन्नमित्यस्यायुक्तः । किंतु चिरस्थायीत्येव । एवमाधुनिक इत्यस्य योगार्थं परित्यज्य शरीरीत्यर्थकत्वे मानाभावेन चिरन्तनः कर्तास्तीत्येव प्रतीयते । किंच शरीर्यर्थकत्वेपि अशरीरिणः कर्तुः प्रतीतिर्दुष्परिहरैवेति बोध्यमिति तन्न । चन्द्रादेरनश्वरत्वेन ज्ञातॄन्प्रत्येवायमुपदेश इति तद्दृष्टान्तेनानश्वरत्वबोधनात् । वेदान्तिनये ब्रह्मातिरिक्तस्य सर्वस्यापि नश्वरत्वेन चिरस्थायित्वालाभेऽपि श्रुतित्वाऽनपायात् । एवमशरीरिणः कर्तृत्वं न श्रुतित्वविघटकम् ।

प्रयोगेण च फलितत्वम्। उक्तञ्चैतच्चतुर्दशसूत्रव्याख्यायां नन्दिकेश्वरकृतकाशिकायाम्—

नृत्तावसाने नटराजराजो ननाद ढक्कां नवपञ्च वारम्।
उद्धर्तुकामस्सनकादिसिद्धानेतद्विमर्शे शिवसूत्रजालम्॥

अत्र सर्वत्र सूत्रेषु अन्त्यं वर्णचतुर्दशम्।
धात्वर्थं समुपादिष्टं पाणिन्यादीष्टसिद्धये॥ इति।

धात्वर्थं धातुमूलकशब्दशास्त्रप्रवृत्त्यर्थम्। अत एव "अनुबन्धकरणार्थश्च वर्णानामुपदेशः" इत्युक्तं भाष्ये। अत्र करणशब्दप्रयोगेणानुबन्धानां सादित्वं सूचितम्। तत्करणञ्चोपदेशकर्तृकर्तृक-

---

श्रुतेस्सकर्तृकत्वस्य वेदान्तिनये पूर्वमुपपादितत्वात्। स्मर्यमाणमिति वाक्यशेषबलात् कर्तेत्यस्य स्मर्तेत्यर्थस्वीकाराच्च न पौरुषेयत्वप्रसङ्ग इत्यलम्। **ननाद**। नादयामास। अन्तर्भावितण्यर्थोऽत्र नदिः। विमर्शे कृते सति शिवसूत्रजालमिति ज्ञायते, नतु ध्वनिमात्रं, तस्य सनकाद्युद्धरणानुपयोगित्वादिति भावः। यत्तु विमर्शे विमृशामीत्यर्थमाहुस्तेषामार्षमात्मनेपदादिकमिति बोध्यम्। अन्त्या वर्णाश्चतुर्दश यस्मिन्निति बहुव्रीहिः योगविभागादच् समासान्तः। यत्तु अन्त्यवर्णाश्चतुर्दश अन्त्यवर्णचतुर्दश ते सन्त्यस्मिन्नित्यर्शआद्यजिति तन्न। पूर्वनिपातवैपरीत्यापत्तेः। अन्त्यं वर्णचतुर्दशमिति व्यस्तपाठे सर्वेषामपि संख्यापूरकत्वाच्चतुर्दशानां पूरणं चतुर्दशमिति योज्यम्। अन्त्यवर्णाश्चतुर्दशेति व्यस्तःपाठ इत्युदयङ्करः। आर्षं साधुत्वमित्यपरे। **समुपादिष्टमिति**। सम्यक् समीप उच्चारितमित्यर्थः। **तत्करणं चेति**। यत्त्वनुबन्धाः पाणिनिकृता एव समुपादिष्टमित्यस्यैवमनुबन्धा आसंज्ञ्तव्या इति महेश्वरेणोपदिष्टमित्यर्थ इत्याचार्यास्तन्न। तथात्वे सनकादीनामनुबन्धेभ्यः क्रियाबोधानापत्त्या अःपरमात्मा इं

मेव प्रत्यासत्तेः । तेन तद्व्यतिरिक्तस्य सर्वस्यानादित्वं सूचितम् । अत्र सनकाद्युद्धरणेच्छयाऽस्य ब्रह्मोपदेशरूपत्वं सूचितम् । तच्च श्रुतित्वाभावे न सङ्गच्छते । "श्रोतव्यः श्रुतिवाक्येभ्य." इत्युक्तेः ।

---

मायामाश्रित्य उः व्यापकः ण् आसीदित्येवंरीत्या व्याख्यानस्य नन्दिकेश्वरकृतस्यासङ्गत्यापत्तेः । अनादित्वं सूचितमिति । चतुर्दशसूत्रीघटकेष्वेकत्र सादित्वकथनादिति भावः । यत्तु वस्तुतस्त्वनादित्वे न मानम् । अनुबन्धकरणार्थश्चोपदेश इति भाष्ये उपदेशशब्द आदेच उपदेश इत्यादाविवोच्चारणार्थक एवेति अनुबन्धातिरिक्तानामपि तत्कृतत्वमेव । नृत्तावसान इत्यादितोपि सनकादीष्टसिद्धये प्रथममन्त्यवर्णरहितानां पश्चात् पाणिन्यादीष्टसिद्धयेऽन्त्यवर्णानां च करणमेव स्वरसत उपपद्यत इति दिगित्याहुस्तन्न । नृत्तावसान इत्यनेनाक्षरसमाम्नायाविर्भावस्यैव लाभेन महेश्वरोच्चारितत्वस्यालाभेन च तत्कृतत्वस्याप्रतीतेः । सनकादीनामपि क्रियावाचकपदाभावेनानुबन्धरहिताद् बोधानापत्त्या वैलक्षण्यस्य वक्तुमशक्यत्वात् । एवं चानुबन्धविनिर्मुक्तस्य पूर्वं करणे न किमपि फलमुपलभ्यते । ततश्च भाष्ये उपदेशशब्दस्य मूलोक्तरीत्यैव व्याख्येयत्वेनाऽनादित्वे मानस्य सुस्थत्वादिति ध्येयम् । श्रुतित्वाभावे न संगच्छत इति । यत्विदं चिन्त्यम् । श्रुतित्वाभाववता गीतादिना वेदान्तशास्त्रादिना च ब्रह्मोपदेशानुपपत्तेः । नच श्रोतव्यः श्रुतिवाक्येभ्य इति स्मृतिविरोध इति वाच्यम् । श्रुतिप्रतिपाद्यार्थप्रतिपादकवाक्येभ्य इति तदर्थादिति तन्न । सनकादीनामुत्तमाधिकारितया श्रोतव्य इति श्रुतिबोधितश्रवणस्य श्रुतीतरतोऽनुचितत्वात् । "स्त्रीशूद्रद्विजबन्धूनां त्रयी न श्रुतिगोचरा । इति भारतमाख्यानं कृपया मुनिना कृतमि"त्युक्त्या गीताशास्त्रस्योत्तमाधिकारिणां स्वरसतः श्रवणानुपयोगिता । वेदान्तशास्त्रस्य मननोपयोगितया न

**ऋक्तन्त्रव्याकरणे शाकटायनोऽपि—"इदमक्षरच्छन्दो वर्णशः समनुक्रान्तं यथाऽऽचार्या ऊचुर्ब्रह्मा बृहस्पतये प्रोवाच बृहस्पतिरिन्द्रायेन्द्रो भरद्वाजाय भरद्वाज ऋषिभ्य ऋषयो ब्राह्मणेभ्यस्तं खल्विममक्षरसमाम्नायमित्याचक्षते, न भुक्त्वा न नक्तं प्रब्रूयात् ब्रह्मराशिरिति"। ब्रह्मराशिरित्यस्य ब्रह्मप्रतिपादको वर्णराशिरित्यर्थः। तत्त्वञ्च नन्दिकेश्वरकृतकाशिकायां स्पष्टम्। अत एव "वृत्तिसमवायार्थो**

---

श्रोतव्य इति श्रुतिविषयता। एवं च श्रोतव्यः श्रुतिवाक्येभ्य इत्यत्र लक्षणायां न मानं। लक्ष्यार्थस्वीकारे भाषान्तरितग्रन्थानामपि श्रोतव्य इति विधिविषयता स्यादित्यनधिकृतानामप्यधिकारित्वमापतेदिति दिक्। **अक्षरसमाम्नायमित्याचक्षत इति**। नन्वितिना कर्मण उक्तत्वात् कथं द्वितीयेति चेन्न। निपातानां वाचकत्वे दोषश्रौव्येऽपि द्योतकत्वे तदभावात्। निपातविषये पक्षद्वयस्याप्यङ्गीकारात्। कारकप्रकरणे क्वचिन्निपातेनेतिप्रतीकस्थशेखरोक्तपरेतुमतरीत्या निपातेनाभिहितत्वस्याकिंचित्करत्वाच्च। यद्वा तमक्षरसमाम्नायं ब्रह्मराशिरिति हेतोर्न भुक्त्वा न नक्तं प्रब्रूयादिति ऋषयो ब्राह्मणेभ्य आचक्षत इति व्याख्यानान्नदोषः। अतएवेति पाणिनेरन्योपदिष्टत्वादेवेत्यर्थः। वेदत्वादेवेत्यर्थस्तु वक्ष्यमाणग्रन्थाननुगुणत्वादुपेक्ष्यः। यत्तु वृत्तिः आदिरन्त्येनेति बोधितशक्तिः। तस्यास्समवायस्सम्यक् ज्ञानं तदर्थमुपदेशः पाणिनेरपूर्वोच्चारणमित्येव तद्भाष्यार्थ इति, नैतन्महेश्वरोपदिष्टत्व वेदत्वे वा प्रमाणं भवितुमर्हति। किंच मंत्रोपदेशवदिहोपदेशपदप्रयोगेऽपि न किंचिद्बलवत्साधकमुपलभ्यत इत्याहुः। तत्तु भाष्याक्षरादर्शनमूलकम्। भाष्ये किमिदं वृत्तिसमवायार्थ इति वृत्तये समवायः वृत्तिसमवायः वृत्त्यर्थो वा समवायः वृत्तिसमवायः वृत्तिप्रयोजनो वा समवायो वृत्तिसमवायः का पुनर्वृत्ति श्शास्त्रप्रवृत्तिरिति फक्किकया मूलोक्तार्थस्यैव स्पष्टं लाभात्। एवंच

वर्णानामुपदेशः कर्तव्यः” इति भाष्ये उक्तम् । पाणिनेर्लाघवेन शास्त्रप्रवृत्तिफलको यः समवायो वर्णानां क्रमेण सन्निवेशस्तदर्थ इति तदर्थः । स चाणादिप्रत्याहारद्वारा शास्त्रप्रवृत्त्यर्थः । एवञ्चायमुपदेशः पाणिनेरन्यकृत इति स्पष्टमेवोक्तम् । मन्त्रोपदेश इतिवच्चात्रोपदेशपदप्रयोगः । अत एवास्य ज्ञाने सर्ववेदपारायणजं पुण्यं फलमिति भाष्ये उक्तम् । व्याकरणमुपक्रम्य “वेदानां वेद” इति छन्दोगश्रुतिरप्येतत्परैवेति दिक् ॥

तत्प्रयोजनमाह । संज्ञार्थानीति । एतच्चोपपादितम् । संज्ञाप्रणयनञ्च लाघवेन शास्त्रप्रवृत्त्यर्थमिति बोध्यम् । संज्ञार्थत्वोपपत्तये आह । एषामिति । अकारश्चेति । तेन रप्रत्याहारसिद्धिः । अनन्त्यत्वात्पृथगुक्तिः । इदं तुल्यास्यसूत्रस्थकैयटानुरोधेन ॥

---

पाणिनेश्शास्त्रप्रवृत्तेः पूर्वत्वमक्षरसमाम्नायस्येति शास्त्रबहिर्भावादन्योपदिष्टत्वं स्पष्टमेव । अतएव वृद्धिसूत्रे भाष्ये मङ्गलार्थं महतश्शास्त्रौघस्यादितोवृद्धिशब्दं पठतीत्युक्तं संगच्छते । स्पष्टं चेदमुद्योते । अतएवेति । श्रुतित्वादेवेत्यर्थः । यत्तु बादरायणकृतमहाभारतादेरपि सर्ववेदपारायणजपुण्यफलकत्वोक्तेरिदं चिन्त्यमिति तन्न । महाभारतादेर्वेदपारायणजपुण्यफलसदृशपुण्यफलस्यैवाङ्गीकारात् । अस्य तूपमानभूतफलस्यैव भाष्यतो लाभेन वैषम्यात् । नच भारतः पञ्चमो वेद इति वचनेन तस्याप्युपमानफलमेवेति न वैषम्यमिति वाच्यम् । तेन वाक्येन वेदसादृश्यस्यैव प्रतीतेः । नच पूरणासङ्गतिरिति वाच्यम् । मनष्षष्ठानीन्द्रियाणीत्यत्र वेदान्तिनयेऽनिन्द्रियेण मनसेन्द्रियपूरणस्य दृष्टत्वात् । स्पष्टश्चेदं वेदान्तपरिभाषायाम् । एवञ्च भाष्यस्यौपदेशिकफलतात्पर्यकत्वेनोपपत्तावातिदेशिकफलतात्पर्यकल्पनानौचित्येन निरुक्तार्थे प्रामाण्यध्रौव्यादिति बोध्यम् ।

परे त्वस्यानुनासिकत्वे "अतोल्रा" इति सूत्रे पाणिनिर्लकारं नोच्चारयेत्। प्रत्याहारेणैव निर्वाहात्। किञ्चास्येत्संज्ञकत्वे बहुषु यणपदघटितसूत्रेष्वर्द्धमात्रालाघवानुरोधेन यप्रत्याहारेणैव व्यवहरेत्। किञ्चानु-

---

लकारं नोच्चारयेदिति। यद्यस्यानुनासिक्यं तर्हि लकारानुच्चारणप्रयुक्तलाघवात्प्रत्याहारेणैव व्यवहरेदिति भावः। ननु लकारोच्चारणं रप्रत्याहारस्य क्वाचित्कताज्ञापनार्थं, तेन रदाभ्यामित्यादौ न प्रत्याहारग्रहणम्। तथाच तदुच्चारणं नानुनासिक्ये बाधकम्। किंच रप्रत्याहारग्रहणे आदिरन्त्येनेतिसूत्रानुसन्धानप्रयुक्तं गौरवं तत्रापि दुर्वारं तथाच लाघवाभावात्तथा नोक्त मित्यरुचेराह। किंचेति। तत्र प्रत्याहारज्ञानस्य तत्राप्यावश्यकतया साम्येन मात्रालाघवं सुस्थमिति भावः। ननु यणोमय इत्यादावर्थद्वयसम्पत्तये णकारेण प्रत्याहार आवश्यक इत्यत आह। बहुष्विति। तथाच यत्र लाघवानवकाशस्तत्र णकारोच्चारणेऽपि यत्र लाघवावकाशस्संयोगादेरातोधातोर्यण्वत इत्यादौ तत्र णकारं नोच्चारयेदित्याशयः। यत्तु संज्ञाशब्दानामर्थमात्रिकत्वेन क्व लाघवावकाश इत्याशङ्क्य लाघवेन लण्सूत्रे णकारं नोच्चारयेदिति तात्पर्यादिति समादधुस्तन्मन्दम्। संज्ञाशब्दानामर्थमात्रिकत्वस्यानङ्गीकारात्। अतएव ङसंश्चेति सुवचमिति कौमुदीग्रन्थस्सङ्गच्छते। अतएवच महासंज्ञाकरणस्य प्रयोजनविशेषवर्णनं भाष्यकृतस्सङ्गच्छते। अतएव लण्सूत्रे इण इति तिस्रोमात्रा इत्युक्तम्। पूर्वोक्तरीत्या णग्रहणस्य लाघवार्थमावश्यकतया णकारानुच्चारणतात्पर्यकत्वकल्पनाया अनौचित्याच्च। नन्वेकाचो बशितिसूत्रवक्ष्यमाणरीत्या यणोमय इत्याद्यनुरोधेन यण्प्रत्याहारस्यावश्यकत्वेन यपदशक्त्यकल्पनाप्रयुक्तलाघवानुरोधेन यप्रत्याहारो न व्यवहृतः। एकस्य समानफलकानेकसंज्ञाकरणस्य वृद्धिसंज्ञासूत्रे भाष्ये तिरस्काराच्च। किंच यप्रत्याहारेण व्यवहारे तत्र प्रत्याहारत्वज्ञानायाकार आनुनासिक्यज्ञा-

बन्धानामच्प्रत्याहारे ग्रहणाभावे आचाराद्प्रधानत्वाल्लोपश्च ब-
लवत्तर इति भाष्योक्तस्य तृतीयहेतोरव्यापकत्वापत्तिः ।

---

नस्य व्याख्यानत एव सम्पादनीयतया तदाश्रयणे क्लेशः । किंच दित्रऔत्सूत्र-
वक्ष्यमाणरीत्या विधेयघटकोच्चारणार्थाकारस्यानुनासिकत्वावश्यंभावेन योची-
त्यादौ प्रत्याहारत्वप्रतीतेर्वारणायोपायान्तरानुधावने महान्क्लेशः । किंच पर्याय-
पदेषु न लाघवादर इत्यरुचेराह । किंचेति । यत्तु पर्यायपदेष्वित्याद्यरुचि-
कथनमयुक्तं, तन्न्यायस्य गृहीतशक्तिकपदविषयकत्वेन प्रकृते आदिरंत्येनेति
शास्त्रबोधितशक्ततावच्छेदकं यण्त्वमपेक्ष्य लाघवाद्यत्वमेव पाणिनिना कुतो न
स्वीकृतमिति शङ्कायास्सम्भवादिति तन्न । यण्त्वे शक्ततावच्छेदकत्वस्वीकार-
फलस्य पूर्वमुपपादितत्वात् । उभयविधशक्ततावच्छेदकत्वस्वीकारे गौरवमित्यपि
वक्तुं शक्यत्वात् । आदिरन्त्येनेतिसूत्रे शक्ततावच्छेदकधर्माणां प्रातिस्विक-
रूपेणाबोधनादिति दिक् । अच्प्रत्याहारे इति । भाष्येऽज्ग्रहणेनेत्युक्त्या,
यएतेऽक्षु इति विवरणेन अइउण् इति सूत्रचतुष्टयोपादानेन शङ्कासमाधानयोः
करणेनच तन्मात्रविषयक एवायं विचार इति स्वसिद्धान्तरीत्येदम् । अतएव
वक्ष्यति "अच्प्रत्याहारएव शङ्काकृतेति" उपलक्षणतया व्याख्यातॄणां दीक्षि-
तादीनां पुनरव्यापकत्वापत्तिरित्याशयः । तदेतत्सूचयति तवलोपस्येत्यत्र
युष्मच्छब्दप्रयोगेण । एतेनाच्प्रत्याहारे इति प्रत्याहारमात्रोपलक्षणमिति उप-
लक्षणतया व्याचक्षाणाः परास्ताः । अच्पदाकरणेनोपलक्ष्यार्थसङ्ग्रहेऽच्पदप्रयो-
गस्य जघन्यवृत्त्या व्यवहाररूपदोषेतरप्रयोजनालाभाच्च । अव्यापकत्वा-
पत्तिरिति । इत्संज्ञायोग्यत्वस्यैवानुबन्धत्वेन तस्य लण्सूत्राकारेपि सत्त्वेन
तत्र हेतोरभावेन पक्षतावच्छेदकाव्यापकत्वापत्तिस्तथाच भागासिद्धिः । अनु-
बन्धानां प्रत्याहारे ग्रहणेन प्रसक्तयावद्दोषवारणस्यैव भाष्याभिप्रेतत्वेनावच्छे-

दकावच्छेदेनानुमितेरेवाभिप्रेतत्वमिति भावः । अवच्छेदकावच्छेदेनानुमितौ तस्या दोषत्वमन्यत्र स्पष्टम् ॥

यत्त्वत्र केचिदेतदाशयमजानाना हेतोस्साध्याव्यापकत्वं न दोष इति तस्य दोषत्वोद्भावनं कथमित्याशङ्क्य तस्यलोप इत्यत्र यथाश्रुतार्थकत्वेऽनुबन्धानां सर्वत्रोच्चारणानुपपत्तेरगत्या सूत्रघटकपदजन्यबोधाविषयत्वाभाव एव बोध्यते । एवंसति आदिरन्त्येनेत्यस्येत्संज्ञानिमित्तककार्यविधायकसूत्राणां चासङ्गत्यापत्त्या लोपपदप्रयोज्यविधेयकुक्षिप्रविष्टपदेऽन्त्यपदेतपदातिरिक्तत्वं निवेश्यते । तथाच प्रत्याहारजन्यबोधविषयत्वाभावं प्रति तस्यलोप इतिशास्त्रीयोद्देश्यतावच्छेदकाक्रान्तत्वं हेतुरिति पर्यवसानेन लणित्यकारस्यानुनासिकत्वेऽपीदानीमित्त्वाभावेन तत्र कारणस्याभावेन हकारादिषु पुनःपुनरकारोच्चारणेन हकाराद्यकारवल्लणकारस्यापि हल्प्रत्याहारजन्यबोधविषयत्वाभावस्य वक्तुं शक्यत्वेन कार्याव्यापकत्वरूपव्यतिरेकव्यभिचारापत्तिरिति मूलाशयं वर्णयन्ति । तदतिस्थवीयः । अभावस्य नित्यत्वेन तेन कार्यकारणभावासम्भवात् । ज्ञानयोरेव कार्यकारणभावस्य वक्तव्यतयाच्प्रत्याहारज्ञानोत्तरभाविलण्सूत्राकारधर्मिकप्रत्याहारजन्यबोधविषयत्वाभावज्ञानस्येत्त्वज्ञानेनापि कदाप्युदयेन परस्परव्यभिचारवारणाय कार्यतावच्छेदककोटावव्यवहितोत्तरत्वनिवेशावश्यम्भावेन निरुक्तव्यभिचारवारणसम्भवात् । तस्यलोप इत्यस्य निरुक्तार्थकत्वस्वीकारेऽनुबन्धानां तत्तत्सूत्रघटकपदजन्यबोधविषयत्वाभावस्य सिद्धावपि लक्ष्ये निवृत्त्युपायाभावेन तादृशार्थस्य कर्तुमशक्यत्वेन निरुक्तकार्यकारणभावस्य निर्मूलत्वाच्च । उपदेशोत्तरकालिकेत्संज्ञानिमित्तलोपस्योच्चारणाप्रतिबन्धकत्वेन तस्यलोप इत्यस्यान्यादृशार्थस्वीकारे मानाभावात् । भवदुक्तरीत्या दोषस्यानुनासिक्याभावेऽपि सुवचतया ग्रन्थसन्दर्भस्यैव विलयापत्तेश्चेति दिक् ॥

अत्रानुमानप्रयोगप्रकाराणां प्रकृतानुगुणत्वेऽपि शिष्यबुद्धिवैशद्यार्थं कैश्चिद्व्याख्यातृभिः प्रदर्शिता इति त एवात्र सङ्ग्रहेण प्रदर्श्यन्ते ॥

अनुबन्धा स्स्वेतरीयस्स्ववृत्तिश्रावणप्रत्यक्षविषयतावच्छेदकधर्मावच्छिन्न-स्तद्बोधकप्रत्याहारजन्यबोधविषयत्वाभाववन्तः । तस्यलोप इति शास्त्रीयोद्दे-श्यतावच्छेदकाक्रान्तत्वादिति । अइउणित्यादौ णादीनां हलादिप्रत्याहारादि-जन्यबोधविषयत्वेन तत्र व्यभिचारवारणायाबोधकत्वान्तं प्रत्याहारविशेषणम् । अनुबन्धणकाराद्यबोधकत्वस्याजादिप्रत्याहारेष्विदानीमनिश्चितत्वेनोद्देश्यासिद्धि-रतो धर्मावच्छिन्नेस्वेतरत्वं विशेषणम् । यद्वा प्रत्याहारजन्यबोधीयघटकत्वाव-च्छिन्नविषयत्वाभावएव साध्यः । हलादिप्रत्याहारजन्यबोधीयघटकत्वावच्छि-न्नविषयतानुबन्धणकारे नास्तीति न व्यभिचारशङ्कावकाशोऽत्र पक्ष इति केचित् ॥

अपरेतु स्वविशिष्टवर्णाघटितसमुदायावच्छिन्नबोधकप्रत्याहारजन्यबोध-विषयत्वाभावस्साध्यः वैशिष्ट्यंच स्वेतरत्व स्ववृत्तिश्रावणप्रत्यक्षविषयतावच्छे-दकधर्मावच्छिन्नत्वोभयसम्बन्धेन, अनुबन्धणकारे हल्प्रत्याहारजन्यबोधविषय-तामादाय व्यभिचारवारणाय बोधकत्वान्तं प्रत्याहारविशेषणम् । पूर्वणकारे-ऽणादिप्रत्याहारजन्यबोधविषयत्वापत्तिवारणाय वैशिष्ट्यनियामकप्रथमसम्बन्धः। साध्याप्रसिद्धिवारणाय द्वितीयः । न चैवमपीण्प्रत्याहारजन्यबोधविषयत्वं लण्घटकणकारे दुर्वारम् । लण्घटकणकारविशिष्टप्रथमणकारघटितसमुदायाव-च्छिन्नबोधकत्वादिति वाच्यम् । स्ववृत्तिश्रावणप्रत्यक्षविषयतावच्छेदकधर्मसमा-नाधिकरणानुबन्धत्वानाश्रयत्वस्य द्वितीयसम्बन्धतया निवेशेनादोषात् । एवंच प्रथमसम्बन्धो न निवेश्यः । न चानुबन्धानां निरुक्तसाध्यसिद्धावपि लक्ष्य-स्थानां तदसिद्ध्या तेषां बोधविषयत्वं दुर्वारमिति वाच्यम् । प्रत्याहारेषु

जातिपक्षस्य वक्ष्यमाणत्वेनानुबन्धत्वसमानाधिकरणश्रावणप्रत्यक्षविषयतावच्छेदकधर्मवतां सर्वेषां पक्षत्वेन लोपशास्त्रीयोद्देश्यतावच्छेदकधर्मसमानाधिकरणश्रावणप्रत्यक्षविषयतावच्छेदकधर्मवत्त्वस्य हेतुत्वेनादोषादित्याहुः ॥

ननु लणघटकाकारे इत्संज्ञाप्रवृत्त्युत्तरकालिकलोपशास्त्रीयोद्देश्यतावच्छेदकाक्रान्तत्वमादायाव्यापकत्वापत्तिर्वारणीयेति चेन्न । शास्त्राणां प्रवृत्तौ निवृत्तौ वा सत्ताया अनपेक्षणेन ज्ञानस्यापेक्षणेन च वस्तुतो लोपशास्त्रीयोद्देश्यतावच्छेदकाक्रान्तत्वस्य हेतुत्वासम्भवेन तत्प्रकारकज्ञानविषयत्वस्य हेतुत्वेन तदव्यापकमित्याशयात् । न चाजादिप्रत्याहारसिद्ध्युत्तरकालिकनिरुक्तज्ञानीयविषयतायाः स्वरूपसम्बन्धात्मिकायाः पूर्वमपि सत्त्वेन कथमव्यापकत्वमिति वाच्यम् । प्रत्यासत्त्या यदनुबन्धेषु यत्प्रत्याहारजन्यबोधविषयत्वाभावो विवक्षितस्तत्सिद्धिसमानकालिकस्य लोपशास्त्रीयोद्देश्यतावच्छेदकाक्रान्तत्वप्रकारकज्ञानस्यैव हेतुकुक्षौ निवेशेनादोषात् ननु हल्प्रत्याहारसिद्धिसमानकालिकं पुरुषान्तरीयज्ञानमादाय तदीयविषयताया लणकारे सत्त्वेन न व्यापकत्वहानिः । नच तत्सिद्धिसामानाधिकरण्यस्यापि निवेशेनाव्यापकत्वापत्तिरिति वाच्यम् । ईश्वरीयज्ञानस्य सर्वविषयकतया नित्यत्वेन च तदादायाव्यापकत्वविरहादिति चेन्मैवम् । पाणिनेरस्मदाद्युद्देशेन प्रवृत्तेरीश्वरीयज्ञानमादाय व्यापकत्वोपपत्तेरकिंचित्करत्वात् । मीमांसकानुयायिनां वैयाकरणानां नये ईश्वरानङ्गीकाराच्च ॥

अथ लणकारेऽनुनासिकत्वास्वीकारेऽपि तृतीयहेतोरव्यापकत्वं दुर्वारम् । प्रथमहलन्त्यसूत्रेण लकारस्येत्संज्ञायां हल्प्रत्याहारवज्झलादिप्रत्याहाराणामपि तदानीमेव प्रवृत्त्या झमञितिञकारे निरुक्तहेतोरभावादिति चेन्न । यदनुबन्धा यादृशप्रत्याहाराबोध्यत्वेन विवक्षितास्तादृशप्रत्याहारज्ञानविशिष्टलोपशास्त्रीयोद्देश्यतावच्छेदकाक्रान्तत्वप्रकारकज्ञानविषयत्वस्य हेतुत्वात् । ज्ञाने

ज्ञानवैशिष्ट्यं च स्वप्रयोजकज्ञानप्रयोज्यत्व, स्वप्रयोज्यज्ञानप्रयोज्यत्वाभाववत्त्वो-भयसम्बन्धेन । तथाच झल्प्रत्याहारज्ञानप्रयोजकं यद्धकारधर्मिकेत्वज्ञानमादि-रन्त्येनेत्येतद्वाक्यार्थज्ञानेच तत्प्रयोज्यत्वस्य झलादिप्रत्यहारप्रयोज्यलक्ष्यसाधु-त्वज्ञानप्रयोज्यत्वाभाववत्त्वस्यच अकारादिधर्मिकलोपशास्त्रीयोद्देश्यताच्छेदका-क्रान्तत्वप्रकारकज्ञाने सत्त्वेन तद्विषयत्वहेतोस्तत्रसत्त्वान्न तत्र व्यापकताविरहः । लण्घटकाकारधर्मिकलोपशास्त्रीयोद्देश्यतावच्छेदकाक्रान्तत्वज्ञाने हल्प्रत्याहारज्ञा-नप्रयोज्यं यदच्प्रत्याहारज्ञानं तत्प्रयोज्यत्वस्यैव सत्त्वेन द्वितीयसम्बन्धाभावेना-व्यापकत्वकथनसङ्गतिश्च ॥

केचित्तु अनिष्टसाधकाव्यापकत्वापत्तिरित्यर्थः । झल्प्रत्याहारज्ञानसम-कालिकझभञादिघटकञकारादिधर्मिकलोपशास्त्रीयोद्देश्यतावच्छेदकाक्रान्तत्वज्ञा-नाभावेऽपि नानिष्टसाधनम् । पूर्वं अकारादौ झलादिप्रत्याहारबोध्यत्वज्ञानेऽपि हल्प्रत्याहारासिध्युत्तरकालिकेनेत्त्वज्ञानेन तत्रभ्रमत्वबोधनेन अकारादौ झल्त्वा-भावेनानिष्टसाधकत्वाभावात् । नचैवं प्रकृते निर्वाहः । चकारधर्मिकहल्त्व-ज्ञानमुपजीव्य जायमानेनाच्प्रत्याहारज्ञानेन जायमानाया इत्संज्ञाया हल्त्वविघा-तुकलोपेऽनिमित्तत्वेन पश्चादपि लणकारे लोपशास्त्रीयोद्देश्यतावच्छेदकाक्रान्तत्व-ज्ञानाभावेन भूतपूर्वाकारधर्मिकहल्त्वज्ञाने भ्रमत्वापादकस्याभावेनानिष्टसाधका-व्यापकत्वापत्तेर्दुर्वारत्वात् । न तथा झलादिप्रत्याहारविषये हल्त्वमुपजीव्यमिति वदन्ति । तदसत् । चकारधर्मिकहल्त्वज्ञानस्योपजीव्यत्वेऽप्यकारधर्मिकस्यातथा-त्वेन तद्विरोधाभावात् । ईदृशविरोधमाश्रित्य ग्रन्थलापने वक्ष्यमाणस्याकारे हल्त्वापादकग्रन्थस्योपजीव्यविरोधेनासङ्गत्यापत्तेरित्यलमिति नागेशोक्तिप्रकाश-कारः ।

वस्तुतस्त्वादिरन्त्येनेत्येतच्छास्त्रस्य सङ्ग्राहकत्वेऽपि तत्तत्प्रत्याहारविषयक-तयोपप्लुतेषु विशेषवाक्येषु आदिर्हकारः अन्त्येन लकारेणेत्संज्ञकेनेत्यादिवाक्ये-

**तव लोपस्य बलवत्त्वेऽपि हल्प्रत्याहारसिद्धेः प्रागनपदार्थनिष्पत्त्यभावे- नोपदेशेऽजित्यस्य वाक्यार्थाभावेन लणित्यकारस्येत्सञ्ज्ञालोपयोर- भावेन प्रत्याहारेषु जातिग्रहणपक्षस्यैव भाष्यकृता सिद्धान्तितत्वेन**

---

नैवान्योन्याश्रयवारणार्थमावृत्तस्यहलन्त्यमित्यस्यैकवाक्यता स्वीक्रियते । नत्वा- दिर्झकारादिरन्त्येन लकारेणेत्संज्ञकेनेत्यादिभिर्वाक्यैः । किन्तु द्वितीयहलन्त्य- मित्यस्यैव व्यापकत्वादेकवाक्यता स्वीक्रियते । लाघवानुरोधात् । नच विनि- गमकाभावः । 'लकारस्येत्त्वाज्ञापनाद्धल्त्वाप्रसिद्धि'रिति हलन्त्यसूत्रोपक्रमभाष्ये- णावृत्तस्यान्योन्याश्रयदोषवारणमात्रफलकताया लाभेन तस्यैव विनिगमकत्वात्। अन्यथा लकारेण यावन्तः प्रत्याहाराः तावद्विषयकाणामादिरन्त्येनेतिसूत्रोपप्लु- तानां प्रत्येकमुभाभ्यामप्येकवाक्यतास्वीकारे गौरवं स्पष्टमेव । विशेषवाक्य- तात्पर्येणैवैकाचोबश इतिसूत्रे झप् झपन्तस्येति सुवचम् । भष्पदशक्त्यकल्पनेन लाघवादिति वक्ष्यति । अतएव प्रत्याहाराश्चैकचत्वारिंशदिति प्राचामुक्तिस्सङ्ग- च्छते । एवंच झलादिप्रत्याहारानादाय ग्रन्थासांगत्यपरिहाराय पूर्वोक्तस्सर्वोऽपि प्रयासो विफल एवेति प्रतिभाति । अव्यापकत्वापत्तिमुपपादयति । **नवेत्या- दिना । इत्संज्ञालोपयोरभावेनेत्यन्तेन ॥**

ननु लपरत्वं वक्ष्यामीतिभाष्यप्रामाण्येनास्यानुनासिकत्वमस्तु, यादृशानुब- न्धस्य प्रत्याहारबोध्यत्वे लक्ष्यदोषस्तादृशानुबन्धेष्वेव प्रत्याहाराबोध्यत्वं भाष्य- कृतास्सिसाधयिषितम् । एवंच लणित्यकारस्य न पक्षतावच्छेदकाक्रान्तत्वमिति न पूर्वोक्तापत्तिरिति शङ्कां मनसि निधाय लक्ष्यदोषमाह । **प्रत्याहारेष्विति ।** तवेत्यादेर्मध्यमणिन्यायेनेहापि सम्बन्धः । ननु हल्प्रत्याहारे लणकारस्य ग्रहणेऽपि अण्प्रत्याहारे अग्रहणेनानण्त्वात् सवर्णग्रहणाभावेन लक्ष्यस्थानां हल्त्वमप्रसक्तमेवेत्यत आह । **जातिग्रहणपक्षस्यैवेति ।** अतएव सर्वतकारादीनां

हल्प्रत्याहारे लणित्यकारप्रवेशे मामाँस्त्रायस्वेत्यत्रानुनासिकपक्षेऽनुस्वारापत्तिर्दुर्वारा । सोऽस्तीत्यादौ सुलोपाद्यापत्तिश्च । अत एव

---

झल्त्वादिसिद्धिरिति स्पष्टमन्यत्र । सूत्रेऽनुनासिकोच्चारणात्तस्य विवक्षितत्वेनानुनासिकत्वसमानाधिकरणैवात्वजातिर्निर्दिश्यत इत्याशयेनाह । **मामाँस्त्रायस्वेत्यत्रेति** । अशब्दद्वितीयाबहुवचनान्तमानिति । इदमुपलक्षणं मामँस्त्रायस्वेत्यस्यापि । अनितेर्विचि सम्बुद्धौ अन्निति रूपम् । ह्रस्वत्वसमानाधिकरणानुनासिकत्वसमानाधिकरणात्वजातेर्विवक्षणेप्यत्र दोषो बोध्यः । वस्तुतस्त्वनुनासिकोच्चारणस्य प्रत्याहारार्थतया चारितार्थ्येन न तद्विवक्षार्थमित्याशयेनाह । **सोस्तीत्यादाविति** । एतत्तदोरिति ज्ञापकात्सोऽस्यादिरिति निर्देशाद्वाऽकारस्य हल्त्वं नेति कल्पनापेक्षयास्यानुनासिकत्वाभावकल्पनमेव लघ्विति भावः । ननु हलन्त्यमित्यत्रहल्पदेनाकारग्रहणेऽप्यन्यत्र हल्पदेन न तद्ग्रहणम् । ततःपूर्वमुपदेशेऽजित्यस्य वाक्यार्थसम्भवेनेत्संज्ञालोपाभ्यां तदपहाराद्ग्राहकशास्त्रे दीर्घाद्यग्रहणेऽप्यन्यत्र तद्ग्रहणवत् । एतेन वल्प्रत्याहारेप्यकारग्रहणापत्तावयतइत्यादौ लोपोव्योरिति लोपापत्तिः परास्तेत्याचार्योक्तदिशा न पूर्वोक्तदोषावकाश इत्यरुचेराह । **चेति** । चेनानुनासिकोच्चारणस्य प्रत्याहारार्थतया ह्रस्वोच्चारणस्यलाघवानुरोधितया च तद्विवक्षायाःकर्तुमशक्यत्वेनगुणाभेदकत्वस्य व्यापकजातिनिर्देशस्य च भगवदभिप्रेतत्वेन दरिद्रातावाकारस्य हलन्त्यमिति सूत्रेणेत्त्वापत्तिस्समुच्चीयते । ततश्च दरिद्रित इत्यत्रादितश्चेतीट्प्रतिषेधस्स्यादिति भावः । एतेन गुणानां भेदकत्वेनेति कौस्तुभोक्तं समाधानमपास्तम् । यदितु तत्र दोषवारणायोपायान्तरमन्विष्यते तदा तदपेक्षयाऽकारस्यानुनासिक्याभावकल्पनमेव लघ्विति बोध्यम् । भाष्येऽज्ग्रहणेष्वित्यस्योपलक्षणत्वं वदतो दीक्षितस्य समाधानभाष्यविरोधं प्रदर्श्यानुपलक्षणत्वमेवेति स्वरीत्या लणकार-

**"प्रत्याहारेऽनुबन्धानां कथमज्ग्रहणेषु न" इत्यनेन प्रत्याहारे वर्ण समाम्नाये य एतेऽक्षु अज्बोधकसूत्रेषु प्रत्याहारार्था अनुबन्धाः क्रियन्ते तेषामज्ग्रहणेन ग्रहणं कस्मान्नेत्यर्थकेनाच्प्रत्याहारे शङ्का कृता, न हल्प्रत्याहारे। भाष्ये च "अइउण्" इत्यादिसूत्रचतुष्टयो-**

---

स्यानुनासिकत्वं वदतां शङ्कापरभाष्यविरोधं दर्शयति। अत एवेति। शङ्काग्रन्थार्थं दर्शयति। प्रत्याहारे वर्णसमाम्नाय इत्यादिना। घटकत्वं सप्तम्यर्थः। अक्षरसमाम्नायघटकाज्बोधकसूत्रेष्वित्यर्थः। भाष्यस्थस्याक्ष्वित्यस्याच्प्रत्याहार इत्यर्थभ्रमनिरासायेदं विशेषणम्। प्रत्याहारार्था इति। प्रत्याहारफलका इत्यर्थः। प्रत्याहारेऽनुबन्धानां ग्रहणस्यानिष्टत्वे तदनुच्चारणमेवास्त्विति शङ्कानिरासायेदम्। अज्ग्रहणेनेति। प्रत्यासत्तिलभ्यमिदम्: अत्र भट्टाः। य एत इत्यतःप्राक्प्रत्याहारे वर्णसमाम्नाय इत्यपपाठः। पौनरुक्त्यापत्तेः भाष्येऽदर्शनाच्च। वार्तिके प्रत्याहार इति निमित्तात्कर्मयोग इति सप्तमी, निमित्तमिह फलम्। कर्मयोगश्चाजादिसंज्ञाभूतसमुदायस्यानुबन्धेन कर्मणा चकारादिनाऽवयवावयविभावः। तथाच प्रत्याहारार्था इत्यर्थ इत्याहुः। तन्न। उद्योतेप्यस्य पाठस्य दृष्टत्वात्। प्रत्याहारोऽक्षरसमाम्नाय इति कौस्तुभे व्याख्यातत्वाच्च। वार्तिकस्थप्रत्याहारशब्दस्य वर्णसमाम्नाय इत्यर्थकतायास्स्वेनैवोत्तरत्र वक्ष्यमाणत्वाच्च। पौनरुक्त्यन्तु विशेषणतयाऽन्वयेन परिहृतम्। किंच कर्मयोगोपपादनमपि न सम्यक्। अजादिपदघटकचादेरित्सदृशत्वेऽप्यनुबन्धत्वाभावात्। भाष्य एतदनुक्तिस्तु वार्तिकात् स्पष्टंलाभादेवेति प्रतिभाति। न हल्प्रत्याहारे इति। लणकारस्यानुनासिकत्वे तस्य हल्षु ग्रहणापत्त्या सर्वप्रत्याहारमूलभूतत्वात्तत्रैव शङ्काकरणमुचितम्। मम त्वक्षरसमाम्नायेऽकारस्य प्राथम्यात् तेन प्रत्याहारस्थले शङ्का कृतेति भावः।

पादानेनैवास्य प्रवृत्तिर्दर्शिता । तत्र प्राधान्यं प्रत्याहारेषु ग्रहणार्थत्वरूपं, हल्षु च तथोपदेशस्तेषाम्, अक्षु तु स्वराणामेव तथोपदेश

---

नच तथापि पूर्वोपस्थितणकारादिघटिताणादिप्रत्याहारेषु कुतश्शङ्का न कृतेति वाच्यम् । फलाभावं मनसिनिधायाज्ग्रहणेनेत्युक्तमित्युद्योतेनैव दत्तोत्तरत्वात् । न चाण्प्रत्याहारे णग्रहणस्य फलाभावेऽपि सुगणं सुगणावित्यादौ पूर्वरूपपूर्वसवर्णदीर्घरूपफलमक्प्रत्याहारे णकारग्रहणस्य सुवचामिति वाच्यम् । अकस्सवर्ण इतिसूत्रेऽचीत्यनुवृत्त्या तत्र फलाभावेन णकाराग्रहणेऽर्थाधिकारानुरोधेनोत्तरत्र तादृशार्थकस्यैवानुवृत्तिरिति वर्णनेन वारणसम्भवादिति दिक् ।

ननु भाष्ये अइउणित्यादिसूत्रचतुष्टयोपादानेनास्याः प्रवृत्तिदर्शनेऽपि अप्रधानत्वादितिहेतुविवरणावसरे "एषाह्याचार्यस्य शैली दृश्यते यत्तुल्यजातीयांस्तुल्यजातीयेषूपदिशति अचोऽक्षुहलोहल्ष्विति" भाष्येण हल्ष्वपि प्राधान्याप्राधान्यविमर्शस्य कृतत्वेन हल्ष्वप्यप्रधानत्वादिति हेतुसंचारस्यापि सूचितत्वेन पूर्वोक्तशङ्काया अज्मात्रविषयत्वे हल्षुहेतुसंचारस्यासाङ्गत्यापत्त्योपलक्षणतया शङ्कापरभाष्यस्य सर्वैरपि नेयत्वेन न पूर्वोक्तदोषशङ्कावकाश इत्याशङ्कां मनसि निधाय तादृशभाष्यस्याक्षु हलामप्राधान्यप्रदर्शन एव तात्पर्यं नतु हल्ष्वप्यप्राधान्यरूपहेतुसंचार इत्याशयेन तद्भाष्यार्थं वर्णयति । तत्रेत्यादि । हलां प्रत्याहारेषु ग्रहणार्थत्वरूपप्राधान्येनोपदेशो हल्ष्वेव । अक्षुतु न तादृशप्राधान्येनोपदेश इत्यर्थः । अन्यव्यवच्छेदकमेवकारं भेदकं तुशब्दंच प्रयुञ्जानो मूलकारोऽमुमेवार्थमभिप्रेत्याचोऽक्षुहलोहल्ष्विति भाष्य एवकारद्वयमध्याहृत्य प्रथमवाक्येऽच इत्युत्तरं द्वितीयवाक्येहल्ष्वित्युत्तरं संयोज्य हल्ष्वेव हलः प्रधाना न त्वक्षु तत्र त्वच एवेत्येवंपरतया भाष्यं योजनीयं न त्वस्यान्यथार्थं व्याख्याय तदनुरोधेन शङ्काग्रन्थस्योपलक्षणत्वतात्पर्यं कल्पनीयमिति मन्यते ।

इति प्राधान्यात्तेषामेव संज्ञित्वमिति भाष्ये स्पष्टम्। न च

---

युक्तंचैतत्। न खल्वप्येतेषामक्षु प्राधान्येनोपदेशः क्रियते। क्वतर्हि हल्ष्विल्युपक्रमेऽक्षु हलामप्राधान्यमात्रस्यैव प्रक्रान्तत्वेन "कुतएतत् एषाह्या-चार्यस्य शैली दृश्यत" इति तदुपपादकैतद्भाष्यस्यार्थान्तरपरताया अनौ-चित्यात्। अत एवोकालोऽजितिवायोगस्तत्कालानां यथा भवेदितिभाष्यकारोक्तं पक्षान्तरं सङ्गच्छते। अन्यथा पूर्वभाष्यस्य प्रत्याहारमात्रतात्पर्यकत्वे पक्षान्त-रस्यास्य न्यूनत्वापत्त्याऽसङ्गतिः स्पष्टैव। नच कुक्कुट इत्यादौ तत्पक्षे दोष-माशङ्क्य तस्मात् पूर्वोक्त एव परिहार इत्युत्तरभाष्येणोकालोऽजितिभष्यस्य पूर्वपक्षत्वलाभात्तद्भाष्यविरोधोऽकिंचित्कर इति वाच्यम्। यद्यप्ययं परिहारो-ऽस्ति द्वावेतौ ककारौ नच वर्णद्वयेनैका जातिर्व्यज्यत इति, तथापि पूर्वमेव मात्राकालोऽत्र गम्यते नच मात्रिकं व्यञ्जनमस्तीत्युक्तत्वात् पुनरिह नोक्त इति कैयटेन तत्पक्षदूषकभाष्यस्यैकदेशयुक्तित्वसूचनेन पक्षान्तरविरोधस्य दुष्प-रिहरत्वादिति दिक्। शङ्कापरभाष्यस्य सूत्रचतुष्टयमात्रविषयकत्वस्वीकारे प्रसक्तं दोषमाशङ्कते। नचेति। यत्तु तत्रेत्यादिग्रन्थस्य प्रासङ्गिकत्वं प्रतिपाद्याप्रधान-त्वादिति हेतुविवरणपरतया व्याख्याय वस्तुतस्तु प्राधान्यं श्रुतिघटकत्वमेव वक्तुं युक्तम्। अनुबन्धानां महेश्वरकृतत्वस्य तदतिरिक्तानां श्रुतित्वस्यच प्राक्प्रतिपादितत्वेन श्रुत्यपेक्षया महेश्वरकृतऽप्राधान्यस्य वक्तुं युक्तत्वात्। अत एव हयवरडित्यादौ टकारादेर्न प्राधान्यम्। अन्यथा हल्षु तथोपदेशस्ते-षामित्यादितष्टकारादेरपि प्राधान्यापत्तौ द्वितीयहेतोरव्यापकत्वापत्तेः। नचैव-मस्य हेतोस्स्वौजसित्यत्रासत्त्वात्तत्रानुबन्धानामपि सुबादिबोध्यत्वं स्यादिति वाच्यम्। अनुबन्धघटिते तस्येष्टत्वादित्युक्तं तन्न। उपदर्शितरीत्या तत्रेत्यादि-ग्रन्थस्य स्वारसिकत्वे प्रासङ्गिकत्वकथनानौचित्यात्। अस्य ग्रन्थस्य भाष्यार्थ-

हशादिप्रत्याहारे टग्रहणस्यापत्तिरिति वाच्यम् । हकारादिषु पुनः पुनरकारोच्चारणेन उच्चारणार्थवर्णरहितहलां तद्घटितप्रत्याहारे ग्रहणा-

---

वर्णनपरतया प्राधान्यनिर्वचनपरत्वाभावेन वस्तुतस्त्वित्यादिग्रन्थस्य प्रकृते अप्रसक्तत्वात् । हेतुविवरणतात्पर्यकत्वे आचारादित्यस्याविवरणेन न्यूनतापातात् । एतेन द्वितीयहेतोरव्यापकत्वं शङ्कते नचेत्यादीतिवदन्तः परास्ताः । उद्योते नचेत्यादि वक्तुं शक्यत्वादित्यन्तग्रन्थस्य सत्त्वेन तद्विरोधेनैतद्ग्रन्थतात्पर्यकल्पनाया अनौचित्यात्तत्रैवं तात्पर्यस्य वक्तुमशक्यत्वादित्यादितद्ग्रन्थपरिशीलनचतुरा विभावयन्तु । परिहरति । हकारादिष्वित्यादिना । नच नपुनरन्तरेणेति भष्यानुरोधात्तदुच्चारणमिति वाच्यम् । द्वयोर्व्यञ्जनयोरेकाचैवोच्चारणसम्भवे प्रतिवर्णमकारोच्चारणं ज्ञापकमिति वक्तुं शक्यत्वादिति भावः । अतएव पुनः पुनरित्युक्तमिति बोध्यम् । तद्घटितेति । हल्घटितेत्यर्थः । अत एवोद्योते हल्घटितेत्येव पाठः । उच्चारणार्थवर्णघटितेति व्याख्यानन्तूद्योताननुगुणत्वादुपेक्ष्यम् ॥

नन्नु ममापि शङ्कापरभाष्यं सूत्रचतुष्टयमात्रविषयकमेवास्तु । एवंच नाव्यापकत्वापत्तिः । हल्प्रत्याहारे शङ्काकरणन्तु हशादिप्रत्याहारे तवेव समाध्यन्तराभिप्रायेणैव । अकारस्यानुनासिकत्वेपि हलि ग्रहणाभावस्तु तव मते हशादौ टादिग्रहणाभाववत् ज्ञापकसाध्य एव । ज्ञाप्यांशस्तु सामान्यत उच्चारणार्थकवर्णरहितानां दशसूत्रीघटकानां वर्णानां प्रत्याहारे ग्रहणाभाव इत्येव । अन्यत्राचामुच्चारणार्थतकारादिसाहित्यस्य दृष्टतया प्रकृताकारस्य तद्राहितत्वादेव न प्रत्याहारघटकत्वम् । एवं च सति न पूर्वोक्तलक्ष्यदोषोपीति चेन्न । तव मते लणकारस्य प्रत्याहारार्थतया उच्चारणार्थत्वस्य वक्तुमशक्यत्वेन लकारस्याप्युच्चारणार्थवर्णराहितत्वेन प्रत्याहारघटकत्वानापत्तौ महदनिष्टं प्रसज्येतेति तथा-

**भावस्य वक्तुं शक्यत्वात् । तद्विषयप्रयोगाणामनभिधानाच्च । तस्मादस्यानुनासिकत्वमप्रामाणिकम् । "उरण् रपरः" इत्यत्र लग्रहणं कर्तव्यमेव । ऋलृवर्णयोः सावर्ण्यवदित्याहुः ॥**

**ननु हयेत्यादावकारोच्चारणेन तस्य हल्त्वप्रसङ्गोऽत आह । हकारादिष्विति । "न पुनरन्तरेणाचं व्यञ्जनस्योच्चारणमपि भवति"**

---

र्थस्य ज्ञापयितुमशक्यत्वात् । यत्तु हशादौ टादिग्रहणवारणाय यत्तुल्यजातीयानिति भाष्यात् अन्तस्थानामन्तस्थासु अनुनासिकानामनुनासिकेषु चतुर्थानां चतुर्थेषु तृतीयानां तेषु द्वितीयानां तेषु प्रथमानां तेषु ऊष्मणामूष्मस्वित्यर्थो विवक्षणीयः । हलो हल्ष्विति तूपलक्षणमित्याद्युपवर्णयन्ति । तन्न । पूर्वोक्तशङ्कासमाधानयोरज्मात्रविषयकतायाः पूर्वमुपपादितत्वेन एतद्वर्णनस्यानुपयोगात् । प्रथमहकारस्य निरुक्तसाजात्यविरहादडादिषु ग्रहणानापत्तेश्च । लण्णकारस्यानुनासिकेषु पाठदर्शनेन तस्येण्प्रत्याहारे ग्रहणापत्तौ सुगण्स्वित्यत्र षत्वापत्तेश्चेत्यास्तां विस्तरः । तद्विषयप्रयोगाणामिति । टकारादीनां हस्त्वे तन्निमित्तकोत्वादिघटितप्रयोगाणामित्यर्थः । एतेन राजाहस्सखिभ्यष्टजिति सौत्रप्रयोगस्य "कोयष्टिकष्टीकते" इति मालतीमाधवप्रयोगस्य च सत्त्वादनभिधानकथनमसङ्गतमित्यपास्तम् ॥

**अनभिधानाच्चेति** । यतस्तादृशप्रयोगाणामनुपलम्भस्ततःपूर्वोक्तज्ञापनेन किञ्चिद्बाधकमिति भावः । स्वमतमुपसंहरति । तस्मादिति । **अप्रामाणिकमिति** । अनेन यथाकथञ्चित्प्रमाणविरोधपरिहारकरणेऽपि प्रमाणाभावादेव नानुनासिक्यमकारस्येति सूचयति । **आहुरिति** । अत्र केचित् रप्रत्याहारकरणमेव वरं, उरणित्यत्र लकाराकरणलाघवात् । अतएव भाष्ये "लपरत्वं वक्ष्यामी" त्युक्त्वापि पुनर्नोक्तम् । इत्संज्ञकत्वस्यैव पक्षतावच्छेदकत्वेन तृतीयहेतोर्नाव्याप-

कत्वम् । किञ्च उच्चारणार्थानां विनेत्संज्ञां न निवृत्तिरित्युत्तरत्र स्वेनैव वक्ष्यमाणत्वेन हकाराद्यकारस्याप्यनुनासिकत्वस्य त्वयाप्याश्रयणीयत्वेन भवदुक्तदोषास्तवापि दुर्वारा इति पुनःपुनरकारोच्चारणेन यत्तुल्यजातीयानित्यादि भाष्याच्च प्रत्याहाराणामाद्यशब्दसजातीयमध्यपातिबोध्यबोधकत्वं स्वीकार्यम् । साजात्यं च बोधकत्वप्रकारकाचार्यतात्पर्यविषयत्वेनैव । अतएव सुबादिपदैभ्यामेकादेशादेर्हलादिपदैर्मध्यपातिवर्णसङ्घातस्य चाग्रहणं सिद्धम् । अच्त्वहल्त्वादिनातु न साजात्यं । सुबादावसम्भवात् । अलादिभिर्हकारादेरग्रहणप्रसङ्गाच्च । एवंच हकाराद्यकारेष्विव लणकारेपि बोधकत्वेन तात्पर्यविषयत्वाभावेनैव सकलनिर्वाह इत्युभयत्र तुल्यम् । उच्चारणार्थानामपीत्संज्ञा विधेयविषय एवेति न हकाराद्यकारानुनासिक्यमावश्यकमिति तु तेषामपि साधुत्वविधायकत्वेन निरसनीयम् । किञ्च हलन्त्यसूत्रघटकहल्पदेनाकारस्य बोधेऽप्यन्यत्र हल्पदेन न तस्य बोध इति लक्ष्यदोषोपि निरसनीयः । शङ्कापरभाष्यविरोधस्तु उपलक्षणतया व्याख्याय निरोद्धव्यः । उक्तरीत्या नव्यैरपि तस्यावश्यं शरणीकरणीयत्वादित्याहुः । तन्न विचारसहम् । अन्यत्रानुबन्धत्वस्येत्संज्ञायोग्यत्वरूपस्य प्रायशो दृष्टत्वेनात्रेत्संज्ञकत्वरूपस्य स्वीकारे मानाभावादव्यापकत्वस्य सुस्थत्वात् । किञ्च यद्यत्प्रत्याहारे यस्ययस्य घटकत्वे दोष आपतति तस्य सर्वस्य घटकत्वाभावस्सिसाधयिषितो वा उत येषां केषांचित् । आद्ये हल्प्रत्याहारकाले प्राप्तघटकत्वस्य वारणाय इत्संज्ञायोग्यत्वमनुबन्धत्वमिति त्वयाऽवश्यं स्वीकरणीयमिति अव्यापकत्वापत्तिस्सुस्था । अन्त्ये उपलक्षणतया व्याख्यानमनुचितमेवेति सर्वप्रत्याहारमूलभूतहल्प्रत्याहार एव शङ्कायाः करणीयतया तद्भाष्यविरोधो दुष्परिहर एव । किञ्चोपलक्षणत्वे वार्तिके अज्ग्रहणेषु नेत्यस्य वैयर्थ्यम् । तस्मात्सूत्रचतुष्टयोपादानेनैवास्य प्रवृत्तिदर्शनेन तन्मात्रविषयकतोचिता । उच्चारणार्थानामित्संज्ञाया विधेयविषयकत्वेन न

भवदुक्तदोषावकाशः तेषां साधुत्वविधायकत्वस्य पूर्वमेव निराकृतत्वात् । शङ्काग्रन्थस्योपलक्षणतात्पर्यकत्वे अज्ग्रहणेष्वित्येव न वदेत् । नच तत्रापीगाद्युपलक्षकत्वमावश्यकमिति वाच्यम् । अज्ग्रहणेष्वित्यस्याज्बोधकसूत्रेष्वित्यर्थात्सूत्रचतुष्टयघटकानुबन्धेषु सर्वत्र शङ्कायाः कृतत्वेन उपलक्षणत्वानवसरात् । पूर्वोक्तरीत्या मूलोक्तलक्ष्यदोषवारणेपि चशब्दसमुच्चितदरिद्रित इति दोषस्तु दुष्परिहर एव । नच तत्र "यस्य विभाषेति" निषेधो भवत्येवेति वाच्यम् । तत्रैकाच इत्यनुवृत्तेः । आदितश्चेत्यत्रापि तदनुवृत्त्या वारणेतु गौरवम् । किञ्चास्यानुनासिकत्वे विधेयघटकोच्चारणार्थकानामानुनासिक्यावश्यम्भावेन अचिर ऋतः, रकृतोऽलादेर्लघोः, वनोर च, रोऽसुपि, योऽचि, इत्यादावनुनासिकाकारेण प्रत्याहारज्ञानस्याकामेनाप्यभ्युपगन्तव्यत्वेन महदनिष्टमापतेत् । तत्र दोषवारणायोपायान्तरानुसरणे तु गौरवम् । तुल्यास्यसूत्रे लपरत्वं वक्ष्यामीत्युक्त्वा पुनस्तदकथनं तु तव व्याख्यास्यामीत्युक्त्वा पुनरव्याख्यानवदिति विभावय । तच्चावश्यं वक्तव्यमिति इहैव तदुत्तरमावश्यकताकथनेन पुनः कथनं नावश्यकमिति वा तदनुक्तिः । सुबादिसंज्ञा त्ववयवेषु फलाभावादेव न विश्राम्यति । वृक्षप्रचलनन्यायेन वा तदविश्रमः । अजादिसंज्ञानां तद्घटकसमुदाये वारणं फलाभावादेव समुदायसंज्ञावत् यदि किञ्चिदनिष्टं फलमुपलभ्येत तदा वर्णग्रहणे जातिग्रहणप्राप्तस्येव उपायान्तरेणेवेति न किञ्चिदनुपपन्नम्, तथाच पूर्वोक्तदोषाणां वारणाय तत्रतत्र क्लिष्टकल्पनां कृत्वाऽकारस्यानुनासिक्यव्यवस्थापनं पर्वतखननेन मूषिकाग्रहणमनुकरोति ॥

यत्तु श्रुतिघटकानामेव संज्ञित्वमिति नाकारस्य हल्त्वप्रसङ्ग इति तन्न । अस्य श्रुत्यघटकत्वे केनोपदिष्टोऽयम् । महेश्वरेणेति चेत् अन्त्यं वर्णचतुर्दशमिति नन्दिकेश्वरकारिकासाङ्गत्यम् । पाणिनीयत्वबहिर्भावात् न पाणिनिना । तस्माद्धकाराद्यकारसाम्यमेवास्येति वक्तव्यमिति नागेशगूढाशयमुद्भावयन्ति ।

इति "उच्चैरुदात्तः" इतिसूत्रस्थभाष्यात् "एषा ह्याचार्यस्य शैली लक्ष्यते, यत्तुल्यजातीयाँस्तुल्यजातीयेषूपदिशति, अचोऽक्षु हलो हल्षु" इति प्रत्याहारेऽनुबन्धानामित्यत्र भाष्याच्चेति भावः ॥

स्यादेतत् । "न विभक्तौ" इत्यादेः सार्थक्याय हलन्त्यमित्यस्योपदेशेऽन्त्यं हल् इदित्यर्थस्यावश्यकत्वेन हलन्त्यमादिरन्त्येनेत्यनयोः परस्परापेक्षत्वेनान्योन्याश्रयाल्लकारे इत्सञ्ज्ञामबोधयित्वा हलामित्सञ्ज्ञाबोधनं पाणिनेरयुक्तम् । न च हयवरेत्यादेरावृत्त्या शषसरित्यन्तं समुदायमुद्दिश्य "हल्" इत्यनेन हल्सञ्ज्ञाऽपि

---

ननूच्चारणार्थस्यापि मध्यपातित्वाविशेषात्कुतो न संज्ञेत्यत आह । एषा हीत्यादि । केन धर्मेणात्र साजात्यं विवक्षितं अचोऽक्षु हलो हल्ष्विति भाष्यात् अच्त्वादिनेति लभ्यते तत्तु न शक्यं साजात्ये निश्चिते ते संज्ञे तयोश्च निश्चितयोस्साजात्यमित्यन्योन्याश्रयापत्तेः । किन्तु लोकप्रसिद्धस्वरत्वव्यञ्जनत्वाभ्यामर्धमात्राधिककालिकत्वार्धमात्राकालिकत्वाभ्यां वेत्यर्थेहि ॥

यत्तु औकारावृत्त्यच्त्वाव्याप्यधर्मानवच्छिन्नत्वेनाक्षु, इण्त्वाक्त्वादिकमादायासंभववारणाय विशेषणद्वयं धर्मे, हकारावृत्ति हल्त्वाव्याप्यधर्मानवच्छिन्नत्वेन हल्षु, अट्त्वयण्त्वादिकमादायासम्भववारणायोभयमिति, तन्न, तत्राप्यच्त्वहल्त्वयोः प्रवेशेन दोषतादवस्थ्यात् । तयोरुपलक्षणतया दोषवारणेपीदानीमकारे यण्त्वादेर्वक्तुं शक्यतया तदनवच्छिन्नत्वस्याकारेऽसत्त्वेन निरुक्तसाजात्यस्याक्षु अव्याप्तत्वात् ॥

ननु हलितिसूत्रे अन्त्यमिदित्यर्थे नान्योन्याश्रयशंकेत्याशङ्क्य परिहरति न विभक्तावित्यादेरित्यादिना । आदिना उपदेशेजित्यस्य सङ्ग्रहः । प्रकरणार्थानुरोधेन तत्प्रकरणस्थसूत्रतात्पर्यस्योन्नेयत्वादिति भावः । प्रकृतसूत्रस्थं

**विधेयेति** वाच्यम्। दशसूत्र्याऽऽवृत्तौ गौरवात्। ननु उपदेशे इदन्त्यम्, अच्, अनुनासिकः, इति सूत्रत्रयमस्तु, अजित्यनन्त्यार्थम्। **तृतीये**ऽजित्यनुवृत्तिसामर्थ्यादचोऽदिद्भवति तत्रानुनासिक एवेति **नियमाश्रयणाद्रु**प्रभृतौ न दोषः। योगविभागसामर्थ्याच्चानन्तरस्येति **न्यायं बाधित्वा** व्यवहितस्यापि तेन नियमः। मिदचोऽन्त्यादिति **ज्ञापकाच्च न** विपरीतनियमः। एवञ्च हल्ग्रहणमपि व्यर्थमन्यो**न्याश्रयश्च न**। न च पाणिनिसूत्रभेदे पारायणादावदृष्टहानिः। तथा च तत्र तत्र भाष्यम् "अपाणिनीयन्तु भवति" इति वाच्यम्। **कल्प्यमानन्यासस्य** लघुत्वेऽस्यादोषत्वात्। "सूत्रभेदं तमुपाचरन्ति **यत्र तदेवा**ऽन्यत् सूत्रं क्रियते भूयो वा, यदि तदेवोपसंहृत्य क्रियते **नासौ सूत्रभेदः**" इति अच उपसर्गात्तः" इति सूत्रभाष्यात्। नासौ सूत्रभेद इत्यस्य दोषायेति शेषः। सति सम्भवे दृष्टद्वारैवाङ्गानाम**दृष्टार्थत्वमिति** तदाशयः। अत एव तत्र तत्र ज्ञापकपरसकलभाष्यो-

---

भाष्यमत्रानुकूलम्। एतेन अन्येतु प्रथममादिरन्त्येनेति वाक्यार्थजिज्ञासाया मुपसंजातविरोधन्यायेन कृत्रिमत्वज्ञानाभावेन कृत्रिमाकृत्रिमत्वप्रवृत्त्या च हल्सूत्रान्त्यमित्यर्थे ततो नविभक्तावित्यादिवैयर्थ्यानुसन्धानेनावृत्त्या अर्थान्तरस्य युक्तत्वादिदमसत्। भाष्यन्त्वेकदेश्युक्तिरेवेत्याहुरित्यपास्तम्। विना विरोधमेकदेश्युक्तित्वकल्पनाया अनौचित्याच्च। **अजित्यनुवृत्तिसामर्थ्यादिति।** तदननुवृत्तौ मनिनादौ मादेरित्त्वार्थं विधिस्स्यादिति भावः। **तदाशय इति।** लाघवादेवमेव न्यासः कुतो न कृतः पाणिनिनेति पूर्वपक्ष्याशय **इत्यर्थः।** एतेन सामर्थ्ययोगान्नहीति भाष्यात् पूर्वं केषांचिच्छुद्धादृष्टार्थत्वं प्रतिपादितम्। अत्रतु दृष्टद्वारैवादृष्टार्थत्वं प्रतिपाद्यत इति परस्परविरुद्धमित्यपास्तम्।

च्छेदो नेति चेन्न । योगविभागनियमज्ञापकाश्रयणे ऽतिगौरवात् । न हि वर्णाभिव्यक्तिजनककण्ठाद्यभिघातगौरवमेवादर्तव्यं, न तु ज्ञानजनकमनोव्यापारगौरवमिति राजाज्ञाऽस्ति । न च सह आसमन्ताद् एति गच्छतीति सहेता मध्यमो वर्ण इत्यर्थ इति, अतो नान्योन्याश्रय इति वाच्यम् । अन्योन्याश्रयतत्परिहारादीन् वदता भाष्यकारेण कटीवीत्यत्र प्रश्लिष्टादीङ्गताविव्यत इण् गताविव्यतश्च सहाऽऽङ्पूर्वात्तृजभावबोधनात् । किञ्च योगमर्यादया तत्र उक्तार्थालाभः । आसमन्तादित्यस्यानन्वितार्थत्वं व्यर्थत्वञ्च । रूढौ

---

नासौ सूत्रभेद इत्यस्य दृष्टप्रयोजनकोऽसौ न भवति केवलादृष्टप्रयोनकोसौ सूत्रभेदो भवत्येवेति श्रीधरोक्तदिशा विरोधाभावात् । मनोव्यापारगौरवमिति । नन्वत्र किं गौरवं योगविभागस्त्वावृत्त्या तुल्यः, नियमप्रयुक्तं तु हल्पदाकरणलाघवेन परिहीयते । विपरीतनियमवारणज्ञापकं त्वावृत्तौ ज्ञापकेन तुल्यं, किन्तु अन्योन्याश्रयशङ्कानुदय इत्यपरमनुकूलमिति चेत् सत्यम् । सामर्थ्यादनन्तरस्येतिन्यायबाधकल्पनाप्रयुक्तगौरवस्यातिरेकात् । साम्येऽप्यपाणिनीयत्वदोषस्य सत्त्वाच्च । कटीवीत्यत्र प्रश्लिष्टादिति । अयं ग्रन्थः प्राचीनरीत्या, स्वमते प्रश्लेषाभावात् । आङ्प्रश्लेषफलन्तु एङि पररूपमित्यस्य ओमाङोश्चेत्यस्य च प्रवृत्तिः । न चाङ्प्रश्लेषेपि इण्धातावेत्येधतीति वृध्द्यापत्तिरिति वाच्यम् । पूर्वं धातोरुपसर्गेण योगे पूर्वमाङ्गुणप्रवृत्तेः । नच णेरध्ययन इति निर्देशेन पूर्वमुपसर्गयोगेपि सन्धिकार्याप्रवृत्तिर्ज्ञाप्यते इति वाच्यम् । ज्ञापकसिद्धत्वेन तस्यासार्वत्रिकत्वात् । नच पूर्वमाङ्गुणे वृद्धिरनवकाशेति वाच्यम् । ज्ञापकेन सन्धिकार्याप्रवृत्तिस्थले चारितार्थ्यमित्याशयात् । अस्य ग्रन्थस्य प्राचीनानुयायित्वेन स्वमतविरोधस्याकिञ्चित्करत्वात । एतेनेदं चिन्त्यमित्याचार्या, अपपाठइति तदनुयायिनश्च परास्ताः । व्यर्थत्वं चेति । चेन जमङ्गणेत्यादिणा-

**तु न मानमतः सूत्रावृत्त्या तं परिहरति । हलन्त्यमिति ॥**

**भाष्येऽप्यन्योन्याश्रयमाशङ्क्य "हलन्त्यमित्संज्ञं भवति लकार-श्चेद्भवतीति वक्तव्यमित्युक्त्वैकशेषनिर्देशाद्वा सिद्धम्। हल् च हल् च हल् हलन्त्यमित्" इत्युक्तम्। तस्यायं भावः। कृतैकशेषेण**

---

दिभिः प्रत्याहारापत्तिस्संगृह्यत इत्याचार्याः । व्याख्यानेनैव निर्णयसम्भवात् तच्चिन्त्यमित्यन्ये । परेण न पूर्वेणेति इण्स्थले व्याख्यानावश्यकत्वेपि यणादिषु तदनावश्यकत्वादाचार्योक्तमेव ज्याय इति प्रतिभाति । यत्तु इतरेतरस्या-तन्त्रतां स्वीकृत्यान्योन्याश्रयशङ्कासमाधानक्लेशः परिहृतः, तदनेन प्रत्युक्तम् । तत्रतत्र व्याख्यानमाश्रित्य सूत्रनिराकरणस्यायुक्तत्वाच्च । सूत्रावृत्त्येति ॥

यत्तु नच हयवरत्याद्येतत्पूर्वग्रन्थः हलन्त्यमितीति प्रतीकानन्तरं लेख्यः । गौरवस्य सापेक्षत्वेन लघुभूतोपायान्तरस्याधुना अदर्शितत्वेन तत्समाधाना-साङ्गत्यापत्तेरिति, तन्न, लघुभूतोपायस्य कौमुद्यामेव दर्शितत्वेन तदपेक्षया गौरवस्य दर्शयितुं शक्यत्वात् । मूलोक्तपक्षाद्गुरुपक्षाणां तदवतरणे प्रदर्शनस्य ग्रन्थकारशैलीसिद्धत्वाच्च । यदि स्वनैव एतद्ग्रन्थानन्तरं सूत्रावृत्त्या परिहार उच्येत, तदा त्वदुक्तशङ्काया यथाकथञ्चिदवकाशः, प्रकृते न तथेति सन्तोष्टव्यम् ॥

आवृत्तिं प्रमाणयति। भाष्येपीत्यादिना। यद्यपि भाष्ये हलित्यस्य एक-शेषप्रदर्शनेन तन्मात्रस्यैवावृत्तिर्लभ्यते, तथापि तस्य समासघटकत्वेन तन्मात्र-स्यावृत्तिर्बोद्धुंबोधोपयोगिनी न सम्भवतीति सम्पूर्णसूत्रावृत्तिरेव भाष्यतः फल-तीति भावः। तदेतत्सूचयति। अत्रोच्चारयितुरेकशेषनिर्देशः बोद्धुस्त्वावृत्त्या बोध इत्यनेन। एवंच मूलकाराभिप्रेतमेव व्याख्याताऽभिप्रैति नतु व्याख्यातुरन्यादृशं

**हल्पदेन सम्बन्धसामान्यषष्ठ्या समासोऽन्त्यशब्दस्य च द्वन्द्वान्ते श्रूयमाणस्येवोभयत्रान्वयः। एवञ्च हल्सूत्रान्त्यं हल्रूपान्त्यं चेति बोधः। अन्त्ये राहोः शिर इतिवत् षष्ठीति। अत्रोच्चारयितुरेकशेषनिर्देशो बोद्धुस्त्वावृत्त्या बोधः। हसमीपो लकार इत्, हल्रूपान्त्यश्चेति कैयटोक्तव्याख्यायां तु हल् इत्सञ्ज्ञम्भवति हलन्त्यञ्चेदिति वदेदित्यूह्यम् ॥**

---

मतम्। तथासति भाष्येत्विति तुशब्दघटितं वदेदिति बोध्यम्। एतेन परेतु एतदसत्। एकहल्पदार्थस्य अन्त्यपदार्थनिष्ठविशेष्यतानिरूपितप्रकारताश्रयत्वेऽपि द्वितीयहल्पदार्थस्याधुना निष्पत्त्यभावेनातथात्त्वादुभयोः प्रकारतयोर्युगपदसम्भवेन साहित्याभावेन एकशेषानुपपत्तेः। नचैकत्र हल्पदार्थप्रकारतामादाय बोधे जाते पश्चाद्धल्पदार्थे ज्ञाते द्वितीयो बोध इति वाच्यम्। बोधद्वयस्यान्त्यपदावृत्तिमन्तरेणासम्भवेन प्राचीनमतादवैलक्षण्यापत्तेः। कैयटोक्तन्तु एकस्य हल्पदस्यान्त्यपदेऽन्वयाभावेन साहित्याभावादयुक्तम्, भाष्यप्रामाण्यात्सौत्रत्वाद्वा असहविवक्षायामप्येकशेषकल्पनापेक्षया तु सूत्रावृत्तिरेव युक्तेति वदन्तीति परास्तम्। **सम्बन्धसमान्यषष्ठ्या समास इति।** सम्बन्धविशेषबोधस्तु पश्चान्मानसिकः। देवदत्तस्य पुत्रमित्रकलत्राणीत्यादौ लोके तथा दर्शनादिति भावः। **षष्ठीति।** राहुशिरसोरभेदेपि कल्पितं भेदमादाय यथा भेदनिबन्धना षष्ठी तथात्रापीति भावः ॥

यत्तु अयं ग्रन्थः आदेशप्रत्यययोरितिसूत्रशब्दरत्नेन विरुणद्धि। तत्रहि। एकापि षष्ठी विषयभेदाद्भिद्यत इति मनोरमोक्तिं खण्डयित्वा प्रत्ययपदं प्रत्ययावयवे लाक्षणिकमित्याद्युक्तम्। अत्र तदेवाश्रितमिति तद्विरोधस्स्पष्ट एव। वस्तुतस्तु चिन्त्य एवायं ग्रन्थः। सम्बन्धत्वेन सम्बन्धद्वयावगाहिबोधस्या-

**नन्वेवमपि न विभक्ताविति विभक्तिपदबोध्यसुप्तिङ्बोधो हलन्त्यमिति वाक्यार्थबोधोत्तरं, तद्बोधश्चापवादवाक्यार्थबोधोत्तरमित्यन्योन्याश्रयस्तदवस्थ एवेति चेन्न। अपवादवाक्यार्थबोधात्पूर्वं पदपदार्थोपस्थितावुत्सर्गवाक्यार्थबोधे प्रतिबन्धकाभावात्।**

---

व्युत्पन्नत्वात्। अतएव राज्ञः पुरुष इत्यादौ सम्बन्धत्वेन रूपेण स्वस्वामिभावजन्यजनकभावयोर्भानं न भवतीति, तन्न। मनोरमोक्तस्यात्रानाश्रयणात्। तथाहि। मनोरमाकारस्तु तन्त्रेण षष्ठीद्वयोच्चारणमभिप्रैति। अतएव तथैव व्याख्यातं शब्दरत्ने। अतएव चोत्तरत्र यद्येवं वैरूप्येण व्याख्याने सहविवक्षाविरहात् द्वन्द्वो न युज्यते। तथापि सौत्रत्वाद्बोध्य इत्युक्तं मनोरमायाम्। एवंच शाब्दबोध एव भिन्नसम्बन्धभानमप्युपगतमिति स्पष्टं लभ्यते। प्रकृतेतु भिन्नसम्बन्धभानं मानसिकबोध एवाभिप्रेतम्, नतु शाब्दे इति वैलक्षण्यं सूपपादम्। प्रत्ययलोप इति सूत्रे प्रथमप्रत्ययग्रहणेनान्यत्र क्वचित् प्रत्ययावयवेऽपि प्रत्ययपदबोध्यत्वज्ञापनेन तेनाप्यत्र सिद्धिरित्युपायन्तरपरतया शब्दरत्नग्रन्थस्य न तद्विरोधः। सम्बन्धत्वेन सम्बन्धविशेषावगाहिबोधस्त्विष्ट एव। देवदत्तस्य पुत्रमित्रकलत्राणीत्याद्यनुरोधात्। परं त्वियान् विशेषः। यत्र सम्बन्धविशेषनिश्चायकपदसमभिव्याहारः यथा पूर्वोक्तस्थले, तत्र विशेषावगाही पश्चान्मनसाबोधः, यत्र तु न तथा राज्ञः पुरुष इत्यादौ, न तत्र विशेषावगाहीति विभावनीयम्। एतेन मुख्यारोपितयोरेकषष्ठ्यर्थत्वाभावादिदमयुक्तमित्याचार्योक्तं परास्तम्॥

एकशेषस्तु सामान्यतो बोधमादाय भाष्यप्रामाण्यान्निर्वाह्यः। शब्दरत्ननिराकृतैकशेषस्तु न भाष्यारूढ इति बोध्यम्। **प्रतिबन्धकाभावादिति।** सामग्र्याः कार्यव्याप्यत्वादिति भावः। अत्र केचित्। अथानेकस्थले शाब्द-

न ह्यभावज्ञाने प्रतियोगिज्ञानस्येव प्रतियोगिज्ञानेऽभावज्ञानस्य

---

बोधधर्मिकाप्रामाण्यज्ञानस्य निषेधापवादशास्त्राभ्यां बोधनवत्प्रकृतेऽप्युत्तरसूत्रे नञः श्रवणेनानन्तरस्यैव निषेध्यत्वेनानुसन्धानान्निरुक्तशाब्दबोधधर्मिकप्रामाण्यसंशयस्स्यादिति चेत् का क्षतिः । नहि नैयायिकवत् संशयात्मकं शाब्दबोधं तिरस्कुर्वन्ति शाब्दिका अपीति ज्ञानसंशये विषयसंशयेपि संशयात्मकशक्तिग्रहेणैवादिरन्त्येनेति सूत्रस्थेत्पदेन पादीनामुपस्थितौ सुबादिप्रत्याहारसिद्धौ बिभक्तिज्ञाने न विभक्ताविल्येतद्बोधानन्तरं तवर्गसकारमकारत्वावच्छेदेन इत्पदवत्त्वप्रकारकज्ञानस्याप्रामाण्यबोधनेन तदितरहल्त्वावच्छेदेन प्रामाण्यनिश्चयेऽपि दोषविरहादिति वदन्ति । अत्रेदं वक्तव्यम् , बोधे अप्रामाण्यसंशयेपि बोधस्य संशयात्मकत्वाभावात् शाब्दिकानां संशयात्मकबोधतिरस्काराभावकथनं किमर्थमिति, संशयात्मकशक्तिग्रहेण इत्पदेन पादीनामुपस्थितिप्रदर्शनं च किमर्थमिति । न विभक्ताविल्येतद्बोधानन्तरं तवर्गसकारमकारत्वावच्छेदेनेत्पदवत्त्वप्रकारकज्ञानस्याप्रामाण्यबोधनं कथमिति च । अत्रेदं तत्त्वम् । न विभक्ताविति सूत्रघटकतुस्मपदार्थज्ञाने पादीनां निषेधविषयत्वाभावज्ञानात् हलन्त्यमिति सूत्रजबोधस्य पादिधर्मिकेत्पदवत्त्वप्रकारकत्वांशे प्रमात्वनिश्चयात् प्रमात्मकतद्विषयशक्तिग्रहेणादिरन्त्येनेतिसूत्रस्थेत्पदेन पादीनामुपस्थितौ सुबादिपदशक्तिग्रहे नविभक्तावित्यस्य निश्चयात्मकाप्रामाण्यज्ञानानास्कन्दितबोधे वृत्ते तदनन्तरं विभक्तिस्थतुस्मेतरतुस्मधर्मिकेत्पदवत्त्वप्रकारकत्वांशे हलन्त्यसूत्रजबोधे प्रमात्वं सेत्स्यतीति । तदेतत्सूचयन्वक्ष्यति । नविभक्तौतुस्माइतिशास्त्रस्येत्यादिदिगित्यन्तम् । अभावज्ञाने इति । प्रतियोगिविशेषिताभावज्ञाने प्रतियोगिज्ञानस्य विशेषणज्ञानविधया कारणत्ववदित्यर्थः । एतेन विशिष्टबुद्धौ विशेषणज्ञानस्य कारणत्वेन निर्वाहे अयं कार्यकारणभावो निर्मूल इति वदन्तः परास्ताः ॥

कारणता कस्यापि सम्मता । प्रतियोगिज्ञानं विना निषेधवाक्यार्था-ऽसम्भवाच्च ॥

---

यत्तु नञ्पदवाच्यतावच्छेदकं यत्क्रियान्वयितावच्छेदकं विलक्षणं रूपं तेन रूपेणाभावज्ञानं प्रति प्रतियोगिज्ञानस्य नियमनापेक्षेति तात्पर्यम् । अतएव नभवतीत्युक्ते किमिति प्रतियोगिजिज्ञासा नियमेनोत्पद्यत इति । तन्मन्दम्, तत्रापि विशिष्टबुद्धिकार्यकारणभावेन निर्वाहात् । नभवतीत्यत्र धातुनैव प्रति-योगिन उपस्थित्या न प्रतियोगिविषयिणी जिज्ञासा किन्तु, प्रतियोगिभूतसत्ता-कर्तृविषयिणीति दिक् ॥

प्रतियोगिज्ञानंविना निषेधवाक्यार्थासम्भवाच्चेति । तस्य विशे-षणज्ञानविधया कारणत्वादिति भावः ॥

अत्र केचित् । नच नविभक्तावित्यत्र इत्पदस्यानुवृत्त्या श्रवणेन्द्रियेणैव प्रतियोगिज्ञानस्य जायमानत्वेन घटकतासम्बन्धेन प्रसिद्धत्वेन च वाक्यार्थ-बोधस्सुलभ इति वाच्यम् । यत्सम्बन्धेन यदभावः प्रत्याय्यः तत्सम्बन्धेन तस्य प्रसिद्धत्वापेक्षणात् । अथ नैयायिकनयेऽप्रसिद्धप्रतियोगिकाभावास्वी-कारेपि शाब्दिकनये तत्स्वीकारादेतदुक्तमयुक्तमिति चेन्न । प्रतियोगिज्ञानं विना निषेधस्य निषेधशास्त्रजबोधस्य योऽर्थः फलं तदसम्भवादित्यर्थे निषेध-शास्त्रीयवाक्यार्थधर्मिकसाफल्यज्ञाने निषेध्यशास्त्रजवाक्यार्थबोधस्य कारणतायां तात्पर्यादित्याहु, स्तन्न । श्रवणेन्द्रियेण गृहीतस्य पदस्य प्रतियोगितयानन्व-यान्नचेत्यादिशङ्काया असाङ्गत्यात् । शशविषाणादिपदानां बौद्ध पदार्थे शक्ति-स्वीकारेण बौद्धस्य तस्य प्रसिद्धत्वेन शशविषाणं नास्तीति वाक्यजन्यबोध-विषयाभावस्यापि प्रसिद्धप्रतियोगिकत्वेन शाब्दिकनयेऽप्रसिद्धप्रतियोगिका-भावस्वीकारे मानाभावात् फलाभावाच्च भवदुक्तशङ्काया एवासम्भवेन तद्वा-रणप्रयासस्य वैफल्यादिति ध्येयम् ॥

"पूर्वं ह्यपवादा अभिनिविशन्ते पश्चादुत्सर्गाः" इत्यस्यत्वयं भावः-लक्षणैकचक्षुष्कस्य उद्देश्यतावच्छेदकावच्छिन्ने सर्वत्रोत्सर्गकृतसंस्कारबुद्धावुत्सर्गापवादयोर्विषयव्यवस्थानापत्त्या भुक्तवन्तं प्रति मा भुक्था इति वाक्यस्येवापवादशास्त्रवैयर्थ्यापत्त्या चापवाद-

---

नन्वेवमपवादबोधात्पूर्वमुत्सर्गस्य लक्ष्यसंस्कारकत्वापत्तावुदासीन इवापवादविषयेपि प्रवृत्तौ स्थानेन्तरतमसूत्रभाष्योक्तभुक्तवन्तमितिन्यायबोधितापवादशास्त्रवैयर्थ्यापत्तिमूलकेन प्रतिपदिकार्थसूत्रभाष्यपठितेन पूर्वमित्यादिन्यायेनापवादवाक्यार्थस्य पूर्वमावश्यकत्वसूचनेन प्रागुक्तदिशा अन्योन्याश्रयस्तदवस्थ एवेत्यत आह । पूर्वं हीति । लक्षणैकचक्षुष्काश्शास्त्राधीनसाधुत्वज्ञानवन्तः । योगजशक्त्यधीनतज्ज्ञानवन्तो लक्ष्यैकचक्षुष्काः । नच लक्षणैकचक्षुष्कस्य ङेर्य इत्यनेन रामयेत्यस्य साधुत्वज्ञाने तस्यापि प्रयोगप्रसङ्ग इति वाच्यम् । पूर्वपूर्वजशास्त्रजसाधुत्वज्ञाने उत्तरोत्तरप्रवृत्तिकशास्त्रजसाधुत्वज्ञानेनाप्रामाण्यस्य पूर्वपूर्वशास्त्रस्य मत्प्रवृत्त्युत्तरं प्रवृत्तिमता शास्त्रेण यस्य साधुत्वं बोध्यते तदेव साध्वित्येतावत्पर्यन्तं तात्पर्यस्य वा कल्पनेनादोषात् । उद्देश्यतावच्छेदकावच्छिन्ने इति । असति प्रतिबन्धके उद्देश्यतावच्छेदकव्यापकत्वं विधेये तत्संसर्गे वा भासत इति भावः । तदाह । **सर्वत्रेति** । अपवादशास्त्रं द्विविधम् । तदप्राप्तियोग्येऽचरितार्थकार्यविधायकं तन्निषेधकं च । तत्राद्ये आह । **विषयव्यवस्थानापत्त्येति** । द्वितीये आह । **वैयर्थ्यापत्त्येति** । अयं भावः । पूर्वत्र उत्सर्गशास्त्रीयवाक्यार्थबोधसमकालमप्यपवादवाक्यार्थबोधे बाधकाभावेन विनिगमनाविरहादुभयोरपि प्रवृत्त्यापत्तौ तृजादिवदन्यतरत्वादिनैव विधेयस्य तत्संसर्गस्य वा व्यापकतालाभाद् व्यवस्थानापत्तिरिति । द्वितीयेतु, उत्सर्गवाक्यार्थबोधकाले तद्वाक्यार्थबोधाभावेन पूर्वमप्रतिबन्धमुत्सर्ग-

शास्त्रपर्यालोचनेन तद्विषयलक्ष्यसंस्कारं निर्णीय तदविषयं तत्तल्लक्ष्यं तत्तद्विषयवाक्योपप्लवद्वारोत्सर्गेण संस्करोति, अन्यथा विकल्पापत्तिरिति। यद्यपि भुक्तवन्तं प्रतीति न्यायो लुगादिना जातनिवृत्ते-र्व्यभिचरितस्तथापि तत्राप्यनुत्पत्तिरेवेति न दोषः। न्यायानङ्गीकारेऽपि विकल्पापत्तेः सत्वाच्च। अभिनिविशन्त इत्यस्यबुद्ध्यारूढा भवन्ती-त्यर्थः। लक्ष्यैकचक्षुष्कस्तु तत्तच्छास्त्रपर्यालोचनं विनाप्यपवादविषयं परित्यज्योत्सर्गेण लक्ष्यसंस्कारञ्जानीते, तस्यापि शास्त्रप्रक्रियास्मरण-पूर्वकप्रयोग एव धर्मोत्पत्तेः। तदुक्तम्—"प्रकल्प्य चापवादविषयं तत उत्सर्गः प्रवर्तते" इति। प्रकल्प्य परित्यज्य ॥

---

प्रवृत्तौ भुक्तवन्तमिति न्यायेन तद्वैयर्थ्यमिति। एतेन वृद्धावित्यन्तं वैयर्थ्या-पत्त्येत्यनेनान्वेति। विषयव्यवस्थानापत्त्येति पृथक्कोटिरिति वदन्तः परास्ताः। मध्यगतस्य पृथक्कोटित्वस्यास्वारसिकत्वाच्च। अन्यथा विकल्पापत्तिरिति। तदप्राप्तियोग्येऽचरितार्थकार्यविधायकाविषयकमिदम्। तदेतत्सूचयति। न्याया-नङ्गीकारेपिविकल्पापत्तेस्सत्त्वाच्चेति। निषेधाविषयेतु न्यायानङ्गीकारे निवृत्तेः तदङ्गीकारे तज्जन्यबोधे निषेधविषयेऽप्रामाण्यस्य वा वक्तुं शक्यत्वादिति भावः॥

तत्राप्यनुत्पत्तिरिति। ननु लुकीव लोपेऽपि तुल्यन्यायेनानुत्पत्तेरे-वाङ्गीकर्तव्यतया हल्ङ्यादिसूत्रेण स्वौजसित्यत्र प्रातिपदिकपदे हलन्ताद्यतिरि-क्तत्वेन सङ्कोचस्यैव फलिततया पन्था इत्यादावपि सोरनुत्पत्त्यापत्तिरिति चेन्न। हल्ङ्यादिसूत्रेण परिनिष्ठितप्रयोगकालिकहलन्तातिरिक्तत्वेन सङ्को-चस्याश्रयणात्। नचैवं राजेत्यादेरपि परिनिष्ठिते हलन्तत्वाभावेन तत्रापि सोश्श्रवणापत्तिरिति वाच्यम्। अगत्या सुब्विधिशब्दे तन्त्रेण सुप्कर्मक-विधावपि नलोपस्यासिद्धत्वाश्रयणेन स्वौजसितिसूत्रदृष्ट्या नलोपस्यासिद्धत्वेन

परिनिष्ठितप्रयोगकालिकहलन्तत्वबुद्धिसम्भवात् । पथिमथीति सूत्रादावनुवर्तमानसुपदे विषयसप्तम्याश्रयणेन पूर्वमात्वादिषु सत्सु प्रक्रियाकालिकहलन्तातिरिक्तत्वेन सङ्कोचेऽपि क्षतिविरहेण प्रकृतेऽदोषाच्च ॥ अथैवमपि प्रसक्तकर्मकानुत्पत्तेरेव लोपसंज्ञायां प्रत्ययलोप इत्यस्य प्रत्ययाभिन्नप्रसक्तकर्मकानुत्पत्तौ प्रत्ययलक्षणं भवतीत्यर्थाद्राजेत्यादौ नलोपवत्कर्मण्यणित्यस्यापवादभूतेनातोऽनुपसर्ग इत्यनेन विहितकान्ताद्गोदादिशब्दादणन्तलक्षणङीबापत्तिः । कर्मण्यणित्यनेन प्रसक्तस्याणोऽपवादशास्त्रजसङ्कोचेनानुत्पत्त्या प्रत्ययलक्षणप्राप्तिरितिचेत् न । आतोऽनुपसर्ग इत्येतच्छास्त्रीयोद्देश्यतावच्छेदककुक्षावणोऽप्रवेशेनाण्त्वेन रूपेणाणः प्रसक्तेरनपेक्षणेन कर्मण्यणित्यत्र सङ्कोचमात्रस्य तेन करणात् । राजेत्यादौतु हल्ङ्यादिसूत्रे सुतिसीनामुपादानेन सुत्वादिरूपोद्देश्यतावच्छेदकरूपेणोद्देश्यसिद्धेरपेक्षणेनास्ति तत्प्रसक्तिरिति बोध्यम् । अण्योऽकार इति व्याख्यानेन वर्णाश्रयत्वाच्च ॥ न चैवमपि न षट्स्वस्रादिभ्य इत्यादिशास्त्रीयोद्देश्यतावच्छेदकरूपेणोद्देश्यसिद्धये ङीबादेः प्रसक्तेरावश्यकतया षट्संज्ञकादौ प्रत्ययलक्षणेन ङीबादिप्रयुक्तकार्यापत्तिरिति वाच्यम्। तैर्ङीबाद्यभावस्यैव विधानेन ङीबादेः प्रतियोगितया विधेयकोटौ प्रवेशेन विधानात्प्राक् तेषां प्रसक्तेरनपेक्षणेन प्रत्ययलक्षणाप्राप्तेः । नच लुकानुत्पत्तेरन्वाख्याने सेर्ह्यपिच्चेति शास्त्रीयसिपदार्थे अदन्ताव्यवहितोत्तरत्वाभाववत्त्वेन सङ्कोचस्यैव फलितत्वेन भवेत्यादौ हेरनुत्पत्तावपि सेःश्रवणं दुर्वारम्। किंबहुना आदेशलुङ्मात्रे स्थानिनां श्रवणापत्तिरिति वाच्यम् । अतोहेरित्यादेस्तात्पर्यग्राहकत्वेन लोट्स्थानिकसेः प्रसङ्गेऽभावस्यादन्ताव्यवहितोत्तरत्वाभाववतो हेश्च साधुत्वबोधनेनादोषात् । नचैवमुद्देश्यतावच्छेदकलोट्स्थानिकसित्वव्यापकत्वस्य द्वितीये विधेये हानिरिति वाच्यम् । जातिपक्षाश्रयणेन लोट्स्थानिकसित्वमुद्दिश्योभयोर्विधानेनोद्देश्यतावच्छेदकसित्वत्वाधिकरणेसित्वे स्वप्रतियोगिवृत्तित्वसम्बन्धावच्छिन्नप्रतियोगि-

यत्तु प्रकल्प्य चेत्यस्यायमर्थः। यथा "न संप्रसारण इति वचनात् परस्य यणः पूर्वं सम्प्रसारणं पूर्वस्य तु तन्निमित्तः प्रतिषेधः" इत्य-भ्यस्तसञ्ज्ञासूत्रे कैयटः। तन्न। "न सम्प्रसारणे" इति सूत्रस्थ-भाष्यविरोधात्। तत्र हि "एतदेव ज्ञापयति परस्य न पूर्वस्येति। यद्वा सम्प्रसारणाश्रयस्य प्रतिषेधः" इत्याद्युक्तम्। न हि न्यायेन

---

ताकाभावाभावस्यस्वस्थानिवृत्तित्वसम्बन्धावच्छिन्नप्रतियोगिताकस्यादन्ताव्य-वहितोत्तरत्वाभावविशिष्टेहेरभावस्य च तत्रासत्त्वेन व्यापकत्वोपपत्तेः। प्रद-र्शितश्चैवं स्थान्यादेशभावो हलादिश्शेष इत्यत्र कैयटे। तत्रहि आट आटतु-रित्यादौ हलादिश्शेष इत्यस्य प्रवृत्त्यर्थमभ्यासत्वमुद्दिश्यादीतरहल्निवृत्तिमादि-हल्शेषं च विधायोद्देश्यतावच्छेदकाभ्यासत्वत्वव्यापकत्वं विधेययोस्साधितं, भाष्योक्तमुपायत्रयं व्यक्तिपक्षाभिप्रायेणेति चोक्तम्॥

इदं सर्वं कार्यशब्दवादाभिप्रायेण। नित्यशब्दवादेतु बुद्धेरेव निवृत्ति-रिति न भुक्तवन्तमितिन्यायावसर इति बोध्यम्। एतेनाऽस्य चिन्त्यतां वदन्तः परास्ताः। अयमर्थ इति। यद्यप्येतत्प्रवृत्त्युत्तरकालिका अपवाद-विषयसम्पत्तिरिति प्रकल्प्येति क्त्वाप्रत्ययानुपपत्तिस्तथापि ज्ञानद्वाराफलस्या-प्यध्ययनेन वसतीत्यनुरोधेन हेतुत्वकल्पनात्। अपवादविषयसम्पत्तेर्ज्ञानद्वारा उत्सर्गशास्त्रप्रवृत्तिपूर्ववृत्तित्वमक्षतमिति ल्यबुपपादनीयः। नन्वेतदेव ज्ञापयतीति भाष्यस्योक्तन्यायबोधनद्वारेत्याशयकतया न तद्विरोध इत्यरुचेराह। यद्वेति। एतत्सूत्रं परित्यज्य सम्प्रसारणाच्चेति सूत्रस्थाने सम्प्रसारणादसम्प्रसारण इति न्यस्यते, तथाच सम्प्रसारणेऽपि यणा रूपसिद्धिरिति भावः। नच तस्य स्थानिवद्भावेन अच्त्वादेपयून इत्यत्र सुलोपानापत्तिरिति वाच्यम्। भाष्य-प्रामाण्येनात्र पदसंस्कारपक्षाश्रयणेन सोरनादिष्टादचः पूर्वत्वाभावेन स्थानिव-

सिद्धे एवमुक्तिरुचिता । तस्माद् न्यायस्य मदुक्त एव विषय इति बोद्धव्यम् । यदप्यपवादवाक्यार्थं विना नोत्सर्गवाक्यार्थ इति तदर्थ इति । तदपि न । उक्तयुक्तेः । "न विभक्तौ तुस्माः" इति शास्त्रे तुस्मापदार्थज्ञानमात्रेण पादीनामेतद्विषयत्वाभावबुद्ध्या तेषु हलन्त्य-

---

त्वाभावात्, बहुज्घटिते बहुयूनइत्यत्र नपदान्तसूत्रे सप्तमीसमासे सिद्धान्तभूते स्थानिवत्त्वनिषेधान्न यणिति बोध्यम् ॥ उक्तयुक्तेरिति । पदपदार्थोपस्थितौ वाक्यार्थबोधे प्रतिबन्धकाभावादित्युक्तयुक्तेरित्यर्थः ॥

नन्वेवमपि सञ्ज्ञाहकबोधेऽन्योन्याश्रयाभावेपि लक्ष्यसंस्कारकोपप्लूय-मानबोधे दोष एव । अपवादवाक्यार्थबोधंविना तद्विषयपरिहारेणोत्सर्गवाक्यो-पप्लवायोगात् । यद्वा नविभक्ताविति वाक्यार्थबोधे तद्विषयपरिहारेणैतत्प्रवृत्तिः । तस्यां च सुप्तिङादिसंज्ञासिद्धिः, तस्यां च नविभक्ताविति बोध इति चक्रका-पत्तिर्दुर्वारेत्यत आह । **नविभक्ताविति** । तथाच तुस्मातिरिक्तविषयकतया प्रथमं बोधः, ततो विभक्तिस्थतुस्मातिरिक्तविषयकतया द्वितीयोबोधः । विभक्ति-ग्रहणसामर्थ्यात् । नाज्झलावित्यादौ तु नद्वितीयबोधो, गमकाभावात् । एवं चाकारप्रश्लेषस्य न वैयर्थ्यम् । न वा वाक्यापरिसमाप्तिन्यायप्रदर्शकभाष्यविरोधः। नचास्यामवस्थायामुपदेशेऽजित्यस्य वाक्यार्थाभावेन उदित्त्वस्याज्ञानेन नाज्झ-लावित्यस्य बोधाभावात् सवर्णपदार्थानिश्चयेन च ग्राहकशास्त्रबोधे नविभक्ता-वित्यत्र तुस्मपदेन नकाराद्यनुपस्थितौ प्रथमबोधे नकारातिरिक्तत्वस्यानिवेशात् विभक्तिस्थनकारस्येत्त्वं दुर्वारमिति वाच्यम् । कुत्वादीनामुदित्संज्ञेति मते प्रय-त्नभेदेनसावर्ण्यनिषेधप्रत्याख्यातृभाष्यनयेचादोषात् । सूत्रमतेऽपि तासिन्नित्या-दिनिर्देशैरेववारणाच्च । पश्चाल्लोपादिनेव जातानिवृत्तेरङ्गीकाराच्च । नविभक्ता-वित्यत्र लुप्तनिर्दिष्टो नकार इति वक्तुं शक्यत्वाच्च । तदेतत्सकलमभिप्रेत्याह ।

**सूत्रप्रवृत्त्या सुप्तिङ्रूपविभक्तिपदार्थज्ञानं सुलभमिति दिक्। अत्रा-प्युपदेश इति सम्बद्ध्यते। तद्भललभ्यमर्थमाह। सूत्रे इति ॥**

**आदिरन्त्येन ॥ आदिरिति किम्। अन्त्यशब्देन पूर्वेषामाक्षे-पादिगादिप्रत्याहारे ऽकारादिग्रहणं मा भूदिति। एवमादिशब्देन परेषामाक्षेपादिणादिप्रत्याहारेषु ञादीनां ग्रहणं मा भूदित्यन्त्येनेति।**

---

**दिगिति। सम्बध्यत इति।** तच्च भाष्योक्तपक्षान्तरैकरूप्यानुरोधादेकदेशेऽप्यन्वेति। अतएव हलविलेखन इत्यत्र लस्य नेत्त्वम्। नच फलभावः। ङित्त्व-सामर्थ्या दभस्यापि टेर्लोप इति वत् लित्त्वसामर्थ्यात्प्रत्ययात् पूर्वत्वाभावेपि देवदत्तहलित्यादौलित्स्वर एव फलमिति वक्तुंशक्यत्वादिति भावः ॥

**आदिरिति किमिति।** अयं भावः। समुदायाक्षेपार्थं नादि-ग्रहणम्, तस्यान्त्यपदेनैव सम्भवात्। अस्य सूत्रस्य अइउणित्यादिसूत्रैरेक-वाक्यतापन्नत्वात् ततएव तल्लाभाच्च। नापि यस्येता प्रत्याहारस्तदाद्यवयवक-समुदायलाभार्थं तत्। अक् इक् उक् इत्यादिविभिन्नप्रत्याहारैस्तत्रतत्रव्यवहारा-त्तेषामर्थभेदानापत्त्या एकस्य समानफलकानेकसंज्ञाकरणस्य वृद्धिसूत्रे तिरस्का-राच्च सामर्थ्यात्तत्तद्वर्णाद्यवयवकसमुदायस्यैवाक्षेप्तुं शक्यत्वादभीष्टार्थलाभ इति। **अकारादिग्रहणं माभू दिति।** व्याख्यानाद्वरं करणमिति न्यायेन ज्ञापका-दिकमाश्रित्य सूत्राक्षरप्रत्याख्यानमनुचितं तथासति बहूपप्लवस्स्यादिति भावः। नन्वेवमपि अन्त्येनेति मास्तु। तच्चरमावयवकसमुदायलाभस्तु लकार-मात्रमेवानुबन्धं कृत्वा तेन कतिपयप्रत्याहारैरेव सिद्धे त्रयोदशानुबन्धानामेका-दिवर्णघटितभिन्नप्रत्याहाराणां करणसामर्थ्यादेव भवति। व्याख्यानाद्वरंकरण-मिति न्यायस्य तु नात्रावकाशः। अण्ग्राहकशास्त्रे परेण, अन्यत्र पूर्वेण, इण् परेण नपूर्वेणेत्यंशे त्वयापि व्याख्यानस्याश्रयणीयत्वात्। एतेनाद्यन्तयोरन्य-

आदिः अन्त्येनेत्युभयोपादाने तु अयमादिरन्त्यो वेत्युक्तेऽवशिष्ट-मपि किञ्चिदस्तीति नियमेन प्रतीतेः, परस्मिन् सति यस्मात्पूर्वो नास्ति स आदिः पूर्वस्मिन् सति यस्मात्परो नास्ति सोऽन्त्य इत्यकारादिग्रहणे इकारणकारादीनामाद्यन्तत्वस्यैवानापत्तेः। अत्रा-द्यन्ताभ्यामवयवत्वेन बोधकाभ्यां स्वघटितः समुदाय आक्षिप्तः सञ्ज्ञी। तस्य चैकत्र लक्ष्ये प्रयोगाभावात्प्रत्येकं साञ्ज्ञित्वम्। अन्त्यस्य तु न तत्कार्यं। तस्येत्सञ्ज्ञालोपाभ्यामपहारात्। एतत्फलितकथनमेव भाष्ये मूले च स्वस्य च रूपस्येति। स्वमित्यनुवृत्तिपरत्वेन व्याख्या-

---

तरप्रत्याख्याने विनिगमकाभावं वदन्तः परास्ताः। व्याख्यानाश्रयणानाश्रयण-योरेव विनिगमकत्वादित्याशङ्क्य एकत्र अनायत्या आश्रितं व्याख्यानमिति सर्वत्र तदेवाश्रयणीयमित्यत्र मानाभावः। अतएव "नासूया कर्तव्या यत्रानुगमः क्रियते" इत्युक्तं पङ्क्तिविंशतीतिसूत्रभाष्ये इत्याशयेनाह। एवमादिशब्देने-त्यादि। उभयोपादानेत्विति। अस्यनदोषइति शेषः। अयमादिरन्त्य इति। अस्य लोके इत्यादिः। तथैव पाठ इति भट्टाः। परस्मिन् सतीति। स्वघट-कत्वस्वघटकपूर्वत्वस्वघटकोत्तरत्वाभाववत्त्वैतत्रितयसम्बन्धेनसमुदायविशिष्टत्व-मादित्वमितिभावः। पूर्वस्मिन्सतीति। स्वघटकत्व स्वघटकोत्तरत्वस्वघटक-पूर्वत्वाभाववत्त्वैतात्रितयसम्बन्धेन समुदायविशिष्टत्वमन्त्यत्वमिति भावः। अनापत्तेरिति। अकारग्रहणे स्वघटकोत्तरत्वाभाववत्त्वरूपसम्बन्धाभावादिकार-स्यादित्वं, अकारादिग्रहणे स्वघटकपूर्वत्वाभाववत्त्वरूपसम्बन्धाभावाणादेरन्तत्वं च नस्यादिति भावः। संज्ञिलाभं दर्शयति। अवयवत्वेन बोधकाभ्यामिति। अत्रवाक्यलक्षणया अवयवत्वेन बोधकाद्यन्तपदोपस्थितावयवाभ्यामित्यर्थः। वाक्यलक्षणानङ्गीकर्तृमते आद्यन्तपदाभ्यामित्यस्यैव लक्षणया निरुक्तोर्थः, अन्यत्तात्पर्यग्राहकमिति बोध्यम्। अवयवस्यापि रूपान्तरेणोपस्थितावयव्या-

**नन्तु हेयमेव । अनुवृत्तौ फलाभावात् । इतेति किम् । अमङणनेति णकारादिभिः प्रत्याहारो मा भूदिति । सहग्रहणाच्च समुदाय एव**

---

क्षेपकत्वं न सम्भवतीत्यत उक्तम् । **अवयवत्त्वेन बोधकाभ्यामिति ।** तादृशपदेनोपस्थितिरवयवत्वेनैवेति भावः । आक्षिप्तस्य पदादनुपस्थितत्वाच्छाब्दान्वयो न स्यादत उक्तं । **पदाभ्यामिति ।** शाब्दीह्याकाङ्क्षा शब्देनैव निवर्तत इति न्यायात्समुदायबोधकपदमर्थादाक्षेप्तव्यमिति भावः । आक्षेपश्चात्र अइउण् इत्यादिसूत्रघटकापेक्षितसमुदायस्यैकवाक्यतासमर्पकतया यथायथमुपस्थितिरूपइति बोध्यम् । एतेनायमर्थाध्याहारवादे, शब्दाध्याहारवादेतु समुदायबोधकशब्दाक्षेप एव वाक्यैकदेशप्रयोगस्थलवदिति वदन्तः परास्ताः । **इतेतिकिमिति ।** अस्य सूत्रस्य अइउणित्यादिसूत्रैरेकवाक्यतया अन्त्यपदेन तत्सूत्रान्त्यलाभे तेषामित्त्वमव्यभिचारि । किञ्च ढ्लोपे पूर्वस्य दीर्घोण इति ज्ञापकाण्णकारादिचरमावयवकसमुदायलाभे अतिरिक्तमन्त्यमिति सूत्रान्त्यलाभार्थम् । एवं चान्योन्याश्रयशङ्कापि नोदेतीत्यपरमनुकूलमिति प्रश्नः । **णादिभिरिति ।** तुल्ययुक्त्या तत्तत्सूत्रैकवाक्यतया एच इगिति ज्ञापकेन येन प्रत्याहारस्तदाद्यवयवकसमुदायग्रहणे सिद्धे आदिग्रहणसामर्थ्येन सूत्रादेरेव ग्रहणापत्तौ महदेवानिष्टं प्रसज्येत । अतो विवक्षितसमुदायस्यैवाक्षेपौचित्या दोषस्स्यात् । किंचैवंसति कृभ्वानुप्रयुज्यते इत्यादौ कृञादिप्रत्याहाराश्च न सिध्येरन्नित्युत्तराशयः ॥

ननु अणुदिदितिसूत्रभाष्यात् प्रत्याहाराद्यवर्णानामेव बोधकतालभ्यते, अतएव ग्राहकशास्त्रस्य प्रत्याहाराद्यवर्णेषु चारितार्थ्यमिति इकोयणचीति सूत्रस्थशब्दरत्नाद्युक्तं संगच्छते । एवंच विशिष्टस्यार्थवत्त्वाभावात् समुदायाद्विभक्त्युत्पत्तिः कथमित्यत आह । **सहग्रहणाच्चेत्यादि ।** नच य एते प्रत्याहाराणामादितोवर्णास्तैस्सवर्णानांग्रहणं यथास्यादिति ग्राहकसूत्रस्थभाष्यवि-

रोध इति वाच्यम् । तद्भाष्यस्य यथाकथंचिदण्ग्रहणसार्थक्यप्रदर्शनेन वचनाद्भविष्यतीत्युक्तिखण्डनमात्रपरत्वेन प्रौढिवादतया तद्विरोधस्याकिञ्चित्करत्वात् । एवंतर्हि सवर्णेऽण्ग्रहणमपरिभाष्यमाकृतिग्रहणादिति तदुत्तरभाष्येण तत्त्वध्वननात् । यद्वा समुदायस्यवाचकत्वेऽपि नैतद्भाष्यं विरुणद्धि । तथाहि । सकृदुच्चरितन्यायविरोधपरिहारायेकारादीनां स्वसवर्णमात्रबोधकत्वेसोऽयमाक्षरसमाम्नायिक इति प्रत्यभिज्ञार्थमनुबन्धसमभिव्याहारस्यावश्यकत्वेऽपि विभिन्नानुबन्धसमभिव्याहारवैयर्थ्यात् । आक्षरसमाम्नायिकमात्रपरत्वेऽण्ग्रहणवैयर्थ्याच्च । उभयतात्पर्यकल्पनात् श्लेषस्थल इव तन्त्रादिनैवाद्यवर्णवाचकत्वपक्षेऽपि निर्वाहस्यावश्यकतया समुदायवाचकत्वपक्षेऽपि तथैव वक्तुं शक्यत्वेन निरुक्तं भाष्यं सुयोजम् ॥

नच समुदायतात्पर्यस्थले प्रत्येकं तात्पर्यं वक्तुमशक्यमिति वाच्यम् । 'सर्वदोमाधवः पायात्स योगङ्गामदीधरत्' । इत्यादिस्थलानुरोधेन श्लेषस्थले तत्कल्पनाया आवश्यकत्वात् । अतएव हलन्त्यमितिसूत्रे हलित्यस्यैवावृत्तिं स्वीकृत्य हस्य ल् इति कैयटादीनां व्याख्यानं च संगच्छते । अन्यथा प्रत्येकतात्पर्याभावात्तदसङ्गतिस्स्पष्टैव । एवंच शब्दरत्नादिग्रन्था अपि तदभिप्रायका एवेति नतद्विरोधः । एतेन शब्दरत्नस्य हरिदीक्षितकृतत्वेन अन्यकर्तृकत्वेन तद्विरोधोऽकिंचित्कर इति समाधानं प्रत्युक्तम् । अणुदित्सूत्रे प्रत्याहाराद्यवर्णेषु चारितार्थ्यस्यस्वेनैवोक्तत्वेन तद्विरोधस्यतावताप्यपरिहाराच्च । यत्तु निरुक्ततात्पर्यकल्पनावसरे इकारादीनां स्वसवर्णग्राहकत्वे सामान्यतः ककारादिसमभिव्याहारवैयर्थ्यप्रतिपादनं, तदसत् । प्रत्यभिज्ञार्थं तत्सार्थक्यात् ॥

नच आद्यवर्णस्यसवर्णग्राहकत्वमादाय प्रत्येकं सुबुत्पत्तिर्दुर्वारेति वाच्यम् । तस्यापि प्रत्यभिज्ञापककाकारादिसमभिव्याहारेणैवार्थबोधकत्वेनार्थवत्सूत्रोक्तार्थवत्त्वाभावेनादोषात् । वस्तुतस्तु समुदायस्य वाचकत्वेऽवयवतात्पर्यमकल्पयित्वापि भाष्यविरोधः सुपरिहरः । भाष्यस्य त्वयमाशयः । प्रत्याहाराद्यवर्णेन सादृश्यवशात्सदृशोपस्थितौ तेनोच्चारिताभेदेन गृहीतेन सवर्णग्रहणबोधनेन

**सञ्ज्ञेति समुदायादेवेक इत्यादौ विभक्त्युत्पत्तिर्नादिमात्रात्। न चान्त्यस्येत्सञ्ज्ञालोपाभ्यामपहारादादिरन्त्येनेत्यसङ्गतम्। सूत्रेष्वित्सञ्ज्ञायामपीगादिशब्देषु तदभावात्। अन्त्येनेत्यस्येदन्त्यसदृशे-**

---

सूत्रं चरितार्थमिति। शब्दरत्नग्रन्थोऽप्येवमाशयकतयैव योजितश्चित्रप्रभायाम्। अत एवाद्यवर्णोपस्थितेषूच्चारिताभेदेन गृहीतेषु सार्थक्यवर्णनमुत्तरत्नग्रन्थकृतस्सङ्गच्छते। एवंच प्रत्याहाराद्यवर्णात्सुबुत्पत्तिशङ्कापि नेति ध्येयम्। एतेन नागेशस्यादिवर्णस्यैवादिरन्त्यनेति संज्ञात्वमित्याशयं परिकल्प्य समुदाय एवेत्यत्र सप्तम्यन्तं छित्वा संज्ञेत्यस्य प्रातिपदिकसंज्ञेत्यर्थमुक्त्वा सहग्रहणादित्यस्य साहित्यबोधनादित्यर्थमुक्त्वा एतद्ग्रन्थाशयमन्यथावर्णयन्तः परास्ताः। स्वशब्दस्यान्त्यपरामर्शकत्वासम्भवेऽपि विशिष्टपरामर्शकत्वस्य दुर्वारत्वपरशब्दरत्नेन सहग्रहणेन संज्ञात्व इव संज्ञित्वेपि साहित्यापत्तावन्तसहितादविशिष्टस्य यणिति रूपस्य संज्ञित्वे दध्यत्रेत्यत्र णकारसहितस्येत्यादिप्रकृतसूत्रोद्योतेन च विरोधापत्तेश्च। अतएव कैयटे सहग्रहणादाद्यन्तौ समुदितौ संज्ञेतीको यणचीति समुदायादेव विभक्त्युत्पत्तिर्नादिमात्रादित्युक्तम्। न चोद्योतेऽत्र वदन्तीत्यादिनाऽयं पक्ष उक्त इति तद्विरोध इति वाच्यम्। तत्र परेत्वित्यनुक्त्या कौस्तुभमतानुवादरूपत्वेन तद्विरोधस्याकिञ्चित्करत्वात्। अतएव तत्र सहग्रहणसामर्थ्याद्विशिष्टे संज्ञात्वारोपःप्रदर्शितो गौरवसूचनाय। एवमेव तत्र द्योतकान्तरवैलक्षण्योक्तिरपीति दिक्। तदभावादिति। लोपस्य सामर्थ्यादभावे फलाभावादित्संज्ञापि नेत्यर्थः। यत्तु शक्तिग्रहात्पूर्वमर्थवत्त्वाभावेनाप्रातिपादिकत्वाद्व्यवसितान्त्यत्वाभावेन संज्ञाप्राप्तिरेव नेति तन्न। यत्र सति प्रातिपदिकत्वेऽर्थवत्त्वं भावि तत्र संज्ञेत्यर्थात्। अन्यथा राम इत्यादावपि प्रातिपदिकत्वे सत्येव पारिष्कृतार्थवत्त्वम्। तत्त्वंच प्रातिपदिकत्वमित्यात्माश्रयस्स्यात्। आदिरन्त्येनेति प्रवृत्तिस्तु न फलम्। इगादिषु कादेरित्त्वेपि विवक्षितसमुदायान्त्यत्वाभावेन इदन्त्यसदृशेनेत्यर्थावश्यकतया संज्ञाविरहेपि तत्प्रवृत्तेः। तदाह। अन्त्येनेत्यस्येत्यादि। प्रत्याहारनिष्पत्ति-

नेत्यर्थात् । व्यक्तिपक्षे एवमेवौचित्यात् । सादृश्यमूलिकैव चात्र तत्त्वप्रत्यभिज्ञेत्याहुः । अचिश्नुधात्विति सूत्रे इण इत्येव सिद्धे य्वोरिति निर्देशादिण् परेणैवेति लण्सूत्रे भाष्ये स्पष्टम् ॥

---

कालेऽन्त्यस्यासत्त्वेऽपि तस्य स्मरणमात्रेण तत्सादृश्यज्ञानं सुलभमिति भावः । तत्र सादृश्यप्रतियोगिनमादाय समुदायाक्षेपो बोध्यः ॥

ननु तत्तत्सूत्रेषु लोपाभावस्य सामर्थ्यात्कल्पनापेक्षया चतुर्दशसूत्र्यामेवोच्चारणसामर्थ्यात्तदभावःकल्प्यताम् । एवंचसत्य न्तपदे लक्षणापि नाश्रयणीया । तेषां प्रत्याहारघटकत्वाभाव आचारादेव निर्वाह्य इति चेन्न । उच्चारणकाले इत्त्वाप्राप्त्या उच्चारणस्य प्रत्याहारार्थतया चारितार्थ्येन च सामर्थ्यायोगात् । व्यक्तिपक्षे सर्वव्यक्तीनां भेदेनोक्तार्थावश्यकत्वेन तदेकवाक्यतया जातिपक्षेपि तथैवोचितत्वेन लाघवानवकाशाच्च । लोपश्च बलवत्तर इति भाष्यासङ्गतेश्च । तदेतदाह। व्यक्तिपक्षे इति। अयं भावः, जातिपक्षे आदिरन्त्येनेत्यत्रत्याद्यन्तशब्दाभ्यां जातिरेव बोध्यते नतु व्यक्तिः । तथासति व्यक्तिसमुदायस्यैव साजात्यादाक्षेपे जातिपक्षाश्रयणप्रयोजनासिद्ध्यापत्तेः। स्वशब्दानुवृत्तिपक्षे स्वशब्देनादिशब्दोपात्तस्यैव परामर्शाज्जातेरलाभेन तदर्थमण्ग्रहणस्य कर्तव्यत्वापत्त्या अण्ग्रहणमपरिभाष्यमिति भाष्यासङ्गतेः । एवंचाद्यन्तजात्योस्संज्ञाघटकत्वासम्भवेनान्त्यजात्याश्रयेण सहित आदिजात्याश्रय इत्यर्थस्स्वीकरणीयः । अनायत्या आश्रयग्रहणेपि प्राधान्यं जातेरेव । एवंच तस्या एकत्वेन सदृशलक्षणाया अत्र पक्षेऽनुपयोगइति । एतेन जातिपक्षेपि तत्रत्यात्रत्यव्यक्त्योर्भेदेनोक्तार्थावश्यकत्वादिदं चिन्त्यमित्यपास्तम् । नन्वन्त्येनेत्यस्याभावे इणादिप्रत्याहारे आदीनां ग्रहणं स्यादित्यनुपपन्नम् । पूर्वणकारेण प्रत्याहारे ऋकारादीनां ग्रहणस्यैवापादयितुं युक्त-

हलन्त्यम्। अत्र पदद्वयं, समासेऽन्त्यशब्दस्य पूर्वनिपातापत्तेः। **कर्मधारययोग्यपदानां समासाभावस्य सूत्रकारशैलीसिद्धत्वाच्च। यद्यपि सर्वोऽपि हल् तं तं समुदायं प्रत्यन्त्यो भवति तथाप्यन्त्यपदो-**

---

त्वादित्यत आह। **अचिश्नु** धात्वित्यादि। एतेनेदं सन्दर्भविरुद्धमिति परास्तम्॥

केचित्तु ग्राहकसूत्रेऽस्यार्थस्य वक्ष्यमाणत्वेन तेन पौनरुक्त्यापत्त्या अयं प्रक्षिप्तः पाठ इत्याहुः। परेत्वत्रोक्तात्रपि णद्वयोपदेशप्रयोज्ययावत्संशय-निवर्तनस्यापि प्रस्तुतत्वेन तत्रापि विवरणमावश्यकमिति तत्राप्युक्तिः। प्रक्षिप्त-त्वन्तु अस्यैवेत्यत्र विनिगमकाभावः। किञ्च प्रसङ्गसङ्गत्या पूर्वमुक्तस्यापि प्रकरणशुद्ध्यै तत्तत्प्रकरणे व्याख्यानं तत्रतत्र दृश्यत इतिपौनरुक्त्यं प्रक्षिप्तत्वे न दृढं मूलमित्याहुः॥

**पदद्वयमिति**। यद्यपि भाष्यतस्समास इति लभ्यते, तथाप्या-वृत्तेर्लाघवात्समासाभाव एवोचित इति भावः। **पूर्वनिपातापत्तेरिति**। हल्शब्दस्य जातिशब्दत्वे संज्ञाशब्दत्वे वा विशेष्यतानियमादन्त्यशब्दस्य गुणवचनत्वेन विशेषणत्वादिति भावः।

यत्तु हल्शब्दस्य गुणशब्दत्वकथनं, तत्तु संज्ञाकथनविरोधाच्चिन्त्यम्। अतो हलादेरिति तु लाघवानुरोधी पूर्वनिपातशास्त्रानित्यत्वसाध्यप्रयोग इति न तद्धलित्यस्य गुणशब्दत्वसाधकमिति दिक्। **शैलीसिद्धत्वाच्चेति**। उद्देश्यबोधकपदानां कर्मधारयघटकत्वाभावः शैलीसिद्धः। यथा तत्पुरुषः समानाधिकरणः, निपात एकाजित्यादाविति भावः। एतेन निपात एकाजित्यादौ व्यभिचारादिदमयुक्तमित्याचार्याः, प्रायोवाद इति समासे व्यासे वा रूपभेदः यत्र तत्रेति च यत्र लाघवादरस्तत्रेति इदितो नुम्, आदेच उपदेशेऽशितीत्यादौ

पदेशपदाभ्यां प्रत्यासत्त्याऽज्ञातस्वस्वरूपज्ञापकोच्चारणविषयसमुदायं प्रत्यन्त्य इह गृह्यते। अत एव मकारेत्सञ्ज्ञापरित्राणार्थस्थमोरुकारश्चरितार्थः। समुदायोपदेश एव सर्वत्र ऋषितात्पर्येणावयवानां नान्तरीयकतया तेषामज्ञातस्वस्वरूपज्ञापकत्वाभावात्। उपदेशोऽन्त्यमिति। तत्र विद्यमानमन्त्यमित्यर्थः। तेन अइउणित्यादौ

---

व्यभिचारादिदं चिन्त्यमिति वदन्तोऽन्येच परास्ताः। प्रायइति प्रतीकं प्रदर्शयता श्रीधरग्रन्थेन तत्पदघटितोपि क्वचित्पाठ इत्यवगम्यते। अज्ञातेत्यादि। स्वजन्योपस्थितिविषयतावच्छेदकधर्मावच्छिन्नविधेयताकबोधप्रयोजकोच्चारणप्रयोजकतात्पर्यविषयीभूतसमुदायान्त्यमित्यर्थः। यत्तु अज्ञातमपूर्वज्ञानीयविषयतावच्छेदकं विधेयतावच्छेदकं यत्स्वस्य समुदायस्य रूपं प्रत्यक्षविषयतावच्छेदको धर्मस्तज्ज्ञापकं यदुच्चारणं तद्विषयसमुदायान्त्यमित्यर्थः। स्ववृत्तिश्रावणप्रत्यक्षविषयतावच्छेदक धर्मावच्छिन्नविधेयताकबोधप्रयोजकोच्चारणकर्मीभूतसमुदायान्त्यमिति यावदिति तन्न। निरुक्तार्थे डुमुटष्टकारस्येत्त्वानापत्तेः। इत्संज्ञापरित्राणेत्यत्र पञ्चमीसमासः। नान्तरीयकतयेति। अन्यनिष्पादकनिष्पाद्यत्वेनेत्यर्थः। यद्वा अन्तरा विनाभावोन्तरीयः। गहादित्वाच्छः स्वार्थे कः। नञा समासे व्यापकतयेत्यर्थः। नन्वधिकरणकारकस्य कर्तृकर्मद्वारा क्रियान्वयनियमादुपदेशकाल एवेत्त्वविधानं लभ्यते तत्तु न सम्भवति, तदानीं हल्पदार्थानुपस्थितेरित्यतश्शेषपूरणेन योजयति। तत्र विद्यमानमिति। अयं भावः। यत्र कर्तृकर्मणोस्साक्षाद्विशेष्यतया क्रियाभानं यथा भूतले घटोस्ति स्थाल्यामोदनं पचतीत्यादौ, तत्र तद्द्वारैवाधिकरणकारकस्य क्रियान्वयः। यत्रतु विशेषणतया भासते, यथा भूतले शयानो देवदत्तः, स्थाल्यां पक्व ओदन इत्यादौ, तत्र साक्षादेव क्रियान्वयः। प्रकृते तु विशेषणमेव क्रियेति साक्षादेवान्वय इति। एतेन कारकप्रकरणस्थस्वग्रन्थविरोध इत्यपास्तम्। तस्य कर्तृकर्मविशेष्यतया

**णादीनां हल्प्रत्याहारसिद्ध्युत्तरं तत्सिद्धिः। अन्यत्र त्वन्तरङ्गत्वा-त्प्राय उच्चारणेनाभिव्यक्तस्य तदव्यवधानेनैवेत्सञ्ज्ञा। पदार्थोपस्थि-तिरनुबन्धविनिर्मुक्तस्यैव। "उपदेशोत्तरकाला इत्सञ्ज्ञा" इति ना-ज्झलाविति सूत्रभाष्यात्। धुडित्यादौ सानुबन्धाद्विभक्तिस्तु तेनैवा-नुबन्धविनिर्मुक्तोपस्थितेस्तस्यैवार्थवत्त्वात्सुलभा। इत्सञ्ज्ञाकार्यं तु यत्र सञ्ज्ञा तत्राऽऽनर्थक्यात् तदुपस्थाप्य एव। स्पष्टश्चेदं "नित्स्व-रितम्" इत्यत्र कैयटे। वैयाकरणे चित्स्वरस्तु न। तस्यैवकारसदृश-**

---

क्रियाभानस्थलविषयकत्वादिति दिक्। अन्तरङ्गत्वादिति। तेन नधातुलोप इति सूत्रस्थं धातुग्रहणंकिंल्ङ्लाविवेति भाष्यं सङ्गच्छते। धातुसंज्ञायाः क्रिया-वाचकत्वज्ञानाधीनत्वेन बहिरङ्गत्वात्। प्राय इत्यनेन तुस्मानां नविभक्ताविति वाक्यार्थबोधोत्तरं तत्सिद्धिरिति सूचितम्। तदव्यवधानेनेत्यस्य फलं दर्श-यति। **पदार्थोपस्थितिरित्यादिना।** नन्वनुबन्धविनिर्मुक्तोपस्थितौ स्वं रूप-मिति शास्त्रेणोपस्थाप्योपस्थापकयोस्समानानुपूर्वीकत्वलाभादनुबन्धरहितस्यैव बोधकता लाभात्ततो विभक्त्यापत्तिः, तद्विशिष्टात्तदनापत्तिश्चेत्यत आह। **धुडित्यादावित्यादि।** तस्यलोप इति सूत्रमहकृतात स्वंरूपमिति सूत्राद-पस्थाप्योपस्थापकयोरनुबन्धेतरवर्णप्रयुक्तानुपूर्वीभेदाभाव एव लभ्यत इति भावः॥

एतेनेदमयुक्तं, सानुबन्धकेनानुबन्धविनिर्मुक्तोपस्थितेरसम्भवात्। आर्ध-धातुकस्येडित्यादावुपदेशोत्तरमेवेत्संज्ञालोपाभ्यामपहारे जश्त्वानापत्तेश्चेत्या-चार्याः परास्ताः। उच्चारणात् पूर्वं लोपाप्रसक्तौ साधुशब्दस्यैव शास्त्रे उच्चारणीयतया जश्त्वशास्त्रबोधितसाधुत्वकस्यैवोच्चारणाच्च। ननूपस्थाप्ये यदीत्कार्यं, वैयाकरणे चित्स्वरापत्तिरित्यत आह। **चित्स्वरस्तु नेति।** यद्यपीत्त्वेऽपि तस्य प्रत्याहारसिध्यर्थतया उपस्थाप्ये आरोपप्रयोजकोच्चारण-सामर्थ्याभावाच्चित्त्वस्य नारोप इति वक्तुं शक्यं, तथापि न्याय्यं समाधान-माह। **तस्येत्यादि।** नन्वनुबन्धविनिर्मुक्तोपस्थितिस्वीकारे नविभक्तावित्यादे-

त्वेऽपि तत्त्वाभावात् । विभक्त्यादिसञ्ज्ञापि सूत्रान्तर्गतानामेवेति तत्रैव न विभक्काविल्यादीनां प्रवृत्तिः । अत एव "इदम इशित्यादावणत्वात्सवर्णग्रहणं प्राप्तमप्रत्यय इत्यनेन निषिद्धयत" इति भाष्योक्तं सङ्गच्छते । यत्त्वनेकाल्सूत्रे "इशि शिद्ग्रहणाभावेऽपि शित्करणादेव सर्वादेशत्वम्" इति भाष्ये उक्तं, तस्येत्सञ्ज्ञकशाकारकरणाद्भूतपूर्वानेकाल्त्वमादाय सर्वादेशत्वमित्यर्थ इति न तद्विरोधः ॥

---

वैयर्थ्यमत आह । विभक्त्यादिसंज्ञापीत्यादि । उपसञ्जनिष्यमाणन्यायादिति भावः । अनुबन्धविनिर्मुक्तोपस्थितिं प्रमाणयति । अतएवेति । अप्रत्यय इत्यनेनेति । अप्रत्यय इत्यनेनैकदेशानुमत्या ज्ञापितभाव्यमानपरिभाषयेत्यर्थः । तेन न ग्राहकसूत्रस्थोत्तरग्रन्थासङ्गतिः । ननु लोपादेस्सर्वादेशतावारणायोपस्थाप्यगतानेकाल्त्वमेव सर्वादेशताप्रयोजकमित्यवश्यं स्वीकरणीयम् । एवं चानुबन्धविनिर्मुक्तस्योपस्थाप्यत्वेइशुपस्थाप्यस्यानेकाल्त्वाभावादनेकाल्सूत्रे शिद्ग्रहणाभावेपि सर्वादेशत्वसमर्थनं भाष्यकृतोऽसङ्गतं स्यादित्याशङ्क्य भाष्यमन्यथालापयति । यत्त्वित्यादिना । यत्तु शित्करणेन सर्वादेशत्वमिति भाष्यं शित्करणादनेकाल्त्वादेव सर्वादेशत्वमिति प्राचीनैर्व्याख्यातं, तदन्यथा व्याख्यातुमाहत्यवतारयन्ति, तन्न, प्राचीनव्याख्यानतोऽन्यादृशव्याख्यानस्य मूलतोऽलाभात् । अनेकाल्त्वादिति कैयटप्रतीकमुपादायास्यार्थस्य तदर्थतया उद्योते उक्तत्वात् । प्रकृतसन्दर्भाप्रदर्शनाच्च । भूतपूर्वानेकाल्त्वमादायेति । अनुबन्धघटितबोधकवृत्तिधर्माणां बोध्ये आरोपादनेकाल्वृत्तिधर्मावच्छिन्नविधेयताश्रयस्सर्वस्य स्थाने इत्यनेकालित्यस्यार्थकरणाद्बोधकवृत्त्यनेकाल्त्वादेः स्थानिवद्भावेन लाभाद्वेतिभावः । नचानल्विधाविति निषेधश्शङ्क्यः । न ल्यपीति ज्ञापकेनाल्त्वव्याप्यधर्मघटितधर्मे अनुबन्धघटितबोधकावृत्तीति विशे-

अत्र केचित्, अनुबन्धा अनेकान्ताः अनवयवाः। यो ह्येकान्तः स कदाचित्तत्रोपलभ्यत एव। अयन्तु न तथा, तद्धर्मभूते विषये कदाप्यदर्शनात्। हलन्त्यमित्यत्रान्त्यशब्दः परसमीपबोधक "चुटू" इत्यादावादिशब्दः पूर्वसमीपबोधकः "अनेकाल् शित्" इत्यादौ समीपे सामीप्यमूलकावयवत्वारोपेण बहुव्रीहिः। स्पष्टञ्चेदमुपदेशोऽजिति सूत्रे भाष्ये सपर्यन्तस्येति सूत्रे कैयटे च। तेन डाणलादाविशादौ च न दोषः। अत एव "उपदेशोऽच्" इति सूत्रे उपदेशग्रहणं चरितार्थम्। तद्धि अभ्रआँ अटिन इत्यादावादितश्चेतीट्प्रतिषेधाभावाय। अनेकान्तत्वे हि तत्प्राप्तिरि"त्याहुः॥

परे त्वेकान्ता एव। शास्त्रे तत्रोपलम्भादन्यत्रानुपलम्भाच्च। अनवयवो हि काकादिरेकजातीयसम्बन्धेन गृहवृक्षादिपूपलभ्यते। नैवमयम्। किञ्चानवयवत्वे णशकप्रत्ययादौ णादेरित्त्वानापत्तिः। प्रत्ययादित्वाभावात्। एवमन्त्यत्वाभावादिशादेः शस्येत्त्वानापत्तिः। उक्तार्थलाक्षणिकत्वे तु लक्षणैव दोषः। किञ्च दध्नचश्चकारवैयर्थ्यापत्त्याऽवयवत्वमेव न्याय्यम्। अत एव "पुञ्छणकठच्" इति सूत्रविहि-

---

षणदानेनादोषात्। यद्वा ओशि शकारोच्चारणात्तन्निषेधबाध। नच शिद्ग्रहणाभावे शकारस्येत्त्वमेव न स्यादिति वाच्यम्। शकारोच्चारणस्यानेकान्तत्वारोपेण चारितार्थ्याद्धलन्त्यसूत्रबाधे मानाभावादिति दिक्। नन्वनुबन्धविनिर्मुक्तोपस्थितौ प्रमाणाद्युपन्यासो विफलः। अनुबन्धानामनेकान्तत्वेनैव तत्सिद्धेः। किंच धुडित्यादौ सानुबन्धाद्विभक्त्युपपादनप्रकारोऽपि न सम्यक्। विशिष्टस्य बोधकत्वाभावादित्याशङ्कां मनसि निधायानेकान्तत्वपक्षमनूद्य निराकुरुते। अत्र केचिदित्यादिना। एतेन प्रसङ्गादाहतित्वदन्तःपरास्ताः। अत्रत्यविशेषःपरि-

हित-के णित्त्वप्रयुक्तवृद्धिर्न। "तस्य लोप" इति भाष्ये एकान्तत्वमेव न्याय्यमित्युक्तेश्च । उपदेशोऽजितिसूत्रे उपदेशग्रहणन्तु स्पष्टार्थमेवेत्याहुः। सर्वत्रानुबन्धसहितनिर्देशो विधौ "गुप्तिज्किद्भ्य" इत्यादौ नकारेत्संज्ञकः सो भवतीत्यादिक्रमेण बोधः। अनुवादे "सन्यत" इत्यादौ च नकारेत्संज्ञके सशब्दे परे इत्यादिक्रमेण बोधः। स्पष्टश्चेदं

---

भापेन्दुटिप्पणीतोऽवसेयः, ग्रन्थविस्तरभयादिहविरम्यते । अनुबन्धविनिर्मुक्तोपस्थितौवाक्यार्थंदर्शयति । **सर्वत्रेत्यादिना**। **विधाविति** । नच न विधौ परः शब्दार्थ इति न्यायविरोध इति वाच्यम् । तन्न्यायस्य विधेयस्य पूर्वमज्ञातत्वेन लक्षणाबीजस्यान्वयानुपपत्तेस्तात्पर्यानुपपत्तेर्वा तत्रासम्भव इत्येवं मूलकतया यत्रानुपपत्तिज्ञानं नास्ति तद्विषयकत्वेन प्रकृते तस्यलोपः ञिन्नित्यादिर्नित्यमित्यादेरनुपपत्तिज्ञापकस्य सत्त्वेन प्रकृतन्यायानवतारात् । **नकारेत्संज्ञकइति** । इत्संज्ञकनकारोपलक्षित इत्यर्थः । अयं भावः । उपलक्षणीभूतधर्मस्य पूर्वंविशेष्यवृत्तितया अज्ञातत्वे तस्य पश्चाद्व्यावर्तकत्वं न सम्भवति । काकवद्देवदत्तगृहमित्यादौ तथा दर्शनात् । अतस्तस्य पश्चाद्व्यावर्तकत्वलाभार्थं पूर्वं तद्धर्मस्य ज्ञानमावश्यकमिति । **सो भवतीति** । विधेयतावच्छेदकं सत्वं सन्त्वं वेत्यन्यदेतत्। **अनुवादे इति** । अतएव कंसइत्यादौ न द्वित्वादीति बोध्यम् । एतेन वस्तुतस्तु सन्यत इत्यादावनुवाद एवैतत् प्रयोजनं, नविधौ, तेन सत्वेन विधानेपि ञिन्नित्यादिर्नित्यमित्यादौ निदादिपदस्यनिद्बोध्यार्थकत्वेन क्षतिविरहा ल्लक्षणायां नविधौपरश्शब्दार्थ इति न्यायविरोधाच्च तादृशविधेयतावच्छेदकत्वकल्पनेगौरवाच्चेत्यौत्तराहा, इदमयुक्तमित्याचार्याश्च परास्ताः। पूर्वोक्तरीत्या गुप्तिज्किद्भ्य इत्यादावुक्तार्थावश्यकत्वेन ञिन्नित्यादिरित्यादौ पुनर्लक्षणाया अनुपयोगाच्च । उक्तं बोधं प्रमाणयति । **स्पष्टंचेदमिति** । तत्रहि निष्ठासंज्ञायां समानशब्दप्रतिषेध इति वार्तिकप्रत्याख्यानायो-

क्तम् 'अनुबन्धोऽन्यत्वकरइति', तस्यच काकवद्देवदत्तगृहमितिदृष्टान्तदानेन उपलक्षणत्वं स्पष्टमुक्तम्। उद्योतेऽपि स्फुटोऽयमर्थ इति दिक्॥

परंतु "अनुबन्धविनिर्मुक्तपदार्थोपस्थितौप्रमाणाभावाल्लोपपदस्यादर्शनं लोपइत्येतत्सूत्रसङ्केतितमर्थंविहाय बोधविषयत्वाभावार्थकत्वकल्पनस्यायुक्तत्वाच्चेत्संज्ञालोपौ लक्ष्यएव लुगादिवत्प्रवर्तेते। बोध्यावयवत्वमेकान्तत्वं, तदनवयवत्वमनेकान्तत्वं, बोधके अनुबन्धप्रयुक्तकार्याणामप्रवृत्तेस्तदवयवत्वानवयवत्वविचारस्यनिष्प्रयोजनत्वेनकाकदन्तपरीक्षातुल्यत्वात्। सन्यत इत्यादौ नकारेत्संज्ञकबोध्ये सादौ लक्षणायां गौरवाच्च। विशिष्टाद्विभक्तिदर्शनेन बोधकावयवत्वस्य निश्चयेन सन्देहानुत्थितेश्च। अतएव भाष्येऽपि एकान्तस्तत्रोपलब्धेरित्यनेन बोध्यावयवत्वमेव सूचितम्। तत्रोपलब्धेरितिहेतुवाक्यस्यावधारणपरतयाकैयटोक्तंव्याख्यानमपि निष्प्रयोजनत्वाद्धेयमेव। नच बोध्यावयवत्वे उपदेशोत्तरकालेत्संज्ञेति भाष्यविरोध इति वाच्यम्। हलन्त्यमित्येतद्वाक्यार्थबोधंप्रति अइउणित्यादिवर्णोपदेशज्ञानस्य कारणत्वंप्रतिपादयितुमेव तत्प्रवृत्त्या इत्संज्ञाया वर्णोपदेशाव्यवहितोत्तरकालिकत्वबोधने तात्पर्याभावेन बोधकएव इत्संज्ञालोपयोरेतस्माद्भाष्यादलाभात्। नच "इदमइश् अण्त्वात्सवर्णग्रहणंप्राप्नोती"तिभाष्यविरोध इति वाच्यम्। "उपदेशे किं अअआँअटित" इत्यादिवदस्याप्यनेकान्तपक्षाभिप्रायकत्वात्। अस्मिन्कल्पेचनानेकान्तैकान्तत्वविचारोनिष्प्रयोजनः। शित्वनित्वादिप्रयुक्तकार्याणां बोध्य एव प्रवृत्तेस्तत्रावयवत्वानवयवत्वयोर्लक्षणाद्याश्रयणानाश्रयणादिप्रयुक्तवैलक्षण्यसम्भवात्। अस्तुवा बोधकावयवत्वानवयवत्वविचार एव। अस्तु चानुबन्धविनिर्मुक्तपदार्थोपस्थितिरेव, तथापि नकारेत्संज्ञके सशब्द इत्यादिक्रमेणार्थकरणमयुक्तमेव। बोधकवृत्तिनकारेत्संज्ञकत्ववत्सन्त्वस्यापि बोध्य आरोपेणागमनसम्भवे सनादिपदानां स्वरूपशास्त्रबोधितं सन्त्वाद्यवच्छिन्नबोधकत्वं विहाय नकारेत्संज्ञकसत्वा-

दिरूपगुरुधर्मावच्छिन्नबोधकत्वकल्पनाया व्यर्थत्वात् । गौरवग्रस्तत्वाच्च ॥ किञ्चैवं णाणोर्णकारेत्संज्ञकात्वावच्छिन्नबोधकत्वापत्तौ णेऽण्कृतस्याणि णकृतस्य च कार्यस्य प्रसङ्गादादित्वावच्छिन्नोद्देश्यताकेत्संज्ञावण्णकारवदकारबोधकत्वस्य णपदेऽन्त्यत्वावच्छिन्नोद्देश्यताकेत्संज्ञावण्णकारवदकारबोधकत्वस्य वाऽण्पदे कल्पनायामतीवगौरवम् । अतएव "विशिष्टं ह्येषोऽनलमाश्रयते इटं नामेति" स्थानिवत्सूत्रभाष्यं, हल्ङ्यादिसूत्रेऽतिखट्वइत्यादौ सुलोपवारणाय दीर्घग्रहणं, अतिखट्वायेत्यत्रयाडागमवारणाय स्थानिवत्त्वप्रतिषेधकं ङ्याब्ग्रहणेऽदीर्घइति वार्तिकं, आआविति प्रश्लिष्य तदुभयप्रत्याख्यानपरं भाष्यं, नानुबन्धकृतमनेकाल्त्वमिति परिभाषारम्भपरं भाष्यं, प्रणिदापयतीत्यत्रादाविति प्रतिषेधमाशङ्क्य दाधाघ्वपिदिति न्यासान्तराद्यनुधावनपरं भाष्यं, च सङ्गच्छते । अन्यथा टकारेत्संज्ञकेत्वादिरूपेट्त्वादीनांस्थानिवत्त्वालभ्यत्वेनावदातमित्यत्रदात्वस्यस्वतस्सिद्धत्वेनपकारेत्संज्ञकत्वस्यबोधकवृत्तेरारोपणाददाविति प्रतिषेधासिद्धौ परिभाषावैयर्थ्येन प्रणिदापयतीत्यत्रोक्तरूपदाप्त्वस्यासत्त्वेनादाविति प्रतिषेधाप्रवृत्तेर्घुसंज्ञासिद्धौ न्यासान्तराद्यनुधावनवैयर्थ्येन च तेषामसङ्गति स्स्पष्टैव । नचैवमुगिचेतिसूत्रस्थस्य भाष्यस्यासङ्गतिः । तत्रहि "पदेकिम्? तन्त्रयुतम् । नैतदस्ति लक्षणप्रतिपदोक्तपरिभाषयैव सिद्धमेवंतर्हि ङमो ह्रस्वादित्युत्तरार्थं पदग्रहणमित्याद्याशयकमुक्तम् । तत्रचोञ्त्वस्यैकान्तत्वपक्षे वास्तविकस्य वेञ्शब्देऽसत्त्वेन बोध्ये तदारोपासम्भवेनोञादिपदस्य स्ववृत्त्यानुपूर्व्यवच्छिन्नबोधकत्वे तद्भाष्यासङ्गतिस्स्पष्टैव । उञित्यादिपदस्य ञकारेत्संज्ञकोकारइत्यादिक्रमेणार्थेऽङ्गीकृते तु बोधकवेञ्शब्दवृत्तिञकारेत्संज्ञकत्वस्य बोध्ये आरोपेणोकारत्वस्य च तत्र स्वतस्सिद्धत्वेन श्रुताकारस्मृतानुबन्धाभ्यामित्युक्तरीत्या तत्र ञकारेत्संज्ञकोकारत्वस्याऽर्थसमाजग्रस्तत्वेन तद्भाष्यसङ्गतिरिति वाच्यम् । तद्भाष्यस्यानेकान्तपक्षाभिप्रायकत्वात् । तत्रपक्षे चोञ्त्वस्य बोधके वास्त-

विकस्यासत्त्वेनारोपस्यावश्यकत्वे अकारेत्संज्ञकोकार इत्यादिक्रमेणैवार्थ इति श्रुताकारेत्यादिपूर्वोक्तरीत्यैव भाष्यसङ्गतिः। तद्भाष्यस्य पदान्तस्य ङमोङमुडित्यर्थेन सिद्धस्य दण्डिनेत्यादेस्तत्फलत्वेनप्रदर्शनपरेणोत्तरभाष्येणैवैकदेश्युक्तित्वस्य वक्तव्यत्वेन तद्विरोधस्याकिञ्चित्करत्वाच्च। देवरुहीत्यत्र हशिचेत्युत्वाभावस्तु सूत्रे रुशब्दे सानूनासिकोकारपाठेनोत्वनिमित्तभूतविलक्षणरुत्वस्य तत्रासत्त्वादेव बोध्यः। सनाशंसइतिसूत्रे सन्पदेन धातोर्ग्रहणाभावस्तु प्रत्ययाप्रत्ययग्रहणपरिभाषयैव बोध्यः। इत्थंच सर्वत्रानुपूर्व्या एवोद्देश्यताविधेयतयोरवच्छेदकत्वमित्युपपन्नमित्याहुः॥

ग्रन्थतत्त्वविदस्त्वनुबन्धविनिर्मुक्तोपस्थितिरेवन्याय्या। अन्तरङ्गत्वादित्संज्ञालोपयोः प्रथमं प्रवृत्तेर्दुर्निवारत्वात्। नच प्रसक्तादर्शनात्मकस्य लोपस्य तदानीमसम्भवः, तत्तद्विधिसूत्रवाक्यार्थबोधं विना प्रसक्त्यभावाद् वाक्यार्थबोधस्य पदार्थोपस्थित्यधीनत्वादुपस्थितेः पूर्वमसम्भव इति वाच्यम्। तत्तद्विधिष्वनुबन्धानां प्रायशः प्रथमान्तपदघटकत्वेन तत्तद्वाक्यार्थबोधात्पूर्वमेव प्रथमान्तपदश्रुत्या तस्य विधेयसमर्पकत्वनिश्चयेन स्वं रूपमितिशास्त्राद्बोध्यबोधकयोस्समानानुपूर्वीकत्वज्ञानेन स्वं रूपमिति सूत्रजशक्तिग्रहकाल एव तत्प्रसक्तेस्सत्त्वात्। एतेन तस्यलोप इत्यस्य बोधविषयत्वाभावार्थकत्वमित्यपास्तम्। अतएव निष्ठासंज्ञासूत्रे "समानशब्दानांप्रतिषेध" इति वार्तिके "प्रयोगस्त्वेषां नास्ति नित्यलुप्तत्वा"दिति तदाशयप्रदर्शनपरकैयटग्रन्थः "अनुबन्धानां नित्यलुप्ततयेत्युद्योतग्रन्थश्च संगच्छते। लक्ष्येप्रवृत्तानामेवेत्संज्ञायां प्रयोगाभावादिकथनमसम्बद्धमेव स्यात्। अतएव"दमइश् अण्त्वात्सवर्णग्रहणं प्राप्नोतीति" भाष्यं स्वरसतस्संगच्छते। नच तस्यानेकान्तत्वपक्षाभिप्रायकत्वं वक्तुं युक्तमिति वाच्यम्। विना विरोधं तस्यास्थितपक्षाभिप्रायकत्वेनैकदेश्युक्तित्वकल्पनानौचित्यात्। किञ्च विधेयताया बोधीयविषयताविशेषात्मिकायाः पूर्वं

पदार्थोपस्थितिकालेऽसत्त्वेन भाव्यमानेनेति परिभाषाया अप्रवृत्त्या ग्राहकशास्त्र-सहकारेण सवर्णानामुपस्थित्या तेषां बोधविषयतादुर्वारेत्यप्रत्ययइत्यनेन निषिध्यत इति भाष्यविरोधः तद्वैयर्थ्यंच प्रसज्येत। ममतु प्रथमान्तपदश्रुत्या उपस्थितेःपूर्वमेव विधेयसमर्पकत्वज्ञानेन तत्परिभाषाप्रवृत्तिस्सुवचेति न तद्वैयर्थ्यं न वा भाष्यविरोधः। अत एव तस्मिन्नितीतिसूत्रेभाष्ये "तत्रखलुकृतायामित्संज्ञायां लोपे च कृते आदेशोभविष्यति उपदेशइतिहीत्संज्ञोच्यत इति" भाष्यं "सूत्रएवोच्चारितस्येत्संज्ञेति प्रयोगे सशब्दएव सन्नित्कार्यंलभत इति" प्रदीपश्च संगच्छते। बोधकावयत्वमेकान्तत्वं तदनवयवत्वमनेकान्तत्वमितितु-निष्प्रयोजनत्वात्काकदन्तपरीक्षातुल्यः, विशिष्टाद्विभक्तिदर्शनेन विशिष्टस्यबोधकत्वनिश्चयात्सन्देहानुदयश्चेत्यपि न सम्यक्। बोध्यावयवत्वमेकान्तत्वं तदनवयवत्वमनेकान्तत्वमितित्वन्मते शित्किदित्यादौलक्षणाश्रयणानाश्रयणवैषम्यस्येव मन्मतेपि बोधकवृत्तिशित्त्वकित्त्वादेरेव बोध्य आरोपणीयतया तत्रकित्त्वादिकं किमारोपितावयवत्वादिघटितमुत वास्तविकतद्घटितं प्रथमस्यबोध्यआरोपेशित्किदादिषु लक्षणाऽऽश्रयणीया द्वितीयस्यारोपे नेति वैलक्षण्यस्यसूपपादत्वात्। उपदेशेऽजित्यत्रोपदेशग्रहणान्माङ्इतिनिर्देशा दनेकाल्सूत्रेशिद्ग्रहणादनुबन्धविनिर्मुक्तं बोधकं वा उत विशिष्टाद्विभक्तिदर्शनात्तस्य लोपइति सूत्रप्रणयनाच्च तद्विशिष्टं बोधकंवेति बोधकसंशयेनावयवत्वा नवयवत्व संशयोदयाच्च। "एकान्तस्तत्रोपलब्धे"रिति हेतुप्रदर्शनमपि न त्वदुक्तार्थसाधकम्। अवधारणपरतयाव्याख्यानस्य कैयटेन कृतत्वात्। नच फलाभावात्तद्व्याख्यानं हेयमेवेति वाच्यम्। तत्रोपलम्भरूपहेतो र्वृक्षोपलब्धकाकादिसाधारण्येन व्यभिचारवारणस्यैव फलत्वात्। किञ्च बोध्यावयत्वे उपदेशोत्तरकालेत्संज्ञेति भाष्यविरोधः। नचेत्संज्ञायामुपदेशस्य कारणत्वप्रतिपादनपरोऽयंग्रन्थ इति वाच्यम्। निषेधवाक्यार्थबोधंविनापि विधिबोधस्य पूर्वमुपपादितत्वेन नाज्झलावित्यस्य कारण-

कोटावप्रवेशेन तत्रेकारेण शकारग्रहणवारणस्य प्रकृतत्वेन तदनुपयोगापत्तेः। वर्णानामुपदेशस्तावदिति वाक्यनैरर्थक्यापाताच्च। मम तु महावाक्यघटकतया तत्सार्थक्यं "वाक्यापरिसमाप्तेर्वे" त्यक्षरस्वारस्यं च नापैति। किञ्च हलन्त्य-मितिसूत्रे करणसाधनोपदेशपदानुवृत्तेस्सामान्यतस्तदननुवृत्तेश्च व्यवस्थापयिष्य-माणत्वेन वर्णोपदेशस्य कारणत्वं दूरापास्तम्। किञ्च तत्र मतेऽनवयवत्वे हेतुर्दुर्निरूपः। अनुबन्धानामपि लक्ष्ये कादाचित्कदर्शनेनानङ्नकारवैलक्ष-ण्यस्य दुर्निरूपत्वात्। "इत्संज्ञालोपौ लक्ष्यएव प्रवर्तेते" इत्यपि न सम्यक्, अइउणित्यादिघटकणकारादीनां कुत्रापि लक्ष्ये प्रसक्त्यभावेन तत्रेत्संज्ञालोपयो-रप्रसङ्गापातात्। न च तत्र लोपस्य फलाभाव इति वाच्यम्। एव-मपीत्संज्ञायाः प्रत्याहारार्थतयावश्यकत्वात्। "लोपश्चबलत्तर" इति भाष्य-विरोधापत्त्या लोपस्यावश्यकर्तव्यत्वाच्च विनाविरोधं तस्यैकदेश्युक्तित्व-कल्पनानौचित्यात्। एवं महिङोङकारस्य समुदायानुबन्धत्वे लक्ष्ये प्रसक्तिर्दुर्वचेति तत्रेत्त्वानापत्त्या प्रत्याहाराप्रसिद्धिः। किञ्च तस्य यथाकथ-ञ्चिल्लक्ष्येप्रसक्तिसम्पादनेऽपितेनसमुदायाक्षेपो दुर्निरूपस्स्यात्। स्वादिसूत्रा-णामादिरन्त्येनेत्यत्रत्यान्त्यादिपदाकाङ्क्षितसमुदायसमर्पकत्वस्य पूर्वमुक्तत्वेन समुदायघटकतावस्थायामित्त्वाभावे प्रत्याहारो दुर्निरूपस्स्यादितिबहूपप्लवः। किञ्च ङमुटो लक्ष्ये प्रसक्त्यभावेन टस्येत्संज्ञालोपौ न स्याताम्। अपरि-तुष्यन्नपिभवानस्तुवेतिदोषान्तरमनुधावति, नकारेत्संज्ञके सशब्द इत्यादिक्रमे-णार्थकथनमयुक्तमेवेत्याद्यपि न सम्यक्। एवमर्थस्य ससनेत्यादावित्त्व-व्यावर्तनेन चारितार्थ्यात्फलमुखगौरवस्यादूषकत्वात्। नचप्रत्ययाप्रत्यययोरि-तिपरिभाषया निस्तार इति वाच्यम्। तस्या एकदेश्युक्तित्वेन निराकरिष्य-माणत्वात्। न चैवमर्थस्वीकारे णेऽणकार्यापत्तिरितिवाच्यम्। व्यावर्तकधर्मस्यैवो-पलक्षणत्वस्य भाष्यतोलाभेन सर्वत्रैकरीत्यैवोपलक्षणीयमित्यत्र मानाभावेनान्या-

द्दशधर्मस्यैवोपलक्षणत्वस्वीकारात् । अतएव भाष्येकालकारकादीनामप्युपलक्षणत्वंदर्शितं निष्ठासंज्ञासूत्रे । अत एवोद्योते इत्संज्ञकनकारोपलक्षितः प्रकृत्यर्थानुवादीच्छार्थोवा सकारोभवतीत्यर्थइत्युक्तम् । एवञ्च प्रकृते इत्संज्ञकणकारपूर्ववर्तित्वोत्तरवर्तित्वाभ्यां परस्परव्यावृत्तिरिति न दोषः । किञ्च णत्वेनाण्त्वेन च तयोरुपस्थितावच्छेदकीभूतणत्वाण्त्वादिधर्मस्यैव परस्परव्यावृत्तिरिति न दोषः । गुप्तिजित्यादावित्संज्ञकनकाराद्युपलक्षितस्सन्त्वावच्छिन्नोभवतीत्येव बोधः, सोभवतीतिमूलमपि सन्त्वावच्छिन्नोवस्तुतस्सोभवतीत्यर्थकतया योजनीयम् । वस्तुतस्तु निष्ठासंज्ञासूत्रस्थभाष्यप्रामाण्याणत्वाण्त्वादिकं नावच्छेदकमिति न तेन परस्परव्यावृत्तिः । तस्मात्पूर्वोक्तसमाधानमेवज्यायः । सन्त्वावच्छिन्न इत्येवमर्थंवदतां तद्भाष्यविरोध एव । तत्रापि क्तत्वावच्छिन्नो निष्ठासंज्ञ इत्यर्थे समानशब्दप्रतिषेधइतिवार्तिकस्यैवानुत्थितेः । एवञ्च मूलंयथाश्रुतमेवसुयोजम् । नचैव मर्थस्वीकारे "विशिष्टंह्येतोऽनलमाश्रयत इटंनामेति" भाष्यविरोधः, ग्रहोऽलिटिइटईटीत्यादावपीत्संज्ञकटकारोपलक्षितेकारादेस्तत्रबोधेनानल्विधावित्यस्यदुर्वारत्वादितिवाच्यम् । तदुपलक्षितत्वं कादाचित्कतद्विशिष्टत्वं नेदानीन्तनतद्विशिष्टत्वम् । एवञ्चतद्विशिष्टत्वंयदाकदावाऽपेक्षितंप्रकृतेचलोपप्राक्कालिकं तद्विशिष्टत्वं टकारघटितसमुदाये इड्रूपेऽस्तीति न तद्धर्मोऽल्मात्रवृत्तिर्भवतीति भाष्याशयात् । ध्वनितश्चायमर्थ श्शास्त्रस्योपस्थित्याशास्त्रोपात्तस्थान्यादेशभावस्य निमित्तस्य ग्रहणमिति न दीर्घोऽल्विधिरितिग्रन्थेनोद्योते । किञ्च भोभगो इतिसूत्रभाष्यबलात्सूत्रे स्थानषष्ठीनिर्दिष्टस्यैव स्थानिपदवाच्यताया अनेकाल्शिदितिसूत्रे उद्योते उक्तत्वेन प्रकृते इट एव स्थानित्वेन न प्राथमिकनिषेधावकाशः । एतेन ङ्याब्ग्रहणेऽदीर्घ इति वार्तिकं प्रश्लेषेणतत्प्रत्याख्यानपरं भाष्यं चात्रार्थे विरुणद्धीति दोषोपि परिहृतः । निष्ठासंज्ञासूत्रस्थभाष्यानुरोधेन पूर्वोक्तभाष्याणां मदुक्तरीत्यैवाऽऽशयवर्णनस्य न्याय्यत्वात् । नचैवमपि घुसं-

निष्ठासञ्ज्ञासूत्रेभाष्ये । अत एवाऽऽटश्चेत्यादेर्नासङ्गतिः । अन्यथा यत्राऽऽट् सूत्रे तत्र नाचपरो नेष्यते च तत्र वृद्धिः । यत्र प्रयोगे इष्यते वृद्धिस्तत्र नाऽऽडिति तदसङ्गतिः स्पष्टैव । अन्त्यङ्किम् । वाचालः ।

---

ज्ञासूत्रेऽदाबित्यस्य पकारेत्संज्ञकदाशब्दभिन्न इत्यर्थस्य भवद्रीत्या लाभेन प्रणिदापयतीत्यादौ निषेधाप्रवृत्त्याऽपिदितिन्यासस्यतदर्थमावश्यकत्वकथनमसङ्गतं स्यात् । किञ्चपूर्वंपकारलोपेआत्वप्रवृत्त्युत्तरं दाशब्दे भूतपूर्वपकारेत्संज्ञकत्वं सुवचमिति दैप्यप्यदाविति निषेधस्य सूपपादत्वात्, तदर्थं नानुबन्धकृतमनेजन्तत्वमितिपरिभाषास्वीकरणं भाष्यकृतोऽसङ्गतं स्यादिति वाच्यम् । इत्वरूपधर्माविशेषितकेवलपकारोपलक्षितदाशब्दबोधनमभिप्रेत्याऽपिदितिन्यासस्य प्रणिदापयतीत्याद्यर्थमावश्यकत्वात् । स्पष्टंचेदं तत्रैवोद्योते । इत्संज्ञकपकारोपलक्षितदाशब्दबोधनेऽपि तादृशपकारवैशिष्ट्यस्य कादाचित्कस्यापि पलोपात्पूर्वमात्वं विना दुर्लभत्वेन परिभाषाया आवश्यकत्वाच्च । किञ्च भवदुक्तव्याख्याने यथाश्रुतन्यासे प्रणिदापयतीत्यादौ दाप्त्वावच्छिन्नत्वस्य सत्त्वेन निषेधस्य दुर्वारतया यथान्यासमेवास्त्वित्युक्त्यनन्तरं निरुक्तस्थले निषेधाप्रवृत्तये उपायान्तराकथनमसङ्गतमेव स्यात् । किञ्चैकान्तत्वपक्षे दोषपरिहाराय "आत्वे कृते भविष्यति ननु चोक्तं तद्घ्यात्वं न प्राप्नोति किंकारणम् अनेजन्तत्वादिति पकारलोपेकृतेभविष्यति नह्ययं तदादाभवति भूतपूर्वगत्याभविष्यती"तिभाष्यमसम्बद्धमेव स्यात् । तस्माद् घुसंज्ञासूत्रस्थं भाष्यं प्रत्युत तवैव प्रतिकूलम् । एवञ्चानुपूर्व्या अवच्छेदकत्वं न सङ्घटत एवेत्याहुः । तदेतत्सर्वं भाष्यार्थविमर्शनचतुरा विभावयन्तु ॥

अन्त्यंकिमिति । चुटूइतिनियमादेवादेर्वारणसम्भवादिति प्रश्नः । वाचाल इति । लस्येत्त्वे तत्सामर्थ्याच्छित्स्वरस्य चित्स्वरेण पर्यायतापत्तिरिति भावः । नच चालित्येवसिद्धेआलजित्युच्चारणाश्चैत्त्वमिति वाच्यम् । तथोच्चारणेन सन्ध्यभावस्यापिकल्पनापत्तेः । ज्ञापकेन सूत्राक्षरखण्डनानौचित्याच्च ।

हल्किम् । चिरिणोतीत्यादौ धातोरन्त्यस्य मा भूत् ॥

आद्योच्चारणमिति । आद्यमुच्चारणमित्यर्थः । भावे घञिति भावः । तच्च प्रत्यासत्त्यैतच्छास्त्रप्रवर्तकाचार्याणामेव । आद्यत्वञ्चाज्ञातस्वस्वरूपज्ञापकत्वम् । उपस्याऽऽद्यर्थत्वाद्दिशेरुच्चारणक्रियत्वात् । अत एव "एकाच उपदेशे" इति सूत्रे कैयटेनोक्तम् "इत्सञ्ज्ञाविधावुच्चारणवचन उपदिशिर्गृह्यते" इति । "आदेच" इति सूत्रेऽपि "येषां स्वरूपज्ञापनायापूर्वमुच्चारणं तेषामेवोपदेशव्यवहारः" इति । तत्र सूत्रे भाष्येऽपि "उद्देशश्च प्रातिपदिकानां नोपदेशः" इति । प्रकृतसूत्रे भाष्येऽपि "प्रत्यक्षमाख्यानमुपदेशः" इत्युक्तम् । तस्य

---

यत्तु लाजित्येव सिद्ध इति तन्न । अतद्धित इत्यनेन तद्धितादिलकारस्येत्त्वाभावबोधनात् । एवमस्तातौसस्येत्त्वे सिति चेतिपदत्वेऽथस्तादित्यत्र जश्त्वापत्तिरवस्तादित्यत्र लोपश्शाकल्यस्येत्यस्यापत्तिश्चेत्यपि बोध्यम् । हल्किमिति । अन्योन्याश्रयपरिहारोपयोगितया पूर्वोक्तयोगविभागादिना सिद्धमिति प्रश्नः । तच्च गुरुभूतमित्याशयेनोत्तरयति । चिरिणोतीति । तथासति नुम्स्यादिति भावः। न चेदित इति सूत्रे नपुंसकस्य झलच इति सूत्राज्झल्ग्रहणमपकृष्य झलन्तस्य धातोर्नुमिति व्याख्यानेन नातेदित्त्वस्य फलमितीत्संज्ञा न भवति, झल्ग्रहणापकर्षस्योगिदचामित्यत्रावश्यकत्वादिति वाच्यम् । धिनोतीत्यादौ नुमनापत्तेः॥

प्रत्यक्षमाख्यानमिति । शास्त्रमात्रविषयं तत्त्वंच मुनित्रयोच्चारितपदविशिष्टविधेयताकबोधानुकूलत्वम् । वैशिष्ट्यं च स्वजन्यशाब्दबोधीयत्व स्वजन्योपस्थितिविषयतावच्छेदकधर्मावच्छिन्नत्वोभयसम्बन्धेन । यत्तु स्वावच्छिन्नविधेयताकशाब्दबोधानुकूलत्व, स्वप्रकारकप्रत्यक्षानुकूलत्वोभयसम्बन्धेन धर्मविशिष्टव्यापारत्वं तत्त्वमिति तन्न, डमुडुच्चारणे तत्त्वाभावात् । उपदेशशब्दो भावघञन्तस्तस्य चोत्तरत्र सम्बन्ध इति प्राचीनमतं निराकुर्वंस्तस्य करणघञन्त-

**चोक्त एवार्थः। परे तु उपदेश इति किमर्थमभ्रआँ अपः, कः पुनरुद्देशोपदेशयोर्विशेषः" इति भाष्ये उक्तम्। यदि प्रत्यक्षमाख्यानमुपदेशो गुणैः प्रापणमुद्देशस्तर्हि "लृटः सद्वा" "निष्ठा" इति**

---

तामुत्तरत्वासम्बन्धं च व्यवस्थापयति। परेन्त्वित्यादिना। उपदेश इतिकिमिति। प्रकृतसूत्रविषयकोयं प्रश्नः। अभ्र आँ अप इति। यद्यपि तत्र फलाभावान्नेत्त्वमित्यपि सुवचं, तथाप्यभ्र आँ अटित इत्यत्रानेकान्तत्वे फलं सुवचमिति तदुपलक्षणमेतदिति बोध्यम्। लृटस्सद्वेति। न च लटश्शतृशानचावित्यत्र तयोरुच्चारणमस्त्येवेतीत्त्वं सुलभमिति वाच्यम्। अन्यशब्दार्थसम्बन्धप्रत्ययस्यानुक्तत्वरूपशेषत्वोक्त्या प्रकृतेऽपि लट्स्थानिकत्वादिसम्बद्धाभ्यां ताभ्यामन्याविमौ सत्पदोपस्थितौ शतृशानचाविति स्वीकारेण तयोः प्रत्यक्षाख्यानाभावात्। नच शतृशानचोरनुवृत्त्यैव सिद्धे पुनस्तौग्रहणेन पूर्वत्र यादृशावित्संज्ञकशकाराद्युपलक्षितावदानीं तयोः परामर्शेन सत्पदेन तादृशयोर्विधानेन पुनरत्त्वप्रवृत्तेर्नावश्यकतेति वाच्यम्। तथासति पूर्वत्र लट्स्थानिकत्वादिसम्बन्धस्यापि तयोस्सत्त्वेन तद्विशिष्टयोरेव परामर्शापत्त्या बहूपप्लवापत्ते रूपमात्रस्यैव परामर्शनीयत्वात्। तदुक्तं वार्तिककृता तौग्रहणमसंसर्गार्थमिति। अत एव शतृशानचौ रूपमात्रं परामृश्यत इत्युक्तं कैयटे। एवञ्च सत्पदेन विधानानन्तरमित्संज्ञयाऽवश्यं भाव्यमिति बोध्यम्। निष्ठेतीति। न च क्तक्तवतू निष्ठेति सूत्रभाष्यत इत्संज्ञकककाराद्युपलक्षिततवतोस्संज्ञालाभेन तयोरेव निष्ठापदेन विधानात्पुनर्नेत्त्वप्रवृत्तेरिहावश्यकतेति वाच्यम्। निष्ठासंज्ञायां तयोर्विधानं विहितयोस्तयोर्निष्ठासंज्ञेत्यन्योन्याश्रयपरिहाराय सूत्रशाटकन्यायेन तौ भवतो ययोर्विहितयोर्निष्ठासंज्ञेत्यर्थावश्यकत्वेनेदानीं निष्ठेतिविहितयोरुपदेशत्वाभावेनत्वाभावे इत्संज्ञककाराद्विशिष्टस्य निष्ठासंज्ञेति वक्तुमशक्यत्वेन विहितयोरित्त्वप्रवृत्तेरावश्यकत्वात्। न च यत्र निष्ठापदं तत्र क्तक्तवतू उपतिष्ठेते इत्यर्थकतयाऽस्य परिभाषात्वं

विहितानां शतृशानच्क्तक्तवतूनामवयवस्येत्सञ्ज्ञानापत्तिः । तथा "राजसूयसूर्य" "चित्याग्निचित्ये" इत्यादिनिपातनानुमितक्यबादीनां पादेरित्त्वानापत्तिः । वदः सुपीत्यत्रोच्चारितस्तु नैतत्संबन्धी । अत एव "तस्यापत्यमत इञ्" इति न्यासेऽन्यशब्दसम्बद्धापत्यार्थस्यानुक्तरूपशेषत्वमुक्तमाकरे । तस्मादत्र सूत्रे उपदेशशब्देनोद्देशस्यापि ग्रहणं वक्तव्यम् । एवम् अभ्रआँ अप इत्यादावपि प्राप्नोतीति तेषां सङ्ग्रहोऽस्य व्यावृत्तिर्येन भवति स विशेषः क इति प्रश्नः । तत्सङ्ग्रहार्थमेव लोकव्यवहारेणापि तयोः सङ्कीर्णत्व-

---

स्वीक्रियते, अनुवृत्तयो रिव परिभाषोपस्थितयोरप्युपदेशत्वमङ्गीक्रियते, एवञ्चेत्त्वं सुलभमिति वाच्यम् । एवं सति सर्वसंज्ञाशास्त्राणां तुल्ययुक्त्या परिभाषात्वापत्तौ संज्ञाशास्त्रत्वस्यैव विलयापत्तेः । तत्र तत्र निष्ठापदस्य बोधीयविषयताप्रयोजकत्वानापत्तेः । बोधीयवियत्वाप्रयोजकानां परिभाषोपस्थितिमात्रप्रयोजनकानां सूत्रघटकपदात्मकलिङ्गानां क्वाप्यदर्शनाच्च । तत्र तत्र निष्ठापदोत्तरं विभिन्नविभक्तिनिर्देशस्य वैयर्थ्यापत्तेश्च । सामर्थ्यादुपस्थापकगतविभक्तेरुपस्थाप्येऽनुसन्धाने क्लेशाच्च । प्रत्ययानां स्वप्रकृत्यर्थान्वयित्वनियमभङ्गापत्तेश्च । पादेरित्त्वानापत्तिरिति । इत्संज्ञाया निपातनेनानुमाने गौरवमिति भावः । यत्तु कालेभ्यो भववच्चरणेभ्यो धर्मवदित्यतिदिष्टप्रत्ययघटकानामित्त्वानापत्तिर्दोष इति तन्न । इत्संज्ञकतत्तद्वर्णोपलक्षितानामेव भवाद्यर्थे विधानेन तादृशानामेवात्रातिदेश इति वक्तुं शक्यत्वेन पुनरित्त्वप्रवृत्तेरिहानावश्यकत्वात् । आवश्यकश्च तत्र प्रकृत्यादिसम्बद्धानामेवातिदेश इति दिक् । आकर इति । तस्यापत्यमत इञित्येकयोगेऽदन्तशब्दार्थसम्बन्ध्यपत्यस्य तेनोक्तत्वेन भानुशब्दार्थसम्बन्ध्यपत्यस्यानुक्तत्वेन तस्य शेषत्वाद्वृद्धाच्छ इति छप्रत्ययो भानुशब्दादापते दतो योगविभाग इत्यर्थकं तत्रोक्तम् । लोकव्यवहारेणेति । उद्दिष्टो मेऽनुवाक उपदिष्टो मे पन्था

**मुपपाद्यैतद्व्यावृत्तये तत्सङ्ग्रहाय च "उपदेशनेऽजनुनासिक इति वक्तव्यं किं पुनरुपदेशनं शास्त्रम्" इत्युक्तं वार्त्तिककृता। तत्र शास्त्रपदेन प्रयोगशासनकरणभूता धातुप्रातिपदिकप्रत्ययनिपाता-गमादेशा हलन्त्यसूत्रे व्यवसितपदार्थत्वेन भाष्ये उक्ता गृह्यन्ते। एवञ्च तत्सङ्ग्रहोऽभ्रआं इत्येतद्व्यावृत्तिश्च सिद्धा। तस्य च वार्त्तिकस्य बाहुलकात्करणे घञा प्रत्याख्यानं भगवता कृतम्। किञ्च हलन्त्यसूत्रे भावघञन्तोपदेशपदानुवृत्तौ "भवतष्ठक्छसौ" इत्यादिविहितेष्वित्सञ्ज्ञानापत्तिः। परस्य सत्त्वेन कादेरन्त्यत्वाभावात्।**

---

इत्यादिव्यवहारेणेत्यर्थः। ननु आ इत्युच्चारणे आकारस्यापि करणत्वात्करण-घञन्तेऽपि दोष इत्यत आह। **प्रयोगशासनकरणभूता इति**। प्रयुज्यमानस्य परिनिष्ठितस्य साधुत्वशासनकरणभूता इत्यर्थः। **भगवता कृतमिति**। एवञ्च भाष्यविरुद्धकल्पनाऽयुक्तेति भावः। एवं भावघञन्तवादं सामान्यतो निरा-कृत्योत्तरसूत्रे तादृशस्यानुवृत्तौ सुतरां दोष इत्याशयेनाह। **किञ्चेत्यादिना**। तत्तत्समुदायान्त्यस्येत्त्ववारणायाज्ञातस्वस्वरूपज्ञापकोच्चारणप्रयोजकतात्पर्यविष-यतापर्याप्त्यधिकरणसमुदायान्त्यमित्यर्थस्यावश्यकत्वेन द्वन्द्वनिर्देशस्थले वृक्षप्रच-लनन्यायेन समुदायोच्चारणतात्पर्यकल्पनाया आवश्यकत्वेनावयवोच्चारणस्य नान्तरीयकतया तत्र तात्पर्यस्यानावश्यकत्वात्। तादृशतात्पर्यविषयतापर्या-प्त्यधिकरणतायास्समुदाय एव सत्त्वेन तादृशसमुदयान्त्यत्वस्य कादावभावादि-त्त्वानापत्तिरिति भावः। तदेतत्सूचयति। **परस्येत्यादिना**। एतेनोपदिश्य-मानसमुदायान्त्यत्वमुपदिश्यमानसमुदायघटकत्वे सत्युपादिश्यमानसमुदायघटक-वर्णप्रागभावाधिकरणक्षणावृत्तित्वरूपम्। ठकमादाय विशेषणस्य सत्त्वेऽपि छस-मादाय विशेष्याभाव इत्याशयं मूलस्य परिकल्प्य यदि तु प्रत्यासत्त्या स्वघट-

यदि तूपदेशो प्रत्ययत्वादिविशिष्टान्त्य इदित्यर्थ इत्युच्यते, तदोपदेश इति व्यर्थम् । अन्त्यपदसामर्थ्येनैव तल्लाभात् । अत एवात्र सूत्रे उपदेशग्रहणस्यानुबन्धा अनेकान्ता इत्यस्थितपक्षेऽञ्ञआँ अटित इति प्रयोजनमुक्तं, न तूत्तरार्थमित्युक्तम् । न च करणसाधनोप-

---

कत्व, स्वघटकवर्णप्रागभावाधिकरणक्षणावृत्तित्वोभयसम्बन्धेनोपदिश्यमानसमुदायविशिष्टत्वमेवेहोपदिश्यमानान्त्यत्वं विवक्ष्यते, तदेतच्चिन्त्यमित्युक्तिरपास्ता ॥

यत्तु द्वन्द्वनिर्देशस्थले प्रत्येकं विधेयतालाभार्थं प्रत्येकमुच्चारणे तात्पर्यं परिकल्प्यमिति तन्न । ठक्पदं ठग्बोधकं भवतु छस्पदं छस्बोधकं भवत्विति तात्पर्ययोः प्रत्येकं विधेयतालाभार्थमावश्यकत्वेऽपि द्वन्द्वस्थले ठक्छस्पदं साहित्यावच्छिन्नठक्छसोर्वा ठक्छस्समुदायस्यवा बोधकं भवत्विति तात्पर्यस्याप्यावश्यकत्वेन तादृशतात्पर्यस्यैव निरुक्तसमुदायोच्चारणे प्रयोजकता स्वीक्रियते, तत्तत्सर्वोच्चारणानुगतत्वात् । न तत्प्रत्येकतात्पर्ययोः प्रयोजकत्वमनुगतसमुदायतात्पर्येण तदुच्चारणसम्भवेऽननुगततत्तत्तात्पर्याणां गौरवेण प्रयोजकत्वानङ्गीकारात् । न च प्रत्येकोच्चारणस्यापि समुदायतात्पर्यप्रयोज्यत्वेन तादृशतात्पर्य विषयसमुदायत्वं प्रत्येकमस्तीति वाच्यम् । तादृशतात्पर्यविषयतापर्याप्त्यधिकरणत्वस्य विवक्षणात्तस्य च प्रत्येकमभावेन दोषध्रौव्यात् । तत्तत्समुदायान्त्यस्येत्त्ववारणाय पर्याप्तेर्निवेशनीयत्वात् । अत एव वाक्यतात्पर्यस्थले प्रत्येकं बोधीयविषयतानुपपत्तिरिति दिक् ॥

पूर्वोक्तदोषवारणोपायस्योपदेशपदानुवृत्तिवैयर्थ्यसम्पादकतया तादृशोपायो भावघञन्तत्वस्थापनोपायतयानाश्रयणीय इत्याह । यदित्वित्यादिना । अत एवेति । निष्कर्षे फलासत्त्वादेवेत्यर्थः । करणघञन्तोपदेशपदानुवृत्तौ वार्तिकविरोधमाशङ्क्य परिहरति । नचेत्यादिना । यत्तु किंचेत्याद्येतदवधिकग्रन्थ-

**देशशब्दानुवृत्त्या सिद्धे हलन्त्यसूत्रे "व्यवसितान्त्यमिति वक्तव्यं के पुनर्व्यवसिता धातुप्रातिपदिकप्रत्ययनिपातागमादेशा" इति वार्त्तिकानुत्थानमिति वाच्यम् । समुदायद्वाराऽवयवस्याप्युपदेश-करणत्वात्तदन्त्यस्यापि लोपापत्तिरित्याशयात् । भाष्यकृता चान्त्य-ग्रहणसामर्थ्येन प्रत्याख्यातम् । तत्रानुबन्धविशिष्टानां धातुत्वादि**

---

स्योत्तरसूत्रे उपदेशपदानुवृत्तितात्पर्यकत्ववर्णनं तत्त्वेतद्ग्रन्थेन सन्दर्भविरोधा-दुपेक्ष्यम् । **अनुत्थानमेवेति** । उपदेशनेऽन्त्यमित्युक्तौ प्रत्यासत्त्या तदन्त्यमित्य-र्थलाभाद्वार्तिकानुत्थानं, मम त्वाद्योच्चारणस्यान्त्यासम्भवात्प्रत्यासत्तिराश्र-यतुं न शक्यत इति यस्य कस्य चित्समुदायान्त्यस्येत्यर्थापत्त्या तदुत्थितिः । यथाकथंचित्प्रत्यासत्तिसम्भवेऽप्याद्योच्चारणकर्मीभूतसमुदायत्वं प्रत्येकमप्यस्तीति तदुत्थितिरितिभावः । **समुदायद्वारेति** । परंपरयावयवानामपि करणत्व-मापाद्य वार्तिकं प्रणीतम् । अन्यथावार्तिकयोः परस्परविरोधापत्तिरिति भावः । परिगणनं त्ववयवव्यावृत्त्यर्थमेवेति वार्तिकाशयः । **अन्त्यग्रहण-सामर्थ्येनेति** । आदिव्यावृत्त्यर्थं तु न तत्, चुटूइत्यादिनियमेनैव तद्वारणसम्भ-वादिति केचित् । वस्तुतो भाष्ये सर्वोऽपि हल् तं तं समुदायं प्रत्यन्त इत्यत्र सर्वपदप्रयोगादादेरपि व्यपदेशिवद्भावेनान्तत्वात्नान्त्यपदेन तद्व्यावृत्तिरित्या-शयवर्णनमुचितम् । एवं च नियमप्रयुक्तं गौरवमपि नास्तीति प्रतिभाति । ननु न धातुलोप इति सूत्रभाष्यादनुबन्धविनिर्मुक्तस्यैव धातुत्वलाभान्नधातु-रित्संज्ञायां निमित्तं भवितुमर्हतीतीदं परिगणनमसम्बद्धमेवेत्यत आह । **तत्रे-त्यादिना** । एवं चात्र धातुत्वादिकमन्यादृशमेवेति भावः । **यत्तु परिगणन-**वाक्ये धात्वादिपदं धात्वादिबोधकपरमिति वक्तुं युक्तम् । **अत एव** लोपश्चेति प्रश्लिष्टशकारस्यादेशबोधकत्वान्ङमो ह्रस्वादित्यत्र ङमु, उडिति पदद्वयमिति कल्पे आगमबोधकत्वाच्च शकारटकारयोरित्त्वासिद्धिरिति तन्न ।

तु धातुत्वादियोग्यघटितत्वाद्बोध्यम् । निपातानां द्योतकत्वेन ब्राह्मणवसिष्ठन्यायेन च पृथग् ग्रहणम् । व्यवसितत्वञ्च धातुत्वादिना परिच्छिन्नत्वादेति कैयटः । एवञ्चोदश्विदादिप्रातिपदिकान्त्य-

---

एवं सतिप्रातिपदिकानां प्रतिषेधोऽकृत्तद्धितान्तानामिति वार्तिकेऽकृत्तद्धितान्तानामित्यस्य वैयर्थ्यापत्तेः । तादृशवार्तिकस्यान्यादृशार्थकरणं त्वक्षरस्वारस्यविघटकम् । किञ्च कृदित्यादीनां प्रत्ययादिबोधकत्वेन तकारस्येत्त्वापत्तौ कृत्सु सर्वत्र तित्स्वरापत्तेः । बोधकवृत्तितित्त्वस्य बोध्येष्वारोपात् । न चानीयरादीनां रित्त्वं व्यर्थं स्यादिति वाच्यम् । तत्र विशेषविहितेन रित्त्वेन बाध इत्यपि वक्तुं शक्यत्वात् । एवंरीत्या तृचश्चकारस्य सार्थक्यसम्भवेन तृचश्चकारस्य वैयर्थ्योपपादनं भाष्यकृतामसम्बद्धमेव स्यात् । न च तव्यतस्तकारस्य वैयर्थ्यमिति वाच्यम् । पूरणगुणेति निषेधाभावार्थं तच्चारितार्थ्यात् । यतस्तकारस्येद्यतीस्यादौ विशेषणार्थता स्यात् । किञ्च तिङः प्रत्ययबोधकत्वेन ङस्येत्त्वापत्तौ भविषीष्टेत्यादौ गुणानापत्तिः । सार्वधातुकमपिदिति तु श्यन्नाद्यर्थं स्यात् । तत्र ज्ञापकादिना वारणे तु गौरवम् । किञ्च लोपश्चेत्यत्रत्यशस्य सर्वादेशतागमकत्वं नादेशबोधकत्वमिति तत्रेत्त्वं दुर्लभम् । एवं ङमुडिति पदद्वयमिति कल्पेऽपि न तस्यागमबोकत्वम् । किंतु स्वसमभिव्याहृतस्याद्यवयवताबोधकत्वमित्यास्तां विस्तरः । नन्वनर्थकनिपातानामपि प्रातिपदिकसंज्ञाया इष्टत्वेन प्रातिपदिकत्वेनैवसिद्धे निपातानां पृथग्ग्रहणं व्यर्थमत आह । ब्राह्मणवसिष्ठन्यायेनेति । धातुत्वादिना परिच्छिन्नत्वादिति । शास्त्रकृता तत्त्वेन बोधितत्वादित्यर्थः । विशिष्टस्य तत्त्वेन बोधने शास्त्रकृत्तात्पर्ये गमकं तु थमोरुकार एवेति बोध्यम् । यद्वाधातुत्वादिना बद्धत्वात्तद्घटितत्वादित्यर्थः । एवं स्वमते प्रसक्तं वार्तिकाविरोधं परिहृत्योत्तरत्र भावघञन्तोपदेशपदानुवृत्तौ वार्तिकाविरोधं दर्शयति । एवञ्चेत्या-

**स्यापि लोपः प्राप्नोतीति "प्रातिपदिकानां प्रतिषेधो वाच्योऽकृत्त-**

---

**दिना** । यत्तु नन्वस्थितपक्षे प्रयोजनदातृभाष्यं तत्रैव प्रतिकूलम् । अनुत्तरार्थत्वे हि तत्रैव क्षोदं कृत्वा न कर्तव्यमिति ब्रूयात् । ममतूत्तरार्थमावश्यकतया तथा नोक्तमिति सार्थकमेवेत्यतोऽननुवृत्तौ साधकान्तरमाहेत्यवतारयन्ति । तन्न । पूर्वग्रन्थस्याननुवृत्तिप्रतिपादनतात्पर्यकत्वे न चेत्यादितदुत्तरग्रन्थानुत्थितेः पूर्वमुपपादितत्वेनैतादृशावतरणस्यासम्बद्धत्वात् । एवञ्चाक्षरार्थाननुगुणत्वाच्च । **प्रातिपदिकानामिति** । न च चित्रङादर्शनेन निषेधस्यानित्यत्वादिति वाच्यम् । एतच्चात्र युक्तं यदीत्कार्याभावादित्संज्ञा न स्यात् . यत्रेत्कार्यं भवति तत्रेत्संज्ञा, तद्यथा आगस्त्यकौण्डन्ययोरगस्तिकुण्डिनजिति तदुत्तरभाष्येण वार्तिकारम्भे कुण्डिनचश्चकारस्येत्संज्ञा न स्यादित्येवंपरेणेतद्दोषस्य दत्तप्रायत्वादित्याचार्याः। श्रीधरस्त्वश्रूयमाणौ कृत्तद्धितावकृत्तद्धितौ तदन्तानामिति मध्यमपदलोपिसमासमाश्रित्याश्रूयमाणकृत्तद्धितान्तानामेव निषेध इति समादधौ ॥

यत्तूदश्विदादीनामव्युत्पन्नत्वस्य कैयटेनोक्तत्वात्तद्विरुद्धत्वादिति श्रीधरोक्तिखण्डनम् । तन्न । कैयटविरोधस्य प्रामाण्याभञ्जकत्वात् । व्युत्पत्तितात्पर्येणैव तद्वार्तिकं प्रवृत्तमित्यपि शक्यत्वाच्च । यदपि प्रातिपदिकवृत्तिबोध्यताविशिष्टबोधकतावतामित्यर्थः । वैशिष्ट्यञ्च स्वावच्छेदकरूपावच्छिन्नत्व, स्वनिरूपितत्वोभयसम्बन्धेन । तेन न पूर्वोक्तदोषावकाशः । अथ वा स्ववृत्तिप्रातिपदिकवृत्त्यानुपूर्व्यवच्छिन्नविषयताप्रयोजकानामित्यर्थः । अथ वा स्वविषयकबोधप्रयोजकत्व स्वाघटकाघटितत्वसम्बन्धाभ्यांप्रातिपदिकविशिष्टानामित्यर्थः । अकृदित्यादि तात्पर्यग्राहकमेव । न च कल्पत्रयेऽप्युदश्वितोन्यतरस्यामित्यादावित्संज्ञालोपाभावाधीनंप्रातिपदिकनिष्ठबोधकत्वादि, तत्प्रयोज्यप्रतिषेधप्रयोज्यश्चेत्संज्ञालोपयोरभाव इत्यन्योन्याश्रय इति वाच्यम् । इत्संज्ञालोपाभावसम्भावनाप्रयोज्या या प्रातिपकनिष्ठबोध्यताविशिष्टबोधकतावत्त्वादिसम्भावना तद्वि-

द्वितान्तानाम्" इति वार्त्तिककृतोक्तम् । कुम्भकार इत्यादावपवाद-
विषयपरिहारेणोत्सर्गप्रवृत्तेःपूर्वं प्रातिपदिकत्वे णादिलोपो नस्यादिति
अकृदित्यादि । तच्च फलाभावान्नेत्सञ्ज्ञेत्यादिना भाष्ये प्रत्याख्यातम् ।

---

पयाणामित्यस्य विवक्षणेनादोषात् । उदश्विदादीनामुदश्वित्कतिपयेत्यादौ तादृ-
शानुपूर्वीकाणां प्रयोगस्य चित्रङादीनामप्रयोगस्य च दर्शनेन सम्भावनासम्भा-
वनयोस्सम्भवादित्याहुः । तदपि न । अकृदित्यादेस्तात्पर्यग्राहकत्वकल्पनानौ-
चित्यात् । अत्र पक्षे कुण्डिनचि दोषतात्पर्यकोत्तरभाष्यासङ्गतेः । राजश्वशुराद्य-
दित्यादिप्रयोगे राजेत्यदन्तस्यापि प्रातिपदिकस्य लाभ इति वक्तुं शक्यत्वेन
राजन्शब्दे नकारस्येत्त्वस्य दुर्वारत्वाच्च । ज्ञापकादिना तत्समर्थनन्तु गौरव-
ग्रस्तम् । तस्मादाचार्योक्त एव परिहारो न्याय्य इति प्रतिभाति । नन्वनुबन्ध-
विनिर्मुक्तपदार्थोपस्थितेस्तव मते स्वीकारात्कुम्भकारादौ प्रातिपदिकसंज्ञाप्रवृत्ति-
काले णादीनामसन्निधानादकृदित्यादिवैयर्थ्यमित्यत आह । कुम्भकार इत्या-
दावित्यादिना । अत्रादिपदेनाशब्दादाचारक्विबन्ताद्धञि निष्पन्नस्याशब्दस्या-
शब्दादिञि निष्पन्नस्येशब्दस्य च सङ्ग्रहो बोध्यः । अपवादविषयपरिहरे-
णेति । अनुबन्धविनिर्मुक्तपदार्थोपास्थितिरिति न स्वतन्त्रं वचनम् । किन्त्व-
न्तरङ्गत्वादित्संज्ञालोपयोः प्रथमप्रवृत्तिलभ्यम् । एवञ्च प्रकृते उपसञ्जनिष्यमाण-
न्यायेन पूर्वमित्संज्ञालोपयोरप्रवृत्तौ तद्विशिष्टस्यैव लक्ष्ये प्रवृत्त्या तत्र प्राप्त-
निषेधबाधार्थमकृदित्यादीति भावः । अत्र सङ्कोचश्चोपदेशपदार्थे प्रातिपदिका-
तिरिक्तत्वेन हल्पदार्थे प्रातिपदिकान्त्यहलतिरिक्तत्वेन वा बोध्यः । एतेनै-
तद्विरोधादनुबन्धविनिर्मुक्तपदार्थोपस्थितिरयुक्तेत्याचार्योक्तमपास्तम् । फला-
भावादिति । तिति प्रत्ययग्रहणात्, ञ्नित्यादिरित्यत्र भीह्रीभृमदेत्यतः
प्रत्ययादित्यनुवर्त्य सप्तम्यन्तत्वेन विपरिणमय्य लितीत्यत्रेव ञ्नितो विशेषणा-
च्चेत्यादिरूपेण फलाभावोऽन्यतोऽवसेयः । ननु पस्पशास्थभाष्यात्प्रातिपदिका-

अत्राद्योच्चारणार्थकोपदेशपदानुवृत्तौ त्वस्य वार्तिकस्यानुत्थानमेव स्यात् । "उद्देशश्च प्रातिपदिकानां नोपदेश" इति "आदेच" इति सूत्रभाष्ये उक्तेः। एतद्भाष्यैकवाक्यतया पस्पशाह्निकान्तस्थे "अग्रहणप्रातिपदिकानामुपदेशः कर्तव्यो मश्वको मञ्जक इति मा भूत्" इति भाष्ये उपदेशशब्दो ग्रहणं कर्तव्यमित्यर्थकः । तच्चानुवादरूपमेव सन्देहनिवर्त्तकमिति बोध्यम् ॥

नन्वेवं "तस्मिन्निति निर्दिष्टे" इति सूत्रे षष्ठीप्रकल्पकत्वं तस्येति पक्षे "गुप्तिज्किद्भ्य" इत्यादावपि षष्ठीप्रकल्प्त्यापत्तिः । न च सनः सनेवादेशो भविष्यतीति बाधकाभाव इति वाच्यम् । "उपदेश इत्युच्यमाने इत्सञ्ज्ञा न प्रकल्पेत" इत्युक्तं भाष्ये, तद्विरुद्धेनात्रोपदेशपदाननुवृत्ताविति चेन्न । तस्यैकदेश्युक्तित्वेनासाधकत्वात् ।

---

नामप्युपदेशत्वं लभ्यत इति न वार्तिकानुत्थितिरित्यत आह । उद्देशश्चेत्यादि । ननु पस्पशास्थभाष्यस्य का गतिरित्यतस्तद्भाष्यं योजयति । एतद्भाष्येत्यादिना। उपदेशशब्द इति । उपदेश इति शब्दो यस्मिन्वाक्य इति बहुव्रीहिः । उपदेशः कर्तव्य इति शब्द इत्यर्थः, तेन न कर्तव्य इत्यनेन नान्वयानुपपत्तिदोषापातः । ननु तथाप्युपदेशत्वमायातीत्यत आह । तच्चानुवादेति । एवञ्चाज्ञातस्वस्वरूपज्ञापकत्वाभावान्नोपदेशत्वमिति भावः । करणसाधनोपदेशपदानुवृत्तौ सर्वथाऽननुवृत्तौ भाष्यविरोधमाशङ्क्य परिहरति । नन्वेवमित्यादिना । सनस्सनेवेति । सननुवादसामर्थ्यादनुमितस्यान्तरतम्यात्सनेवादेशो भविष्यतीति भावः । उपदेश इत्युच्यमान इति । उपदेश इत्यनुवर्त्य विधीयमान इत्यर्थः । न प्रकल्पेतेति । अन्तरतमपरिभाषालब्धस्य पाणिन्यनुच्चारितत्वादिति भावः । उपदेशपदेति । भावघञन्तोपदेशपदेत्यर्थः ।

तथा हि। तत्र "ङमो ह्रस्वादचि" इत्यादौ यत्र सप्तमी पञ्चमी चेत्युभयं निर्दिश्यते तत्र किं पूर्वस्य कार्यमथ परस्येति सन्देहे परत्वानवकाशत्वाभ्यां पञ्चमीनिर्देशो बलवानिति सिद्धान्तिनोक्तम्। तत एकदेशिना यथार्थं वा षष्ठीनिर्देशः कर्तव्य इति समाधानान्तरमुक्तम्। यथाविषयं प्रागुक्तेषु कार्यिणः षष्ठ्या निर्देष्टव्या इति तदर्थः। तेषु सप्तमीनिर्देशस्य क्वचित्पूर्वत्र क्वचिदुत्तरत्राऽवश्यकत्वेनोभयनिर्देशे गौरवेणैषैकदेश्युक्तिः। ततः परेणैकदेशिना षष्ठीपदानुवृत्त्या तस्मिन्नित्यादेरेव षष्ठीप्रकल्पकत्वमाश्रित्य यथार्थं वा षष्ठीत्येकदेश्युक्तिः प्रत्याख्याता। षष्ठीपदानुवृत्तौ गौरवादुभयोः प्रकल्पकत्वचारणाय परत्वानवकाशत्वयो रेकः पूर्वपरयोरितिपूर्वपरग्रहणस्य युगपत्प्रकल्पकत्वाभावे ज्ञापकस्य चावश्यकत्वाच्चेयमप्ये-

---

सन्देह इति। न च ङमन्तपदात्परस्याचः पूर्वस्योदासीनस्येत्यर्थे न सन्देहावकाशः। विरोधाभावात्परत्वादित्युक्तिरनुपपन्नेति वाच्यम्। ङम उत्तरस्याचोऽचि परतो ङम इति सन्देह इति भाष्यप्रामाण्यादुदासीने तात्पर्याभावकल्पनेन सन्देहविरोधयोस्सत्त्वात्। आदिपदग्राह्येदास इत्यादौ सन्देहविरोधयोरवश्यं सत्त्वाच्च। तथाहि तत्रहि अङ्गस्येति वर्तते। तच्च प्रत्यासत्त्याऽऽननिमित्तकमेव ग्राह्यम्। तथाचाङ्गानयोर्मध्ये ईदादेशनिवर्त्यस्य कस्याप्यसम्भवात्पूर्वस्य परस्यवा निवृत्तिरिति सन्देहस्य विरोधस्य सत्त्वम्। यत्त्वेतत्परिभाषाद्वयोपस्थाप्यांशेषु योंऽशस्सिद्धो निष्फलो बाधितो वा तदंशानुपस्थितेस्सिद्धान्तितत्वेनोभयनिर्देशस्थले उभाभ्यां षष्ठ्यंशोपस्थितेः फलाभावेनान्यतरेणैकेनोपस्थितिरित्यत्र विनिगमनाविरहेण तयोरुपपत्तिरिति समादधुः, तत्तु ङम उत्तरस्याचोऽचि परतो ङम इति सन्देह इति भाष्याक्षराननुगुणत्वादुपेक्ष्यम्। क्वचित्पूर्वत्रेति। आनेर्मुक्, तुरिष्ठेमेयस्स्वित्यादौ। क्वचिदुत्तरत्रेति। त्रेस्त्रयः, मय उञ इत्यादौ। उभयनिर्देश

कदेश्युक्तिः। ततः पूर्वेणैकदेशिना तत्पक्षे गुप्तिजित्यादौ दोषः शङ्कितः। ततः षष्ठीप्रक्लृप्तिवादिनैकदेशिनोक्तम्–"स्यादेष दोषो यदीत्सञ्ज्ञा आदेशं प्रतीक्षेत। तत्र खलु कृतायामित्सञ्ज्ञायां लोपे च कृते आदेशो भविष्यति उपदेश इति हीत्सञ्ज्ञोच्यते" इति। एवञ्च त्वदुक्तिर्व्याहतेत्याशयः। तदग्रे उपदेशपदाननुवृत्तिमभिप्रेत्य "अथवा नानुत्पन्ने सनि प्रक्लृप्त्या भवितव्यम्। यदा चोत्पन्नः सन् तदा कृतसामार्थ्या पञ्चमीति प्रक्लृप्तिर्न भविष्यति" इति समाधानान्तरं

---

इति। यथायोगमिति भावः। एवं भावघञन्तोपदेशपदानुवृत्तितात्पर्यक-भाष्यस्यैकदेश्युक्तित्वप्रदर्शनार्थं तद्भाष्यमनूद्य प्रत्युत करणघञन्तोपदेशपदानु-वृत्तिरप्येतद्भाष्यारूढेतिसूचयंस्तदुत्तरभाष्यमनुवदति। स्यादेष दोष इत्या-दिना। अयमत्र भाष्याशयः। भावघञन्तोपदेशपदानुवृत्तौ सननुवादेनानु-मीयमानसन उपदेशत्वाभावादित्त्वानापत्तौ सनस्सनेवादेशो भविष्यतीत्या-देशे इत्त्वस्यापेक्षितत्वाद्भवदुक्तदोषस्स्यात्। करणसाधनोपदेशपदानुवृत्त्याऽ-नुमीयमानसनोपि प्रत्ययत्वेनान्तरङ्गत्वादित्संज्ञालोपयोः कृतयोरान्तरतम्यात्स एव भविष्यतीति तत्रेत्त्वं नापेक्षितमिति। युक्तं चैतद्भाष्याशयवर्णनम्। अन्य-थेत्त्वाभावे हेतुप्रदर्शनपरतया पूर्वोक्तस्योपदेश इतिहीत्संज्ञोच्यत इति वाक्यस्य तद्दोषवारणोपायपरतया पुनर्लेखनस्यासाङ्गत्यापत्तेः। मम तु पूर्ववाक्ये उपदेश-शब्दो भावसाधनपरः, उत्तरत्र करणसाधनपर इति नासाङ्गत्यम्। ननु स्यादेष इति भाष्यस्य करणसाधनपरत्वे तत्पक्षे दोषस्य वारितत्वादथवेतिपक्षानुधावनं निरर्थकम्। अतो भावघञन्तत्वपक्ष एवाथवेति पक्षान्तरानुधावनेन लभ्यत इत्याशङ्कां मनसि निधाय वस्तुत उपदेशपदाननुवृत्तिरेवैतद्भाष्यादन्ततो लभ्यत इत्याशयेन तदुत्तरभाष्यमनुवदति। अथवेत्यादिना। एतेनैकदेश्युक्तित्वस्य पूर्वभाष्यत एव लाभेन स्यादेष इत्यादिकैयटआहेत्यन्तो ग्रन्थः प्रकृतोपपाद-

कृतम् । तत्र परत्वविशिष्टस्य सन उत्पादने पञ्चम्या उपक्षयात्प्रवृत्त्यन्तराभावान्नास्ति तस्याः प्रकल्पकत्वमिति तदर्थं कैयट आह। एवञ्च प्रकृतसूत्रस्थस्य सूत्रार्थप्रतिपिपादयिषया प्रवृत्तस्य भाष्यवार्त्तिकस्यैकदेशयुक्तत‌द्भाष्यबलेन प्रौढिवादत्वकल्पनं नोचितम् । लक्ष्यासिद्धेश्च । अइउणित्यादीनामपि क्रमबोधकत्वेनार्थवत्त्वात्प्रातिपदिकत्वम् । चित्रङ्श्चोः कुरित्यादेरपि प्रातिपदिकत्वम् । लोपश्चेत्यत्रापि शकारस्य स्वरूपेणार्थवत्त्वात्प्रातिपदिकत्वम् । अनुबन्धानामेकान्तत्वे तु "लोपो यि" इत्यतो लोपग्रहणेऽनुवर्त्तमाने पुनर्लोपग्रहणात्सर्वादेशत्वं बोद्धयम् । एकाच उपदेश इत्यत्रत्यः कैयटोऽपि चिन्त्य एव । अन्योऽपि तज्जातीयश्चिन्त्य एव । "एकाच उपदेशे"

---

नानुपयोगीति काचिच्छङ्का निरस्ता । एवंचेति । भावसाधनपरस्यैकदेशयुक्तित्वस्य वस्तुतस्तदननुवृत्तेश्च सिद्धौ चेत्यर्थः । प्रकृतेति । प्रकरणस्य प्राबल्यादिति भावः । सूत्रार्थेति । अर्थप्रतिपादनपरेणैवार्थनिर्णयो न्याय्यः, न तु प्रसङ्गान्तरे परोक्तिखण्डनमात्रपरेणेति भावः । परोक्तिखण्डनपरताया उभयत्र तौल्येऽपि प्राकरणिकत्वार्थप्रतिपादनपरत्वे अत्र प्रामाण्यनिर्वाहके इति बोध्यम् । लक्ष्यासिद्धेश्चेति । लटस्सद्वेति विहितेष्विक्त्वानापत्तौ वक्ष्यमाणेत्यादिलक्ष्यासिद्धेरित्यर्थः । ननु भवन्मतेऽपि अइउणित्यादेः परिगणितेष्वसङ्ग्रहाल्लक्ष्यासिद्धिरुभयसाधारणीत्यत आह । लोपश्चेति । नन्वेकान्तत्वे शस्य बोधकघटकत्वेन तत्र न स्वरूपबोधकत्वं, रामादौ रेफादिवत् । तथा च तस्य कथं प्रातिपदिकत्वमित्याशङ्क्य तत्पक्षेऽस्यानावश्यकत्वमेवेत्याह । अनुबन्धानामित्यादि । नन्वेकाच उपदेश इति सूत्रकैयटानुगृहीतो भावघञन्तवाद इत्यत आह । एकाच्च इत्यादि । उपदेशेत्वत इत्यादाविति पाठः । आदेच इति

"आदेच उपदेशे" इत्यादौ तु भावसाधन एवेति सुधियो विभावय-न्त्वित्याहुः ॥

---

त्वपपाठः, तस्य कर्मसाधनत्वात् । आहुरिति ॥

यत्त्वन्ये तु लटस्सद्वेत्यत्रेत्संज्ञकशकारादिविशिष्टयोस्तच्छब्देन परामर्शात्तयोर्विधानान्नेत्त्वापेक्षा, क्तक्तवतू निष्ठेति परिभाषेति न दोषः । निपातनेनेत्संज्ञककाद्युपलक्षितस्यैवानुमानम् । भवतष्ठक्छसावित्यत्र प्रत्येकमुपदिश्यमानत्वमिति न दोषः । चोःकुरित्यादौ व्याकरणान्तरीयसंज्ञेति न दोषः । लोपश्चेत्यत्र प्रश्लेषसामर्थ्यादित्त्वं कल्प्यते । अ, इ, उ इत्यादावुणिति' समुदायस्योकारादिसाधुत्वविधायकत्वेनेत्संज्ञा । चित्रङित्यत्र ङिति पृथक्पदं तच्च ङिदित्यर्थकम् । क्यच्सन्नियोगेन ङित्त्वं विधीयत इति न तत्त्वापेक्षेति दोषाभावात् भावसाधन एवोचितः । अइउणित्यादौ विशिष्टस्यार्थबोधकत्वाभावान्न प्रातिपदिकत्वम् । लोपश्चेत्यत्र शस्य प्रातिपदिकत्वेऽपि न तद्बोधकत्वं, परिगणने धात्वादिबोधकानामेव ग्रहणमिति करणसाधने दोष इति मनोरमोक्तं प्रौढिवादत्वमुचितमित्याहुरिति । तन्न । लटस्सद्वा, निष्ठा, राजसूय, भवतष्ठक्छसावित्यादौ दोषाणां तद्व्याख्यानावसर एव स्थिरीकृतत्वात् । निपातनेनेत्संज्ञायाः कल्पने गौरवाच्च चोः कुरित्यादावित्संज्ञकोकार इति मते दोषध्रौव्यात् । प्रश्लेषसामर्थ्यकल्पने गौरवात् । अ इ उ इत्यादेस्साधुत्वविधायकतायाः पूर्वमेव निराकरणात् । चित्रङि लक्षणाश्रयणे वाक्यान्तरकल्पने गौरवाच्च । परिगणनस्थधात्वादिपदानां तत्तद्बोधकपरत्वस्य पूर्वमेव निराकरणात् । अ इ उ णित्यादेः क्रमबोधकत्वेन प्रातिपदिकत्वस्य ग्रन्थकृतैवोक्तत्वाच्च, प्रकृतसूत्रस्थभाष्यस्य प्रौढिवादत्वकल्पकदृढतरप्रमाणाभावाच्च । यदपि प्रथमस्थलचतुष्टयेऽन्येत्वित्यादिमतरीत्या दोषमुद्धृत्य लोपश्चेत्यत्र शस्य सर्वादेशत्वरूपविशेषसमर्पकत्वेनाज्ञातत्वेन तदुच्चारणमपूर्वमित्युपदिश्यमानत्वम् । चित्रङित्यस्यानुबन्धघटितं रूपमज्ञातमिति

ननु शास्त्रेऽनुनासिकोच्चारणाभावात्तत्त्वज्ञानं दुर्लभमत आह। प्रतिज्ञेति। प्रतिज्ञाविषयानुनासिक्यवन्त इत्यर्थः। पाणिनीया इत्यस्य पाणिनिप्रभृतिप्रोक्ता वर्णा इत्यर्थः। प्रतिज्ञा चायमेवमिति कथनं, वर्णानां तत्त्वज्ञापको व्यवहारश्च। ताभ्यां तज्ज्ञानं सुलभमिति भावः। प्रतिज्ञातारश्च प्रत्यासत्त्यैतच्छास्त्रकर्तार एवेति दिक्। निर्देशादिति। तेषां तत्र ग्रहणे हि नासिकादौ यणापत्तिरिति भावः। न चेत्त्व-

---

न तत्र दोष इति वदन्ति। तदप्यनेन प्रत्युक्तमित्युपाध्यायानुयायिनः॥

अनुनासिकोच्चारणाभावादिति। इदानीमिति शेषः। तथाचेदानीं तत्पाठस्य परिभ्रष्टत्वादित्यर्थः। एतेनास्मदादीनां तज्ज्ञानाभावादित्यर्थः। यथा-श्रुतं तु न सम्यक्, पाणिन्यादीनामनुनासिकस्यैवोच्चारणमितिनियमाभावादित्य-पास्तम्। तत्त्वज्ञानमित्यनेन पौनरुक्त्यापत्तेश्च। आनुनासिक्यवन्त इति। असुब्वत इति भाष्यप्रयोगान्न कर्मधारयादिति क्वाचित्कमिति भावः। अय-मेवमिति। अद्डादेशेऽनुनासिकोपधत्वं क्रियत इत्यादिनेत्यर्थः। व्यव-हार इति। स्वतन्त्रः कर्तेत्यादिः। यणाद्यापत्तिरिति। नासाशब्दात्स्वार्थे के यस्येतिलोपे केऽण इति ह्रस्वे च प्राप्तेऽपवादत्वात्केण इति ह्रस्वे पश्चादुत्सर्ग-प्रवृत्तावपवादशास्त्रवैयर्थ्यसम्भावनायास्सत्त्वेनोत्सर्गाप्रवृत्तौ प्रत्ययस्थादितीत्वे पश्चादप्यपवादशास्त्रवैयर्थ्यसम्भावनया यस्येतिचेत्यप्रवृत्तौ यणापत्तिरितिभावः। न च निषाद्कर्षुक इत्यादौ ह्रस्वस्य चारितार्थ्यमिति नापवादत्वमिति वाच्यम्। तत्राप्योर्गुणस्य प्राप्त्या चारितार्थ्याभावात्। न चापवादप्रवृत्त्यव्यव-हितोत्तरकालप्रवृत्तिकोत्सर्गशास्त्रमेवापवादशास्त्रवैयर्थ्यसम्भावनया न प्रवर्तत इति ह्रस्वोत्तरं लोपस्याप्रवृत्तावपीत्वोत्तरं लोपो दुर्वार एवेति वाच्यम्। उत्सर्ग-शास्त्रप्रवृत्तिसम्भावनायामपवादशास्त्रवैयर्थ्यसम्भावना यत्र तत्रोत्सर्गशास्त्रं न प्रवर्तत इत्यर्थस्यापवादशास्त्रवैयर्थ्यमूलकतया व्यवहितोत्तरकालिकप्रवृत्तिस-

म्भावनयापि यत्रापवादवैयर्थ्यसम्भावना तत्र व्यवहितोत्तरकालिकप्रवृत्तेरपि वारणात्। न च निषादकर्षुक इत्यादौ ह्रस्वप्रवृत्त्यव्यवहितोत्तरकालप्रवृत्तिकगुणाप्रवृत्त्याऽपवादचारितार्थ्यमिति व्यवहितोत्तरप्रवृत्तिकयस्येतिलोपस्याप्रवृत्तिकल्पने मानाभाव इति वाच्यम्। अण्प्रत्याहारग्रहणेनाकारविषयकतयोपप्लुतवाक्यस्य तावताप्यचारितार्थ्यात्। यद्वा याचि भमिति सूत्रे यकारसाहचर्यादच्त्वहल्त्वधर्मद्वयानवच्छिन्न एवाज्गृह्यत इति श्रीधरोक्तदिशा यस्येति लोपस्याप्राप्त्या यणाद्यापत्तिरिति बोध्यम्। एतेनाङ्गत्वाद्यस्येति लोप आपादनीय इत्याचार्याः, तन्मतपरिपालनपरप्रकाशकाराश्च परास्ताः। न च पूर्वोक्तसाहचर्येण वारणे पूर्वस्य पदत्वाच्छाकलप्रकृतिभावापत्तिरिति वाच्यम्। न समास इति तन्निषेधात्। यत्तु प्रकाशकृता न समास इति निषेधस्तु न, परमचक्रि अत्र, समिअचिचदित्यादौ प्रकृतिभावाय तत्समासघटकोत्तरपदाद्यच्येव निषेधप्रवृत्तेराश्रयणीयत्वादित्याक्षिप्य पदेऽन्त इति व्याख्यानेन प्रकृतिभावो वारितस्तन्न। तत्समासावयवाच्येव निषेध इत्यर्थेनैव पूर्वोक्तस्थले निषेधाप्रवृत्तावुत्तरपदइति विशेषणवैयर्थ्यात्। न च समि अचिचदित्यत्राचस्समासघटकत्वेन तत्र निषेधापत्तिरिति वाच्यम्। अटश्चञ्न्तोद्देश्यकत्वेन समासानुद्देश्यकत्वेन समासावयवत्वाभावात्। न च गर्भिणीस्थो गर्भो गर्भिणीग्रहणेन गृह्यत इति दृष्टान्तेन तन्मध्यपतितत्वं तत्सत्तोत्तरकालिकसत्ताकत्वमेव, न तूद्देश्यविधेयभावघटितामित्यकारस्य समासावयवत्वं दुर्वारमिति वाच्यम्। एवमपि न्वयोत्तरपदत्वस्यार्थवत्त्वघटितस्य प्रकृतस्थलेऽजित्यस्योत्तरपदत्वाभवार्थमवश्यं वक्तव्यतया निषेधस्योत्तरपदत्वनिमित्तकत्वकल्पनापेक्षया लाघवादर्थवदाद्यवयवाच्येव निषेध इत्यर्थस्यौचित्येन प्रकृते निषेधसिद्धेः। किंचोत्तरपदाद्यवयवत्वमपेक्ष्य लाघवादुत्तरपदावयवत्वमेवाचि निवेश्यत इति प्रकृते निषेधस्सिद्ध्यति। समि अचिचदित्यत्र तन्मध्यपतितन्यायेन समासावयवत्वस्य लाभेप्युत्तरपदावयवत्वस्यालाभेन निषेधाप्रवृ-

**विधानसामर्थ्याद्यणभावः सिद्धः । तस्यापि प्रत्याहारेष्वनुबन्धाग्रहणज्ञापनद्वारैव यणभावकल्पकत्वौचित्यात् । साक्षाच्छास्त्रबाधकल्पनापेक्षयाऽस्यार्थस्यौचित्यात् । निर्देशादित्यस्य तन्मूलभूतेत्त्वविधानसामर्थ्यादित्यर्थ इति तात्पर्यम् । आदिना तृषिमृषिकृषेरेकः पूर्वेत्यादिसङ्ग्रहः । ननु "प्रत्याहारेऽनुबन्धानां कथमज्ग्रहणेषु न"**

---

त्तिः । किं चतत्र दोषवारणार्थं पदेऽन्त इत्यर्थस्वीकारे उत्तरसूत्रेऽर्थाधिकारानुरोधात्तादृशार्थस्य वक्तव्यतापत्तौ तत्र पदान्तग्रहणव्यावर्त्यतया बह्वृच्छक इत्युदाहरणदानं ग्रन्थकृतोऽसम्बद्धं स्यात् । पदान्तग्रहणेऽपि निरुक्तार्थेन तत्र दोषध्रौव्यात् । किञ्च पूर्वसूत्रेऽपि चक्रि अकैदित्यादावकैदित्यस्यैदिति तिङन्तस्याकचि निष्पन्नतयाऽकज्विशिष्टस्य पदत्वाभावेन शाकलाप्रवृत्त्यापत्तिः । न च तस्यापदत्वेऽपदं न प्रयुञ्जीतेति प्रयोगो न स्यादिति वाच्यम् । अपदमित्यस्यापरिनिष्ठितमित्यर्थेनादोषात् । आढ्यशब्दाद्बहुचि बह्वाढ्यशब्दे शाकलप्रकृतिभावस्य दुर्वारत्वाच्चेति दिक् । णासृधातोर्ण्वुलि निष्पन्नो नासिकाशब्द इति न पूर्वोक्तशङ्काकलङ्कलेशोपीति भट्टाः । युक्तं चैतत्, घोणा नासा च नासिकेति कोशात्पूर्वोक्तरीत्यैव निष्पत्तिलाभात् । नासाशब्दात्स्वार्थिककप्रत्ययस्वीकारे तु नासाशब्दात्पृथङ्नासिकाशब्दपाठस्य कोशकारशैलीविरुद्धत्वात् । न हि क्वचिदपि पर्यायशब्देषु स्वार्थिकप्रत्ययान्तानां कोशेषु पाठो दृश्यत इति बोध्यम् । **इत्त्वविधानसामर्थ्यादिति** । प्रक्रियालाघवाद्यकार एव विधातव्ये सामर्थ्यादित्यर्थः । **शास्त्र इति** । यणशास्त्र इत्यर्थः । निर्विवादं प्रमाणमाह । **आदिना तृषीति** । तत्रापि निर्देशाद्यणभाव एव कल्प्यतामित्यत आह । **एकः पूर्वेति** । एवं च तत्तन्निर्देशैस्तत्तच्छास्त्रबाधकल्पनापेक्षया सर्वैर्निर्देशैर्लाघवात्प्रकृतार्थ एव ज्ञापनीय इत्याशयः । आदिरन्त्येनेतीति कौमुदीग्रन्थमवतारयति । **नन्विति** । भट्टास्तु वस्तुतः कोऽसौ प्रत्याहारो यत्रेतां

इति वार्तिके प्रत्याहारशब्दस्य वर्णसमाम्नाये प्रसिद्धेः प्रत्याहारेष्वितामित्यनुपपन्नमत आह । आदिरन्त्येनेतीति । वार्तिके तादर्थ्यात्ताच्छब्द्यमिति भावः ॥

ऊकालोऽच् । कुक्कुटरुते उकारे एकद्वित्रिमात्रत्वप्रसिद्धेरकारादयो नोक्ताः । ऊ इति एकद्वित्रिमात्राणां क्रमेण

---

न ग्रहणमित्यवतरणं बोध्यमित्याहुः । प्रत्याह्रियन्ते संक्षिप्यन्ते वर्णा यत्रेत्यवयवार्थज्ञानामुत्तमाधिकारिणां निरुक्तशङ्कादयावकाशाभावान्मूलोक्तमेवावतरणं युक्तमिति प्रतिभाति । अनुपपन्नमिति । अनुबन्धानां वर्णसमाम्नायेऽग्रहणमित्यस्य ज्ञापकशतेनापि वक्तुमशक्यत्वादिति भावः ॥

ननु वर्णोपदेशेऽकारस्य प्राथम्यादाकाल इति वक्तुमुचितमित्यत आह । कुक्कुटेति । सादृश्यस्य प्रसिद्धप्रतियोगिकस्य ग्रहणौचित्यादिति भावः । एकद्वित्रिमात्राणामिति । नच सरूपसूत्रे एकादिनवान्तसंख्यानां द्वन्द्वैकशेषौ नानभिधानादिति स्वेनैव वक्ष्यमाणत्वेनेदमयुक्तमिति वाच्यम् । वाग्दृषत्प्रिय इत्यादौ द्वयोरेकमितिरीत्याऽन्वयस्थले वाग्दृपदोः परस्परमसामानाधिकरण्येऽपि प्रियशब्देनोभयोस्सामानाधिकरण्यमादाय बहुपदबहुव्रीहेर्दर्शनेन प्रकृतेऽप्येकत्र द्वयमितिरीत्या मात्राशब्दार्थे प्रत्येकमन्वयविवक्षया एका च द्वे च तिस्रश्च मात्रा यस्येति बहुपदबहुव्रीह्याश्रयणेनादोषात् । यदि तु परस्परविरुद्धनानाधर्मावच्छिन्नाभेदसम्बन्धावच्छिन्ननानाप्रकारतानिरूपितैकविशेष्यताकबोधोऽव्युत्पन्न इति मन्यते, तदा वक्ष्यमाणानभिधानस्य सङ्कलितसंख्यातात्पर्यकप्रयोगविषयकतया प्रकृतेऽतथात्वेनादोष इति विभावय । न "नैकाद्विकरणे हेतू महापातकपञ्चके । तृणवन्मन्यते कोपकामौ यः पञ्च कारयन्निति" नैषधपद्ये एकाद्विकरण इत्यसाध्वेवेति त्यदादीनीति सूत्रे स्वेनैव वक्ष्यमाणतया

**प्रश्लेषनिर्देशो व्याख्यानात् । तेन स्वोच्चारणकालसदृशो लक्ष्यते ।**

---

तद्विरोधः । तत्र हि कोपस्यैककरणे हेतुत्वस्य कामस्य द्विकरणे हेतुत्वस्य च विवक्षितत्वेन सङ्कलितसङ्ख्यायामतात्पर्यादिति वाच्यम् । तत्र विवक्षितार्थलाभार्थं यथासंख्येनान्वये हलन्त्यमिति सूत्रशब्दरत्नोक्तदिशाऽसाधुत्वस्य दुर्वारतया सङ्कलितसङ्ख्याबोधनेन कोपकामयोः पातकत्रयकरणहेतुताया बोधे यथायोगं कोपस्य ब्रह्महत्याकरणहेतुतायाः कामस्य स्तेयगुर्वङ्गनागमनकरणहेतुतायाश्चान्ततः पर्यवसानमित्यवश्यमभ्युपगन्तव्यतया तत्र तदसाधुत्वकथनस्याविरुद्धत्वादिति दिक् । एतेनेदमयुक्तमित्याचार्याः परास्ताः। **क्रमेण प्रश्लेषनिर्देशो व्याख्यानादिति ।** प्रश्लेषेऽनेकसंज्ञाकरणमेव व्याख्यानम् । न तावदन्ते मात्रिको, विभाषा पृष्टप्रतिवचनेहेरिति प्लुतविधानात् । नापि मध्ये, सुपि चेति दीर्घविधानात् । द्विमात्रिकस्तु नान्ते, ओमभ्यादान इति प्लुतविधानात् परिशेषादयं क्रमस्सिद्धः । यत्तु प्रश्लेषस्य क्रमिकत्वन्तूकाराणां द्वन्द्वे एकमात्रिकस्य घिसंज्ञकत्वेन पूर्वनिपातस्यावश्यकत्वेन सर्वतः प्राङ्निर्देशात् । ततः परं त्रिमात्रिकस्य प्रयोगे प्लुतप्रगृह्या इति प्रकृतिभावापत्तौ निर्देशासङ्गतेः द्विमात्रिकस्य मध्ये निर्देशात्त्रिमात्रिकस्यैवमन्ते निर्देशात्सिद्धमिति प्रकाशकृतोक्तं तन्न । अस्यामवस्थायां मात्रिकस्यैव घिसंज्ञेत्यर्थस्यासिद्धेः। असखीति प्रतिषेधान्मात्रिक एव घिसंज्ञेत्युक्तौतु मात्रिक एव ह्रस्वसंज्ञेत्यत्र ज्ञापकाश्रयणस्य गले पतितत्वात् । त्रिमात्रिकस्य मध्ये निवेशेऽपि त्रिमात्रिकस्यैव प्लुतसंज्ञेत्यधुनाऽनिर्णयात्प्रकृतिभावानापत्तेः। मध्ये प्लुतस्य सत्त्वेऽपि प्लुतप्रगृह्या इत्यत्राङ्ग्रहणात्पूर्वेण सवर्णदीर्घस्य पूर्वं निर्विवादतया पश्चात्प्लुताभावेन द्वितीयदीर्घप्रवृत्त्या निर्देशासङ्गत्यभावाच्च । व्यत्यासे एकमात्रस्य ह्रस्वत्वं त्रिमात्रस्य प्लुतत्वमित्येव दुर्लभमित्यर्थके "नैवमेषां व्यवस्था न प्रकल्पत इति" भाष्येण विरोधाच्चेति दिक् । अत्र क्रमव्यत्यासे यावन्तो भेदास्तेषां सर्वेषां प्रत्येकं वारणार्थं प्रत्येकं ज्ञापकवर्णनं नातीवोपयुज्यत इति प्रकाशकृता प्रपञ्चितानि ज्ञापकानि नेहोपन्यस्तानि। **सदृश इति ।** सादृश्यस्य भेदाघटितत्वेनोकारस्यापि संज्ञासिद्धिः । दीर्घप्लुत-

**स कालो यस्येति बहुव्रीहिः । तत्फलितमाह । उश्च ऊश्च ऊ३श्चेति । ननु उकालो ह्रस्व इति वाक्ये ऽण्त्वात्सवर्णग्रहणे द्वित्रिमात्रयोरपि ह्रस्वसञ्ज्ञायां प्रदाय प्रत्कृयेत्यादौ "ह्रस्वस्य" इति तुक्स्यादिति**

---

योस्तु पूर्वसञ्ज्ञाप्रसङ्ग इति भाष्योक्तरीत्या शङ्कते । नन्विति । इति वाक्य इति । यथासंख्यसूत्रसहकारेण सूत्रे प्रश्लिष्टोपदोपस्थितस्य ह्रस्व इत्यनेनान्वयात्तद्बोधजनकवाक्य इत्यर्थः । एतेनोच्चारितस्यैव प्रत्याय्यकत्वात्कल्पितवाक्यघटकस्यानुच्चारितत्वात्तेन सवर्णग्रहणाप्रसक्त्याऽण्त्वात्सवर्णग्रहणमित्यसङ्गतमित्यपास्तम् । अण्त्वादिति । नच ग्राहकसूत्रेणाक्षरसमाम्नायिकस्य सवर्णग्रहणबोधनात्ककारादिचिह्नाभावेन सोऽयमाक्षरसमाम्नायिक इति प्रत्यभिज्ञाया अभावेन कथं सवर्णग्रहणप्रसक्तिरिति वाच्यम् । सूत्रमतेऽस्य क्वाचित्यादौ मालीभवतीत्यादिसिद्धये दीर्घादीनां ग्रहणस्य स्वसदृशवाच्यलक्षणया सिद्धराश्रयणीयतया ग्राहकशास्त्रस्य लक्ष्यतावच्छेदकज्ञानसम्पादकतयाऽत्रसवर्णग्रहणम्, भाष्यरीत्या जातिपक्षेण सवर्णग्रहणमित्याशयात् । न च दीर्घादिसमवधानात्तत्र व्याप्यजातिनिर्देश एवाभिमत इति न शङ्कावकाश इति वाच्यम् । दीर्घप्लुतसंज्ञासमर्पकतया दीर्घाद्युच्चारणस्य चारितार्थ्येन तत्समवधानस्य व्याप्यजातिनिर्देशे गमकत्वाभावेन ह्रस्वोच्चारणस्य लाघवार्थतयाऽसति गमकान्तरे व्यापकजातिनिर्देशस्यैवाभिप्रेतत्वात् । एतेन भाष्यरीत्या मिथस्समभिव्याहाराद्व्याप्यजातिनिर्देशसत्त्वेनैतच्छङ्काकरणमयुक्तम् । अणग्रहणस्य व्यक्तिपक्ष एव सत्त्वेन शङ्कैव नोदेतीति भट्टास्तत्र पक्षे इत्संज्ञकवर्णसमभिव्याहारादिचिह्नाभावेन कुक्कुटरुते प्रसिद्धिप्रदर्शनेनास्यानुकरणत्वेन पाक्षिकस्य प्रकृतिवदतिदेशस्येष्टानुरोधेनानुकरणेन चास्योकारस्याण्त्वाभावादिति प्रकाशकाराश्चापास्ताः । अस्याश्शङ्काया भाष्यानुरोधित्वाच्च । अतिदेशप्रवृत्तावप्यण्त्वालाभादिति दिक् । **संज्ञास्यामिति** । अत्र स्यतासी ऌलुटोरितिवद्यथासंख्यं बोध्यम् । न चानेन मात्राया ह्रस्वसंज्ञाया

चेन्न। ऊ अजित्येवाज्ग्रहणसामर्थ्याद् सदृशोऽजित्यर्थे सादृश्यस्य व्याख्यानात्कालकृतस्यैव ग्रहणमिति सिद्धे अधिकं कालग्रहणमुच्चारितसम्बन्धिकालसदृशकालस्यैव सञ्ज्ञा न तु तेन गृहीतसम्बन्धिकालसदृशकालस्यापीत्यर्थेनादोषात्। तदुक्तं भाष्ये "यावत्त-

---

उत्तरसंज्ञाया बाध इति वाच्यम्। अनाकडारीयसंज्ञानां समावेशस्य दृष्टत्वेन विरोधाभावात्। न चेको ह्रस्वेत्यादिज्ञापकाद्विरोधः कल्प्यत इति वाच्यम्। ज्ञापकेन वारणे गौरवात्। ऊ अजितीति। अदसोसेर्दादुदोम इत्यत्र वक्ष्यमाणरीत्या पूर्वमपरनिमित्तकत्वेनान्तरङ्गत्वाद्ध्रस्वे पश्चात्सवर्णदीर्घे शाकलप्रकृतिभावः। न च तदैकमात्रिकेण भाव्यमिति वाच्यम्। अस्यामवस्थायां द्विमात्रिकस्यापि ह्रस्वसंज्ञायां तस्यैवान्तर्यतो विधानात्। न च ह्रस्वविधानवैयर्थ्यमिति वाच्यम्। इदानीं तस्य प्रकृतिभावमात्रफलकत्वात्। उ अजित्येकमात्रिकपाठस्तु सिद्धान्तरीत्या नेयः। व्याख्यानादिति। अज्ग्रहणसामर्थ्यादुत्वेनाच्त्वेन च सादृश्याग्रहणादसम्भवाव्यभिचाराभ्यां स्थानप्रयत्नकृतसादृश्यस्यासम्भवात्पारिशेष्यात्कालकृतस्यैव सम्भव इत्येवं रूपाद्व्याख्यानादित्यर्थः। यद्यप्येकद्वित्रिमात्रावैशिष्ट्येनापि सादृश्यं सम्भवति तथापि प्रणवष्टेरिति ज्ञापकान्न तादृशस्य ग्रहणमिति बोध्यम्। अधिकमिति। अधिकमधिकार्थकमितिन्यायादुच्चरितकाल एव न तद्गृहीतकाल इत्यर्थलाभ इति भावः। नन्वेवं ज्ञापनोत्तरं कालग्रहणस्याचारितार्थ्यान्मणिमन्त्रादिन्यायेनार्थकल्पनमनुचितमित्यतो भाष्यप्रामाण्येन तदर्थं व्यवस्थापयति। तदुक्तमित्यादिना। यावदिति। तपरकरणं यावत्प्रयोजनकं तावत्प्रयोजनकं कालग्रहणमित्यर्थः। यत्त्वन्येतूशब्दस्य लक्षणयैकमात्रापरत्वेन वर्णपरत्वाभावान्नाणुदित्सूत्रप्रवृत्तिरित्याहुरित्याचार्यास्तन्न। लक्ष्यार्थबोधात्पूर्वभाविशक्यार्थमादाय सवर्णग्रहणप्रसक्तेः। कथमन्यथा येन विधिरित्यस्य लक्षणाग्राहकत्वेनातो भिस इत्यादौ तदन्तोपस्थित्या वर्णग्रहणपर-

**परकरणं तावदत्र कालग्रहणम्" इति। न चाजिति वर्णग्रहणे जातिग्रहणस्य दुर्वारत्वात्तितउच्छत्रमित्यत्र दीर्घात्पदान्ताद्वेति तुगा-**

---

त्वाभावात्सवर्णग्रहणाप्रसक्त्या तपरकरणं चरितार्थं स्यात्। कथं वैराजित्यादौ सवर्णग्रहणं स्यात्। न च तत्र लक्ष्यार्थे घटकतया वर्णस्योपस्थितिरस्तीति वाच्यम्। प्रकृतेऽपि ऊसदृश इति लक्ष्यार्थे घटकतया वर्णोपस्थितेस्सत्त्वेन साम्यात्। नच प्रकृते जहत्स्वार्थावृत्त्या एकमात्रिक एव लक्ष्यत इति न वर्णोपस्थितिरिति वाच्यम्। "जहत्स्वार्था तु तत्रैव यत्र रूढिर्विरोधिनी" त्यभियुक्तोक्त्या सम्भवत्यामजहत्स्वार्थायां जहत्स्वार्थाया अनौचित्यबोधनादिति दिक्। **वर्णग्रहणे जातीति।** तद्ग्रहणे तद्वृत्तिजात्याश्रयैकानेकवर्णग्रहणमिति तद्वर्णवृत्तिजातेस्तज्जात्यवच्छिन्नमात्रारब्धसमुदायेऽतिदेश इति वार्थं बोधयन्त्या परिभाषयेति भावः। **तुगापत्तिरिति।** ननु वर्णद्वयोच्चारणं स्वाभाविकार्धमात्राकालव्यवायस्य सत्त्वाद् उ इत्यस्य न द्विमात्रिकत्वमिति चेन्न। वर्णोच्चारणाधिकरणकालस्य द्विमात्रारूपत्वेनादोषात्। अत एवाज्ग्रहणस्य प्रत्यक्ष्येति व्यावर्त्यं सङ्गच्छते। न चात्र कालसादृश्यं छिद्रानन्तरितत्वेन गृह्यत इति न दोष इति वाच्यम्। ऋति ऋवेति विहितस्य तथा सति दीर्घत्वानापत्तौ प्रत्याख्यानपरभाष्यविरोधापत्तेः। न चैतदभावे नित्यविधिर्भवतीति वाच्यम्। प्राप्तविभाषाणां पक्षे अभावबोधकत्वात्। न चानन्तरस्येति न्यायेन दीर्घादित्यस्य निषेधेऽपि छे चेति तुक् स्यादेवेति वाच्यम्। भाष्यकारस्यात्र बाध्यसामान्यचिन्ताया एवाभिप्रेतत्वात्। यद्वा दीर्घादिति योगो न विभज्यत इति भाष्यतात्पर्यमिति न दोषः। यद्वा सूत्रद्वयापेक्षया परत्वेन विकल्पतुकि सकृद्गतिन्यायात्पुनरप्रवृत्तिः। यत्र परशास्त्रप्रवृत्त्युत्तरं पूर्वप्रवृत्तौ परवैयर्थ्यं तत्र न पुनः प्रसङ्गन्याय इति कैयटोक्तदिशा वात्र दोषोपन्यास इति दिक्। **तुगापत्तिरिति।** नचान्तरङ्गत्वाद्ध्रस्वत्वनिमित्तकनित्यतुक एव प्राप्तिरिति

पत्तिरिति वाच्यम् । ज्ञापकसिद्धत्वेन तस्यासार्वत्रिकत्वात् ।

---

वाच्यम् । अन्तरङ्गपरिभाषाया ज्ञापकसिद्धत्वेनासार्वत्रिकत्वात्प्रकृतेऽप्रवृत्तिरित्याशयात् । तस्येति । वर्णग्रहणे जातिग्रहणमित्यस्येत्यर्थः ॥

यत्तु वस्तुतस्त्वेतत्परिभाषा न स्वीक्रियते । इको झल्हलन्ताच्चेति सूत्रद्वयस्थाने इग्वतो झलिति न्यासेन धिप्सतीत्यादावदोषात् । न चैवं न्यासे यियक्षतीत्यादौ किस्त्वे सम्प्रसारणापत्तिरिति वाच्यम् । वचिस्वपीति सूत्रे वच्यादिभ्यो विहिते कितीत्यर्थस्य स्वीकारात्पूर्वोत्तरसाहचर्येणेग्वतो धातोरेव स्वीकारेणादोषात् । न च नेषीष्टेत्यादौ लिङ्सिचाविति किस्त्वापत्तिरिति वाच्यम्, हलो लिङ्सिचाविति न्यासेनादोषात् । न चोर्जीत्यादौ नुम्वारणाय नपुंसकस्य झलच इत्यस्याचः परो यो झल्तदन्तस्येत्यर्थस्य भाष्यसम्मततया तङ्क्षीत्यादौ नुम्न स्यादिति वाच्यम् । नपुंसकस्य न यम्यच इति न्यासेन यमि परतोऽचो नुम्न स्यादित्यर्थेनोर्जीतिसिद्धौ पूर्वोक्तार्थस्यानावश्यकत्वेन दोषाभावादिति तन्न । वचि स्वपीत्यत्र वच्यादिभ्यो विहिते कितीत्यर्थेऽपि यियक्षतीत्यादौ दोषसत्त्वात् । न च तत्र विधानकाले किस्त्वमपेक्षितमिति वाच्यम् । ऊचतुरित्यादौ सम्प्रसारणानापत्तेः । सूत्रान्तरसाहचर्यस्य नियामकताया अनौचित्यात्, तथा सति प्रियत्रयाणामित्यादौ त्रयादेशानापत्तेः । उत्तरसूत्रे धातोरित्यस्य स्वतोऽलभ्यत्वाच्च । विशिष्टस्यैव धातुत्वमिति प्राचीननये तावतापि दोषसत्त्वाच्च । नपुंसकस्य न यम्यच इति न्यासे गौरवात् । न च मम मते हलन्ताच्चेति योगाकरणप्रयुक्तं लाघवमिति वाच्यम् । परिभाषावादिनामपि तथान्यासस्य कर्तुं शक्यत्वेन तल्लाघवस्योभयसाधारणत्वात् । षद्भ्रजहलन्तस्याच इत्यस्याराङ्क्षीदित्यत्राडागमे प्रवृत्तिवारणस्यानन्त्यविकार इति परिभाषाधीनतया तस्याश्चान्त्यवर्णकार्यिणोर्वैशिष्ट्य निमित्ततया सूत्रानुपात्तवर्णव्यवधानेऽप्रवृत्तेरधेतेत्यादौ सकारद्वयनिवृत्त्यर्थमावश्यकतया प्रकृते

अन्तरङ्गत्वेन ह्रस्वत्वनिमित्तनित्यतुक एव प्राप्तेश्च । अज्ग्रहणं प्रतक्ष्येत्यादौ ह्रस्वस्येति तुग्व्यावृत्त्यर्थम् ॥

---

नकारस्य च तथात्वेन वृद्ध्यनापत्तेः । सूत्रन्त्ववात्सीदित्यादौ चरितार्थम् । प्रकृतपरिभाषाङ्गीकारे च नकारस्यापि हलपदबोध्यनिमित्ततायास्सत्त्वेन न दोषः। एतेनान्त्यवर्णतद्वर्णयोरज्व्यवधाने सा न प्रवर्त्तत इति प्रकृते न दोष इत्यपास्तम् । एधेतेत्याद्यसिद्धेः । न चान्त्यवर्णवृत्तिवर्णविभाजकधर्मावच्छिन्नतादृशधर्मवद्वर्णव्यवधाने न प्रवृत्तिरिति प्रकृते न दोष इति वाच्यम् । अदमुइच इत्यादौ रेफस्यापि तथात्वे मत्वाविषये तत्परिभाषाया अप्रवृत्त्यापत्तेः । किञ्च निमित्तस्याचि विशेषणत्वमडागमे वृद्धिवारणार्थं भाष्य उक्तं तत्पक्षे निमित्ततयोपात्तहल्व्यवधानस्य येन नाव्यवधानन्यायेन सह्यतया जातिग्रहणाभावे पूर्वोदाहृते हल्द्वयव्यवधानाद्वृद्धिर्न स्यात् । अनेकतानेकक्लिष्टकल्पनापेक्षया परिभाषाश्रयणस्यैव न्याय्यत्वाच्चेति दिक् । ननु ज्ञापकसिद्धाया अस्याः परिभाषायाः प्रवृत्तिरेवोचिता, असार्वत्रिकत्वादिति समाधानं तु नातीव सुन्दरमिति चेदन्तरङ्गपरिभाषाविषयेऽपि तथैवास्त्वित्याशयेनाह । अन्तरङ्गत्वेनेति । अत्र केचित् । कार्यिणो निमित्तत्वाभावेनास्य घटकनिमित्तकत्वाभावान्नाजानन्तर्ये इति निषेधाच्च, प्राप्तविभाषाणां पक्षे निषेधबाधकत्वेन निषेधाश्च बलीयांस इत्यस्य प्रवृत्तेश्चेदं समाधानमयुक्तमित्याहुस्तन्न । ज्ञापकपरभाष्यप्रामाण्येनोद्देश्यस्याप्यङ्गपदेन ग्रहणात् । नाजानन्तर्य इति निषेधस्य जातासिद्धविषयकत्वात् । बाध्यविशेषचिन्तापक्षे दीर्घादिति योगविभागे चानन्तरस्येतिन्यायेन दीर्घादित्यस्यैव निषेधाच्चेति दिक् । अज्ग्रहणमिति । यदि तु कालसादृश्यं च काले छिद्रानन्तरितत्वेनैव गृह्यते । वर्णद्वयोच्चारणेऽर्धमात्राकालव्यवधाननियमश्च पार्थक्येनोपस्थितवर्णद्वयोच्चारणविषय एवेति न ऋति ऋवेतिवार्तिकप्रत्याख्यानपरभाष्यविरोधः । एवंच प्रतक्ष्येत्यत्र न दोष इतिविभाव्यते, तदोत्तरार्थमज्ग्रहणम् ।

उच्चैरु । नात्र श्रुतिकृतमुच्चैस्त्वमुपांशुप्रयोगेऽव्याप्तेः । श्रुतिप्रकर्षस्याऽव्यवस्थितत्वाच्च । किन्तु स्थानकृतम् । उच्चैरित्यधिकरणशक्तिप्रधानम् । अधिकरणत्वञ्चोच्चारणं प्रति । तच्च ताल्वादीनां सभागत्वे एवेत्याशयेनाह । ताल्वादीति । इदं प्राचामनुरोधेन । वर्णसमाम्नायेऽकारस्य प्राथम्यात् कण्ठादीति वक्तुमुचितम् । एवमन्यत्रापि बोध्यम् । प्रयत्नप्रेरितो वायुर्यदोर्ध्वभागे प्रतिहतोऽचं व्यञ्जयति तदा स उदात्त इति भावः । अजिति । ऊकाल इत्यतस्तदनुवर्त्तते । उदात्तत्वादीनामज्धर्मताया एव लोकप्रसिद्धत्वेन हल्स्वरप्राप्तौ व्यञ्जनस्याविद्यमानत्वाच्चेदं स्वरूपकथनपरं बोद्धव्यम् । आद्ये इति । यच्छब्दः फिषोऽन्त इत्यन्तोदात्तः, जस्सुप्त्वादनुदात्तः,

---

अत एव भाष्ये प्रकृतसूत्रव्याख्यानावसरे फलमप्रदर्श्य, उत्तरसूत्रव्याख्यानावसरे पूर्वसूत्रेऽपि फलप्रदर्शनं स्वरसतस्सङ्गच्छते । अत्र फलप्रदर्शनं तु भाष्यानुरोधेनैव स्पष्टार्थमिहेत्याशयेनेति ध्येयम् ॥

अधिकरणशक्तिप्रधानमिति । अधिकरणशक्तेर्विशेष्यतयोपस्थापकमित्यर्थः । ऊर्ध्वाधिकरणशक्तिप्रधानमित्यर्थ इति प्रकाशकृदुक्तिस्तु प्रधानमित्यक्षरार्थाननुगुणत्वादुपेक्ष्या । स इति । ऊर्ध्वभागप्रतिहतवायुव्यञ्जितोऽजित्यर्थः । इति भाव इति । यत्तु तत्तत्स्थानेषु भागत्रयं प्रकल्प्योर्ध्वभागे वाय्वाघातेन व्यञ्जितोऽजुदात्तः । अधोभागे वाय्वाघातेन व्यञ्जितोऽजनुदात्तः । ऊर्ध्वभाग आहत्याधोभागे वाय्वाघातेन व्यञ्जितस्स्वरितः । भागत्रये वाय्वाघातेन व्यञ्जितोच् प्रचय इति तात्पर्यमित्युक्तं प्रकाशकृता । तत्र तृतीयभागकल्पनं चिन्त्यं, भागद्वये समकालमेव वाय्वाघातेन व्यञ्जितः प्रचय इति वक्तुं शक्यत्वात् । हल्स्वरेति । तथाचाचस्स्थाने हलामान्तर्यत एव वारणान्नाज्ग्रहणप्रयोजनम् । यद्यपि तेषां तत्त्वे यतो नाव इति ज्ञापकं न सम्भवति । तथापीयं वाचनिक्या-

एकादेश उदात्तेनेत्येकार उदात्तः। अर्वाङिति। अभिमुखवाच्य-व्युत्पन्नं फिषोऽन्त इत्यन्तोदात्तम्। आद्यस्य शेषनिघातेनाऽनुदात्त-त्वम्। अर्वन्तमञ्चतीत्यर्थे कृदुत्तरपदप्रकृतिस्वरेण वाऽन्तोदात्तत्वम्। एकस्मिन्नच्युदात्तानुदात्तयोर्धर्मिणोर्मेलनविरोधादाह। वर्णधर्माविति। बाहुलकादधिकरणे घञ्। अर्शआद्यजित्यन्ये। इयं त्रिसूत्री स्पष्टार्था। लोकवेदयोरुदात्तादिव्यवहारस्य प्रसिद्धत्वात्। ह्रस्वग्रहणमिति। ह्रस्वपदघटितग्रहणमित्यर्थः। अनन्त्रमिति। स्वशास्त्रसङ्केतितरूपेणा-बोधकमित्यर्थः। किन्त्वर्धमात्रारूपार्थबोधकमिति भावः। एवञ्च

---

वश्यकीति भावः। विरोधादिति। तथाच शब्दाधिकारमाश्रित्यात्र धर्मपरत्व-मिति भावः। विरुद्धयोरप्यनयोरवच्छेदकभेदात्समावेशो बोध्यः। वर्णधर्मा-वितीति। ननु धर्मपरयोर्द्वन्द्वे तदुत्तरभावप्रत्ययेन तद्भिन्नधर्मबोधः कथमिति चेन्न। द्वन्द्वे समुदायस्य प्राधान्यात्तत्र धर्मयोरपि प्रकारत्वाद्भावप्रत्ययेन तद्बोधे बाधकाभावात्। उदात्तत्वानुदात्तत्व इति पाठे तु न किंचिदप्यनुपपत्तिः। ननु बाहुलकमगतिकगतिरित्यत आह। अर्शआद्यजिति। अन्ये इति। अत्रा-रुचिबीजन्त्वस्यार्शआदित्वकल्पनं बाहुलकादविशिष्टम्। परं तु वृत्तिद्वयकल्पने क्लेश इति। मात्रचोऽत्र लोपो द्रष्टव्यः। अर्धह्रस्वमात्रमर्धह्रस्वमितिभाष्यतो विशि-ष्टस्यैवार्धमात्रिकार्थकत्वप्रतीतेराह। ह्रस्वपदेति। मूले बहुव्रीहिरिति भावः। अर्धह्रस्वशब्दोऽर्धमात्रारूपप्रमाणवाची, तदुत्तरमात्रचः प्रमेयमर्थः। तस्य प्रमाण इति लुकि अर्धमात्रिको भाग इति लभ्यते, स्पष्टं चेदं कैयटे, तदेतदाह। स्वशास्त्रसंकेतितरूपेणेति। मात्राकालिकस्याचोऽर्धमित्येवंरूपेणेत्यर्थः। किंत्वर्धमात्रारूपेति। मात्रच्प्रकृत्यर्थविवरणमिदं, विशिष्टार्थविवरणपरत्वं तु न सङ्गच्छते। अर्धमात्रायाः परिमाणरूपत्वेन तस्योदात्तत्वरूपधर्मसम्बन्धाभावात्। अस्य शास्त्रसङ्केतितरूपेणाबोधकत्वादेव तस्य ग्रहणं चरितार्थम्। स्वरित इत्यनु-

दीर्घादिष्वप्यर्धमात्रैवोदात्ता । इत आरभ्य नवसूत्र्या "अ अ" इत्यतः प्रागुत्कर्षेणास्य त्रिपाद्यामपि प्रवृत्तिः । सर्वञ्चेदं भाष्ये स्पष्टम् । अर्धमुदात्तमिति वृत्तिस्तु सत्या सत्यभामेतिवद्व्याख्येया । उत्तरार्धमित्यस्य चार्धमात्रातोऽवशिष्ट उत्तरो भाग इत्यर्थः । वेदे तु यथाप्रयोगं प्रातिशाख्यादस्माच्च व्यवस्था । तस्य चेति । अनुदात्तस्येत्यर्थः । उदात्तेति । उदात्तस्वरितयोः परत्वे सतीत्यर्थः । तयोः परत्वञ्चोपस्थितानुदात्तापेक्षयैव । अन्यत्र । उदात्तस्वरितयोः परत्वाभावे । प्रातिशाख्ये इति । लोके त्वनुदात्त एवेति भावः । ह्रस्वस्वरितमुदाहरति । क्वेति । किमोदित्यत् "क्वाति" इति क्वादेशे "तित्स्वरितम्" इति स्वरितः । दीर्घं तमुदाहरति । रथानामिति । येऽरा इति । "स्वरितो वा ऽनुदात्ते पदादौ" इत्येकारः स्वरितः । नोदात्तस्वरितोदयमिति निषेधस्तु "उदात्तादनुदात्तस्य स्वरित" इत्यस्यैवानन्तरस्येति

---

वर्त्य षष्ठ्या विपरिणामेनैव सिद्धे दीर्घादिस्वरितसङ्ग्रहार्थं तत् । शास्त्रसङ्केतितरूपेणैव बोधकदीर्घादिषु ह्रस्वस्यासम्भवात्तदसङ्गतिस्स्पष्टैव । ननु त्रैपादिकस्वरितानामसिद्धत्वात्तेष्वेतत्सूत्राप्रवृत्त्यापत्त्या तत्सङ्ग्रहार्थं तस्येति चरितार्थमित्यत आह । इत आरभ्येत्यादि । तथाचासिद्धत्वमेव नेति न तत्सङ्ग्रहार्थं तदिति भावः । अ अ इत्यतः प्रागिति । यद्यप्युदात्तादनुदात्तस्य स्वरित इत्युत्तरमुत्कर्षो भाष्ये दृश्यते, तथापि नोदात्तस्वरितोदयमित्यत्र निषेध्यलाभार्थं व्यवहितपरत्वं सापवादतत्सूत्रपरत्वं वा भाष्याभिप्रेतमित्याशयेनैवमुक्तम् । उत्कर्षे च ज्ञापकं देवब्रह्मणोरनुदात्त इति सूत्रम् । अन्यथा देवा ब्रह्माण इत्यत्रोदात्तादनुदात्तस्य स्वरित इति स्वरितस्यास्मिन्कर्तव्येऽसिद्धत्वे तदसङ्गतिस्स्पष्टैव । उत्कर्षे फलान्याकरतोऽवसेयानि । लक्ष्यविसंवादं परिहरति । वेदे त्विति ।

न्यायात् । स्वरितपरमुदाहरति । शतचक्रमिति । अहेरित्यर्थेऽह्यः । वृत्रस्येत्यर्थः । "छन्दसि वा वचनं प्राङ् णौ चङ्युपधायाः" इति वचनाद् गुणाभावः उदात्तस्वरितयोरिति स्वरितः । उदात्तयणो हल्पूर्वादिति तु न, छान्दसत्वात् । यच्छन्दः क्विप इत्यन्तोदात्तस्तदेकादेशश्च वा स्वरितः । स इति । उदात्तादिह्रस्वादिसञ्ज्ञक इत्यर्थः ॥

सुम्न । उच्यतेऽसौ वचनः । बाहुलकात् कर्मणि ल्युट् । सुम्न-

---

अहेरित्यर्थ इति । अह व्याप्तावित्यतो ण्यति छान्दसत्वाद्वृद्ध्यभावे सुपां सुलुगिति सुरिति त्वर्थासङ्गतेर्वेदभाष्यविरोधाच्चोपेक्ष्यम् । उदात्तस्वरितयोरिति । अहिशब्दस्योञ्छादित्वादन्तोदात्ते यण उदात्तस्थानिकत्वेनेति भावः । यत्तु अहिरिव भोगैरित्यत्राद्युदात्तत्वश्रवणेन ग्रामादित्वाद्वृषादित्वाद्वाऽऽद्युदात्तत्वे शेषनिघातेनानुदात्तस्येकारस्योदात्तादनुदात्तस्य स्वरित इति स्वरितत्वे तत्स्थानिकयणःपरत्वात्स्वरितसिद्धिरिति भाव इति प्रकाशकारः । तन्न । उदात्तादनुदात्तस्योदात्तस्वरितयोरित्यनयोस्त्रैपादिकत्वेन तद्विषये शेषनिघाताप्रवृत्त्यावादेरकारस्यानुदात्तत्वस्य दुर्लभतया स्वरितो वेत्यस्याप्रवृत्तौ यकारेकारस्य स्वरितत्वानापत्तेः । उदात्तयणो हल्पूर्वादित्याद्युत्तरग्रन्थासङ्गतेश्च । एतेन वा स्वरित इति प्रतीकमुपादायोदात्तस्वरितयोरिति स्वरितोत्तरं शेषानुदात्तेन सहैकादेशस्य स्वरितो वानुदात्ते पदादावित्यनेनेति भाव इति प्रकाशकृदुक्तिः परास्ता । अस्योञ्छादित्वे मानन्तु प्रकृतलक्ष्य ओकारस्य स्वरितश्रुतिरेवेति गृहाण ॥

कर्मणि ल्युडिति । इदं वृत्त्यनुसारेण । भाष्ये करणल्युडन्तवचनशब्देन बहुव्रीहिर्दर्शितः । यद्यपि बहुव्रीहिस्तत्पुरुषो लघुस्तथापि बाहुलकात्कर्मणि ल्युटोऽगतिकगतित्वेन बहुव्रीहिरेव ज्यायान् । अत एव भट्टैरिदं वृत्त्यनुसारेणेत्युक्त्वा भाष्ये त्वित्यादिना सिद्धान्ततया बहुव्रीहिरेव दर्शितः । एतेन कर्मल्युटि लाघवमिति वदन्तः परास्ताः । न च करणल्युटि ङीप्स्यादिति

सहिता नासिकेति विग्रहः । तया वचन इति, साधनं कृतेति समासस्तदाह । मुखसहितेत्यादि । मुखेति किम् । यमानुस्वाराणामेव प्रसज्येत । एवञ्चाङोऽनुनासिक इत्यत्रानुस्वारः स्यात् । नासिकेति किम् । शक्तेत्यादौ "अनुदात्तोपदेश" इत्यादिना कलोपो मा भूत् । अष्टादशेति । यद्यपीदं न व्यक्तिपक्षे व्यक्तीनामानन्त्यात् तथाप्यष्टादशधर्मवत्त्वमकारजातीयादेरित्यर्थः ।

---

वाच्यम् । सामान्ये नपुंसकान्तेन समासस्वीकारेणादोषात् । स्पष्टं चेदं कैयटे । कुक्कुटाण्डवद्वा समासः । इति विग्रह इति । इत्यर्थको मुखद्वितीया नासिकेति विग्रह इत्यर्थः । उत्तरपदलोपस्य शाकप्रियपार्थिव इत्येतद्व्याचूत्त्यर्थत्वस्योत्तरत्र वक्ष्यमाणतया तस्य नित्यतालाभेन मुखसहितनासिकयेति मूलस्यासङ्गत्यापत्त्या यथाश्रुतन्तु न सम्यक् । तदर्थकविग्रहप्रदर्शनन्तु भाष्योक्तद्वितीयाशब्दस्साहित्यवाचीति द्योतनार्थमिति ध्येयम् । साधनं कृतेति । यद्यप्यत्र कर्तृकरणे कृतेत्यनेनापि सिद्धं तथापि पादहारक इत्यत्रापादानपञ्चम्यन्तस्य समासार्थमावश्यकं वार्तिकमिति सूचनार्थैवमुक्तम् । अनुस्वारस्स्यादिति । विधेयस्स्यादित्यर्थः । यम इव यम इत्यन्वर्थसंज्ञाबलाद्यमानामागमत्वदर्शनेन स्थानषष्ठ्यननुगुणत्वान्न तेषां प्रसक्तिरिति भावः । इदं सूत्ररीत्या । भाष्ये तु प्रासादवासिन्यायेन मुखग्रहणं प्रत्याख्यातम् । शक्तेति । निष्ठान्ताट्टाबन्तमिदम् । शक्त इत्यपि क्वचित्पाठः । ननु मूलेऽइ उ इत्येवं ह्रस्वस्य च कस्याश्चिद्व्यक्तेः पाठात्तस्यैकत्वेनाष्टादशभेदकथनासङ्गतिः। लक्ष्यस्थानामनुकरणत्वे तु तेषामानन्त्यान्नाष्टादशत्वसङ्गतिः । व्यक्तिपक्षे ह्रस्वानुकरणत्वेन तद्वृत्तिधर्माणामपि नाष्टादशत्वमिति कथं मूलसङ्गतिरित्याशयेन शङ्कते । यद्यपीत्यादि । आनन्त्यादिति । इदमुपलक्षणम् । तद्वृत्तितद्व्यक्तित्वानामपि तथात्वादुदात्तत्वादीनां षट्त्वादित्यस्य । ननु जातिपक्षेपि जातेरेकत्वात्तदाश्रयव्यक्तीनामानन्त्यात्कथ-

**ह्रस्वत्वादीनां तत्तत्समानाधिकरणोदात्तत्वानुनासिकत्वादीनाञ्च भेदमाश्रित्येदम्बोद्ध्यम्। एवमग्रेऽपि। ऌवर्णस्येति। विवृतस्येत्यर्थः। तेन "ऌति ऌ वा" इति विधेयस्येषत्स्पृष्टस्य दीर्घत्वेऽपि न क्षतिः। दीर्घाभावादिति। अत एव तुल्यास्यसूत्रे भाष्ये "ऌति**

---

मष्टादशत्वसङ्गतिरित्यत आह। अष्टादशधर्मवत्त्वमिति। जातिपक्षेऽत्वादिजात्याश्रयाणामुपस्थितौ तेषामष्टादशधर्मवत्त्वमव्याहतमिति भावः। तद्ध्वनयन्नाह। अकारजातीयादेरित्यर्थ इति। एतेनेदं चिन्त्यम्। जातिपक्षेऽपि तज्जातिपुरस्कारेण यावद्व्यक्तीनामेकज्ञानविषयत्वेऽप्यानन्त्यस्य दुर्वारत्वेन तत्पक्षेऽपि धर्म एवाष्टादशत्वस्य वक्तव्यत्वात्। एवं तथापीत्यादिग्रन्थोऽपि व्यक्तिपक्षतात्पर्येणासङ्गत एव। तत्र पक्षे तद्व्यक्तित्वस्यैव शक्यतावच्छेदकतया तद्व्याप्यत्वस्य चाष्टादशसु धर्मेष्वभावेन स्वव्याप्यमिथोविरुद्धयावद्धर्मबोधनात्मकविभागासम्भवात्। न च नानातद्व्यक्तित्वान्यतमत्वव्याप्यत्वेन तदुपपत्तिः। व्यक्तीनामानन्त्येन यावत्तद्व्यक्तित्वग्रहासम्भवात्। तस्माद्व्यक्तिपक्ष इत्युपलक्षणं, जातिपक्षस्यापीति प्राकाशकृदुक्तमपास्तम्। विभागे मिथोविरोधानिवेशस्य प्रागुपदर्शितत्वाच्च। ननु धर्माणामप्यष्टविधत्वमेवेत्यत आह। **ह्रस्वत्वादीनामिति।** स्वसमानाधिकरणोदात्तत्वापेक्षयेत्यर्थः। **तत्समानाधिकरणोदात्तत्वेति।** दीर्घत्वसमानाधिकरणोदात्तत्वापेक्षयेत्यर्थः। अत एवाष्टादशधा भिन्नामवर्णस्य प्रतिपत्तिं वक्ष्यामीति पस्पशास्थं भाष्यं सङ्गच्छत इति भट्टाः। अन्ये त्वनुनासिकत्वसमानाधिकरणोदात्तत्वसामानाधिकरणह्रस्वत्वमित्येवंरीत्याऽष्टादशधर्मास्सम्पादनीया इत्याहुः। यद्यपीदं न शेखराक्षरानुगुणं, तथापि स नवविधोपीति मूलानुरोधेन शेखरग्रन्थ एवमेव यथाकथंचिद्योजनीयः। वस्तुतस्तु भट्टोक्तमेव न्याय्यं, स नवविधोपीति मूलन्तु ह्रस्वत्वादीनां तत्समानाधिकरणोदात्तत्वादीनां च भेदमनाश्रित्य प्रवृत्तम्। अन्योक्तार्थस्य शेखरतः कथमप्यलाभात्। अत एव

सवर्णे" इत्यनेन पक्षे द्विलकारकाभावे "अकः सवर्णे" इति दीर्घत्वे होतॄकार इति ॠकारघटितप्रयोगः सङ्गच्छते । ह्रस्वाभावादिति । इदमेओङित्यादौ भाष्ये स्पष्टम् । गानरोदनादौ चतुर्मात्रार्धमात्रादीनामुपलम्भेऽपि शास्त्रीयकार्ये उपयोगाभावाल्लोके प्रयोगेष्वप्रयोगाच्च नोक्ताः । अत एवानुदात्ततरस्यानुक्तिः । एकश्रुतेः स्वरान्तरत्वे इदमुपलक्षणं, तस्या लोकेऽपि सत्त्वात् ॥

तुल्यास्य । तुल्यावास्यप्रयत्नौ यस्येत्यर्थः । आस्ये भवमास्यं,

---

नवविधोऽपीत्येतद्वैलक्षण्यार्थमिदमित्युक्तमिति प्रतिभाति । ॠकारघटित इति । स एवेत्यर्थः । अन्यथा लकारवृत्त्यान्तरतम्यात्पर्यायेण ॣकारघटितोऽपि प्रयोगस्स्यादिति भावः । ॡति ॡवेति वार्तिकप्रत्याख्यानपरं भाष्यमप्यत्र मानम् । अन्यथा लकारवत्त्वविवृतत्वरूपधर्मद्वयेनान्तरतम्याद्विवृतदीर्घ एव स्यादिति तदसङ्गतिस्स्पष्टैव । मातृकायां ॡकारदीर्घ ईषत्स्पृष्ट एवेति बोध्यम् । लोके प्रयोगेष्विति । प्रयुज्यमानेषु वाक्येष्वित्यर्थः । स्वराणामविभागेनावस्थानमेकश्रुतिरिति स्वरप्रकरणे वक्ष्यमाणरीत्या त्रैस्वर्येऽन्तर्भावं मत्वाह । स्वरान्तरत्व इति । त्रैस्वर्याभावरूपत्वे दोषादाहेति प्रकाशकृदुक्तावतरणन्तु न सम्यक् । तथासति त्रैस्वर्याभावस्याप्युपलक्षणीयत्वेन ग्रन्थासङ्गतेः । उदात्तादिभिस्स्वयमेव राजन्त इत्यन्वर्थसंज्ञया स्वरव्यवहारानुपपत्तेश्च । लोकेपीति । प्लुतावैच इदुतावित्यादिविषये ॥

तुल्याविति । न च नपुंसकमनपुंसकेनेत्येकशेषे तुल्याविति पुंस्त्वमसङ्गतमिति वाच्यम् । अर्थतन्त्रस्थले नानाशब्दप्रयोगस्याप्रसक्तत्वेनैकशेषाभावात् । अत्रैकशेषाभावाभिप्रायेणैव घटा इत्यादौ न लक्षणा, घटत्वेन रूपेण नानाघटोपस्थितिसम्भवादित्युक्तं न्यायसिद्धान्तमुक्तावल्याम् । "बहुत्वा-

**व्याख्यानात् । तच्च वर्णोपयोगित्वात्स्थानमेव । प्रयत्नस्य पृथगुपादानात् । प्रकृष्टो यत्न आभ्यन्तरः । तस्य वर्णोत्पत्त्यव्यवहितप्राग्भावित्वरूपप्रकर्षवत्त्वात् । जनकत्वं षष्ठ्यर्थः । तत्तत्कार्यगतभेदं स्थानेष्वारोप्य भेदघटिततुल्यत्वस्य निर्वाहः ।**

---

न्वययोग्यानेकोपस्थितेश्शक्तित एव सम्भवादिति भाव" इति व्याख्यातं दिनकरेणापि । सरूपैकशेषस्तु विभिन्नार्थकस्थले चरितार्थ इति तद्भावः । **व्याख्यानादिति ।** आस्यग्रहणसामर्थ्यात् । न च प्रयत्नविशेषणार्थमास्यग्रहणमिति वाच्यम् । तत्फलस्य प्रशब्दबलेनैव साधितत्वात् । ननु तद्धितान्तस्य ग्रहणेपि वायुसंयोगादीनामपि ग्रहणं ह्रस्वदीर्घयोस्सावर्ण्यानापत्तिरत आह । **स्थानमेवेति ।** ननु वर्णोपयोगित्वहेतुना नैतत् सिध्यति । तेषामपि तत्त्वादित्यत आह । **प्रयत्नस्येति ।** अयं भावः । अवच्छेदकतासम्बन्धेन वर्णं प्रति तादात्म्येन कण्ठादीनां कारणत्वं वायुसंयोगादीनां प्रयत्नानां चावच्छेदकतासम्बन्धेन कारणत्वम् । एवञ्च सति प्रयत्नग्रहणात्तादात्म्यसंबन्धेन कारणानामास्यशब्देन ग्रहणं न त्ववच्छेदकतासम्बन्धेन कारणानामिति ज्ञायते । एवं च वायुसंयोगादेर्व्यावृत्तिरिति स्थानमेवेति सङ्गतमेवेति । तुल्यास्यत्वादिभ्य इत्यादिनिर्देशा अप्यत्रार्थेऽनुकूलाः । एतेन वायुसंयोग एवेति विपरीतं किं न स्यादित्यपास्तम् । **अव्यवहितेति ।** आत्मवृत्तियत्नव्यावृत्त्यर्थमिदम् । ननु पर्यायेषु लाघवानादराद्योगाद्रूढेर्बलीयस्त्वात्प्रशब्देन नोक्तार्थलाभ इत्यत आह । **जनकत्वमिति ।** तथाच प्रयत्नमात्रे जनकत्वस्य बाधितत्वाद्रूढिरत्र नाश्रयितुं शक्यत इति भावः । नन्वास्यशब्देन वायुसंयोगादय एव ग्राह्या न तु स्थानानि, तेषां भेदाभावेन सादृश्यानुपपत्तेरित्यत आह । **तत्तदिति ।** प्रमाणबलात्स्थानग्रहणे सिद्धे सादृश्यं यथा कथञ्चिदुपपादयितुं शक्यमिति भावः । तदाह । **आरोप्येति ।** तत्तत्स्थानानामैक्येपि कार्यभेदाद्भेद इत्यर्थः ।

वस्तुतः सादृश्यं न भेदघटितमिति भाष्यसम्मतमिति न कश्चिद्दोषः । स्पष्टश्चेदं भाष्ये । तदाह । ताल्वादीति । शिक्षायाङ्कण्ठादीनाङ्कण्ठत्वादिनैव स्थानतोक्त्या तद्रूपेणैवाऽऽस्यशब्देन ग्रहणमिति तद्भागभेदमादाय नोदात्तादिषु सावर्ण्यभङ्ग इति बोध्यम् । यस्यै-

---

औपाधिकभेदोऽपि सादृश्यघटक इति भावः । यत्तु वस्तुतस्त्वारोपस्य नोपयोगः। भावानां प्रतिक्षणपरिणामित्वेन स्थानानां भेदसम्भवादिति तन्न । बौद्धप्रवेशप्रसङ्गेन पाणिनेर्बौद्धत्वापत्त्या तच्छास्त्रस्यास्तिकानामनुपादेयत्वापत्तेः । नैयायिकादीनां मतेऽवयवस्योपचयापचयै श्शरीरस्योत्पादविनाशयोरङ्गीकारेऽपि प्रतिक्षणं तदङ्गीकारे मानाभावः । कारणसामग्र्यपेक्षणात् । यदा किञ्चित्कालं सामग्री नास्ति तदानीमुत्पादविनाशयोरभावात्तत्कालोच्चारितानां सावर्ण्यार्थमारोपस्यावश्यकत्वात् । अत एव नृसिंहत्वस्यैकव्यक्तिवृत्तितया जातित्वं न स्यादित्याशङ्क्य कल्पान्तरीयव्यक्तिमादाय परिहारस्तेषां सङ्गच्छते । अन्यथेदानीमेव व्यक्तिभेदसत्त्वात्कल्पान्तरानुधावनं व्यर्थमेव स्यात् । किञ्च जन्यद्रव्यस्य गुणादिराहित्यप्रसङ्गः । सर्वेषामप्याद्यक्षणावच्छिन्नत्वात् । द्रव्याणां क्षणिकत्वे यावद्द्रव्यभाविनी जातिरिति कल्पे युवत्वादीनां जातित्वाभावकथनं कथं सङ्गच्छेतेति दिक् । स्वसिद्धान्तरीत्याह । वस्तुत इति । वैयाकरणानां मीमांसकानुयायितया तन्मते सादृश्यस्यातिरिक्तपदार्थत्वात् । तदनङ्गीकारेपि नञिवयुक्तन्यायेऽन्यसदृशेत्युक्त्या तद्गतभूयोधर्मवत्त्वमात्रं सादृश्यं ग्राह्यम् । अत एव सादृश्यमूलकेष्वनन्वयालङ्कारगणनमालङ्कारिकाणां सङ्गच्छत इति दिक् । ननु तादात्म्यसम्बन्धेन जनकत्वं तत्तत्स्थानभागस्यापीति तेषामप्यास्यशब्देन ग्रहणे उदात्तानुदात्तयोः परस्परं सावर्ण्यानुपपत्तिरत आह । शिक्षायामित्यादि । तथाच तत्प्रामाण्यात्कण्ठत्वादिकमेव स्थानतावच्छेदकं सावर्ण्यप्रयोजकं

तद्द्वयं येन यदीयेनैतद्द्वयेन तुल्यमित्यर्थः। "यजुष्येकेषाम्" इति निर्देशाद्यावदास्यभवतुल्यत्वं ग्राह्यम्। अत एवैचोः सावर्ण्यमाशङ्क्य "नैतौ तुल्यस्थानौ" इति भाष्ये समाहितम्। अत एव वलयोर्न सावर्ण्यम्। तेन तद्वानासामित्यादौ "तोर्लि" इति न। अत एव प्रयत्नशब्देन यत्नमात्रग्रहणमिति पक्षे यत्किञ्चित्प्रयत्न-

---

स्वीकार्यमिति भावः। नन्वयं प्रयासो वृथैव। प्रयत्नशब्देन यत्नमात्रग्रहणमिति पक्षे यत्किंचित्प्रयत्नभेदेऽपि सावर्ण्यमितिवद्यत्किञ्चित्स्थानभेदेऽपि सावर्ण्यमिति वक्तुं शक्यत्वात्। नचात्र मानाभावः, स्वरितस्य तुल्यशब्दाकारस्यानुदात्तेनास्यशब्दाकारेण दीर्घदर्शनस्यैव मानत्वादित्यत आह। यजुष्येकेषामित्यादि। तत्प्रामाण्याद्यावदास्यभवतुल्यत्वस्य ग्राह्यतयोदात्तादीनां भागाग्रहणादेव सावर्ण्यमुपपादनीयमिति भावः। निर्देशादिति। विवृतत्वव्याप्यानां सावर्ण्यानुपयुक्तत्वमिति सूत्ररीत्येदम्। यावदास्येति। तत्त्वञ्च स्वस्थानान्यूनानतिरिक्तस्थानकत्वम्। विवृतत्वव्याप्यानामपि सावर्ण्योपयोगित्वमिति भाष्यरीत्यापि यावदास्यभवतौल्यग्रहणे प्रमाणं दर्शयति। अत एवैचोरिति। एकारौकाराविन्यर्थः। एकारैकारयोर्मिथ इतिभट्टोक्तं प्रमादपतितम्। एवमस्तु यावदास्यतौल्यग्रहणे प्रमाणमुपन्यस्य हल्ष्वपि फलमुखेन तद्दर्शयति। अत एवेति। यत्तु प्रयत्नभेदेन सावर्ण्याभावाद्यजुष्येकेषामिति निर्देशो न ज्ञापक इत्यरुचेराह तद्वानितीति, तन्न। भाष्यमतेऽण्ग्रहणाभावेन लकारेण वकाराग्रहणान्निर्देशोपपत्तेः। सूत्रमते पूर्वनिर्देशस्यापि ज्ञापकत्वसम्भवेनारुचेरयोगात्। वलयोरिति। अत एव यं लोकमित्यत्र परसवर्णः पर्यायेण वकारो न, दिदेविषतीत्यत्र रलो व्युपधादिति कित्त्वं न। एवञ्च वलप्रत्याहारात्पृथग्रलप्रत्याहारोऽप्यत्र मानं बोध्यम्। ननु भाष्यमतेऽण्ग्रहणाभावाज्जातिपक्षेणैव सवर्णग्रहणस्य वाच्यतया वकारे लत्वजातेरभावादेव निर्देशोपपत्तिरित्यतो मानान्तरमाह। अत एवेति।

भेदे यत्किञ्चित्प्रयत्नैक्यमादाय सवर्णसञ्ज्ञेत्यर्थौ "झरो झरि सवर्णे" इति सवर्णग्रहणेन ज्ञापकेन साधितो भाष्ये । तेन स्थानांशे यावत्स्थानसाम्ये इत्येव स्वारसिकोऽर्थ इति प्रतीयते । न च यावदास्यभवतुल्यत्वविवक्षणे प्रयत्नग्रहणं व्यर्थम् । प्रयत्नस्याप्यास्यभवत्वादिति वाच्यम् । ह्रस्वदीर्घयोः सावर्ण्यानापत्तेः । तयोर्जनकानामास्यभवानां वायुसंयोगानामतुल्यत्वात् । तस्मादास्यभवानां कण्ठादीनामेव ग्रहणमिति बोधनाय तत्सार्थक्यात् । आस्येति किम् । तप्ता । झरो झरीति लोपो मा भूत् । प्रयत्नेति किम् । वाक्श्चोतति ।

---

भाष्य इति । यदिहि यत्र सर्वं समानं, तत्र स्यात्सवर्णसंज्ञावचनमनर्थकं स्यादिति भाष्यइत्यर्थः । भाष्ये सवर्णसंज्ञावचनमित्यस्य झरो झरीत्यत्र सवर्णपदोच्चारणमित्यर्थः । भेदशब्दस्य प्रयत्नभेद इत्यर्थः । पूर्वोत्तरभाष्याभ्यामयमेवार्थ इति स्पष्टं प्रतीयते तद्विदाम् । यत्तु भाष्य इत्यस्य प्रदीप इत्यर्थं व्याख्याय भाष्ये तु भेदाधिष्टाना हि सवर्णसंज्ञेत्यादिना तुल्यास्यसूत्रस्यैव ज्ञापकत्वमुक्तमिति प्रकाशकृतोक्तम् । तन्न । सूत्रस्याणुदित्सवर्ण इकोऽसवर्ण इत्याद्यर्थमावश्यकत्वात्पूर्वोत्तरभाष्यस्वारस्यभङ्गापत्तेश्च । स्पष्टं चेदं तत्रैवोद्योते । प्रतीयत इति । यत्किञ्चित्त्वलाभस्य प्रयत्नविशेषाधीनत्वोक्त्या यावत्त्वलाभस्स्वारसिक इति भावः । ह्रस्वदीर्घयोरिति । अत्राचार्यैरस्य ग्रन्थस्य मात्राकालिकत्वादिरूपह्रस्वत्वादिकन्त्वित्युत्तरग्रन्थेन विरोधश्शङ्कितः । प्रकाशकारोऽपि तानेवानुससार । वायुसंयोगानामत्रास्यभवत्वकथनाद्वायुजनकयत्नस्य तत्र बाह्यत्वकथनादियं शङ्का तेषां कथमुत्पन्नेति त एव प्रष्टव्याः । आस्येति किमिति । ऋऌवर्णयोस्सावर्ण्यवचनाद्भिन्नस्थानानां न सवर्णसंज्ञेति वक्तुं शक्यमिति प्रश्नः । तप्तेति । ज्ञापकेन वचनप्रत्याख्यानमयुक्तम् । किंच ज्ञापकमज्विषयकमेव स्यादित्युत्तरम् । प्रयत्नेति किमिति । आस्य-

**प्रेति किम्। शच्चयोः श्वासाघोषविवाराख्यबाह्यप्रयत्नसाम्येन तत्रैव दोषात्॥**

**कस्य किं स्थानमित्याशङ्कायामाह। अकुहेति। यद्यपि सर्ववर्णोच्चारणे कण्ठव्यापार आवश्यकस्तथापि चकाराद्युच्चारणे**

---

शब्देन तेषामपि ग्रहणसंभव इति प्रश्नः। वाकुश्चोनेनीति। वायुसंयोगानां व्यावृत्तये तादात्म्येन जनकानामेव तत्र ग्रहणस्य वक्तव्यतया प्रयत्नस्यापि वायुसंयोगवदवच्छेदकतासम्बन्धेनैव जनकत्वान्न तेन तद्ग्रहणं सम्भवतीत्युत्तरम्। **प्रेति किमिति**। इति न वाच्यमिति शेषः। दोषादिति पञ्चम्यन्तानुरोधात्। प्रथमान्तपाठे तु यथाश्रुतमेव। कश्चिन्त्वास्यशब्देनास्यभवत्वव्याप्यजातिविशेषवद्यावत्त्वौल्यं विवक्षितमिति साहचर्याद्यत्नशब्देनापि यत्नत्वव्याप्यजातिविशेषवद्यावत्तौल्यविवक्षणेनादोषान् स्पष्टार्थं प्रोपादानमित्याहुः। अत्रेदं वक्तव्यम्। आस्यभवत्वव्याप्यजातिः स्थानत्वमिति तद्द्यावत्तौल्यमित्युक्तौ यावत्स्थानमित्यर्थो लभ्यते, तद्वद्यत्नत्वव्याप्यजातिः का विवक्षिता। यद्याभ्यन्तरत्वं बाह्यत्वं तदा यावद्यत्नसाम्यमायातीति झरो झरीत्यत्र सवर्णग्रहणवैयर्थ्यम्। उत्तम्भनमित्यादौ थलोपानापत्तिश्च। यदि यत्नत्वव्याप्ययत्किंचिज्जातिविशेषवद्यावत्तौल्यं विवक्षितं तदा शढयोष्पठयोः सथयोश्च परस्परं सवर्णसंज्ञापत्तौ मधुलिट्स्थानमित्यादौ बाह्यसाम्येन लोपापत्तिरित्यादिविकल्पभेदेषु दोषास्स्वयमूहनीयाः। **दोषादिति**। झयो झयि सवर्णे झरो झरि सवर्गे, इति न्यासो न शक्यः। निस्स्वेत्यत्र लोपानापत्तेः। आद्ये सकारस्य झय्त्वाभावात्। अन्त्ये वर्गीयत्वाभावात्। वर्गसंज्ञायाः स्पर्शेष्वेव स्पर्शानामानुपूर्व्येण पञ्च पञ्च वर्गा इतिप्रातिशाख्ये विधानात्। **कण्ठव्यापार आवश्यक इति**। तथा च कण्ठस्थानकत्वमायातीति भावः। **ताल्वादि-**

ताल्वादिव्यापारोऽपि, तथा अकारादीनामुच्चारणे तु नेति भावः। कच-योस्तु न सावर्ण्यम्। यावत्स्थानसाम्याभावात्। भिन्नस्थानकथन-वैयर्थ्यापत्तेश्च। अत्र कण्ठपदं कण्ठस्थानतत्समीपजिह्वामूलस्थानो-भयपरम्। तेन कण्ठ्यावहौ जिह्वामूले तु कुः प्रोक्तः इति शिक्षया

---

व्यापारोऽपीति । यथेकारादीनां सवर्णसंज्ञोपयोगि स्थानान्तरं न तथा अकारादीनामिति तेषां संज्ञोपयोगि स्थानं कण्ठ एवेति भावः। यत्तु वस्तुत-स्त्विदमयुक्तम्। मूर्धन्यभिहतो वायुः प्रत्यावृत्तस्सन् यं देशमभिहत्य वर्णमभि-व्यञ्जयति स एव तत्स्थानं, न तु तत्तद्वर्णाभिव्यञ्जकव्यापारवान्। वर्णजनक-वायुसंयोगाधारे वर्णाधारत्वारोपेण स्थानत्वव्यवहारोपपादकवक्ष्यमाणग्रन्थ-विरोधात्। उरोमूर्धादिव्यापाराणां यावद्वर्णाभिव्यक्तावावश्यकत्वेन तत्तत्स्थान-कत्वस्याप्यापत्तेश्च। तथा च शङ्कासमाधानयोर्निर्दलत्वादिति प्रकाशकृतोक्तम्, तन्न। उरोमूर्धादीनां स्थानत्वस्येष्टत्वात्। न च तदादाय सावर्ण्यभङ्गः। तेषामास्यबहिर्भावात्। अत एव कङयोस्सावर्ण्यं नासिकाया आस्यबाह्यत्वेन साध्यते। नाभिप्रदेशप्रेरितवायोर्मूर्धन्यभिघातस्य त्वयाप्यङ्गीकृतत्वेन वर्ण-जनकवायुसंयोगाधारत्वरूपस्थानत्वस्य तवापि गले पतितत्वादिति दिक्॥ ननु सर्वेषां कण्ठस्थानकत्वे कचयोस्सावर्ण्याभावेपि सूत्ररीत्या इकारैकारयो-स्सावर्ण्यं दुर्वारमित्यतः न्याय्यसमाधिमाह। भिन्नस्थानेति। तथाच शिक्षायामुक्तमेव स्थानादिकं सावर्ण्योपयोगि, न तु वस्तुतस्सदिति भावः। अत एवाकारस्य विवृततरत्वं न सावर्ण्योपयुक्तमिति वक्ष्यति। यजुष्येकेषामिति निर्देशोप्यत्र मानम्। आस्यग्रहणमत्र मानमिति तु न सम्यक्। कचयोस्सा-वर्ण्यवारणार्थं तत्सार्थक्यात्। ननु कवर्गस्य शिक्षायां जिह्वामूलकत्वकथना-दकुहेत्यसङ्गतमत आह। अत्र कण्ठेति। एवं च वृत्त्यादावपि कण्ठपदस्य लक्षणा आश्रयणीयेति भावः। उभयपरमिति। यत्तु अन्यतरपरमिति वक्तुं

न विरोधः। जिह्वामूलीयपदस्य च वर्णविशेषे रूढिरिति न व्यवहारातिप्रसङ्गः। अत एवायोगवाहेषु जिह्वामूलीयगणनं भाष्ये। तत्तद्वर्णोत्पत्तेः प्राक् तत्तत्स्थानादौ जिह्वास्पर्शाननुभवेन तत्तद्वर्णानां तत्तत्स्थानत्वनिर्णयेऽप्यकुहेत्यादिकथनं साधारणधर्मबोधनायानुवादकम्। न त्वेतदेव कण्ठादिस्थानविधायकमिति भ्रमितव्यम्। विसर्जनीयपदेनात्र साहचर्यादकाराश्रयस्य ग्रहणम्। अत एव "अयोगवाहा विज्ञेया आश्रयस्थानभागिनः" इति शिक्षया न विरोधः। दन्ता इति। दन्तसंयुक्तदेशा इत्यर्थः। अतो भग्नदन्तस्याप्युच्चारणं भवत्येव। उश्च पश्च ध्मायेते अनेन तत्र भव इति योगेनोपध्मानीयस्यौष्ठ्यत्वमित्याह। उपूपेति। रूढत्वाच्च न व्यव-

---

युक्तमिति तन्न। तथोक्तावपि पर्यायेण तत्तत्स्थानकत्ववारणाय यथायोगमिति त्वयापि वक्तव्यत्वेन प्रकृतेऽपि तथा वक्तुं शक्यत्वात्। पदस्य चेति। चस्त्वर्थे। रूढिरिति। योगरूढिरित्यर्थः। ननु तत्तत्स्थानविधानात्पूर्वं सवर्णाप्रसिद्ध्या ग्राहकशास्त्रबोधाभावेनात्र वर्गग्रहणं न स्यादित्यत आह - वर्णोत्पत्तेरिति। साहचर्यादिति। अकारसमभिव्याहारादित्यर्थः। दन्तसंयुक्तेति। अत एव दन्त्योष्ठ्य इति शिक्षायां शरीरावयवनिबन्धनयत्सिद्धिः, अन्यथा कारकशेखरोक्तदिशा दन्तानां संयुक्तद्रव्यत्वेनानवयवत्वात्तदसङ्गतिस्स्पष्टैव। जहत्स्वार्था तु तत्रैवेति न्यायानुरोधादाह। उश्च पश्चेति। ननु ञमां नासिकास्थानकत्वे परस्परं सावर्ण्याद्वारं नमतीत्यादौ पर्यायेण ञादिरपि स्यात्। अथवा तत्रानुस्वारस्य अयोगवाहानामाश्रयस्थानभाक्त्वेन तालुस्थानकत्वाद् ञकार एव स्यात्। अथवा एषां नासिकातिरिक्तस्थानाभावे नासिका आस्यबाह्येति मते सावर्ण्योपयुक्तस्थानाभावेन कादिभि-

हारातिप्रसङ्गः । नासिका चेति । चेन स्वस्ववर्गानुकूलं ताल्वादि गृह्यते । अत एवैषां प्रातिशाख्ये नासिकायां भव इत्यर्थकनासिक्यशब्देन व्यवहारः । यत्तु—

अनुस्वारयमानां च नासिका स्थानमिष्यते ।

इति शिक्षोक्तेरेषां नासिका करणम् । किञ्च स्थानत्वे कङयोः सावर्ण्यानापत्तिः, यावत्स्थानैक्याभावात् । यत्किञ्चित्स्थानैक्येन तत्त्वे तु अमामपि परस्परं सावर्ण्यापत्तिरिति । तन्न । कण्ठादीनामपि करणत्वस्यैव "अस्यन्त्यनेन वर्णान्" इति भाष्यात्प्रतीतेः । स्थानत्वव्यवहारस्तु वर्णाभिव्यक्तिजनकताल्वादौ वर्णजनकवायुसंयोगाधारे

---

स्सावर्ण्याभावे कवादिशब्दैस्तेषां ग्रहणं न स्यादत आह । चेन स्वेति । एषां नासिका करणं, न तु स्थानमिति मतं निराचिकीर्षुरेषां नासिकास्थानकत्वं प्रमाणेन द्रढयति । अत एवेति । नासिकायास्स्थानत्वे कङयोस्सावर्ण्यानुपपत्तिरतः नासिका न स्थानमिति मतमनूद्य निराचष्टे । यत्त्वित्यादिना । शिक्षोक्तेरिति । स्थानकथनावसरे आदीनामनुपादनादिति भावः । करणमिति । करणत्वविरुद्धं स्थानत्वमिति भावः । प्रतीतेरिति । तथाच करणत्वं न स्थानत्वविघटकमितिभावः । ननु कथं करणेषु स्थानत्वव्यवहार इत्यत आह । व्यवहारस्त्विति । वर्णजनकेति । वर्णाभिव्यक्तिजनकेत्यर्थः । वायुसंयोगाधारे इति । वायुसंयोगानुयोगिनीत्यर्थः । स्पष्टं चेदमुद्योते । तेन वायोस्संयोगाधारत्वेऽपि न वायुसंयोगानुयोगित्वमिति न वायोस्स्थानत्वप्रसङ्ग इति भावः । एतेन वर्णाभिव्यक्त्यवच्छेदकत्वावच्छिन्नवायुसंयोगाधारताश्रये इत्यर्थः । तेन वायोर्निरुक्ताधारत्वाभावान्न स्थानत्वव्यवहार इति भट्टोक्तं, वस्तुतस्तु कण्ठाद्यवच्छेदेन वर्णानामभिव्यक्त्या अवच्छेदकत्वसंबन्धावच्छिन्नाया मुख्या-

**वर्णाधारत्वाऽऽरोपेण । तत्तत्स्थानजिह्वाग्रादिसंबन्धेन वर्णोत्पत्त्या जिह्वाग्रादौ तत्संबन्धजनकप्रयत्नविशेषे स्पृष्टतादौ च करणत्वव्यवहारः। वर्णाभिव्यक्त्यनन्तरभावी सावर्ण्यानुपयुक्त आन्तरतम्यपरीक्षोपयुक्तश्च कण्ठ विवरादिनिष्ठविकासादिराभ्यन्तरदेशावच्छिन्नकार्यस्य जनको यत्नो गुणशब्देनोच्यते। अकारादिनिष्ठानुनासिक्यस्य**

---

धारताया एव सम्भवात् नारोपस्योपयोगः। किञ्चैवमारोपे सति संयोगाधारे वायावपि वर्णाधारत्वारोपेण तस्यापि स्थानतापत्तिरिति प्रकाशकृतोक्तं चापास्तम्। कण्ठादीनां वर्णाभिव्यक्त्यवच्छेदकत्वेऽपि वर्णावच्छेदकत्वाभावात्। अभिव्यक्त्याधारे वर्णाधारत्वमित्यारोपस्य तस्यापि गलेपतितत्वात्। अवच्छेदकत्वस्य वृत्त्यनियामकत्वेन तत्संबन्धावच्छिन्नाधेयतानिरूपिताधारताया अप्रसिद्धेश्च। भाष्ये देशपदेन स्थानानां व्यवहारात् स्थानशब्दस्याधिकरणल्युडन्ततया योगरूढेरुद्योते दर्शितत्वेन च तत्राधारता सम्बद्धतारूपेति वक्तुमशक्यत्वेन तदुक्तार्थस्य यथाकथंचिदपि निर्वोढुमशक्यत्वाच्चेति दिक्। नासिकायाः करणत्वप्रतिपादनमपि न सङ्गतम्, शास्त्रे करणत्वव्यवहारस्यान्यादृशत्वादित्यभिप्रेत्याह। तत्तत्स्थाने इति। एवं च तत्तत् स्थानानुयोगिकसम्बन्धप्रतियोगिनि तत्सम्बन्धजनके च करणत्वव्यवहारः, न तत्तत्स्थानेष्विति नासिकायाः करणत्वव्यवहारस्तत्कृतोऽसङ्गत एवेति भावः। एतेनास्य प्रासङ्गिकत्वोक्तिः प्रकाशकृतः परास्ता। जिह्वाग्रादीनां करणत्वव्यवहारः व्योर्लघुप्रयत्नतर इत्यत्र जिह्वाग्रोपाग्रेत्यादिना प्रदर्शयिष्यते। यत्तु जिह्वादाविति स्पृष्टत्वान्वयि वृत्तित्वं सप्तम्यर्थ इति प्रकाशकृतः, तन्न। स्पृष्टतादौ चेति चशब्दस्य नैरर्थक्यापातात्। जिह्वाग्रादौ तद्व्यवहारः प्रातिशाख्ये व्योर्लघुप्रयत्नतर इत्यत्र च बोध्य इति स्वोक्तिविरोधाच्च। नासिकायाः स्थानत्वे प्रसक्तं ङञयोस्सावर्ण्याभावं गुणत्वव्यवस्थापनेन परिजिहीर्षु गुणत्वव्यवहारप्रयोजकं धर्मं प्रदर्शयति। वर्णाभेति। ननु वृद्धिरादैजिति सूत्रस्थदृष्टान्तभाष्याद् गुणशब्दो

"भेदकत्वाद्गुणस्य" इत्यादौ गुणत्वेन व्यवहारस्तु कण्ठाद्यवच्छिन्नवायुसंयोगेनोत्पन्नेषु नासावच्छिन्नवायुसंयोगेन तद्रूपधर्मोत्पत्त्या। एवञ्च नासिकायास्तत्र गुणजनकत्वादनुनासिकाकारादीनां नासिकास्थानं नोक्तं मूले। "एकोऽयमात्मोदकन्नाम तस्य गुणभेदादन्यत्वं भवति अन्यदिदं शीतमन्यदिदमुष्णम्" इति दृष्टान्तपरभाष्येण तथैव प्रतीतेः। आत्माऽत्र द्रव्यम्। उदात्तत्वादीनां गुणत्वव्यवहारस्तु सावर्ण्यानुपयुक्तत्वान्तरतम्यपरीक्षोपयोगित्वरूपसादृश्येनेति बोद्धव्यम्। ङादीनान्तु तद्गुणरहितस्वरूपानुपलम्भेन उभयावच्छेदेन

---

धर्मवाचीति लभ्यत इतीदमसङ्गतमित्याशङ्क्य गुणशब्दस्य नानार्थकत्वान्न दोष इत्याह। अकारादीति। अत एव व्यवहारस्त्विति भेदकतुशब्दोपादानम्। उत्पन्नेष्विति। गुणं प्रति द्रव्यस्य कारणत्वानुरोधेन पूर्वमुत्पत्तिरङ्गीकार्येति भावः। अकारादेर्द्रव्यत्वन्तु वैयाकरणसमयसिद्धम्। ननु तर्हि उदात्तत्वादीनां गुणत्वव्यवहारोऽनुपपन्नः, स्वाश्रयवर्णजनकस्थानविशेषावच्छिन्नवायुसंयोगातिरिक्तस्य तज्जनने अनुपयोगादित्यत आह। उदात्तत्वादीनामिति। न चोदात्तत्वाद्यंशे दृष्टान्तभाष्यासङ्गतिरिति वाच्यम्। तस्यानुनासिक्यांशविषयकतया कथञ्चिद्योजनीयत्वात्। रूपसादृश्येनेति। एवं चात्र गुणत्वं सावर्ण्यानुपयुक्तत्वान्तरतम्यपरीक्षोपयोगित्वरूपम्। पूर्वोक्तगुणस्वरूपे आद्यविशेषणस्य स्वरूपभेदाय अन्त्यविशेषणस्य बाह्यत्वप्रदर्शनाय चोपादानमिति भावः। ननु ङादावपि तत्तत्स्थानावच्छिन्नवायुसंयोगेन स्वरूपोत्पत्तौ नासावच्छिन्नवायुसंयोगेनानुनासिक्यमुत्पद्यत इति तत्राप्यकारादिवन्नासिका न स्थानमत आह। ङादीनामिति॥

तद्गुणरहितस्वरूपानुपलम्भेनेति। यत्तु यथा तृतीयास्तथा पञ्चमा आनुनासिक्यमेषामधिको गुण इति भाष्येण तद्गुणरहितानां पूर्वमुपलम्भे पश्चा-

**वायुसंयोगोत्तरमेव स्वरूपोत्पत्त्या विनिर्गमनाविरहेणोभयोः स्थान-त्वम्। अनुस्वारयमानाञ्चेति शिक्षायां चेन ङादीनामपि सङ्ग्रह इति युक्तम्। अत एव कण्ठ्योऽकार इत्याद्युक्त्वा "नासिक्यान्नासिक्य-**

---

दानुनासिक्योत्पत्तेर्लाभादकारादिवत् ङादीनामपि नासिका न स्थानमिति तन्न। एवं सति सानुनासिकाकारादिवद्वर्णसमाम्नाये ङादेरवक्तव्यत्वापत्तेः। तत्स्थाने निरनुनासिकानां वर्णविशेषाणां वक्तव्यत्वापत्तेश्चेति प्रकाशकृन् तन्न। तद्गुणरहिता गकारादय एवेति यत्तुकाराणामाशयेन निरनुनासिकानां तेषामुक्तत्वात्। आनुनासिक्यविशिष्टानामेव तत्कार्यं यथा स्यान्निरनुनासिकानां माभूदित्येवं लाभार्थं ङादीनां वक्तव्यत्वाच्च। अत एव शब्देन्दुचन्द्रिकायां निरनुनासिक-गकाराद्युपलम्भादित्युक्तम् ॥

वस्तुतस्तु यत्त्वित्यादिग्रन्थोऽप्यसङ्गत एव। यथा तृतीया इति भाष्यस्य तृतीयवृत्तिबाह्यप्रयत्नेभ्योऽधिकोऽयमानुनासिक्यधर्मो ङादीनामित्येव तात्पर्यं, न तु तद्रहिता गादय इत्यत्र। प्रयत्नविशेषणमास्योपादानं सन्ति हि आस्याद् बाह्याः प्रयत्नाः ते हापिता भवन्ति किं पुनस्त इति बाह्यप्रयत्नाना-मेवोपक्रमात् ङत्वगत्वादिजातिभेदाद्गादय एवानुनासिक्यविशिष्टा ङादय इति वक्तुमशक्यत्वात्। न च ङत्वं गत्वव्याप्या जातिः, यथानुनासिकाकारत्वमत्व-व्याप्यमिति वाच्यम्। तथा सति प्रत्याहारेषु जातिपक्षस्यैव सिद्धान्तितत्वेन व्याप्यजातिनिर्देशाद्यम्ङमादिप्रत्याहारकार्याणां गकारादावप्रवृत्तावपि व्याप-कजातिनिर्देशात् झशादिप्रयुक्तकार्याणां ङादावापत्त्या बभानीत्यादौ नकारस्य झस्त्वे जश्त्वापत्तेर्दुर्वारत्वादिति दिक् ॥

ननु नासिकायाः स्थानत्वाङ्गीकारे शिक्षायां तदनुक्त्या न्यूनता स्यात्। कङयोस्सावर्ण्यानापत्तिश्चेत्याशङ्क्याद्यं निराकुरुते। चेन ङादीनामपीति। चशब्दस्यानुक्तसमुच्चायकत्वं प्रातिशाख्यसंवादाद् द्रढयति। अत एवेति। ननु

यमानुस्वारानिति स्थानानि" इत्युक्तं प्रातिशाख्ये । नासिक्या ङञणनमा इति तद्व्याख्यातारः । कङयोः सावर्ण्यन्तु भवत्येव । "आस्ये तुल्यदेशप्रयत्नम्" इति वार्त्तिके किमास्योपादाने प्रयोजनमिति प्रश्ने प्रयत्नविशेषणमास्योपादानमित्युक्त्वा तद्व्यावर्त्यत्वेन बाह्यप्रयत्नान् प्रदर्श्य "यथा तृतीयास्तथा पञ्चमा अनुनासिक्यमेषामधिको गुण" इति भाष्येण तस्य बाह्यप्रयत्नत्वोक्त्याऽत्र सूत्रे नासिकाया आस्यशब्देन, तत्रत्यप्रयत्नस्य च प्रयत्नशब्देनाग्रहण-

---

ततोपि नासिकस्थानत्वं न लब्धमित्यत आह । इति स्थानानीति । एवं च कण्ठ्यावहाविति स्थानोपक्रमादितिस्थानानीत्युपसंहारान्मध्ये नासिका स्थानमिति स्पष्टं लभ्यत इति भावः । ननु नासिकायास्स्थानत्वे लब्धेऽपि तच्च ङादीनामेवेति कथमित्यत आह । नासिक्या इति । द्वितीयं निराकुरुते । कङयोस्त्वित्ति । अग्रहणबोधनादिति ॥

ननु किमास्योपादाने प्रयोजनं प्रयत्नविशेषणमास्योपादानमिति भाष्येणास्यविशेषणव्यावर्त्यस्थानानां सवर्णसंज्ञोपयोगिनामभावो ध्वनितः । नासिकाया आस्यबाह्यत्वे तद्व्यावर्तकतया देशविशेषणमप्यास्यग्रहणं स्यादिति प्रयत्नमात्रविशेषणत्वकथनाभङ्गतेर्नासिकाप्यास्यान्तर्गतेत्यवश्यमङ्गीकरणीयम् । स्पष्टं चेदं कैयटे । एवं च नासिकायास्स्थानत्वे आस्यशब्देन ग्रहणाद्यावदास्यतौल्याभावात्कङयोस्सावर्ण्यं दुर्निरूपमेवेति कथमास्यशब्देन नासिकाया अग्रहणमिति चेन्न । नासिकास्थनभेदेन कङयोस्सावर्ण्याभावे तत्रत्यप्रयत्नस्य बाह्यत्वोक्तेर्नैष्फल्येन तत्सामर्थ्यान्नासिकाया आस्यशब्देनाग्रहणमित्यपूर्वतया स्वीकार्यमित्याशयादिति केचित् ॥

वस्तुतस्तु काकलकाधस्तादुपजतृस्थानमवर्णस्येत्यभिप्रायकेण एवमप्यवर्णस्य सवर्णसंज्ञा न प्राप्नोति बाह्यंह्यास्यात् स्थानमवर्णस्येति तदुत्तरभाष्येण स्थानेऽपि

**बोधनात् । नासिका आस्यबाह्येति वदतां मते तद्ग्रहणाभावाच्च ।**

---

आस्यविशेषणतायां अङ्गीकारलाभान्नासिकाया आस्यान्तर्गतत्वेऽपि मुखनासिकेति सूत्रे नासिकातिरिक्तावयवकमुखस्यैव ग्रहणेन तत्साहचर्यादत्राप्यास्यपदेन तादृशस्यैव ग्रहणमित्युद्योतोक्तरीत्या कण्ठ्यास्यावर्ण्यं सुवचमिति बोध्यम् । वस्तुतस्तु नासिकाया आस्यान्तर्गतत्वे अयं प्रयासस्तदेव न । तथाहि मुखनासिकेति सूत्रे मुखं च नासिका चेति मुखद्वितीया नासिकेति विग्रहप्रदर्शनेन नासिकाया आस्यानवयवत्वं बोध्यते । न ह्यवयवावयविनोरेवं व्यवहारो दृष्टचरः । महस्त इत्यादौ विद्यमानवाची महशब्दः, अत एव नासिकाग्रहणाभावे कचटतपानामेव प्रसज्येतेत्यत्र एव शब्दः सङ्गच्छते । अन्यथा ङादीनामपि मुखवचनत्वाविशेषात्तदसङ्गतिः स्पष्टैव । ग्रामादत्रास्मिन्यायोऽप्यत्रानुकूलः । किमास्योपादाने प्रयोजनमिति भाष्यमपि नान्तर्गतत्वसाधकम् । अनवधारणगर्भे तुल्यावास्यप्रयत्नाविति समासे नासिकाया आस्योपादानव्यावर्त्यत्वाभाव इत्येव भाष्याशयात् । अत एव नासिकाव्यावृत्त्यर्थं देशविशेषणमप्यावश्यकमास्योपादनमित्याशयकं एवमप्यवर्णस्येत्यादि तदुत्तरभाष्यं स्वरसतस्सङ्गच्छते । स्पष्टं चेदं सर्वं सुधीभिः ॥

एवं च नासिकायाः स्थानत्वेऽपि न कश्चन प्रयासः कण्ठ्यास्यावर्ण्य इत्याशयेनाह । **नासिका आस्येत्यादि** । **वदतामिति** । बहुवचनेनास्यैव युक्तत्वं सूचितम् ॥

यत्त्वाचार्याः मुखनासिकावचन इति सूत्रस्थभाष्यकैयटाभ्यां नासिकाया आस्यबाह्यत्वमुपपाद्य तद्भाष्यकैयटबलादनुनासिकाकारादीनां ङादीनां चोभयावच्छिन्नवायुसंयोगेनैव स्वरूपोत्पत्तिः । आनुनासिक्यमुभयेषां धर्मः । **गुणशब्दस्तु धर्मपर एव, लोकप्रसिद्धेः । एकोऽयमात्मोदकं नामेति भाष्यस्वारस्यादपि धर्मपरत्वमेव । सावर्ण्यानुपयुक्तत्वं न गुणशब्दार्थः । मानाभवात् । आन्तरतम्यपरीक्षोपयोगि**

अत एव बाह्यप्रयत्नानुपक्रम्य—

> अमोऽनुनासिका न ह्रौ नादिनो हझषः स्मृताः ।
> ईषन्नादा यणश्चैव श्वासिनस्तु खफादयः ॥

---

त्वविशेषणवैयर्थ्यं च। स्थानार्थगुणप्रमाणकृतमित्यत्र प्रमाणोपादानं ब्राह्मणवसिष्ठन्यायेन । सानुनासिकनिरनुनासिकाकारयोस्सावर्ण्यं तु पाणिनीयशिक्षोक्तस्थानानामेव सावर्ण्योपयोगित्वमिति स्वीकारेण सिद्ध्यति । अनुस्वारयमानां चेति शिक्षायां चशब्दोऽवधारणार्थो भिन्नक्रमः । नासिकैव स्थानमित्यर्थः । तेन ङादीनां नासिकास्थानस्य पाणिनीयशिक्षानुक्तत्वान्न तत् सावर्ण्यविघटकं, शिक्षान्तरोक्तं तु न सावर्ण्यव्यवस्थापकमाकारस्य विवृततरत्वादित्याहुः, तन्न। अनुनासिकाकारस्याप्युभयावच्छिन्नवायुसंयोगेन स्वरूपोत्पत्तौ सामग्रीवैलक्षण्येन कङयोरिव स्वरूपभेदापत्त्या गुणाभेदकत्वपक्षेऽपि निरनुनासिकैस्सानुनासिकग्रहणानापत्त्या वृद्धिसूत्रस्थभाष्यविरोधात् । स्पष्टं चेदं प्रकृतसूत्रे उद्योते । एतेनानुनासिकाकारादीनां नासिका स्थानमेव। तद्रहितस्वरूपोपलम्भे मानाभावात्। यश्च तद्रहितश्शुद्ध उपलभ्यते स त्वतिरिक्त एवेति हर्युक्तमपास्तम् । चशब्दस्यावधारणपरत्वं च न सम्यक् । तत्तत्स्थानानां शिक्षाकारानुभवगम्यत्वेन अन्यस्थानानामप्रसक्त्याऽवधारणार्थस्य वैयर्थ्यात् । भिन्नक्रमत्वमप्यगतिकगतिभूतम्। एवं च शिक्षायां नासिकास्थानस्य ङादीनामुक्तत्वेन त्वदुक्तरीतिर्न कङयोस्सावर्ण्यं समर्थयितुमीष्टे इत्यलं बहुना। यत्तु कौस्तुभे कङयोस्सावर्ण्यार्थं यावत्स्थानसाम्यं न विवक्षितम् , अकारेकारादेरेकारादिना सावर्ण्याभावस्तु प्रयत्नभेदादेवेत्युक्तम् । तत्तु सूत्रमते अकारादेरेकारादिना सावर्ण्याभावानुपपादनाद् भाष्यमतेपि वलयोस्तदनुपपादनादुपेक्ष्यम्। एतत्सर्वं तत्तद्ग्रन्थविचारणचतुरा विभावयन्तु॥

ङकाराद्यानुनासिक्यस्य बाह्यप्रयत्नत्वे शिक्षाकारसम्मतिमप्याह । अत

ईषच्छ्वासाँश्चरो विद्यादित्युक्तं शिक्षयाम् ।

नादेति संवारघोषयोरुपलक्षणं, श्वासेति विवाराघोषयोः, न ह्वावित्युपलक्षणम् ऐचः सर्वस्य प्लुतऌकारस्य च अनुनासिकस्यादर्शनादित्यलम् । एदैतोरित्यादौ लोकानुभवसिद्धार्थानुवादके तपरशास्त्राप्रवृत्त्या प्लुतानामपि तत्स्थानत्वं बोध्यम् । तथा च पाणिनीयशिक्षा—

कण्ठ्यावहाविचुयशास्तालव्या ओष्ठजावुपू ।
स्युर्मूर्धन्या ऋटुरषा दन्त्या ऌतुलसाः स्मृताः ॥

---

एवेति । ऐचस्सर्वस्येति । एच इति त्वपपाठः । हंसे इत्यादावेकारादेरानुनासिक्यदर्शनात् । यत्तु एच इतिपाठं मत्वा परिनिष्ठित इति शेषपूरणेन हंसे इति प्रक्रियायां सत्त्वेऽपि न क्षतिः । अतएवादर्शनादित्युक्तमित्याहुः । तन्न । हंसे इत्यादेरपरिनिष्ठितत्वस्य वक्तुमशक्यत्वात् । ह्मलकारस्यापि गम्लादावेव दर्शनादुत्तरत्र ऋकारे प्लुतविशेषणवैयर्थ्यापत्तेश्च । सर्वस्येति प्रयोगभेदाभिप्रायेण । चेति । चेन दीर्घप्लुतऋकारसङ्ग्रहः । स्पष्टं चेदं स्थानेऽन्तरतमसूत्रे षट्षष्टिरिति कैयटग्रतिकमादायोद्योते । ननु नौरशब्दयोर्नशब्देन समासे ताभ्यां ण्यन्ताभ्यां क्विपि निष्पन्नसंबुद्ध्यन्तयोः क्लिन्धीत्यनेन सह प्रयोगे नौक्लिन्धि रैक्लिन्धीत्यादौ तदुपलम्भ इत्यत आह । अदर्शनादिति । एवं च तयोरनभिधानं, तत्र मानं तु उत्तरपदत्वेचेति वार्तिकतत्प्रत्याख्यानपक्षयोः फलैक्यानुरोध एवेत्याशयः। एतेन तत्रानुनासिक्यदर्शनादिदं चिन्त्यमिति चन्द्रिकोक्तिः परास्ता । अनुवादके इति । एवं च तत्र तपरसूत्रप्रवृत्तावप्यनुभवेन स्थानैक्यमादायासमकालयोरपि संज्ञा स्यादेवेति फलाभावात्तदप्रवृत्तिः । अपूर्वबोधकत्वेत्वस्य सङ्कोचे तत्राप्रवृत्तिरेव फलं स्यादिति भावः । एतेनाकुहेत्यादावनुवादेऽपि तत्प्रवृत्त्यङ्गीकाराच्चिन्त्यमिदमित्यपास्तम् । कण्ठ्यास्सावर्ण्याय यत्किञ्चित्स्थानसाम्येऽपि सावर्ण्यमित्यर्थे

जिह्वामूले तु कुः प्रोक्तो दन्त्योष्ठ्यो वः स्मृतो बुधैः ।
एऐ तु कण्ठ्यतालव्यावोऔ कण्ठोष्ठजौ स्मृतौ ॥

अष्टौ स्थानानि वर्णानामुरः कण्ठः शिरस्तथा ।
जिह्वामूलञ्च दन्ताश्च नासिकोष्ठौ च तालु च ॥

हकारं पञ्चमैर्युक्तमन्तस्थाभिश्च संयुतम् ।
उरस्यं तं विजानीयात्कण्ठ्यमाहुरसंयुतम् ॥

इति । यत्तु दन्तोष्ठादि समुदितं स्थानमिति । तन्न । शिक्षायां दन्त्योष्ठ्यकण्ठ्यतालव्यावित्यादौ तत्र भव इत्यधिकारविहितयतः प्रत्येकमनुत्पत्त्यापत्तेः । दन्तोष्ठ्यमित्यादि त्वसङ्गतमेव । स्वाङ्गसमुदायस्य स्वाङ्गत्वाभाववच्छरीरावयवसमुदायस्य शरीरावयवत्वाभा-

---

वलयोस्मावर्ण्यवारणाय प्राचीनोक्तमुपायमनूद्य खण्डयति । यत्त्वित्यादिना । प्रत्येकमनुत्पत्त्यापत्तेरिति । तत्तद्वर्णाधिकरणतायाः प्रत्येकमभावादिति भावः । स्वाङ्गत्वाभाववदिति । वैयाकरणमते समुदायस्य प्रत्येकातिरिक्तत्वादिति भावः ॥

यत्तु ननु प्रत्येकं स्थानत्वं न युज्यते, तत्स्थानत्वं हि तज्जनकवाय्वाधारत्वमेव वाच्यम् । तथाचैकत्र वाय्वाघातेनैवैकारादीनामभिव्यक्त्याऽपरस्यस्थानत्वाभावप्रसङ्गात् । न चैकारैकारयोर्मध्ये भागद्वयम्, अकारस्तत्राद्यःइकारोऽन्त्यः । एवमोकारौकारयोरप्याद्योऽकारभागः, अन्त्य उकारभागः । एवं च कण्ठे वाय्वाघातेनाकारभागः तालुनि ओष्ठे च वाय्वाघातेनेकारोकारयोर्भागश्चाभिव्यज्यत इति वाच्यम् । एवं सति भिन्नवर्णत्वव्यपदेशापत्तेः । भिन्नभिन्नस्थानजन्यत्वस्यैव वर्णभेदव्यपदेशनियामकत्वादिति चेन्न । भेदाधिष्ठानवर्णद्वयोत्पत्त्यधिकरणक्षणयोरुत्पत्त्यनधिकरणक्षणव्यवधानस्यैव वर्णभेदव्यपदेशनियामकत्वाभ्युपगमेन प्रकृते

वात्। एतेन दन्त्योष्ठरूपमतिरिक्तं स्थानमित्यपास्तम्। अष्टौ स्थानानीति प्रतिज्ञाविरोधाच्चेति दिक्। सूत्रे प्रशब्देन विलक्षणार्थबोधेऽपि लोके यत्नप्रयत्नयोः पर्यायतेति ध्वनयन्नाह। प्रयत्नो द्विधेति। क्वचिद् यत्न इत्येव पाठः। चतुर्धेति। यत्तु—

> स्वराणामूष्मणाञ्चैव विवृतं करणं स्मृतम्।
> तेभ्योऽपि विवृतावेङौ ताभ्यामैचौ तथैव च॥

इति शिक्षावाक्याद्विवृततरविवृततमयोः प्रतीत्या नाज्झलाविति सूत्रभाष्यादूष्मणामीषद्विवृतत्वस्य च प्रतीत्या चतुर्धेत्यसङ्गतमिति। तन्न। नाज्झलाविति सूत्रेण विवृतत्वव्याख्यानामेषां सवर्ण-

---

भागद्वयोत्पत्त्यधिकरणक्षणयोरुत्पत्त्यनधिकरणक्षणव्यवधानशून्यत्वेन वर्णैक्यव्यपदेशात्। एवमेव दन्त्योष्ठ्यशब्देऽपि पादमात्रिकं भागद्वयं कल्पनीयमिति प्रकाशकृतोक्तम्, तन्न। एकस्यैव वायोः किञ्चिदवयवावच्छेदेन स्थानद्वयेन संयोगद्वयस्य युगपत्सत्त्वे बाधकाभावेन संयोगद्वयस्यापि वर्णजनकत्वसत्त्वेन तदाधारे प्रत्येकं स्थानत्वे बाधकाभावेन तत्तद्वर्णेषु भागद्वयकल्पनाया अनुपयोगान्मानाभावाच्च। सामग्रीभेदे स्वरूपभेदस्यापरिहार्यतया विषयसत्त्वे व्यवहारस्य निरोद्धुमशक्यत्वाच्च। ऊकालोऽजिति सूत्रव्याख्यानावसरे ऋति ऋवेति वार्तिकविधेयऋवर्णभागयोरुत्पत्त्यनधिकरणक्षणव्यवधानस्य त्वयाङ्गीकृतत्वेन एवमपि तत्र भिन्नवर्णत्वव्यवहारस्य तव दुष्परिहरत्वाच्चेति दिक्॥

नाज्झलाविति सूत्रेणेति। यत्तु वस्तुतस्तु होत्लृकार इत्यत्र ईषत्स्पृष्टलृकारे तोर्लीति वारणायेदमावश्यकमित्याचार्यास्तन्न। तावन्मात्रफलकत्वे वार्तिकविधेययोर्विधिसूत्रे पर्युदासेनैव सिद्धिरित्याशयात्। यत्तु नाज्यणावित्येव सिद्धे हल्ग्रहणस्य ज्ञापकत्वमिति प्रकाशकृतोक्तं, तन्न सूत्रेणेत्यक्षराननुगुणं

संज्ञानुपयुक्तत्वबोधनमित्याशयात् । भाष्यमते तु सन्तु सप्त प्रयत्नाः । एवञ्चैदैतोश्च न सावर्ण्यप्रसक्तिः प्रयत्नभेदादिति बोद्धयम् । नाज्झलाविति सूत्रमपि प्रयत्नभेदप्राप्तसावर्ण्याभावानुवादकं सत्तस्यैव बोधकम् । अत एव भाष्ये तन्न वक्तव्यमिति नोक्तम् । स्पृष्टादीनामाभ्यन्तरत्वन्त्वोष्ठप्रभृतिकाकलकपर्यन्तरूपास्यान्तर्गततत्तत्स्थानेषु जिह्वाग्रादीनां स्पर्शेषत्स्पर्शदूरावस्थानसमीपावस्थानरूपाभ्यन्तरकार्यकारित्वाद्वर्णोत्पत्त्यव्यवहितप्राग्भावित्वाच्च बोद्धयम् । तत्र बहूनामेकस्थानत्वेऽपि कस्य चिदुच्चारणे सम्यक्स्पर्शः कस्य चिदीषदिति शिक्षाकारोक्तिमनुभवं चानुसृत्य विवेक्तव्यम् । प्रयतनमिति नपुंसके भावे ल्युट् । प्रयत्नमित्यपपाठः । नङन्तस्य पुंस्त्वात् । तथा च शिक्षा स्वराणामूष्मणाञ्चेत्याद्यनन्तरम् ॥

अचोऽस्पृष्टा यणस्त्वीषन्नेमस्पृष्टाः शलः स्मृताः ।
शेषाः स्पृष्टा हलः प्रोक्ता इति ॥

अचोऽस्पृष्टाः, स्पर्शाभावरूपाविवृतत्ववन्तः । यणस्त्वीषदित्यनेन

---

लाघवानुपहितं चेन्नुपेक्ष्यम् । वस्तुतस्तु वार्तिकविधेय लकार लकारयोस्सावर्ण्ये फलाभाव इत्येवनागेशाभिप्रेतं स्फुटीकरिष्यते चेदमुपरिष्टात् । अत एव वक्ष्यति नाज्झलाविति सूत्रमपि प्रयत्नभेदप्राप्तसावर्ण्याभावानुवादकं सत्तस्यैव बोधकमिति । अन्यथा एतदर्थं अपूर्वविधायकत्वापत्तौ तदसङ्गतिस्स्पष्टैवेति दिक् । प्रयत्नमित्यपपाठ इति । यत्तु यदि तु जानीयादिति तिङन्ताध्याहारेण द्वितीयान्तं समर्थ्यते तदा तथैवास्त्विति, तत्तु ग्रन्थकृच्छैलीविरोधादुपेक्ष्यम् । स्पर्शाभावरूपविवृतत्वेति । न च स्वराणामूष्मणाञ्चैवेति स्वराणां विवृतत्वस्योक्तत्वेनेदं पुनरुक्तमिति वाच्यम् । तेभ्योऽपि विवृतावेङाविति वाक्यान्तरेणैचां विवृत-

**तेषामीषत्स्पृष्टत्वमीषद्विवृतत्वञ्च बोधितम् । नेम इत्यर्थे । तेन शला-मीषद्विवृतत्वं यणपेक्षयाऽधिकविवृतत्वं चेति बोध्यम् । अत्र शिक्षो-क्तव्याप्यधर्मवतां व्यापकधर्ममादाय न सावर्ण्यमिति यणां चवर्गा-दिभिर्न सावर्ण्यम् । तेनाश्चित इत्यादौ न यादिः परसवर्णः । विवृत-मेवेति । प्रक्रियादशायां विवृतत्वम्प्रतिज्ञेयमित्यर्थः । तेन दण्डाढ-कादौ दीर्घसिद्धिः । अन्यथा संवृतस्य ह्रस्वाकारस्य विवृतेन दीर्घेण-**

---

तरत्वाद्युक्तेरन्याचामीषद्विवृतत्वसमानाधिकरणेषत्स्पृष्टत्वधर्मस्य प्रसक्तस्य निषेधमुखेन पूर्ववाक्यविहितविवृतपदार्थविवरणेन यणादिवृत्तिविवृतत्वापेक्षयाऽन्यादृशमेव स्वरादिवृत्तिविवृतत्वमिति बोधने तात्पर्यात् । एतेनेदं चिन्त्यम्, यणामीषत्स्पृष्टत्वमीषद्विवृतत्वमित्यग्रिमग्रन्थविरोधात् । अभावप्रतियोगिनोरेकत्र समावेशासम्भवात् । तस्मादत्रास्पृष्टशब्देनातिरिक्तमेव विवृतत्वमुच्यत इति वक्तव्यमिति प्रकाशकृतोक्तमपास्तम् । अभावस्याव्याप्यवृत्तिप्रतियोगिना समावेशसम्भवात् । स्पर्शस्य संयोगरूपत्वेन तस्याव्याप्यवृत्तित्वात् । अज्वृत्तिस्पर्शाभावोऽव्याप्यवृत्तिरिति तस्य विवृतत्वरूपत्वे बाधकाभावात् । यत्तु अचोऽस्पृष्टा इति पुनर्वचनं यणस्त्वीषदित्यत्रेचोऽविवृततमत्वस्य पूर्वमुक्तत्वेन तस्यासम्बन्धार्थमिति प्रकाशकृतोक्तं तन्न । तावन्फलकत्वेऽच इत्यस्य वैयर्थ्यापत्तेः । **शलामीषदिति** । अजपेक्षया ईषत्त्वम् । अधिकविवृतत्वं चेति । एतेन यण्शलोस्सावर्ण्यशङ्का निरस्ता । तदेतदाह । अत्रेत्यादि । ननु यकारस्य चकारेण सावर्ण्येऽप्यऽनुनासिकयकारस्य नासिकास्थानत्वाभावेन स्थानत आन्तर्यादश्चित इत्यत्र जकार एव स्यान्न तु यकार इत्यरुचेराह । आदाविति । चतुर्मुख इत्यादौ रणयोस्सावर्ण्ये यरोऽनुनासिक इति णकारस्स्यादिति भावः । ननु नैव लोके न च वेदे अकारो विवृतोऽस्तीति भाष्यात् प्रक्रियायामप्यकारस्य विवृतत्वमनुपपन्नमत आह । **प्रतिज्ञेयमिति** । तच्चाइउण् सूत्रे भाष्ये स्फुटम् ।

सावर्ण्याभावात् स न स्यादिति भावः। दीर्घाकारस्य विवृततरत्वन्तु पाणिनिशिक्षानुक्तत्वान्नैतच्छास्त्रप्रक्रियोपयोगीति दिक् ॥

तस्य प्रयोगे संवृतत्वे मानमाह । अ अ । प्रयत्नभेदाद्दीर्घाभावः । अत्रोद्देश्ये सवर्णग्रहणं जातिर्निर्देशो वा न, व्याख्यानात् । अधिकारत्वे फलमाह ॥

---

ननु शिक्षोक्तव्याप्यधर्मवतामित्यादि पूर्वोक्तरीत्या अकारस्य विवृतत्वप्रतिज्ञानेऽपि नाकारसवर्णः तस्य शिक्षायां विवृततरत्वोक्तेरत आह। दीर्घाकारस्येति। तत्र शिक्षापदेन पाणिनिशिक्षैव विवक्षिता। आकारस्य विवृतोपदेश इति भाष्यस्वारस्यादतोभिस इत्यादितपरकरणाच्चेति भावः ॥

अअ इतीति। सौत्रत्वाद्विभक्त्योर्लुक्। प्रयत्नभेदादिति। वर्णसमाम्नाये विवृतस्यैवोपदेशेन तेन सहास्य सावर्ण्याभावेनात्त्वाभावादिति भावः। दीर्घाभाव इति। इदमुपलक्षणं गुणस्यापि। भट्टास्तु अश्च दीर्घश्चाद्दीर्घौ तयोरभावोऽद्दीर्घाभावः। प्रयत्नभेदस्याद्दीर्घाभाव इति विग्रहः। प्रयोज्यत्वं षष्ठ्यर्थः। प्रयत्नभेदप्रयोज्यगुणदीर्घाभाव इत्यर्थेनोपलक्षणत्वं विनापि निर्वाहमाहुः। प्रकाशकारोपि तदेवानुससार। अनयोर्युक्तं किमिति सुधियो विभावयन्तु। इदं सूत्ररीत्या। भाष्यसम्मतजातिपक्षे तु संहिताया अविवक्षया एकादेशाभावः। यद्वा पूर्वत्र ङसः सुपां सुलुगिति सुरादेशः रुत्वयत्वयलोपेषु तस्यासिद्धत्वान्नैकादेशः। अतीति विवृतनिर्देशात् संवृते नोत्वमिति भट्टाः। न च विवृतनिर्देशेऽपि ह्रस्वत्वजातिमादायोत्वं दुर्वारमिति वाच्यम्। परिनिष्ठिते विवृतत्वस्य दोषरूपत्वेन प्रयत्नाधिक्यात्संवृतग्रहणात्। न चानेनैव संवृतस्य विधेयतया तस्यासिद्धत्वादुत्वं दुर्वारमिति वाच्यम्। अअ इति पृथक् निर्देशेन मूलत एव संवृतत्वकल्पनात्। अत एव प्रयत्नभेदेन दीर्घवारणं सङ्गच्छत इति दिक्। व्याख्यानादिति।

त्रिपाद्यामपीति । अन्यथा गोधुङ्मानित्यत्र घत्वजश्त्वानुनासिकेषु भष्भावानापत्तिरिति भावः। वस्तुतो घत्वे कृते "झय" इति

तत्र तत्राकारस्य दीर्घविधानरूपादित्यर्थः । अत्रोद्देश्येन सवर्णग्रहणे दीर्घाकारस्याप्यनेन संवृतत्वे तद्वैयर्थ्यं स्पष्टमेव ॥

पूर्वत्रासिद्धम् । घत्वजश्त्वानुनासिकेष्विति । अत्र भट्टाः गोदुह् ×मत् इति स्थिते जश्त्वमपवादत्वाद्बाधित्वा घत्वे भुदादार्वोपदेशिकझषन्ते युगपत्प्राप्तजश्त्वबाधनेन चरितार्थस्य भष्भावस्य घत्वात्पूर्वप्राप्तिकजश्त्वेनोण्ङ्शीनामिति न्यायेन बाधेऽनुनासिकस्यापरनिमित्तकेन जश्त्वेन बाधे निरुक्तक्रमस्सेत्स्यतीत्याहुः । एतेन अनुनासिकेष्विति, प्राप्तेष्वित्यर्थः । भष्भावानापत्तिरिति। तत्र घत्वे भष्भावेन बाधितेऽपि जश्त्वेऽनुनासिकभष्भावयोर्विनिगमनाविरहेण पर्यायेण प्रवृत्तौ नित्यत्वादनुनासिकस्य वा प्रवृत्तावनुनासिकपक्षे भष्भावानापत्तिरिति भावः । ननु पर्यायस्वीकारेण शास्त्रद्वयबाधापेक्षया शब्दान्तरात्प्राप्नुवतो विधेरनित्यत्वेनानुनासिकेन भष्भावशास्त्रबाधापेक्षया शास्त्रद्वयसमावेशस्य न्याय्यत्वेन प्राग्भष्भावे ततोऽनुनासिके नोक्तदोषोऽत आह । वस्तुतइति। वत्वानुनासिकयोरेकत्र समावेशासम्भवेन पर्यायेण प्रवृत्तौ पाक्षिकवत्वापत्तिर्दोष इति श्रीधरोक्तं, यद्यपि जश्त्वं बाधित्वा भष्भावः प्राप्तः, ततोऽपि परत्वादनुनासिकः प्राप्तः ततोऽपरनिमित्तकत्वेनान्तरङ्गत्वाज्जश्त्वं प्राप्तं, ततोऽपवादत्वाद्भष्भावः प्राप्नोतीति चक्रकात्कस्यापि कार्यस्याप्रवृत्त्या भष्भावो न स्यादिति कथनं न्यूनं, तथापि सिद्धान्ते घत्वोत्तरं भष्भाव एव भवतीति प्रथमोपस्थितत्वात्स एवोपात्त इति प्रकाशकृदुक्तं चापास्तम् । नन्वनुनासिकस्यापि जश्त्वापवादत्वात्कथं पूर्वं जश्त्वप्रवृत्तिः । न च कुमयाँश्विनोपीत्यादौ चारितार्थ्यमिति वाच्यम् तावन्मात्रफलकत्वे यण इत्येव सिद्धेर्यर्ग्रहणेन झर्ष्वपि तत्प्रवृत्त्यनुमानादिति चेन्न । यर्ग्रहणस्याचो रहाभ्यामित्युत्तरार्थमावश्यकत्वे-

वत्वापत्तिर्दोषः । न च ततः परत्वाज्जश्त्वानुनासिकत्वयोस्तदप्राप्तिरिति

---

नोक्तापवादत्वासम्भवात् । वस्तुतः त्रिपाद्यां पूर्वं प्रति परासिद्धत्वाभावेऽपि षापादिकबहिरङ्गपरिभाषादृष्ट्या तदसिद्धत्वस्य सत्त्वेन तया जश्त्वानुनासिकयोर्व्यवस्थापनासम्भवात्सूत्रपाठक्रमेण पूर्वं भष्भावे नायं दोषः । न चेदानीं त्रिपाद्यां पूर्वं प्रति परासिद्धत्वाभावेन परिभाषादृष्ट्याऽसिद्धत्वेऽपि कार्यकालपक्षे त्रैपादिकविधिशास्त्रैकवाक्यतापन्नाया अन्तरङ्गपरिभाषायाः पूर्वप्रवृत्तिनियामकतायां बाधकाभाव इति वाच्यम् । परिभाषायां चेतनत्वारोपेण स्वीयबुद्धिगोचरस्यैवान्तरङ्गशास्त्रस्य लिङ्गताया अन्यत्रोक्तत्वेन प्रकृते तदभावेन परिभाषाया अप्रवृत्तेः । एतेन षत्वे कृते जश्त्वमपवादत्वाद्बाधित्वाऽनुनासिकं चान्तरङ्गत्वाद्बाधित्वा भष्भावे न कश्चिद्दोष इत्याचार्याः परास्ताः । परं तु षत्वे कृते तस्येदानीमसिद्धत्वाभावेन झय इति वत्वापत्तिर्दोष इत्याह । वस्तुत इति । अथेदानीं त्रिपाद्यां पूर्वं प्रति परासिद्धत्वाभावेन विप्रतिषेधस्य सत्त्वात्कार्यकाले परिभाषान्तराणामिव विप्रतिषेधशास्त्रप्रवृत्तौ जश्त्वानुनासिकयोः परत्वात्प्राप्तेरिदमसङ्गतमित्याशयेन शङ्कते । न चेति । जश्त्वानुनासिकयोरिति । न च वत्वमपवाद इति वाच्यम् । तसाविति भविषये चारितार्थ्यात् । न च तकारोच्चारणेनैव सिद्धे प्रत्याहारग्रहणादपवादत्वमिति वाच्यम् । यवादिगणे प्रकृतिमात्रपाठ इति निष्कृष्टमते ककुद्मानित्यत्रानुनासिकवारणाय तसौ मत्वर्थ इत्यत्र दकारोऽपि प्रश्लिष्यत इत्यस्यावश्यकत्वेन तत्र वत्वार्थं प्रत्याहारग्रहणस्य चारितार्थ्यात् । तदोरुभयोर्ग्रहणापेक्षया प्रत्याहारग्रहणस्यैव लघुत्वात् । अत एवेणइत्येव सिद्धे ण्वोरिति गुरुनिर्देशेन इण्परेणैवेति ग्रन्थकृतोक्तं सङ्गच्छते । किंचानुनासिकस्य छन्दसि वैकल्पिकत्वेन तदभावपक्षे वत्वस्य चारितार्थ्यान्नानुनासिकापवादत्वं वत्वस्य, जश्त्वापवादत्वं तु तक्रकौण्डिन्यन्यायेन वाच्यम् । जश्त्वे कृते चारितार्थ्यात् । एवं च

**वाच्यम्। विप्रतिषेधे परमित्यस्य यथोद्देशत्वेन त्रिपाद्यामप्रवृत्तेः। "पूर्वत्रासिद्धे नास्ति विप्रतिषेधोऽभावादुत्तरस्य" इत्यनेन तस्या यथोद्देशत्वस्यैव बोधनात्। अन्यथा परस्यासिद्धत्वेऽपि विप्रतिषेध-सूत्रस्य सिद्धत्वात्परिभाषान्तराणामिवास्या अपि कार्यकालपक्षे तेना-कर्षणापत्तेः। अत एव भाष्ये वत्वमेवापादितम्। अधिकारत्वादेव**

---

वत्वप्रवृत्त्युत्तरं जश्त्वप्रवृत्तये तक्रन्यायानित्यन्वस्यावश्यकतया नापवादत्व-शङ्काकलङ्कोऽपीति बोध्यम्। एतेनेमे शङ्कासमाधाने निर्दले, परत्वात्प्राप्तयोरपि प्रतिपदविधित्वादपवादत्वाच्च वत्वेन बाधापत्तेः। न च वत्वं भविषये चरितार्थमिति वाच्यम्। झय इति प्रत्याहारग्रहणस्य वैयर्थ्यादिति प्रकाश-कृदुक्तं, उक्ताशयमजानानस्तुल्यबलत्वं जानान इशङ्कत इति भट्टोक्तं च परास्तम्। अन्यथेति। विप्रतिषेधरूपनिमित्तविनाशकपूर्वत्रेत्यनेन विप्रति-षेधशास्त्रबाधः उतासिद्धत्वनिरूपकपूर्वासिद्धिसम्पादनद्वारा विप्रतिषेधसूत्रस्यै-तत्प्रतिबन्धकत्वमित्यत्र विनिगमनाविरहापत्तिरिति भावः। एतेनाधिकारत्वे यथोद्देशत्वे विधित्वे सपादात्रिपाद्योर्विप्रतिषेधाभावानुवादनेन वार्तिकसामञ्ज-स्येनेदमसङ्गतमित्यपास्तम्। अत एव। यथोद्देशत्वादेव। अन्यथा पक्ष-द्वयसाधारणतया भष्भावानापत्तिरेवापादिता स्यादिति भावः। अधिका-रत्वादेवेति। परत्वस्याधिकारत्वानङ्गीकारेऽपि न क्षतिः। विप्रतिषेध-सूत्रे यथा बाध्यबाधकयोरेव पौर्वापर्यं व्यवस्थापकं तद्वत् प्रकृतेऽप्य-सिद्धासिद्धतानिरूपकयोः पौर्वापर्यं नियामकमिति कल्पनेन कार्यकालपक्ष-माश्रित्य परिभाषात्वकल्पनेनापि निर्वाहात्। अधिकारत्वे प्रतिसूत्रमावृत्त्या गौरवाच्च। न च परिभाषात्वे सपादसप्ताध्याय्यामपि प्रवृत्त्यापत्तिरिति वाच्यम्। मध्ये पाठेन विप्रतिषेधसूत्रेण चांशिकप्रवृत्तिकल्पनात्। न च विनि-गमनाविरहात्त्रिपाद्यामप्रवृत्तिः सपादसप्ताध्याय्यां प्रवृत्तिरिति किं न स्यादिति

"श्चुत्वं धुटि सिद्धं वाच्यम्" इत्यादि चरितार्थम् । एवं च यत्रानुवृत्तिस्तस्यासिद्धत्वम् । पूर्वत्वञ्च क्वचित्सपादसप्ताध्याय्याः क्वचित्सूत्रा-

---

वाच्यम् । श्चुत्वं धुटीत्यादेर्विनिगमकत्वात् । एतेन विनिगमनाविरहेण त्रिपाद्यामप्रवृत्त्यापत्तिरिति शब्दरत्नोक्तमपास्तम् । न चाधिकारत्वे दादेरित्याद्यपवादशास्त्रैकवाक्यतापन्नपूर्वपदार्थे होढ इत्याद्युत्सर्गातिरिक्तत्वेन सङ्कोचस्सम्भवति परिभाषात्वे तु स न स्यादिति वाच्यम् । असिद्धपरिभाषादिवद्दादेरित्यादिसूत्रोपस्थितपूर्वत्वोपलक्षितधर्मावच्छिन्ने होढ इत्याद्यतिरिक्तत्वेन सङ्कोचसम्भवादित्याहुः । तन्न । विप्रतिषेधसूत्रे स्वापेक्षया पौर्वापर्यस्य नियामकत्वे फलाभावेन सूत्रारम्भसामर्थ्यादाकडारसूत्रेणोत्तरसंज्ञानां विरोधप्रदर्शनोत्तरमेतत्सूत्रप्रणयनादुपस्थितविरोधस्यैतद्विषयत्वमिति प्रतिसन्धानाच्च बाध्यबाधकयोः पौर्वापर्यस्य नियामकत्वेऽप्यत्रोपस्थितपौर्वापर्यपरित्यागे मानाभावात् । श्चुत्वं धुटीत्यादेर्ज्ञापकत्वाश्रयणे गौरवाच्च । परिभाषात्वेऽपि परिभाषाणामात्मभेदकल्पनया विध्येकवाक्यताया अन्यत्रोपपादितत्वेन लाघवानवकाशाच्च । त्रिपाद्यामेवास्याः प्रवृत्तिर्न तु सपादसप्ताध्याय्यामित्यत्र मध्ये पाठादीनां ज्ञापकत्वाश्रयणे गौरवाच्च । सूत्रोपस्थितपूर्वशास्त्राणामेव परिभाषोपस्थापकलिङ्गत्वापत्तौ तेषां बहुतरत्वेन तत्तल्लिङ्गानुरोधेन परिभाषाभेदकल्पनापत्त्या अधिकारत्वपक्षापेक्षया वाक्यबाहुल्यप्रसङ्गाच्च । मध्ये पाठेन श्चुत्वं धुटीत्यादिवार्तिकानुरोधेन त्रिपाद्यामेव प्रवृत्त्यङ्गीकारे त्रिपादीस्थपूर्वदृष्ट्या परस्यासिद्धत्वमिति सपादसप्ताध्यायीस्थपूर्वदृष्ट्येत्यर्थानापत्तौ बहूपप्लवस्स्यात् । नलोपस्सुबित्यादेरुक्तार्थाभावज्ञापकत्वाश्रयणे तु क्लेश इति दिक् । तदेतद्ध्वनयन्नाह । यत्रानुवृत्तिरित्यादि । नन्वधिकारत्वे पदैकवाक्यतयान्वये पूर्वशास्त्रविषयेऽसिद्धत्वाश्रयो ढो भवतीत्यादिक्रमेण बोधे सर्वस्यापि त्रैपादिकशास्त्रविषयस्य पूर्वशास्त्रविषयत्वेन त्रैपादिकविधीनामानर्थक्यापातः । पूर्वशास्त्रकर्तव्यतायामसिद्धत्वाश्रयो ढो भवती-

न्तरसहितायाः। तत्रायमर्थः। "ह्रो ढ" इत्यादावग्रेऽपस्थितौ वाक्यभेदेनान्वयः। ह्रस्य ढो भवति इदश्च शास्त्रं पूर्वत्रासिद्धमिति। अत एव "न मु ने" इत्यादिभिस्तन्निषेध उपपद्यते। पूर्वत्रेति सङ्ग्राहकमेव।

---

त्यर्थाङ्गीकारेऽप्यवधारितकालस्य प्राधान्याद्विधेयविशेषणत्वे ह्रस्य् एहीत्यत्र कस्यापि पूर्वशास्त्रस्य कर्तव्यत्वाभावाल्लोपानापत्तिः, असिद्धत्वविशेषणतायामपि यादृशत्रैपादिकप्रवृत्त्युत्तरं पूर्वशास्त्रकर्तव्यत्वाभावस्तत्र विशेषणाभावप्रयुक्तविशिष्टाभावमर्यादया त्रैपादिकविधेरभावापत्तिः। यथाकथंचित्तत्र तत्र निर्वाहेऽपिकार्यासिद्धत्वानुप्रवेशापत्तिरित्यत आह। वाक्यभेदेनेति। वाक्यैकवाक्यतयेत्यर्थः। अत एवेति। वाक्यैकवाक्यताया स्वीकारादेवेत्यर्थः। नमुनेइत्यादिभिरिति। आदिना न मु टादेशे नलोपस्सुबित्यनयोस्सङ्ग्रहः। अत एव बहुवचनं सङ्गच्छते। तन्निषेधः। असिद्धत्वनिषेधः। अन्यथा प्राधान्याददसोसेरित्यादौ नाभावे कर्तव्ये असिद्धत्वाश्रयमुत्वस्यैव निषेधापत्त्या अमुनेत्याद्यसिद्धिः। टायामादेश इत्यर्थकवार्तिकासङ्गतिश्चेति भावः। नन्वस्तु पदैकवाक्यता नमुने इत्यत्रोपस्थितमसिद्धमिति नञर्थप्रतियोगितयाऽन्वेति। तथा च मु असिद्धं नेत्येवेहार्थस्सम्पद्यत इति चेन्न। अदसोसेरिति सूत्रेणासिद्धत्वाश्रयमुत्वविधानेनासिद्धत्वस्यानेन निवृत्तौ सन्नियोगशिष्टन्यायेन मुत्वस्यापि निवृत्त्यापत्तेः। न च टायामादेश इत्यर्थानुरोधेन स्वीकृतस्य कृतेऽप्यसिद्धत्वाभावबोधकवचनस्य वैयर्थ्यापत्त्या तत्सामर्थ्यात्सन्नियोगशिष्टन्यायाप्रवृत्तिरिति वाच्यम्। ज्ञापकाश्रयणे गौरवात्कार्यासिद्धत्वापत्तेश्चेति दिक्। ननु पूर्वत्रेति श्रुत्या पूर्वत्वमसिद्धतानिरूपकतावच्छेदकमिति लभ्यते, तथा च यत्र निरूपकतावच्छेदकं तद्दृष्ट्या असिद्धत्वं नेति वक्तुमशक्यत्वेन न मु ने इत्यादीनां वैयर्थ्यापत्त्या तत्सामर्थ्यात्तत्तद्विधिष्वस्यानुपस्थितावन्यदृष्ट्यापि तेषामसिद्धत्वं न स्यात्। न मु ने इत्यादौ ने इत्यादेर्वैयर्थ्यं चेत्यत आह। सङ्ग्राहकमेवेति। असिद्धतानिरूपक-

शृङ्गग्राहिकयैव तु तत्तच्छास्त्रं प्रति तस्यासिद्धत्वं प्रतिपाद्यते। तेनापवादस्य यं प्रत्यपवादत्वं तत्रासिद्धत्वाभावेऽप्यन्यत्रासिद्धत्वं भवत्येव।

---

तावच्छेदकानां तत्तच्छास्त्रत्वानां शब्दत उपलक्षणं सदनुगमकं पूर्वत्वमेकबोधेनैवासिद्धतालाभार्थं, न तु तस्य निरूपकतावच्छेदकत्वमिति भावः। शृङ्गग्राहिकयैवेति। प्रातिस्विकधर्मपुरस्कारेणैवेत्यर्थः। प्रतिपाद्यतइति। एकयैवोपस्थित्येत्यर्थः। यथा देवदत्तस्तिष्ठति यज्ञदत्तो विष्णुमित्रश्च तानानयेत्यादावुपलक्षणीभूतबुद्धिविषयतावच्छेदकत्वेनैकेनानुगतदेवदत्तत्वादिनानाधर्मावच्छिन्नानामेकबोधविषयत्वं तद्वदिति भावः। भवत्येवेति। तत्तदपवादशास्त्रसामर्थ्यात्तत्तदपवादशास्त्रासिद्धतानिरूपकतावच्छेदकत्वस्य तत्तदुत्सर्गशास्त्रवृत्तितद्व्यक्तित्वे अस्वीकारेऽपि इतरेषामस्वीकारे मानाभाव इति भावः। अत एव न मु न इत्यादौ ने इत्यादि चरितार्थम्। एवं च दादेरित्यस्य होढ इत्येतद्दृष्ट्याऽसिद्धत्वाभावेऽपि वत्वेऽसिद्धत्वं सेत्स्यति। एतेन तत्तच्छास्त्रदृष्ट्या वाक्यभेदेनासिद्धत्वप्रतिपादने ग्रन्थतात्पर्यं परिकल्प्येदं चिन्त्यं तत्र तत्रोपस्थितपूर्वपदार्थे तत्तच्छास्त्रातिरिक्तत्वेन सङ्कोचेनैवोपपत्तौ वाक्यभेदाङ्गीकारे गौरवादिति वदन्तश्चन्द्रिकाकाराः, तुशब्दस्यारुचिबोधकतां स्वीकृत्य मूलरक्षणपक्षपाती श्रीधरश्च परास्ताः। मूलस्य वाक्यभेदे तात्पर्याभावात्। नन्वेवं सय्यँन्तेत्यादावनुस्वारस्य द्वित्वेऽपि परस्य वापदान्तस्येति परसवर्णे तस्यानुस्वारस्य ययीत्येतदपवादतया सिद्धत्वेन अनुस्वारस्य ययीति पूर्वस्य परसवर्णे त्रियकारसिद्ध्या द्वित्वे परसवर्णं सिद्धं वक्तव्यमिति वार्तिकानुत्थितिरेव स्यादिति चेन्न। प्राप्तविभाषाणां पक्षेऽभावमात्रबोधकतया परानुस्वारस्यापि अनुस्वारस्य ययीत्यनेनैव परसवर्णस्य विधेयतया स्वविधेयस्य स्वस्मिन्निमित्तता न सम्भवतीत्याशयेन वार्तिकोत्थितेः। नन्वामन्त्रितं पूर्वमविद्यमानवदित्यतः अविद्यमानवदित्यनुवृत्त्यैव सिद्धे असिद्धमिति व्यर्थम्। न च नामन्त्रितमिति निषेधेन विच्छिन्न-

असिद्धमिति । सिद्धं निष्पन्नं प्रवृत्तम् । सिद्धश्च प्रत्ययविधा-विित्यादौ तथा दर्शनात् । तद्भिन्नमसिद्धमनिष्पन्नमप्रवृत्तम् । यद्यपि लोकेऽनाहार्यज्ञानस्यैव प्रवर्त्तकत्वं निवर्त्तकत्वञ्च दृष्टं तथापीह शास्त्रप्रामाण्यादाहार्यारोपोऽपि शास्त्रप्रवृत्तावप्रवृत्तौ च नियामक इति बोध्यम् । अत्र कार्यासिद्धत्वे अमु इत्यासिद्धिः । अद अ औ इति स्थिते परत्वान्मुत्वे तस्य सपादसप्ताध्यायीस्थकार्यदृष्ट्याऽसिद्धत्वेऽपि देवदत्तहन्तृहतन्यायेनाकाराभावेन

---

त्वान्नानुवृत्तिरिति वाच्यम् । नेड्वशीत्यत्र नञ्सम्बद्धस्यपीण्मात्रस्यार्धधातुकस्येडित्यत्रानुवृत्तिं स्वीकृत्य तत्रत्येड्ग्रहणप्रत्याख्यानपरभाष्यप्रामाण्येन तन्मात्रे स्वरितत्वप्रतिज्ञाबलादनुवृत्तौ बाधकाभावादित्यत आह । सिद्धं निष्पन्नमिति । अयं भावः । तदनुवृत्त्याऽसिद्धासिद्धतानिरूपकशास्त्रयोर्युगपत्प्राप्तिस्थले परशास्त्रेऽविद्यमानत्वारोपेण निस्सपन्नं पूर्वस्य प्रवृत्त्यर्थसिद्धावपि त्रैपादिकप्रवृत्त्युत्तरकालमात्रप्रवृत्तिके पूर्वशास्त्रे कर्तव्ये परशास्त्रेऽविद्यमानत्वारोपेऽपि तत्कृतकार्यस्य कुलालाद्यविद्यमानतादशायां घटस्येव विद्यमानत्वात् किम्वुक्तमित्यादौ तत्प्रयुक्तमनुस्वारादि स्यात् । असिद्धग्रहणे तु परशास्त्रस्याप्रवृत्तत्वज्ञानाद्वकारनिमित्तकोऽनुस्वारो न भवतीति सर्वेष्टसिद्धिरिति । नन्वसिद्धग्रहणं मास्तु । अविद्यमानवदित्यनुवर्तताम् । कार्यस्यैवासिद्धत्वं स्वीक्रियते तथाच वकारस्याविद्यमानवत्त्वान्नानुस्वारापत्तिरत आह । अत्रकार्येति । न्यायेनेति । ननु देवदत्तहन्तृहननन्यायो नात्र प्रवर्तते । अन्यथा अद्+अ+आ इत्यस्यामवस्थायां मुत्वे पररूपाप्रवृत्त्याऽकारान्तस्यैवाङ्गत्वेन नाभावकर्तव्यताया अभावेन न मु ने इत्यस्य वैयर्थ्यप्रसङ्गात् । न्यायाप्रवृत्तौ तु मुत्वासिद्धत्वेनाकारोजीवने पररूपे तन्मात्रोद्देश्यकविकाराभावेन लक्ष्ये लक्षणस्येति न्यायाप्रवृत्तौ पुनर्मुत्वे घ्यन्तत्वेन नाभावकर्तव्यतायास्सत्त्वेन निषेधसाङ्गत्यम् ।

परस्पाद्यनापत्तिः । अतिदेशस्याऽरोपरूपत्वान्निरधिष्ठानारोपास-

---

न च न्यायप्रवृत्तावपि मुत्वे अमु+अ+आ इत्यवस्थायामिनादेशे गुणे अमु+एन इति स्थिते तस्य परादिवद्भावेन टात्वात् पूर्वस्यैकदेशविकृतन्यायेनाङ्गत्वान्नादेशकर्तव्यता सुलभेति वाच्यम् । आयसावित्यत्र सान्तस्याङ्गसंज्ञायां विभक्त्यैकादेशस्य स्थानिवद्भावस्याकरोक्तत्वेन तद्रीत्या प्रकृतेऽप्यचःपरस्मिन्निति स्थानिवद्भावेन म्वन्ते अङ्गत्वस्य दुर्निरूपत्वात् । अत एव धनेनेत्यादौ नाल्लोप इति चेत्तदपि शास्त्रासिद्धत्व एव ज्ञापकमस्त्वित्याशयात् । परस्पाद्यनापत्तिरिति । ननु अमु+अ+औ इति स्थिते मुत्वस्यासिद्धत्वे पूर्वाकारमादाय पररूपं भवति। नच मुत्वस्यासिद्धत्वेऽपि तदधिकरणकालस्य सिद्धतया तेन व्यवधानान्न पररूपप्रसङ्ग इति वाच्यम् । वर्णानामसिद्धत्वे तदधिकरणकालस्य तत्र दुर्ज्ञेयतया व्यवधायकत्वायोगात् । अत एव राजाश्वे दीर्घसिद्धिः । अन्यथा नलोपेऽपि तदधिकरणकालव्यवायात्तदसिद्धिः । अत एव सुब्विधौ कृति तुग्विधौ च नलोपासिद्धत्ववचनं सार्थकम् । अन्यथा नकाराधिकरणकालव्यवधानात्तत्तद्विधीनामप्राप्त्या तद्वैयर्थ्यं स्पष्टमेव । अत एवेमंमे गङ्गे इति मन्त्रे मेशब्दमाश्रित्य सर्वेषां निघातसिद्धिरिति चेन्न । इष्टस्य पररूपस्यानापत्तेरित्याशयात् । ननु पूर्वत्रासिद्धमित्येव न्यस्यते असिद्धमित्यस्याप्रवृत्तमित्येवार्थः । प्राधान्यात्कार्यसिद्धत्वमेवास्तु । कार्यस्याप्रवृत्तत्वज्ञानादेवदत्तहन्तृन्यायस्य नावतारः। तथा च पररूपे मुत्वे च रूपसिद्धिः । न च पररूपस्योकारनिवर्तकत्वमनुपपन्नमिति वाच्यम् । न हि रजतत्वभ्रमेति न्यायेनाकाराबुद्ध्या उकारनिवर्तकत्वेन वृद्धौ रूपसिद्धेः । न चोकारनिवृत्तावपि मकारस्य सत्त्वेन दात्परत्वाभावात्पुनर्मुत्वं न स्यादिति वाच्यम् । सन्नियोगशिष्टन्यायेन मकारस्यापि निवृत्तेः । न च लक्ष्ये लक्षणस्येति न्यायेन दकारस्य पुनर्मकाराप्रातौ तत्सन्नियुक्तमुत्वमपि न स्यादितिवाच्यम् । ऊकारसन्नियुक्त-

मकारविधायकस्य लक्षणान्तरत्वात्। किं च सन्नियोगशिष्टन्यायस्यान्यतरस्यापाये सम्भाविते पूर्वमुभयोरप्रवृत्तिरित्येवार्थः। अत एव पञ्चेन्द्राण्यो देवता अस्य पञ्चेन्द्रमित्यत्र ङीपो लुक्यकारश्रवणसिद्धिः। अन्यथा सवर्णदीर्घोत्तरमानुकोनिवृत्तावकारश्रवणं दुर्लभम्। एवं च कार्यासिद्धत्वे नेदं दूषणम्। न च अद्+अ+औ इति स्थिते परत्वान्मुत्वे अमु+अ+औ इति स्थिते मुत्वस्यासिद्धत्वादकारबुद्ध्या उकार एव पररूपं तस्य पूर्वस्य स्थितिं प्रत्येनेय इत्यादाविव स्थानिवद्भावेनोकारबुद्धौ सन्नियुक्तयोरन्यतरापायबुद्ध्यभावेन मकारस्यानिवृत्तौ दात्परत्वाभावेनोत्वस्य पुनरप्राप्त्या अम् इत्यसिद्ध्यापत्तिरिति प्रकाशकृदुक्तरीत्या दोषसङ्गतिरितिवाच्यम्। अचःपरस्मिन्निति सूत्रदृष्ट्याप्युकारस्यासिद्धत्वेन तेनोकारबुद्धेरानेतुमशक्यत्वेन मकारनिवृत्तेरसम्भाव्येन पुनर्मुत्वप्रवृत्तौ बाधकाभावात्। अत एवारुश्चरादिग्रहणं मनोरथसङ्ग्रहार्थं कृतम्। तत्र हि मनर्+रथ इति स्थिते हशिचेत्युत्वे रोरीति लोपे च प्राप्ते अधुना परत्वाद्रोरीति लोपे तस्यासिद्धत्वेऽप्युच्चारणप्रसङ्गरूपस्थानषष्ठ्यर्थाभावेनोत्वानापत्तिः। न च लोपेऽप्रवृत्तत्वज्ञानेन, तत्कृतस्थानिनिवृत्तिबुद्धेरभावेनोच्चारणप्रसक्तिस्सुलभेति वाच्यम्। एवमप्युत्वात्परत्वाड्ढलोप इति दीर्घे अत इति तपरकरणेनोत्वानापत्तेः। न च पूर्वोपस्थितनिमित्तकत्वमुत्वे इति वाच्यम्। पूर्वत्रासिद्धमित्यतिदेशसापेक्षत्वेनोत्वस्यैव विलम्बोपस्थितिकतया बहिरङ्गत्वादिति दिक्। वस्तुतस्तु सन्नियोगशिष्टन्यायस्य सन्नियुक्तयोरन्यतरापाये सम्भाविते उभयोरपि निवृत्तिरित्येवार्थः। तावतैव पञ्चेन्द्रसिद्धेः, न तु पूर्वमुभयोरप्रवृत्तिरिति कार्यासिद्धत्ववादिभिस्स्वीकर्तुं शक्यते, तन्मते कार्यस्य लक्ष्यसमवायित्वात्मकप्रवृत्तिमन्तराऽसिद्धत्वस्य वक्तुमशक्यत्वात्। तथा च अमू, अमूभ्यां, अमूदृगित्यादिदीर्घोकारविधायकस्थले ऊकारसन्नियुक्तमकारविधायकस्य लक्षणान्तरत्वेन लक्ष्ये लक्षणस्येति न्याया-

**म्भवेन कार्यप्रवृत्तेरत्र पक्षे आवश्यकत्वात् । शास्त्रासिद्धत्वे तु यत्राप्यन्तरङ्गत्वात्रेपादिकं प्रवृत्तं तत्रापि तत्तच्छास्त्रे एवाभावारोपेण**

---

विषयत्वेपि अमुमित्यादिहस्वोकारविधानस्थले तत्सन्नियुक्तमकारविधायकस्य लक्षणान्तरत्वाभावात् न्यायविषयतया मुत्वानापत्तिर्दोषःकार्यासिद्धत्ववादे । न च निरुक्तदिशा अमुनेत्यत्र पररूपोत्तरं मुत्वाभावे नाभावकर्तव्यताया अभावे सूत्रवैयर्थ्याल्लक्ष्ये लक्षणमिति न्यायो मुत्वविषये न प्रवर्तत इति ज्ञापनान्न दोष इति वाच्यम् । तस्यापि शास्त्रासिद्धतायां ज्ञापकतास्वीकारे लाघवात्कार्यासिद्धतायां बहुवारं मुत्वप्रवृत्तिनिवृत्त्योस्सन्नियोगशिष्टन्यायसंचारस्य चावश्यकतया गौरवात् । यत्तु अमी इत्यादौ पूर्वं मुत्वे दात्परैकाराभावेनैत ईदिति-सूत्रमपि व्यर्थं सदत्रैव ज्ञापकमस्त्विति शब्दरत्नोक्तंचिन्त्यम् । एत ईदित्यस्य मुत्वापवादतया उपसञ्जनिष्यमाणन्यायेन मुत्वाप्रवृत्तेरिति तन्न । उपसञ्जनिष्यमाणन्यायस्योत्सर्गस्यापवादात्तन्निमित्तसम्पादकशास्त्राच्च पूर्वं प्रवृत्तावपवादशास्त्रवैयर्थ्यमित्येतन्मूलकतया प्रकृते मुत्वेन गुणादिशास्त्रबाधे अपवादशास्त्रवैयर्थ्यात्तेन प्रकृतन्यायप्रवर्तनापेक्षया लाघवेन शास्त्रासिद्धत्वमेव ज्ञाप्यतामित्याशयेन शब्दरत्नसंगतेः । न्यायप्रवर्तने तु अपवादशास्त्रनिमित्तसम्पादकानां तत्तच्छास्त्राणां मुत्वबाधकत्वकल्पनायां गौरवं स्पष्टमेव । तदेतत्सूचितं "सूत्रमपि व्यर्थं सदत्रैव ज्ञापकमस्त्विति" तदपवादनिमित्तसम्पादकगुणादीनां प्राबल्यबोधकत्वव्यवच्छेदकैवकारं कुर्वता शब्दरत्नकृता । एतेन शब्दरत्नोक्तिखण्डनमात्रपरं युक्तियुक्तैस्सर्वैस्सोढव्यमितिप्रकाशकृदुक्तमपास्तमित्यलम् । ननु किम्वुक्तं गोमानित्यादौ वत्वसंयोगान्तलोपयोः प्रवृत्तिकाले कस्यापि पूर्वशास्त्रस्य कर्तव्यताया अभावेन तयोः पूर्वं प्रवृत्तौ पश्चाच्छास्त्रस्यासिद्धत्वेऽपि जातस्य कार्यस्यानिवृत्तेरनुस्वारनलोपौ दुर्वारौ कार्यासिद्धत्वे तु जातस्य कार्यस्यैव निवृत्तिरिति न दोष इत्यत आह । **शास्त्रासिद्धत्वेत्विति** । **अन्तरङ्गत्वादिति** । असिद्धतानिरूपकशास्त्रा-

**तन्निवृत्तिबुद्धेरभाव आदेशबुद्ध्यभावो लक्ष्ये जातत्वबुद्ध्यभावश्च। जायमानं कार्यं त्वादेशे एव स्थानिबुद्ध्या प्रवर्त्तते। "न हि रजत-भ्रमप्रयुक्ता प्रवृत्तिः शुक्तिं न गोचरयति" इति न दोषः। यत्र तु सहप्रसङ्गस्तत्राप्रवृत्तिरेव अभावारोपात्। न च "पूर्वत्र न" इत्येव सूत्रमस्त्विति वाच्यम्। पूर्वशास्त्रप्राप्तौ निषेध इत्यर्थे "नलोपः सुप्" इति सूत्रासङ्गतेः। तद्धि नियमार्थम्। त्वद्रीत्या राजन् अश्व इत्यस्यां दशायाङ्कस्यापि पूर्वशास्त्रस्याप्राप्त्यैतन्निषेधाप्रवृत्तौ नलोपे जाते "भुक्तवन्तम्" इति न्यायेनैतदप्रवृत्तौ राजाश्वे दीर्घसिद्ध्या नियमानुपयोगात्। राजभ्यामित्यादावपि दीर्घापत्तेश्च। पूर्वशास्त्रविषयसम्भावनायामित्यर्थे राजभ्यामित्यादौ नलोपे सुब्विधिदीर्घविषयसम्भावनया सर्वथा नलोपानापत्तेरिति दिक्॥**

---

प्राप्तिकालिकप्राप्तिकत्वादित्यर्थः। 'एतेन तादृशलक्ष्याभावादिदं चिन्त्यमिति' अन्तरङ्गपरिभाषायास्त्रिपाद्यामप्रवृत्तेरिदं चिन्त्यमिति, इदं प्राचामनुरोधेनेति, एतादृशस्यान्तरङ्गपदार्थत्वाभावादिदं चिन्त्यमिति च वदन्तः परास्ताः। ननु तत्रारतीत्यादौ दीर्घदृष्ट्या रोरीति शास्त्रस्यासिद्धत्वेन लोपस्य लक्ष्ये जातत्वबुद्ध्यभावेन रेफद्वयवतो दीर्घविधायकेन साधुत्वबोधप्रसङ्ग इत्यत आह। **जायमानं कार्यंत्विति**। तथाचादेशघटित एव स्थानिबुद्ध्या साधुत्वबोधनाद्रेफद्वयवत्तावुध्या एकरेफवतस्साधुत्वं बोध्यत इति भावः। ननु पूर्वत्र नेत्येव न्यस्यताम्। नलोपस्सुबिति सूत्रं मास्त्वित्यपरं लाघवमित्यत आह। **राजभ्यामित्यादाविति**। **दिगिति**। दिगर्थस्तु शास्त्रजन्यलक्ष्यसंस्कारकवाक्यार्थबोधविषयत्वमेव कार्याणां सिद्धिः तदाश्रयासिद्धत्वमेव कार्यासिद्धत्वमिति स्वीकारे पूर्वपरशब्दयोर्लक्षणाश्रयणरूपं गौरवम्। न च शास्त्रासिद्धत्वेऽपि कर्तव्यतायाः कार्यद्वारिकायास्स्वीकारे गौरवमिति वाच्यम्।

बाह्यप्रयत्न इति । काकलकाधस्ताद्गलविवरसङ्कोचविकासश्वासोत्पत्तिध्वनिविशेषरूपनादतद्विशेषरूपघोषाल्पघोषप्राणाल्पत्वम - हत्त्वरूपकार्यकरत्वमेषाम् । तथाहि—

आत्मा बुद्ध्या समेत्यार्थान्मनो युङ्क्ते विवक्षया ।
मनः कायाग्निमाहन्ति स प्रेरयति मारुतम् ॥
सोदीर्णो मूर्ध्न्यभिहतो वक्त्रमापद्य मारुतः ।
वर्णान् जनयते, इति शिक्षायामुक्तम् ।

आत्मान्तःकरणं संस्काररूपेण स्वगतानर्थान् बुद्ध्या स्ववृत्त्या

---

कर्तव्यशब्दस्य कर्तव्यबोधकैकया लक्षणया निर्वाहे लक्षणाद्वयाश्रयणगौरवस्यापराहतत्वात् । किं च पूर्वत्रेति कारकविभक्तेर्बलवत्त्वाद्विषयसप्तमीति न लक्षणावश्यकीति लाघवम् । नचैवं गोमानित्यादौ नलोपशास्त्रविषयतया पूर्वं संयोगान्तलोपानापत्तिरिति वाच्यम् । शास्त्रे चेतनत्वारोपेण परशास्त्रं किंचिद्वाक्यार्थसमर्पकतया पूर्वशास्त्रबुध्यगोचरमित्यर्थेनादोषादिति दिक् ॥

बाह्यप्रयत्नानां बाह्यत्वं विवारत्वादिकं चोपपादयति । काकलकेत्यादिना । अधस्तादित्यनेन बाह्यत्वंसूचितम् । सङ्कोचविकासेत्यादिना विवारत्वादिकं सूचितम् । ननु मूलेऽघोषशब्दस्य घोषाभावार्थकतयाऽभावस्य नित्यत्वेन तस्य कार्यत्वमनुपपन्नमतो नञोऽल्पार्थकत्वमभिप्रेत्याह । अल्पघोषेति । आत्मा अन्तःकरणमिति । वैयाकरणानां सांख्यानुयायित्वेन तन्मते ज्ञानेच्छादेरन्तः करणवृत्तिविशेषत्वाङ्गीकारादिभावः । एतेनात्मपदस्य जीवपरत्वेऽपि बाधकाभावादिदमसङ्गतमित्याचार्योक्तमपास्तम् । नैयायिकमतरीत्या जीवपरत्वाङ्गीकारे तन्मते मनस इच्छाश्रयत्वस्य बाधितत्वेन मनो युङ्क्ते विवक्षयेति वाक्यशेषासङ्गतेः । तन्मते मनसोऽणुत्वेन तस्याभिघाताख्यसंयोगासंभवा-

समेत्यैकबुद्धिविषयान् कृत्वा तद्बोधनेच्छया मनो युक्तं करोति, तदिच्छावन्मनः कायाग्निमाहन्ति, स कायाग्निः, सोदीर्णः स मारुतः उदीर्णः ऊर्ध्वं प्रेरित इत्यादिस्तदर्थः। एवञ्च शब्दप्रयोगेच्छयोत्पन्नयत्नाभिहताग्निना नाभिप्रदेशात्प्रेरितो वायुर्वेगान्मूर्धपर्यन्तङ्गत्वा प्रतिनिवृत्तो वक्त्रं प्राप्य उक्तयत्नसहायेन तत्तत्स्थानेषु जिह्वाग्रादिस्पर्शपूर्वकं तत्तत्स्थानान्याहत्य वर्णानभिव्यनक्ति। ततो यत्नविशेषेण गलबिलविकासादीन् करोति, तत्र ये तत्तत्स्थानाभिघातका यत्नास्ते आस्यान्तर्गततत्तत्कार्यकारित्वादाभ्यन्तरा इत्युच्यन्ते। गलबिलविकासादिकराश्चास्यबहिर्भूतदेशे कार्यकरत्वाद्बाह्या इति। मात्राकालिकत्वादिरूपह्रस्वत्वादिकन्तु वाय्वल्पत्वमहत्त्वकृतमिति नाभिप्रदेशात्प्रेरकयत्न एव कश्चिद्विलक्षणोऽल्पं वायुं प्रेरयति कश्चिदधिकमिति तस्य वायुप्रेरणारूपकार्यमास्यबाह्यदेशमिति तदपि बाह्यमेव। अत एव अइउण्सूत्रे भाष्ये

---

न्मनः कायाग्निमाहन्तीत्युत्तरग्रन्थासङ्गतेश्च। तन्मते यत्नस्य द्विक्षणावस्थायितया यत्नस्य वर्णनाशावधिस्थितिप्रतिपादकसंहितासंज्ञासूत्रस्थभाष्यविरोधाच्चेति दिक्। शब्दातिरिक्तार्थानां वक्तुमिच्छाया असम्भवादाह। तद्बोधनेच्छयेति। मनसोऽन्तःकरणांशविशेषरूपतयान्तःकरणवृत्तीच्छया मनसो योगः। उत्पन्नो यत्नो यस्येति बहुव्रीहिः। अन्यपदार्थो मनः। ननु कायाग्न्यभिघातजनक एकः स्पर्शादिजनक एकः गलबिलविकासादिजनकाः केचन ह्रस्वादिजनक एक इति एकवर्णोच्चारणे यत्नबाहुल्यं भवदुक्तरीत्या लभ्यते। तच्चायुक्तम्। संहिता संज्ञा सूत्रस्थभाष्यविरोधात्। तत्र हि येनैव प्रयत्नेनैको वर्ण उच्चार्यते विच्छिन्ने उपसंहृत्य तमन्यमुपादाय द्वितीयः प्रयुज्यते तथा तृतीय स्तथा चतुर्थ इत्यनेन वर्णनाशावधिप्रयत्नस्थितिरित्युक्तम्। तथा च कथं प्रयत्ननाना-

ह्रस्वत्वादिजनकयत्नस्यास्य विशेषणेन सवर्णसूत्रेऽग्रहणमित्युक्तम् । यद्यप्येक एव यत्नः सर्वकार्यजनको वर्णनाशकश्चेति "परः संनिकर्षः" इति सूत्रे भाष्ये उक्तं, तथापि तत्तत्कार्येणोपाधिना एकस्मिन्नपि भेदमारोप्य तथा तथा व्यवहार इति बोद्धव्यम् ।

---

त्वकथनमिति शङ्कते । यद्यपीति । सर्वकार्येति । अग्न्याघाततत्तत्स्थानस्पर्शगलविवरविकासादिसर्वकार्येत्यर्थः । स्वोत्पादितवर्णनिष्ठह्रस्वत्वादिसर्वकार्यजनक इत्यर्थ इति प्रकाशकृदुक्तं तु न सम्यक् । अग्न्याघातादितत्तत्कार्याणां वर्णनिष्ठत्वाभावात् । समाधत्ते । तथापीति । तथा तथा व्यवहार इति । तथा चौपाधिक एव भेदव्यवहारो न तु वास्तविक इति न भाष्यविरोध इति भावः । यत्त्वाचार्यैस्ततो यत्नविशेषेणेति प्रतीकमुपादायेदमेक एव यत्नः कार्यजनको वर्णनाशकश्चेति परस्सन्निकर्ष इति सूत्रस्थभाष्यविरुद्धम् । तस्मात्तेनैव यत्नेनेति वक्तुमुचितम् । औपाधिकभेदाभिप्रायेण वा कथं चिद्योज्यमित्युक्तम् । तत्तु यद्यपीत्याद्येतद्ग्रन्थापर्यालोचनमूलकमिति प्रतिभाति । यदपि वस्तुतस्तु यथा लोके ग्रामान्तरगमनप्रयोजकयत्नवानवान्तरयत्नैः पथि भोजनादिकार्यकृद्भवति तद्वदिहाप्यवान्तरसर्वप्रयत्नजनकमहाप्रयत्नैक्येऽपि अनुभवसिद्धानां तत्तद्ध्रस्वत्वादिप्रयोजकप्रयत्नानामपलपितुमशक्यत्वेन चिन्त्यमिदम् । भाष्यं तु महाप्रयत्नैक्यमादाय प्रवृत्तमिति न तद्विरोधः । एवं च कार्यभेदारोपः प्रयत्ने विफल इति बोध्यमित्युक्तं प्रकाशकृता । तन्न । दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यात् । तथा हि, गमनविषयकयत्नस्य तत्काराङ्गयावत्कार्यविषयकत्वेऽपि तदनङ्गभोजनादिविषयकताया वक्तुमशक्यत्वेन तत्र यत्नान्तरापेक्षा । किं च दिनसमूहसाध्यकार्यविषयक एको यत्नो न संभवति, मध्ये सुषुप्त्यादावन्तःकरणस्यैव लयेन तदाश्रयवृत्तेरपि नाशात् । महाप्रयत्नोऽपि तावद्विषयको न संभवति किं तु संस्कारवशात्सजातीयवृत्त्यन्तरोदयेन

**उदात्तादिजनकयत्नस्याभ्यन्तरकार्यकरत्वेऽपि उदात्तादिशब्दैर्विना बोधितानां तेषां "अनङ्गुदात्त" इत्यनेनाविवक्षाबोधनात् सवर्णसञ्ज्ञानुपयुक्तत्वान्तरतम्यपरीक्षोपयुक्तत्वरूपसादृश्येन बाह्येषु गणनम्। इदं ह्रस्वत्वादेरानुनासिक्यस्य चोपलक्षणम्॥**

---

कार्यनिर्वाहः। प्रकृते तु वर्णनाशावधिजनितसर्वकार्याणां प्रधानकार्याङ्गतया तावद्विषयको यत्न एक एवाङ्गीक्रियते वर्णोत्पादकयत्नस्य दीर्घकालवृत्तितया न तस्य मध्ये विच्छेदशङ्केति न तत्र यत्नान्तरापेक्षा। अत एव लक्ष्यच्छेदनानुकूलयत्नेन विसृष्टो बाणो यत्नान्तरमनपेक्ष्यैव मध्यस्थतृणपर्णादिच्छेदको भवति, तद्वद्यत्नविशेषविसृष्टो वायुरेव तत्तत्कार्यजनको भवति विना यत्नान्तरापेक्षामिति यत्नान्तरसद्भावे प्रमाणाभावात् प्रधानकार्याङ्गतत्तत्कार्यविषयकेण प्रधानकार्यानुकूलयत्नेनैव सर्वकार्यनिर्वाहेऽनेकयत्नकल्पने गौरवाच्च युक्त एव मूलोक्तारोपः। तत्र प्रकाशकाराणामनुभव एव प्रमाणमिति चेत्स चानुभवः कीदृश इति स च प्रयत्नः कुत्रोत्पत्स्यत इति कीदृश इति त एव प्रष्टव्या इत्यलम्। नन्वेतावता प्रबन्धेनास्यान्तर्गतकार्यकारित्वमाभ्यन्तरत्वं बहिःकार्यकारित्वं बाह्यत्वमिति सिद्धम्। तथा चोदात्तादिजनकस्यास्यान्तर्गतकार्यकारिणो यत्नस्याभ्यन्तरत्वलाभात्कथं तद्भेदे सावर्ण्यसिद्धिरित्याशङ्क्य परिहरति। **उदात्तादिजनकेत्यादिना।** **अविवक्षाबोधनादिति।** तेषां कार्याणामविवक्षायां तत्प्रयुक्तो भेदो यत्ने न सिध्यतीति न तद्भेदस्सावर्ण्यभञ्जक इति भावः। नन्वेवं बाह्यप्रयत्नत्वव्यवहारोऽपि तेषां न स्यादत आह। **सवर्णसंज्ञेति।** तथा च सादृश्यनिबन्धनोऽयं विलक्षण एव बाह्यत्वव्यवहारो, न त्वास्यबहिर्भूतकार्यजनकत्वनिबन्धन इति भावः। ननु तुल्यास्यसूत्रस्थभाष्यबलात् ङकारादिनिष्ठानुनासिक्यस्य बाह्यप्रयत्नत्वलाभादेकादशैवेति मूलं न्यूनमित्याशङ्कां परिहरति। **उपलक्षणमिति।** अयोगवाहव्यावृत्तय आह। **शषसा इति।**

शर इति। शषसाः। अनुप्रदानं बाह्यप्रयत्नः। बिवृण्वते इति। तदभिव्यक्त्युत्तरजायमाने कण्ठविवरविकासे तेषां कर्तृत्वविवक्षा बोध्या। विवार एषां प्रयत्न इति भावः। अन्ये त्विति। वर्गतृतीयचतुर्थपञ्चमास्तद्यमा हकारानुस्वारौ यरलवा इत्यर्थः। नादभागिनस्तत्प्रयत्नकाः। यद्यपि खयादिषु घोषाघोषान्यतरप्रयत्नमात्रेणापि प्रक्रियांशनिर्वाहस्तथापि शिक्षानुरोधेनान्येषामुक्तिः। अल्पासवोऽल्पप्राणाः। यत एतदुच्चारणोत्तरं प्राणानामल्पत्वमिव भवति। वर्गेष्विति। विद्यमानानामिति शेषः। चतुर्णामिति। निर्धारणे षष्ठी, अन्यतमादिति शेषः। पूर्वसदृश इति। सादृश्यं यत्नकृतम्। अत एवायोगवाहेषु यमानां गणनं भाष्ये "चत्वारश्च यमाः

---

अत एव विसर्गादीनां पृथग्ग्रहणं सार्थकम्, अनुस्वारस्यैतदभावश्च सिद्धः। अनुप्रदानं बाह्यप्रयत्न इति। यद्यपि श्वासोऽनुप्रदीयते यैरित्युद्योतेविग्रहप्रदर्शनाद्यौगिकत्वं लभ्यते, तथापि तुल्यास्यसूत्रस्थभाष्यप्रामाण्याद्रूढिराश्रयणीयेति भावः। ननु कण्ठविवरविकासादिकर्तृत्वं प्रयत्नस्यैव, न तु वर्णस्येति वर्णानां तत्कर्तृत्वोक्तिरसङ्गतेत्यत आह। तदभीति। यरलवा इत्यर्थ इति। इदमुपलक्षणमचामपि, तेषामपि घोषादिप्रयत्नवत्त्वस्योत्तरत्र वक्ष्यमाणत्वात्। अन्यतरप्रयत्नमात्रेणेति। हशादिनां घोषप्रयत्नः खयादीनामघोषप्रयत्न इति व्यवस्थितान्यतरप्रयत्नमात्रेणेत्यर्थः। एतेन खयादिष्वघोषाद्यन्यतमेति पाठः। एवं हशादिष्वपीति प्रकाशकृदुक्तं परास्तम्। निरुक्तदिशा ग्रन्थस्थपाठसामञ्जस्यात्, तदुक्तपाठे हशादिविषयककथनाभावान्न्यूनतापाताच्च। तदुक्तपाठस्यानुपलम्भाच्च। घोषाघोषयोरुक्तिस्त्वशोकवनिकान्यायेनेति बोध्यम्। अत एवेति। यत्नकृतपूर्वसादृश्यग्रहणादेवेत्यर्थः। कत्वादिना सादृश्यग्रहणे तु तत्रापि कत्वादिजातेरावश्यकत्वेन प्रत्याहारेषु जातिग्रहणस्यैव सिद्धान्तितत्वेन तेषामाकारादितुल्यतया-

स्मृताः" इति पाणिनिशिक्षा च सङ्गच्छते। अयञ्च वेद एव, तदाह। प्रातिशाख्ये इति। अन्येषामिति। अचामुक्तान्यहलाञ्चेत्यर्थः। यरलवाञ्चेति। येनाचामपि ग्रहणम्। "सुपां सुलुक्" इति सूत्रे इकारस्यान्तर्यतो दकार इति भाष्याद्घोषसंवारनादाल्पप्राणत्वमचाम्। अन्यथा तदौ पर्यायेण स्याताम्। अल्पप्राणत्वानङ्गीकारे दधौ पर्यायेण स्याताम्। अचां घोषत्वं "परः सन्निकर्ष" इति सूत्रे भाष्येऽपि स्पष्टम्। अन्ये इति। द्वितीयचतुर्थौ तद्यमौ शषसहा अयोगवाहाश्चेत्यर्थः। जिह्वामूलीययमादीनां स्थानबाह्यप्रयत्नकथनं तु स्वरूपनिर्णयाय, न तु सावर्ण्यान्तरतम्यपरीक्षादावुपयोगीति

---

ऽयोगवाहेषु गणनं पूर्ववर्णवृत्तिजातीनां विंशतित्वेन चतुष्ट्वकथनमसम्बद्धं स्यात्। परसादृश्यस्य जातिकृतस्य ग्रहणेऽयोगवाहेषु गणनस्य तासां पञ्चत्वेन चतुष्ट्वकथनस्य प्रयत्नकृतस्य ग्रहणे एकत्वेन चतुष्ट्वकथनस्य चासङ्गतिः। पूर्ववर्णत्वे च तेषामाक्षरसमाम्नायिकत्वेन विंशतित्वेन चोभयमसङ्गतं स्यादिति भावः। ननु तेषां वर्णान्तरत्वे तेन व्यवधानाद्राज्ञ इत्यादौ ञ्चुत्वानापत्तिरत आह। अयं च वेद एवेति। तथाच तत्र बहुलग्रहणाद्व्यवधानेऽपि प्रवृत्त्यङ्गीकारादशरीरं यमं प्राहुरिति वचनेन तस्य व्यवधायकत्वाभावकल्पनया वा न दोष इति भावः। घोषसंवारनादेति। परे तु परस्सन्निकर्ष इति सूत्रभाष्याद् घोषत्वं सुपां सुलुगिति सूत्रभाष्यादल्पप्राणत्वं घोषत्वं चास्तु, अक्षु संवारनादत्वे निष्प्रामाणिके। न च विनिगमकाभावः। परस्सन्निकर्ष इति सूत्रभाष्यस्यैव विनिगमकत्वादित्याहुः। तन्मन्दम्, तेषां त्रयाणां समनैयत्यस्य दृष्टत्वेनार्धजरतीयस्यानौचित्यात्। तद्यमावित्ययोगवाहेभ्यः पृथगुपादानादत्रायोगवाहपदेन यमानां ग्रहणाभावस्सूचितः। तेन प्रथमतृतीययमयोर्नैतत्प्रयत्नत्वमिति सिद्धम्। यमादीनामित्यादिना विसर्गानुस्वारौ गृह्येते, नोपध्मानीयः। उब्जेरुपधाभूतस्य

बोद्धव्यम्। अनुपयुक्ता इति। तुल्यास्यसूत्रे प्रशब्दग्रहणात्। उपयुक्तत्वे हि शछयोरपि सावर्ण्यं स्यादिति भावः। आन्तरतम्यपरीक्षा च घोषवत इत्यादिना तत्र तत्र स्फुटीभविष्यति। स्पर्शाः तत्पदव्यवहार्याः। अन्तस्थाशब्द आदन्तः। स्पर्शोष्मणोरन्तर्मध्ये तिष्ठन्तीति तदर्थः। ऊष्माण इति। ऊष्मा वायुस्तत्प्रधाना इत्यर्थः। एवं सोष्माण इत्यस्य वायुना सह वर्तन्त इत्यर्थ इति प्रातिशाख्यभाष्ये स्पष्टम्। यद्यपि वर्गद्वितीयचतुर्थयोरपि स्थानेऽन्तरतमसूत्रभाष्यादूष्मत्वं, तथापि विवृतमूष्मणामित्यत्रैत एव गृह्यन्ते। अन्यथा कग्वादीनां सावर्ण्यानापत्तौ नाऽऽज्झलावित्यादिनिर्देशासङ्गतिरिति

---

तस्य जश्त्वेन बकारार्थं स्थानकथनावश्यकत्वात्। शछयोरपीति। तेषां तदुपयुक्तत्वे झरो झरीति सवर्णग्रहणे यत्किंचित्प्रयत्नैक्येऽपि सवर्णसंज्ञेत्यर्थस्य वक्तव्यतया बाह्यप्रयत्नमात्रसाम्यमादाय सवर्णसंज्ञायां शार्ङ्गिंश्छिन्धि इत्यादौ झरो झरीति लोपापत्तिरिति भावः। यत्तु विष्णुशिवावित्यत्र छे चेति तुक् असिंश्छिनत्तीत्यत्र वा शरीति च स्यात्। किं च व्रश्चेति सूत्रे शछयोरन्यतरोपादानं च्छ्वोरित्यत्र ङितीत्यनुवृत्तिपक्षेऽपि व्यर्थं स्यादिति प्रकाशकृतोक्तम्। तन्न। तयोस्सावर्ण्येऽपि अनण्त्वाज्जातिपक्षेऽपि तत्तद्वृत्तिजात्योर्भेदाच्च अन्यतरेणान्यतरग्रहणायोगात्तदुक्तदोषानवतारात्। ननु कादयो मावसानास्स्पर्शा इत्यनुपपन्नं, स्पर्शपदेन कादिमावसानानामुपस्थित्या घटो घट इत्यत्रेव बोधानुदयादित्यत आह। तत्पदव्यवहार्या इति। तथा च स्पर्शपदव्यवहार्यत्वेन रूपेण स्पर्शपदादुपस्थितौ विभिन्नरूपेणोपस्थितयोरन्वयबोधे बाधकाभाव इति भावः। आदन्त इति। अन्तस्थाभिश्च संयुतमिति प्रयोगानुरोधात्। स्थः क चेति कान्ताट्टाप्, अत एवान्तस्थानामित्यत्रातो धातोरिति न लोपः। निर्देशासङ्गतिरिति। चकारस्य स्पर्शमात्रप्रयत्नकतया झकारस्येदानीमूष्मत्वेन

भावः। अचः स्वरा इति। उदात्ताभिः स्वयमेव राजन्त इति व्युत्पत्तेः, तद्धर्मत्वादुदात्तादयोऽपि स्वरा इत्युच्यन्ते। कपाभ्यामिति। खफयोरप्युपलक्षणम्। अं अः इत्युपलक्षणमिकारादेरपि। तदाह। अचः पराविति।

ऋऌवर्णयोरिति। आ च ऌवर्णश्चेति विग्रहः, ऋत्यक इति

---

विवृतप्रयत्नकत्वे यावत्प्रयत्नसाम्याभावेन चकारसावर्ण्याभावात्पूर्वसवर्णविधिना झकाराप्राप्तौ निर्देशासङ्गतिरिति भावः। यद्यपि यत्किंचित्प्रयत्नसाम्येऽपि सावर्ण्यमिति स्वीकारे निर्देशसङ्गतिस्तथापि शलोर्विवृतप्रयत्नसाम्येन सावर्ण्यापत्तौ शार्ङ्गिश्छिन्धीत्यादौ झरो झरीति लोपापत्त्या यावत्प्रयत्नसाम्यस्यैव विवक्षणीयतया निर्देशादस्माद्विवृतमूष्मणामित्यत्र वर्गद्वितीयचतुर्थयोरग्रहणमित्येव ज्ञापयितुमुचितम्। अत एव शिक्षायां नेमस्पृष्टाश्शलः स्मृता इति शषसहानामेवोपादानं सङ्गच्छत इति तात्पर्यम्। यत्तु यावत्प्रयत्नसाम्यानङ्गीकारे खकारहकारयोरपि सावर्ण्यापत्तौ देवः खनतीत्यादौ हशि चेत्युत्वाद्यापत्तिः, कर्तरि भुवः खिष्णुजित्यादिनिर्देशासङ्गतिश्च। एवं च यत्किंचित्प्रयत्नसाम्ये इदमसङ्गतं यावत्साम्ये मूलोक्तमसङ्गतमिति तात्पर्यमिति भट्टास्तन्न, यत्किंचित्साम्याङ्गीकारेऽपि कवर्गस्य जिह्वामूलस्थानकत्वेन हकारस्य कण्ठस्थानकत्वेन स्थानभेदादेव सावर्ण्याप्राप्तेः कर्तरि भुवः खिष्णुजित्यादिनिर्देशासङ्गतेरभावात्। यदपि प्रकाशकारः कर्तरि भुवः खिष्णुजित्यादिनिर्देशासङ्गतिं विहाय भट्टोक्तफक्किकामेव लिखितवान्। तदतिस्थवीयः, पूर्वोक्तदोषात्। कर्तरि भुवः खिष्णुजित्यादिनिर्देशासङ्गतेरप्रदर्शनेन "एवंच यत्किंचित्प्रयत्नसाम्य इदमसङ्गतमिति" ग्रन्थस्यार्थराहित्याच्च। तथा च भट्टफक्किकार्थापरिज्ञानमूलकमेव तल्लेखनमिति स्पष्टं तद्द्रष्टॄणामिति दिक्॥

आ च ऌवर्णश्चेति। मनोरमोक्तविग्रहत्यागस्तु ऌकारान्तशब्दाना-

प्रकृतिभावः । एतदर्थमेव वर्णोपदेशे ऌकारपाठः । अन्यथा तस्या-सत्त्वशङ्कयाऽस्य वचनस्यैवाशक्यत्वं स्यात् । ध्वनितश्चेदं एओङिति-सूत्रशेषे भाष्ये । तत्र हि सँय्यन्तेत्यादौ "हलोऽनन्तरा" इति सूत्रे प्रत्याहारघटकेष्वपि ग्रहणकशास्त्रप्रवृत्त्या मात्राकालिकस्य यद्वयादे-रणुदित्सूत्रेण यादिग्रहणेन ग्रहणाद् द्विव्यञ्जनाश्रयो विधिर्न प्राप्नोती-त्याशङ्क्य मात्रिकव्यञ्जनानुपदेशादनुपदिष्टस्यासत्त्वादसत्प्रतिपत्तेर-शक्यत्वान्नाणुदित्सूत्रेण तद्ग्रहणमित्युक्तम् । न च क्ऌ३प्तशिखेत्या-दावनृत इति निषेधात् प्लुतानापत्तिः । ऋऌवर्णयोःपृथगनुबन्धत्व-करणेन क्वचित्परस्पराग्राहकत्वकल्पनेनादोषात् ॥

---

मनभिधानमित्याशयेन । ऌवर्णशब्दो ऌकारे रूढ इति भावः । एतदर्थमेवेति । एतदर्थमपीति भावः । तेनान्यफलकत्वपरऋऌक्सूत्रभाष्यविरोधो न भाष्यमुपल-क्षणमिति भावः । अशक्यत्वं स्यादिति । असच्च न शक्यं प्रतिपत्तुमिति भाष्यादेतदज्ञाने पदार्थोपस्थितेरभावेनैतद्वाक्यतो बोधानुदयादस्य वाक्यस्य कर्तुमशक्यत्वमिति भावः । द्विव्यञ्जनाश्रय इति । सय्यँन्तेत्यत्रानचि चेति द्वित्वविधिः कुक्कुटादौ संयोगादिश्च तादृश इति भावः। नचानचि चेति प्रसज्य-प्रतिषेधत्वेन न तस्य द्विव्यञ्जनाश्रयत्वमिति वाच्यम् । प्रकृतलक्ष्याभिप्रायेण तदुक्तेः । यद्वा सय्यँन्तेत्यादावपि द्विव्यञ्जनाश्रयः संयोग एव । यद्यपि तद्दृष्ट्या परसवर्णस्यासिद्धत्वादनुस्वारमादाय संयोगसंज्ञा सिध्यति, तथापि द्वित्वसिध्यर्थ-मेतत्समाधानावश्यकत्वेन संयोगसंज्ञायामप्येतदेव समाधानमुपायस्योपायान्तरादू-षकतया स्वीकृतम् । एवं च हलोऽनन्तरा इत्युपन्यास एतद्विषयकतयाप्युपपद्यते । अनुपदेशादिति । अनुपदिष्टत्वं चाक्षरसमाम्नाये शिष्टैरपठितत्वं, ग्राहकशास्त्रेण जातिनिर्देशेन वाऽगृहीतत्वं च तेनाऽकारादीनामयोगवाहानामृति ऋवेति वार्ति-कविधेयानां चानुपदिष्टत्वात्तत्तदनुवादकानां कर्तुमशक्यत्वापत्तिरिति परास्तम् ।

न चाकारादीनामिव मात्रिकयद्वयादेर्जातिनिर्देशेनाणुदित्सूत्रेण वा ग्रहणादुपदिष्टत्वमेवायातीति कथं भाष्यसङ्गतिरिति वाच्यम् । अणुदिच्छास्त्रं हि विद्यमानस्य लोकसिद्धस्य सवर्णस्य ग्राहकमेव, न त्वप्रसिद्धसवर्णकल्पकमित्युद्योतेनैव दत्तोत्तरत्वात् । अच्त्वजातीयानामेकारादीनां द्विमात्राणामप्युपदेशनाऽच्त्वादिजात्याक्रान्तानां द्विमात्राणामप्युपदेशे तात्पर्यं हल्त्वजातीयानां तु केषां चिदपि मात्रिकाणामुपदेशाभावेन तेषामसत्त्वमिति तात्पर्यमिति भाष्यतात्पर्यादिति समाधानं प्रकाशकृतोक्तम् । तन्मन्दम् । त्रिमात्रिकाचां तुल्ययुक्त्याऽसत्त्वप्रसङ्गात् । यदपि चतुर्दशसूत्र्यां महेश्वरेणानुपदिष्टत्वमात्रं नासत्त्वप्रयोजकम्, अयोगवाहानामीषत्स्पृष्टऋकारस्य चासत्त्वापत्तेः । किं तु अनुपदिष्टत्वं यावच्छिष्टानामेष्टव्यं तथा च सति गम्लृधातौ लृकारोपदेशेन लृदित इत्यनुवादेन च सत्त्वपरिरक्षणसम्भवादतदर्थमेवेत्युक्ती रभसादेवेति, तन्न । यावच्छिष्टैश्चतुर्दशसूत्र्यामनुपदिष्टत्वमसत्त्वप्रयोजकमिति स्वीकारेणायोगवाहादीनामसत्त्वप्रसङ्गाभावेनान्यत्राप्युपदिष्टत्वस्य सत्त्वप्रयोजकत्वाङ्गीकारे मानाभावात् । क्षय्यजय्यावित्यादौ यद्वयादेरुच्चारणेन मात्रिकव्यञ्जनस्यापि सत्त्वप्रसङ्गेन भाष्यासङ्गतेश्च । किं च गम्लादावननुनासिकव्यक्तिरेवोच्चारितेति तन्मात्रस्य सत्त्वेऽपि निरनुनासिकादीनामसत्त्वशङ्कया तेषां वार्तिकविषयत्वाभावे सवर्णसंज्ञा न स्यात् । न हि तत्र जातिनिर्देश इति वक्तुं शक्यते । इकारनिर्देशेऽपि तथात्वापत्तौ टुनदीत्यादेरीदित्त्वकार्यापत्तेः । न च दीर्घकारादेः पृथगनुबन्धस्य करणेन टुनदीत्यादेरीदित्त्वकार्याभावो ज्ञाप्यत इति वाच्यम् । दीर्घकारनिर्देशस्थले इदित्त्वकार्याभावसम्पादकतया तदुच्चारितार्थ्यात् । गुरुनिर्देशेन तत्र व्याप्यजातिनिर्देश एवेति वक्तुं शक्यत्वात् । तस्माद्वर्णस्य सत्त्वासत्त्वे वर्णसमाम्नायादेवावगन्तव्ये इति तत्र महेश्वरेणान्यैर्वाऽनुपदिष्टत्वमसत्त्वप्रयोजकमित्येव भाष्याशयो न्याय्यो न तु यत्र कुत्राप्यनुपदिष्टत्वमिति सुधियो विभावयन्तु ॥

अकारहकारयोरिति। एकारस्य तालव्यत्वमोकारस्यौष्ठ्यत्व-मिति मते एकारशकारादीनामप्युपलक्षणमिदम्। एतेन "नाज्झलौ" इत्येव सूत्रयितु मुचितामित्यपास्तम्। हशि चेत्येव सिद्धेऽतोरोरित्याकारे

---

इति मते इति। बह्वृचप्रातिशाख्यमते इत्यर्थः। एकारशकारादीनामिति। ऐकारशकारावोकारोपध्मानीयावादिपदग्राह्याः। अत एव बहुवचनमुपपद्यत इति भट्टाः। आकारहकारावादिशब्दार्थ इत्याचार्याः। ऊष्मशब्देन द्वितीयचतुर्थयोर्ग्रहणे यत्किंचित्प्रयत्नैक्येऽपि सावर्ण्यमाश्रीयत इति मते इकारछकारादय आदिशब्दार्थ इति श्रीधरः। अत्र भट्टोक्तं न्याय्यम्। इतरोक्तं तु इति मते इति पूर्वग्रन्थाननुगुणमिति बोध्यम्। एकारादीनां विवृततरत्वादेस्सत्वेऽपि सूत्रमते विवृतत्वव्याख्यानां सावर्ण्यानुपयुक्तत्वात्प्राप्तिः। इकारैकारयोस्सावर्ण्याभावस्तु यजुष्येकेषामिति निर्देशसाध्योऽस्मिन्मते। एतन्मतस्य शास्त्रानुपयोगित्वान्नात्रार्तावोपयुज्यते। अपास्तमिति। नन्वेव मपि नाच्छलाविति सूत्रमस्तु, एवं न्यासे शलां परस्परं सावर्ण्यनिषेधापत्तिः यथान्यासेत्वस्मान्निर्देशाद्धलां परस्परं सावर्ण्यनिषेधो नेति भट्टोक्तं समाधानं तु न युक्तम्, शलां परस्परं सवर्णसंज्ञाया स्थानभेदादेवाप्रसक्त्या निषेधायोगादज्भिरेव सावर्ण्यनिषेधलाभादिति चेदत्र केचित्। होत्लृकार इत्यत्रेषत्स्पृष्टलकारे तोर्लीति परसवर्णापत्तेरित्याहुः। नचैकादेशस्य स्थानिवद्भावः। सवर्णविधौ तन्निषेधात्। तत्प्रत्याख्याने पूर्वत्रासिद्धीये तन्निषेधात्। न च तस्य दोष इति निषेधश्शङ्क्यः। तत्र प्रतिपदोक्तस्यैव लत्वस्य ग्रहणात्। नचानित्या प्रतिपदोक्तपरिभाषा प्रकृते न प्रवर्तत इति न दोष इति वाच्यम्। हरितशब्दाण्णिचि क्विपि निष्पन्नहरिच्छब्दस्य लुनातीत्यनेन योगे परसवर्णापत्तेः। न च पूर्वत्रासिद्धीय इत्यस्य पदचरमावयवविधायकातिरिक्तत्वेन सङ्कोचस्य वक्ष्यमाणतया प्रकृतेऽप्रवृत्त्या स्थानिवद्भावस्सुलभ इति वाच्यम्। आदेश-

व्यावृत्त्यर्थम्। सूत्रे द्विवचनोपपत्तये मध्यमपदलोपिसमासं दर्शयति। आकारसहित इति। अत एव वेलास्विति निर्देश उपपद्यते। समाहारद्वन्द्वे तु टच्प्रसङ्गोऽज्झलिति समाहारद्वन्द्वं कृत्वा आ पदेन द्वन्द्वे तु अज्भिरप्याकारस्य सावर्ण्यं न स्यादिति भावः। अत एव भाष्ये प्रयत्नभेदेनैषां सावर्ण्याभावः साधितः। एतेषु परेष्विति। इदमुपलक्षणम्, एतेषु विद्यमानस्येत्यपि बोध्यम्। तेन हकारादीनामकारा-

---

निमित्तप्रत्ययनिमित्तकपदसंज्ञावचरमावयवविधायकातिरिक्तत्वेनैव सङ्कोचेन प्रकृते निषेधप्रवृत्तेः। यदि तु आदेशप्रवृत्त्यव्यवहितोत्तरकालप्रवृत्तिकपदसंज्ञावच्चरमावयवविधायकातिरिक्तत्वेन सङ्कोचः क्रियते तदा स्थानिवद्भावेनापि वारयितुं शक्यम्। किं च वर्णानां स्वरूपग्रहणे स्वसदृशवाच्यलक्षणेति प्राचीननय एतद्दोषसत्त्वेऽपि प्रत्याहाराद्यवर्णेष्वेव ग्राहकसूत्रप्रवृत्तिः, स्वरूपग्रहणे जातिपक्ष एवाश्रयणीय इति ग्राहकसूत्रवक्ष्यमाणरीत्यैतद्दोषो न लगति। अत एव नाज्झलाविति न्यासं बह्वृचप्रातिशाख्यमतरीत्या दूषितवान्। अन्यथा तत्रापि न्यासे एतद्दोषस्य सत्त्वान्मतान्तररीत्या दूषणमसम्बद्धमेव स्यादिति दिक्। व्यावृत्त्यर्थमिति। हकारसवर्णेऽत्वजात्याश्रयो यदि स्यात् हस्याकार एवेति नियमद्वारेति भावः। अत एवेति। प्रश्लेषस्यीकारादेवेत्यर्थः। सावर्ण्यं न स्यादिति। परवल्लिङ्गप्राप्त्या पुंलिङ्गनिर्देशानुपपत्तिश्च बोध्या। ननु वेलास्विति निर्देशेनाकारप्रश्लेषेण दीर्घाकारहकारयोः सावर्ण्यवारणेऽपि प्लुताकारस्य हकारेण सावर्ण्यं दुर्वारं, तथाच यियासो इत्यत्र प्लुतात्परस्य षत्वापत्तिरिति शङ्कां मनसि निधायात्र प्लुतोऽपि प्रश्लिष्यत इत्याशयेन तत्प्रश्लेषसाधारणं मानं दर्शयति। अत एव भाष्येति। एकपद एव दोषसंभव इति सूचयन्नाह। उपलक्षणमिति। अच्पदस्य संज्ञाशब्दत्वेन तदुत्तरभावप्रत्ययेन शब्दस्यैवोप-

दिषु परतो दीर्घादिसङ्ग्रहः। अच्त्वं स्यादिति । अच्पदबोध्यत्वं स्यादित्यर्थः । इदं प्रत्याहारघटकेष्वपि ग्राहकशास्त्रप्रवृत्तिरिति मते व्यक्तिपक्षे च बोध्यम् ॥

अणुदि । अणमुद्दिश्य सवर्णबोधकताऽत्र विधीयते । सवर्णस्येत्यस्य बोधक इति शेषः । आदेशादौ सवर्णग्रहणवारणायाह ।

---

स्थितावनन्वयप्रसङ्गोऽत आह । अच्पदबोध्यत्वं स्यादिति। ननु हकारादीनामिति मूले आदीत्यसङ्गतम् । व्यक्तिपक्षे प्रत्याहाराद्यवर्णेष्वेव ग्रहणकशास्त्रप्रवृत्त्या इकारादिसवर्णानां शकारादीनामच्त्वासिद्धेः, जातिपक्षे तत्तज्जातीनां शकारादिष्वभावादेव नाच्त्वमित्यत आह । इदमिति ॥

ननु अण् सवर्णस्य संज्ञा इति मूलं न सङ्गच्छते । संज्ञात्वनिश्चयस्य समानविभक्तिकपदाधीनताया वृद्धिसूत्रे भाष्योक्तेः । संज्ञाबोधकस्य परप्रयोगनियमाच्चेत्यतो बोधक इति शेषपूरणेन सूत्रं योजयति । अणमुद्दिश्येति । एवं च मूलस्थसंज्ञापदं बोधकपरतया नेयं संज्ञासंज्ञिभावश्च फलति, शाब्दबोधे उद्देश्यतया अण एव भानमिति न पूर्वप्रयोगानुपपत्तिरिति भावः ॥

अयमत्र प्राचीनानामाशयः। अस्य सूत्रस्य व्यक्तिपक्षाभिप्रायकतया तत्पक्षे तत्तत्सूत्रस्थाकारादीना मक्षरसमाम्नायस्थतो भिन्नत्वेनात्राण्पदेनाक्षरसमाम्नायस्थस्यैव बोधेन तेन सवर्णग्रहणे फलाभावेन वचनसामर्थ्यादक्षरसमाम्नायस्थसदृशस्सवर्णान् गृह्णातीत्यर्थः । न चाक्षरसमाम्नयस्थैस्सवर्णबोधने तावतामिगादिसंज्ञासिद्ध्या इगादिपदैर्दीर्घादीनाप्युपस्थितिरक्षरसमाम्नयस्थैस्सवर्णग्रहणे फलमिति न सदृशोपस्थितिरत्रेति वाच्यम् । आदिरन्त्येनेति शक्तिग्रहकाले सवर्णग्रहणाभावेन दीर्घादीनामिगादिसंज्ञाया वक्तुमशक्यत्वेनैतत्सूत्रसामर्थ्या-

द्वे सदृशोपस्थितेः। न च वचनाद्यत्र तन्नास्तीति प्रत्याहाराद्यवर्णेषु सूत्रसार्थ-क्यस्योत्तरभाष्य उपदर्शितत्वेन न सूत्रसामर्थ्यं भाष्यविरोधश्चेति वाच्यम्। युगपद्वृत्तिद्वयविरोधेन युगपद्वृत्तिद्वयाङ्गीकर्तृतद्भाष्यस्यैकदेश्युक्तिताया आवश्य-कत्वेन तद्विरोधस्याकिंचित्करत्वात्सूत्र वैयर्थ्यसत्त्वाच्च। अत एवेदम इश् अण्त्वा-त्सवर्णग्रहणं प्राप्नोति अप्रत्यय इत्यनेन निषिध्यत इति भाष्योक्तं सङ्गच्छते। एवं चानुवृत्तिनिर्देशेऽस्यच्वावित्यादौ सूत्रं प्रवर्तेत। न च प्रत्याहारग्रहणेषु प्रत्याहारेणाण्सदृशानामुपस्थितावपि तेषामनुच्चारितत्वादीर्घादीनामप्युपस्थितिः कथमिति वाच्यम्। तत्र घ्वादीनामित्यादिनिर्देशात्तद्वाच्यवाच्ये निरूढलक्षणया निर्वाहात्। अत एव कौस्तुभेऽस्य च्वावित्यादीनां सूत्रोदाहरणत्वमेव प्रदर्शितं प्रत्याहारग्रहणेष्वेव लक्षणाङ्गीकृता। मनोरमायामपि प्रत्याहारग्रहणेष्वेव सा स्वीकृता। शब्दरत्ने तु ग्राहकशास्त्रस्यादिरन्त्येनेत्यस्य चोभयथा तात्पर्यग्राहकस्य सत्त्वेन सति तात्पर्ये युगपद्वृत्तिद्वयाङ्गीकारे बाधकाभावाद्भाष्यस्यैकदेश्युक्तित्व-कल्पनाया अनौचित्येन प्रत्याहाराद्यवर्णेषु सूत्रसार्थक्यसंभवेनाक्षरसमाम्नायिके-ऽसवर्णग्रहणबोधनेऽपि लक्ष्यतावच्छेदकज्ञानरूपफलसम्पादकतया सूत्रसार्थक्य-सम्भवेन च सूत्रस्थाणपदेन तत्सदृशोपस्थितेरशक्यत्वमभिप्रेत्यानुवृत्तिनिर्देशेष्वपि स्वसदृशवाच्येषु लक्षणैवाश्रयणीया। मनोरमोक्तमुपलक्षणतया नेयमिति वदता हरिदीक्षितेनानुवृत्तिनिर्देशानां सूत्रोदाहरणत्वप्रदर्शनं कौस्तुभकृताऽयुक्तमिति सूचयता मनोरमाकारमतमन्यादृशत्वेन वर्णितम्। नन्वेवं लक्षणया निर्वाहाङ्गीकारे सर्वत्र स्वोपस्थाप्यसवर्णे एकरीत्यैव लक्षणा स्वीक्रियताम्। एवं च लक्ष्यतावच्छेदक-ज्ञानार्थमण्ग्रहणमपि न स्वीकार्यमित्यपरं लाघवमिति चेन्न। यूस्त्र्याख्यावित्यत्र यूप-देन स्वोपस्थाप्यकारसवर्णस्य शकारस्याप्युपस्थितौ दिशे दिश इत्यादावाण्णद्या इत्यापत्तेः। भाष्यमते प्रयत्नभेदेन सावर्ण्याभावादिति समाधानं तु न युक्तम्। तन्मते जातिपक्षस्यैव सत्त्वेन लक्षणानवसराल्लक्षणावादे तद्रीत्या समाधानस्यायुक्त-

त्वात्। किं च हन्म इत्यत्रानुदात्तोपदेशेत्यनुनासिकलोपापत्तिः। झलीत्यनेन स्वोपस्थाप्यमकारादिसवर्णस्य मकारस्याप्युपस्थानात्। एवं वृत्तमित्यादौ रदाभ्यामिति नत्वापत्तिश्च। झश् झयादिपृथक्प्रत्याहारकरणाच्चोःकुरित्यनुवादे उदित्करणाच्च वर्गपञ्चकान्तर्गतस्य निरुक्तलक्षणागम्यत्वाभावकल्पने त्वपूर्वज्ञापकसिद्धवचनकल्पनापत्त्या लक्षणद्वयकल्पनातो लाघवाभावः। अण्ग्रहणस्य यथा कथंचिल्लक्ष्यतावच्छेदकज्ञानाय सार्थक्यसम्भवे सर्वथा वैयर्थ्यकल्पनमयुक्तम्। तावतापि दिशे इत्यादौ नदीसंज्ञाया दुर्वारत्वं च। यत्तु सूत्रं न कार्यमित्युक्त्वाऽनुवादे उदित्करणेन वर्गपञ्चकान्तर्गतस्येत्यादिज्ञापकत्ववर्णनम्। तन्मन्दम्। सूत्राभावे ज्ञापकत्वायोगाच्चेत्यास्तां तावत्। एवं च सूत्रमते प्राचीनमतेऽणसदृशस्सवर्णान् गृह्णातीत्यर्थः। मनोरमामतत्वेन वर्णिते मतेऽण् सवर्णान् गृह्णातीत्येवार्थः। अत्रोच्छृंखलास्सूत्राशयमन्यथा वर्णयन्ति। तथा हि। अण्बोधकं यदणाद्यवयवकं पदं तत्स्वबोध्याणसवर्णग्राहकमिति केचित्। अण्बोधकं स्वबोध्याणसवर्णग्राहकं स्वं रूपमिति शास्त्रादशब्दसंज्ञेत्यनुवृत्तेश्शब्दसंज्ञासु तदप्रवृत्तिः। तेन प्रत्ययपदबोध्याकारादिभिर्न दीर्घादिग्रहणम्। इगादेश्शब्दसंज्ञात्वेऽपि दीर्घाज्जसि चेति ज्ञापकात्प्रत्याहारभिन्नशब्दसंज्ञाया ग्रहणान्न दोष इत्यन्ये। अण्घटितं यदनुबन्धेतरवर्णाघटितं पदं तत् स्वबोध्याणसवर्णग्राहकमित्यर्थान्न कश्चिद्दोष इत्यपरे। एतत्सर्वं विचारासहत्वादुपेक्ष्यम्। तथा हि। इह पक्षत्रयेऽप्यस्यच्वावित्यादेरसंग्रहः। प्रथमपक्षेऽणाद्यवयवकत्वाभावात्, द्वितीयेऽण्बोधकत्वाभावात्, तृतीयेऽण्घटितत्वाभावात्, अक्षरसमाम्नायस्थत एतत्सूत्रस्थस्य भेदात्। ऊकाल इति सूत्रस्थेन ह्रस्ववाक्ये सवर्णग्रहणशङ्कापरभाष्येण इदम इश् अण्त्वात्सवर्णग्रहणं प्राप्नोति टित्किन्मित्सूपसंख्यानमिति प्रकृतसूत्रभाष्येण विरोधश्च। यदि यथा कथंचिदणेव गृह्यते नत्वाक्षरसमाम्नायिक एवेत्युच्यते तदा यूस्त्र्याख्यावित्यत्र शकारग्रहणापत्तिः। यदि तु स्वबोध्योऽण् आक्षरसमाम्नायिक एव गृह्यत इत्युच्यते तदा इत्संज्ञकशकारोप-

प्रतीयत इति। परे तु प्रत्ययग्रहणमेकदेशानुमत्या "भाव्यमानेन सवर्णानां ग्रहणं न" इति परिभाषां ज्ञापयतीति युक्तम्। प्रत्ययपदस्य तदर्थत्वन्तु न युक्तं वार्त्तिककृता टिड्ढाणञ्चित्सूपसंख्यानोक्तेः।

---

लक्षितेकारस्यातथात्वेन अण्त्वात्सवर्णग्रहणमिति भाष्यविरोधः। यदि तत्र इत्संज्ञकशकारस्योपलक्षणतया आक्षरसमाम्नायिकस्यापि ग्रहणमित्युच्यते तदा टिड्ढाणित्यादावणादिना सवर्णग्रहणापत्तिः, तपरसूत्रस्य वक्ष्यमाणस्य परत्वादनवकाशत्वाद् बाधकत्वस्य तृतीयपक्षे सर्वथा असङ्गतिः। इगादिघटककारादेरित्संज्ञत्वेऽप्यनुबन्धत्वाभावेन प्रत्याहारग्रहणेषु सर्वत्र दोषश्च। प्रथमपक्षे उदात्तादिपदैस्सवर्णग्रहणापत्तिश्च। द्वितीयपक्षेऽप्यादित्यादेश्शब्दशास्त्रीयसंज्ञात्वेन तत्र सवर्णग्रहणाप्रसक्त्या बाधकत्वविचारासङ्गतिः। यथा कथंचित्तत्र तत्र दोषवारणेऽपि एवं तर्हि अण्ग्रहणमपरिभाष्यमिति भाष्ये एवं तर्हीत्यक्षरस्वारस्यभङ्गापत्तिर्दुर्वारा। सूत्रकारमते प्रत्याहारग्रहणेष्वनुवृत्तिनिर्देशेषु दोषमभिप्रेत्य तथोक्तमित्यलं भाष्यविरुद्धकल्पनाप्रयासेन॥

प्रकृतमनुसरामः। प्रतीयत इतीति। अत्र प्रत्ययपदं यौगिकमिति भावः। विना प्रमाणं कृत्रिमाकृत्रिमन्यायबाधे मानाभाव इत्याशयेनाह। परे त्विति। एकदेशानुमत्या प्राचीनवैयाकरणपठितां संपूर्णपरिभाषां ज्ञापयतीत्यर्थः। न च ज्ञापनोत्तरं स्वांशे चारितार्थ्याभाव इति वाच्यम्। यत्रानन्यथासिद्धोऽर्थो ज्ञाप्यते तत्रैव विपरीतार्थशङ्कावारणाय स्वांशे चारितार्थ्यमपेक्ष्यते यत्रत्वन्यथासिद्ध एवार्थो ज्ञाप्यते न तत्र स्वांशे चारितार्थ्यापेक्षा विपरीतशङ्काया अनवतारात्। यद्वा ज्ञापयतीत्यस्य बोधयतीत्यर्थः, तेन न स्वांशे चारितार्थ्यप्रश्नावसरः। न युक्तमिति। योगाद्रूढेर्बलीयस्त्वाद्विधीयत इत्यर्थे प्रतीयत इति क्वाप्यप्रयोगाच्चेति भावः। किं च योगार्थे प्रमाणविरोधोऽपीत्याह। वार्त्तिककृतेति। योगार्थत्वे अस्य वार्त्तिकस्यानुत्थानमेव स्यादिति भावः। ननु

भाष्यकृता चाप्रत्ययग्रहणमेतत्परिभाषाज्ञापकमित्युक्तेः । "ज्यादादीयसः" इति सूत्रे भाष्ये ध्वनितमिदम् । तत्र हि किमर्थमादित्युच्यते ज्याद इत्येवोच्यतां, का रूपसिद्धिः, आन्तर्यतो दीर्घस्य दीर्घो भविष्यति, एवन्तर्हीदमेव ज्ञापयति भवत्येषा परिभाषा भाव्यमानेनेत्यादि । त्वदुक्तव्याख्याने हि पूर्वपक्षसिद्धान्तयोरुभयोरपि निर्दलत्वापत्तिः । जातिपक्षेऽप्यनयैव परिभाषया सवर्णग्रहणं वारणीयम् । व्यक्तिपक्षे गुणाभेदकत्वप्राप्तश्च वारणीयम् । तेन घटवदित्यादौ नानुनासिको वकारः । एतेनाजुदिदित्येव सिद्धेऽण्ग्रहणेन यण्सु गुणभेद-

---

वार्त्तिकस्य योगार्थापरिज्ञानेन प्रवृत्तिरुपदेशनेऽजनुनासिक इति वदित्यत आह । भाष्यकृतेति । ननु योगेन परिभाषार्थं बोधयतीत्येव भाष्यतात्पर्यमत आह । ज्यादादिति । एवं च मूलकृद्दषितातपर्यस्य व्याख्यातृमुनिवचनैरेवोन्नेयत्वेन तदनुक्तार्थकत्वं सूत्राक्षरस्यायुक्तमिति भावः । अत्रत्यज्ञापनविचारः परिभाषेन्दुटिप्पणीतोऽवसेयः । पर्युदासेन व्याख्यातृमूलकारमते जातिपक्षगुणाभेदकत्वप्राप्तसवर्णग्रहणवारणायावश्यक्या परिभाषयैव निर्वाहे कृत्रिमाकृत्रिमन्यायादिविरुद्धं मूलकृदुक्तं सर्वथा असङ्गतमेवेति ध्वनयन्नाह । जातिपक्षेऽपीत्यादि । नानुनासिक इति । यद्यपि तत्र स्थान्यनुगुणेऽनुनासिक एवोच्चारणीये निरनुनासिकोच्चारणान्नानुनासिक इति वक्तुं शक्यम् । तथापि किम्वितीत्यनुनासिकस्थाने तद्वारणार्थ मावश्यकमिदमिति तेनैव निर्वाहेऽत्र सामर्थ्यादिवर्णनक्लेशो विफल इति भावः । एतेनेदमुपलक्षणम् । किम्वितीत्यस्येति वदन्तः परास्ताः । एतत्साधनाय कौस्तुभोक्तमुपायं निराकरोति । एतेनेति । जातिपक्षप्राप्तसवर्णग्रहणाभावाय सूत्रप्राप्तस्य तस्य वारणाय च परिभाषाया आवश्यकत्वेनेत्यर्थः । तयैव निर्वाहे ज्ञापनप्रयासो विफल इति भावः । अण्ग्रहणेन यण्सु गुणभेदकत्वं ज्ञाप्यत इति पाठो नस्त्वण्स्विति । कौस्तुभे गुणभिन्नानां यवलानां संग्रहायेत्युक्त्या

कत्वं ज्ञाप्यत इति परास्तमित्याहुः। ननु चोरित्यादावनुवादे कथमुदित्त्वमिति चेन्न। व्याकरणान्तरे एषामुदित्संज्ञकत्वेनादोषात्। उपदेशशब्दस्य करणसाधनत्वेन शास्त्रपरत्वेऽस्यापि शास्त्रत्वेनेत्त्वप्रवृत्तेः सुलभत्वाच्च। चो भिन्नक्रम इत्याह। उदिच्चेति। यद्यपि समुदायसवर्णिनोऽप्रसिद्धास्तथापि तदवयवचादिसवर्णा एवात्र तत्सवर्णा बोध्याः।

---

ज्ञापनस्य यण्विषयकताया लाभात्। कौस्तुभकारस्तु गुणपदेनोदात्तत्वानुदात्तत्वस्वरितत्वानुनासिकत्वान्येव बोध्यानि न तु ह्रस्वत्वदीर्घत्वप्लुतत्वानीति मन्यते। अत एवोक्तं गुणा उदात्तानुदात्तस्वरितानुनासिका नान्तरीयकतया उच्चार्यमाणा इति। अज्ग्रहणं ह्रस्वोच्चारणे दीर्घादीनां सङ्ग्रहार्थमिति तद्भावः। एतेनाज्ग्रहणस्य ऋ ऌवर्णयोः परस्परं ग्रहणं प्रयोजनमिति प्रकाशकृदुक्तिः परास्ता। तावन्मात्रप्रयोजनकत्वे ऋग्रहणेनैवसिद्धे इति वदन्। स्पष्टं चेदं कौस्तुभग्रन्थपरिशीलनशालिनाम्। कथमुदित्त्वमिति। प्राचीनरीत्येदम्। स्वरीत्या आह। उपदेशेति। सुलभत्वाच्चेति। न च विधेयघटकोच्चारणार्थानां विनेत्संज्ञां निवृत्त्यभाव इति स्वमतसिद्धत्वेन कुक्तुगादौ सवर्णग्रहणापत्तिरिति वाच्यम्। उकारमात्रेत्संज्ञक इत्यर्थेनादोषात्। स्वंरूपमिति प्रत्याख्याने परेश्च घाङ्कयोरिति वत्स्वरूपग्रहणेनादोषाच्च। अत्र मानं तु शि तुक् पट्कतिकतिपयचतुरां थुक् इति विभिन्नरीत्यानिर्देश एवेतिगृहाण। चोः कुरित्यादौ विधेये सवर्णग्रहणायाह। चो भिन्नक्रम इति। स च त्वर्थकोऽव्यय इत्यस्यात्र वाक्यऽसम्बन्धद्योतकः। चकारेणासवर्णस्यापि ग्रहणापत्तिमुद्भाव्यान्यथाव्याचष्ट इति प्रकाशकृदुक्तावतरणं तु न सम्यक्। तथा सति सर्ववर्णग्राहकत्वापत्तावक् इक् इत्यादिविभिन्नप्रत्याहारनिर्देशासाङ्गत्यापत्त्या तत एवोक्तापत्तेर्वारयितुं शक्यत्वात्सवर्णग्रहणवैयर्थ्यापत्तेश्च। ह्रस्वाकाराद्यारपीत्युत्तरग्रन्थस्वारस्यभङ्गापत्तेश्च। सवर्णिनइति। अत्र सवर्णशब्दस्सावर्ण्यपरस्तेन सवर्णा इत्यर्थः। बोध्या इति।

ह्रस्वाकाराद्योरपि कालपुरुषाद्युपाधिभेदेन स्थानेषु भेदमारोप्य तुल्यस्थानत्वं सूपपादम् । अत्रेति । ग्राहकसूत्र एवेत्यर्थः । व्याख्यानादिति भावः । उपसर्गादृतीत्यादितपरकरणादिति तु न युक्तम् । ऌकारग्रहणेन चारितार्थ्यात् । एवमिगपि परेणैव । अचि इन्वाति

---

इदमेते उदित्संज्ञका इति मताभिप्रायेण, उकारेत्संज्ञका इति मते त्वनुबन्धविनिर्मुक्तोपस्थितेस्तत्सवर्णाः प्रसिद्धा इति न्यायसिद्धमेवेदम् । उकाररूपावयवसवर्णानां तु न ग्रहणं, सोरुकारस्य न विभक्ताविति निषेधेनेत्त्वानापत्त्या हल्ङ्यादिसूत्रे सापृक्तविशेषणासङ्गत्यापत्तेः । ङ्याब्ग्रहणवैयर्थ्यापत्तेश्च । ननु सादृश्यस्य भेदघटिततया स्वस्याग्रहणापत्त्या स्वरूपग्रहणार्थश्चकारोऽस्तु, विधेये उदित्करणसामर्थ्यादेव सवर्णग्रहणं सिद्धमित्यत आह । ह्रस्वाकाराद्योरपीति । आवश्यकश्चायमारोपः, अन्यथा लक्ष्यस्वस्यातिरिक्ततया स्वरूपबोधनेनानिर्वाहात् । एवं च विधेये उदित्करणसामर्थ्यवर्णनक्लेशोऽपि नेति भावः । स्वमते सादृश्यस्य भेदाघटितत्वात् प्राचीनानुसारेणेदम् । तपरसूत्रेऽण्ग्रहणानुवृत्तेर्वक्ष्यमाणत्वेन तत्साधारण्यायाह । ग्राहकेति । व्याख्यानादिति । शब्दरत्नोक्तादुर्क्रदिति तपरकरणरूपादित्यर्थः । चारितार्थ्यादिति । इदं तपरसूत्रेऽण्ग्रहणाननुवृत्त्या विधायकतेति मते । तत्राप्यण्ग्रहणसवर्णग्रहणयोरनुवृत्त्या नियामकत्वमते तु तदपि ज्ञापकं भवितुमर्हति । न च सूत्रमत एवाण्ग्रहणसत्त्वात्तन्मते ऋऌवर्णयोः परस्परं सावर्ण्याभावात्तपरसूत्रे सवर्णग्रहणानुवृत्तेरसत्त्वात् कथम् ऌकारग्रहणेन तच्चारितार्थ्यमिति वाच्यम् । योह्युत्सूत्रं कथयेत् नादो गृह्येतेति भाष्येण "सूत्रेष्वेव हि तत्सर्वं यद्वृत्तौ यच्च वार्तिके" इति हर्युक्त्या च ऋऌवर्णयोस्सावर्ण्यज्ञापनद्वारा चारितार्थ्यमित्याशयात् । अथाण् सवर्णान् गृह्णातीत्येव तत्रार्थः । अण् सदृश इति प्राचीनोक्तं तु न युक्तम् । वचनाद्यत्र तन्नास्तीत्युत्तरभाष्येण तदर्थस्य निष्प्रामाणिकत्वध्वननात् । प्रत्याहारेषु

**सूत्रे इण इत्येव सिद्धे य्वोरिति गुरुनिर्देशाद्व्याख्यानाच्चेति लण्सूत्रे भाष्ये स्पष्टम्। नन्वेवं "अस्य च्वौ" इत्यादौ सवर्णग्रहणं न प्राप्नोति। अण्ग्रहणेन वर्णसमाम्नायस्थानामेव ग्रहणेन णकारादिचिह्नेन प्रत्याहारे तत्प्रत्यभिज्ञानेन तत्रत्यात्रवर्णोपस्थितेषु उच्चारिताभेदेन गृहीतेषु सूत्रस्य चारितार्थ्येन व्यक्तिपक्षे तत्रत्यात्रत्यव्यक्त्यो-**

---

तद्वाच्यवाच्ये लक्षणेत्यप्ययुक्तम्। एवं सूत्रमते लक्ष्यदोषाभावेन तत्र दोषसद्भावाभिप्रायकेणैवं तर्हि अण्ग्रहणमपरिभाष्यमित्युत्तरभाष्येण विरोधात्। एतेनानुवृत्तिनिर्देशेषु स्वसदृशवाच्यलक्षणया निर्वाह इत्यपि परास्तमित्याशयेन शङ्कते। **नन्वेवमिति**। इत्यादाविति। आदिना प्रत्याहारोपस्थितमध्यगानां संग्रहः। आद्ये सवर्णग्रहणाभावे हेतुमाह। **अण्ग्रहणेनेति**। नन्वक्षरसमाम्नायस्थानां ग्रहणेऽपि वचनसामर्थ्यात्तत्सदृशानां सवर्णग्राहकत्वाङ्गीकारणादोष इत्याशङ्क्य तस्य चारितार्थ्यं दर्शयति। णकारादिचिह्नेनेत्यादिना चारितार्थ्येनेत्यन्तेन। ननु सत्यामपि प्रत्यभिज्ञायां तन्मात्रस्यानर्थक्येन कथं तेन सवर्णग्रहणमत आह। आन्यवर्णोपस्थितेष्विति। सादृश्यवशादुपस्थितेष्वित्यर्थः। ननूपस्थितस्यानुच्चरितत्वात्कथं ग्राहकत्वमत आह। **उच्चारिताभेदेनेति**। **चारितार्थ्येनेति**। एवञ्च सदृशोपस्थितौ मानाभाव इति भावः। अस्य वर्णसमाम्नायस्थत्वाभावं दर्शयति। व्यक्तिपक्ष इति। एतेन सवर्णग्रहणं न प्राप्नोतीत्यत्र हेतुर्व्यक्तिपक्षे तत्रत्यात्रत्यव्यक्त्योर्भेदेनेत्येतावतैव, इतरदण्ग्रहणसार्थक्य प्रदर्शनपरमित्याचार्याः प्रकाशकाराश्च परास्ताः। चारितार्थ्यवर्णनेऽण्ग्रहणेन वर्णसमाम्नायस्थानामेव ग्रहणेनेत्यस्यानुपयोगादनाक्षरसमाम्नायिकानामण्ग्रहणेनाग्रहणादित्यर्थकैवकारघटितस्यास्य वाक्यस्य सवर्णग्रहणाप्राप्तौ हेतुबोधकत्वध्रौव्याच्च। तत्रत्यात्रत्यव्यक्त्योर्भेदेऽप्यण्ग्रहणेन तस्यापि ग्रहणे सवर्णग्रहणसम्भवशङ्काया अनिरासात्तावन्मात्रस्य हेतुताया दुर्वचत्वाच्च। आदिपदग्राह्य-

भेदेन प्रकृते प्रत्याहारघटकद्वितीयवर्णादौ चोच्चारितस्यैव ग्राहकत्वादप्रवृत्तेरिति चेन्न । जातिपक्षाश्रयणेनादोषात् । अत एवानेकतकारादीनां झल्त्वादिसिद्धिः । सूत्रेऽण्ग्रहणं च न कार्यम् ।

---

प्रत्याहारोपस्थितमध्यगेषु सवर्णग्रहणाभावे हेतुमाह । प्रत्याहारघटकेति । तदप्रवृत्तेरिति । ग्राहकसूत्राप्रवृत्तेरित्यर्थः । यत्तु प्रत्याहारघटकेति ग्रन्थस्य दूषणान्तरपरतया योजनं तत्तु प्रतिज्ञेयार्थाघटितत्वादुपेक्ष्यम् । समाधत्ते । जातिपक्षेति । ननु व्यक्तिपक्षेऽपि पूर्वोक्तलक्षणाद्वयेन सकलनिर्वाहेन फलांशे पक्षयोरवैलक्षण्येन जातिपक्ष एवेति कोऽयं निर्बन्ध इत्यत आह । अत एवेति । अत्र व्यक्तिपक्षे झलादिप्रत्याहारेषु अक्षरसमाम्नाये यादृशव्यक्तेरनुकरणं तादृशव्यक्तेरेव बोधेनैकस्यैव तकारस्य झल्पदबोध्यतयाऽबुद्धेत्यत्र चरितार्थे झलो झलीत्यत्र पञ्चम्यन्तसप्तम्यन्तपदाभ्यां विभिन्नतकारयोर्बोधानापत्त्याऽवात्तामित्यत्र लोपानापत्त्या पूर्वोक्तलक्षणाद्वयेन सर्वनिर्वाहो नास्तीति लक्षणावादिनाप्यत्र जातिपक्षस्याश्रयणीयतया सर्वत्र तेनैव निर्वाहेऽर्धजरतीयस्यानौचित्येनाऽन्यत्र लक्षणया निर्वाहोऽनुचित इति भावः । ननु तत्रापि स्ववाच्यसदृशे लक्षणया निर्वाहः । लक्षणायां मानन्तु यथासङ्ख्येन लोपविधायकं हलो यमां यमीतिसूत्रमेव । व्रश्चेत्यादौ शादिभिस्सर्वशकारादिबोधस्तु तत्तल्लक्ष्यविषयकतयोपप्लुतविभिन्नवाक्यवशादेवेति तत्रापि न दोष इत्याशङ्क्य लाघवादत्र जातिपक्ष एवाश्रयणीय इति ध्वनयन्नाह । सूत्रेऽण्ग्रहणं चेति । सूत्रेऽण्ग्रहणं कृत्वा तत्र तत्र लक्षणाश्रयणापेक्षया जातिपक्षाश्रयणमेव युक्तमिति भावः । अत्र केचित्, अक्षरसमाम्नाये जातिनिर्देशे तात्पर्यग्राहकमण्ग्रहणम् । अन्यथा तात्पर्यग्राहकाभावात्तस्यायुक्तत्वमेव स्यात् । अणुदित्सूत्रे तु न जातिबोधः, तदानीं वाक्यापरिसमाप्तिन्यायेन तात्पर्यग्राहकाभावात् । न चैवमादिरन्त्येनेति वाक्यार्थकाले तात्पर्यग्राहकाभावाज्जातिनिर्देशस्य दुर्ज्ञेयतया सकलव्यक्तिषु शक्तिग्रहविरोध

'ऋलृवर्णयोः सावर्ण्यम्' इत्यनेन समानजातित्वस्यैवातिदेशेनोपसर्गा-

---

इति वाच्यम् । अणुदिदित्येतदेकवाक्यतापन्नस्य तस्य वाक्यार्थवेलायां जाति-निर्देशे तात्पर्यग्राहकाभावेन सकलव्यक्तिषु शक्तिग्राहकत्वाभावेऽपीको यणचीत्येतदेकवाक्यतापन्नस्य तस्य सर्वव्यक्तिषु शक्तिग्राहकत्वे बाधकाभावात् । तस्मादुक्तार्थतात्पर्यग्राहकमणग्रहणं, न तूपायान्तरपरमिति प्रत्याचक्षाणस्य भाष्यकारस्यात्र तात्पर्यमुन्नेतुं युक्तमित्याहुः, तन्न । जातिनिर्देशे तात्पर्यग्राहकापेक्षायामादिपदसूत्र्यां तादृशस्याणग्रहणस्य सत्त्वेऽप्यन्यत्र तात्पर्यग्राहकाभावात्तत्र जात्याश्रयसकलव्यक्तिप्रतिपत्तिर्न स्यात् । यदि तत्र तात्पर्यग्राहकमन्यत्कल्प्यते, तदा ल्वादिभ्य इत्यादिनिर्देशा एवात्रापि तात्पर्यग्राहकत्वेन गृह्यन्तामिति किमणग्रहणेन । किञ्चाणग्रहणस्य तत्र जातिनिर्देशे तात्पर्यं नास्तीत्यस्याप्यापत्त्या महदनिष्टं स्यात् । तस्मादणग्रहणाकरण एव भाष्यतात्पर्यं, न तु तात्पर्यग्राहकत्व इति युक्तमुत्पश्यन्तु सुधियः । ननु ऋलृवर्णयोर्भिन्नजातीयत्वेन तयोः परस्परग्रहणार्थमणग्रहणमित्यत आह । ऋलृवर्णयोरिति । एतेन तदर्थमणस्थाने ऋग्रहणं कर्तव्यमिति वार्त्तिकाशय इति कौस्तुभोक्तं प्रत्युक्तम् । समानजातित्वस्यैवेति । वर्णाश्रमाचारा इत्यादौ वर्णशब्दस्य जातौ प्रसिद्धेर्वार्त्तिके वर्णशब्दो जातिपर इति भावः । होतॄकार ऌकार परे दीर्घस्त्वकोकीति न्यासेन सुवचः । अत्र पक्षे शाकलप्रतिबन्धस्तु न फलम् । ऋत्यक इत्यत्रासवर्ण इत्यननुवृत्तेः । इदमृग्युकल्यनुरोधेनोक्तम् । लाघवादेर् तु ऌवर्णस्य ऋवदिति शब्दरत्नोक्तमनुसन्धेयमिति भट्टप्रकाशकारौ । वस्तुतस्तु ऋलृवर्णयोस्सावर्ण्यमिति सावर्ण्यमेव विधेयम् । तुल्यास्यसूत्रभाष्यस्वरसात् । समानजातित्वस्यैवेत्येवकारोऽप्यर्थः । अयं भावः । अज्वृत्तिसावर्ण्यं समानजातित्वव्याप्यमिति तादृशसावर्ण्येन समानजातित्वमनुमीयते । एवञ्च सावर्ण्यं समानजातित्वञ्चोभयं वार्त्तिकत एव लभ्यत इति । भट्टाद्युक्तन्तु न युक्तम् । एतद्व्यतिरिक्तेति हेतु-

हृतीत्यादौ न दोषः । एतद्व्यतिरिक्तसवर्णे समानजातित्वसत्त्वात् । पृथगनुबन्धकरणाच्च न ऋदिल्लृदित्प्रयुक्तकार्यसङ्करः । अत्र पक्षे अइउण् सूत्रशेषोक्तभाष्यरीत्या तपरसूत्रस्य जातिग्रहणप्राप्तसवर्णग्रहणनियामकत्ववदप्रत्यय इत्यस्य योगविभागेन तत्प्राप्तसवर्णग्रहणनिषेधकत्वात् "त्यदादीनामः" इत्यादौ विधेये न दोषः । एवं गुणाभेदकत्वप्राप्तसवर्णग्रहणनिषेधकत्वमप्यस्य बोद्धव्यम् । अत एव घटवदित्यादौ मतोर्मस्य नानुनासिको वकारः । सामर्थ्यादिति । "एचोऽयवायावः" इत्यादौ स्थानेऽन्तरतमसूत्रेणैव निर्वाह इति वक्ष्यते । "न य्वाभ्याम्" इत्यत्र ऐऔस्वरूपेण पाठ्यौ । "वृद्धिरादैच्" इत्यत्राप्यैङित्येव पाठ्यम् । तत्र गुणसूत्रे च परस्परसवर्णसञ्ज्ञावादिमते चतुर्णां ग्रहणसत्त्वात् ।

---

वाक्यस्यालग्नकत्वापत्तेः । तस्य विषयान्तरे हेतुप्रतिपादकतया योजनमपि न सम्यक् । साध्याप्रतीतेः । एतेन, एतद्व्यतिरिक्तेत्यादिग्रन्थस्समानजातित्वेन सावर्ण्यमनुमेयमित्याशयको होतॄकारसाधक इत्याचार्योक्तमपास्तम् । अकारेकारयोश्शब्दत्वादिसमानजातित्वसत्त्वेन सावर्ण्याभावेन समानजातित्वस्य सावर्ण्यव्याप्यताया अभावाच्च । एवञ्च ऋऌवर्णयोस्सावर्ण्यस्यापि सत्त्वेन होतॄकारसिद्ध्याऽऽधुनिकोत्प्रेक्षिताकोकीति न्यासतात्पर्यकत्वं वार्तिकस्यानुचितमिति युक्तमुत्पश्यन्तु सुधियः । एतद्व्यतिरिक्त सवर्ण इति । अजूप इत्यर्थः । पर्युदासन्यायात् । नन्वण्ग्रहणाभावेऽप्रत्यय इत्यस्योद्देशेऽन्वयाभावस्य पूर्वमुक्तत्वात्किं फलमित्यत आह । योगविभागेनेति । स्थूणानिखननन्यायेनाह । एवमिति । ननु सूत्राभावे यथासङ्ख्येन निर्वाहो दुर्वच इत्यत आह । एचोऽयवेति । न न्वेवं नय्वाभ्यामित्यत्रैङिति पाठे तस्य विधेयत्वेन सवर्णाग्रहणादैचौ न स्यातामेङौ च स्यातामित्यत आह । न य्वाभ्यामिति । न च तयोरसत्त्वशङ्कावारणाय तत्सार्थक्यमिति वाच्यम् । एवमपि पृथक्सूत्र-

अत्रैतत्सूत्रवैयर्थ्योपन्यासेन तन्मूलकस्य गुणवृद्धिसञ्ज्ञाविधौ प्रत्याहारद्वयग्रहणवैयर्थ्यस्य एङ्चावैच एचोऽप्रगृह्यस्येत्यत्र तद्ग्रहणवैयर्थ्यस्य च सङ्ग्रहो बोध्यः। प्रयत्नभेदेनाप्यसावर्ण्यमेतयोः प्रागुक्तं न विस्मर्त्तव्यम् ॥

यद्यपीति। इदं व्यक्तिपक्षे। "वर्णानामुपदेशस्तावत्, उपदेशोत्तरकालेत्सञ्ज्ञा तदुत्तरकालमादिरन्त्येनेति प्रत्याहारः। तदुत्तरकाला सवर्णसंज्ञा तदुत्तरकालमणुदिदिति, एतेन सर्वेण समुदितेन वाक्येनान्यत्र सवर्णानाङ्ग्रहणं भवति, न चात्रेकारः शकारं गृह्णाति" इति "नाज्झलौ" इतिसूत्रभाष्योक्तवाक्यापरिसमाप्तिन्यायादित्यर्थः। अयं भावः। आदिरन्त्येनेति प्रत्याहारसिद्धौ नाज्झलावित्येतद्वाक्यार्थबोधे सति निर्णीतैतद्विषयपरिहारेण सवर्णसंज्ञाबोध्यनिश्चये अणुदित्सूत्रेण तावतां ग्रहणं बोधनीयम्। अन्यथा बाधकसम्भावनया तुल्यास्यसूत्रजशक्तिग्रहेऽप्रामाण्यसन्देहेनाणुदिच्छास्त्रजबोधानापत्तिः। न चैतद्वाक्यार्थबोधात्प्राक् तन्निश्चय इति। ह्योह इति। हकारेणाऽकारग्रहणे सति यद्यत्प्राप्नोति तस्य सर्वस्याप्युपलक्षण-

---

सार्थक्यालाभात्। तद्ध्वनयन्नाह। अत्रैतत्सूत्रेति। भाष्यरीत्याह। प्रयत्नेति। जातिपक्षे हकारेणाकाराग्रहाणादाह। इदमिति। समुदायमध्ये निषेधस्याप्रवेशादाक्षरसमाम्नायिकानामेवेति मूलं कथमित्यत आह। अयं भाव इति। बोधानापत्तिरिति। लक्ष्यसंस्कारोपयोग्यप्रामाण्यज्ञानानास्कन्दितबोधानापत्तिरित्यर्थः। तन्निश्चय इति। आकारादावच्त्वनिश्चय इत्यर्थः। ननु हकारेणाकारग्रहणे तस्य हल्त्वात्संयोगसंज्ञायां हत्वस्यासिद्धत्वात्संयोगान्तलोप आपादयितुमुचित इति मूलमसङ्गतमित्यत आह। हकारेणाकारेति। यद्यपि व्यक्तिपक्षे हल्सूत्रहकारस्य हयवरट्सूत्रघटकहकारतो भिन्नत्वे हल्सूत्रस्थस्यानण्त्वेन तेन सवर्णग्रहणाभावेनाकारस्य झल्त्वाभावात् संयोगान्तलोपो न

भिदम् । ननु यण्सवर्णिनामप्रसिद्धेरज्ग्रहणेनैव सिद्धेऽण्ग्रहणं व्यर्थमत आह । यवला इति । "अमोऽनुनासिका न ह्रौ" इति शिक्षोक्तेर्यण इति नोक्तम् । तेन सँय्यन्तेत्यादौ परसवर्णनिष्पन्नानुनासिकयवलानाम् "अनचि च" इति द्वित्वं सिद्ध्यति । हलो यमामिति लोपस्तु वैकल्पिकः । अत्रेदं बोद्ध्यम् । व्यक्तिः पदार्थो गुणा भेदका इत्यभिमानेनात्र सूत्रेऽण्ग्रहणमिति ॥

"अतो भिस" इत्यादौ तपरकरणात्सहिवहोरिति सूत्रस्थवर्णग्रहणाद्व्याख्यानाच्च तपरपदे बहुव्रीहिपञ्चमीतत्पुरुषावित्याह । तः

---

प्राप्नोतीति वक्तुं शक्यते । तथापि यणतिरिक्ते क्वचिदझल्यपि लोपप्रसक्तिरित्याशयेनैवमुक्तमिति बोध्यम् । वैकल्पिक इति । अत्र मानमण्ग्रहणमेवेत्यन्यत्र स्पष्टम् । ननु यणो गुणाभेदकत्वेन सवर्णग्रहणस्य सिद्धत्वादज्ग्रहणेनैव सिद्धेऽण्ग्रहणं व्यर्थमत आह । गुणा इति ॥

अतो भिस इति । इदं बहुव्रीहिलभ्यार्थे मानम् । वर्णग्रहणादिति । तद्ध्युदवोढामित्यत्र पूर्वं वृद्धावाकारस्यापि विधानार्थं क्रियते, यद्यत्र पञ्चमीसमासो न स्यात्तदा सवर्णग्रहणेनैव सिद्धे किं तेनेति भावः । वर्णग्रहणप्रत्याख्यानपक्ष आह । व्याख्यानादिति । एओङ्सूत्रभाष्याद्वृद्धिसूत्रस्थभाष्याच्चेत्यर्थः । पञ्चमीतत्पुरुषेति । इदं पञ्चमीति योगविभागमभ्युपगच्छतां प्राचामनुसारेण । तदनङ्गीकारे तु सुप्सुपेति समासो बोध्यः । एतेनात्र तत्पुरुषपदनोच्चारक्विबन्तेन सुप्सुपेति समासो गृह्यते । उत्तरपदार्थप्रधानत्वञ्च क्विबर्थतावच्छेदकप्रयोजकत्वमिति क्लिश्यन्तः परास्ताः । तथा सति पञ्चमीग्रहणस्वारस्यभङ्गापत्तेः । तः परो यस्मादिति मूले भाष्यप्रामाण्यात्पञ्चम्यर्थे बहुव्रीहिः । एवञ्च विशिष्टसवर्णसमकालाप्रसिद्धावपि तकारविरहितस्यैव बोधकत्वलाभात्तत्सवर्ण-

पर इत्यादिना। वर्णग्रहणं तु तत्सामर्थ्यादन्वावाच्छिन्नसर्ववर्णग्रहण-
बोधनेन तपरसूत्रा प्रवृत्तिः। आद्योदाहरणमतो भिस इति, अन्त्योदा-
हरणं वृद्धिरादैजिति। यद्यप्यत्र सञ्ज्ञा तात्परा, न च तत्समकाल-
स्तत्सवर्णो वा प्रसिद्धस्तथापि तपरकरणाद् भाष्यप्रामाण्याच्च तात्पर-

---

समकालानां प्रसिद्ध्या सूत्रसार्थक्यसम्भवः। एतेन समुदायाद्विभक्तिदर्शनेन
षष्ठ्यर्थबहुव्रीहिरेवात्र युक्तः। यथाकथञ्चित्समुदायाद्विभक्त्युपपादनेऽप्यनेक-
मन्यपदार्थे इति सूत्रभाष्यात्सत्त्वर्थातिरिक्तान्यपदार्थे अनेकप्रत्ययान्तप्रकृति-
कप्रथमान्तानामेव बहुव्रीहिलाभेन पञ्चम्यर्थे बहुव्रीहिरसम्भवात्। अण्ग्रहणानु-
वृत्तिकल्पे तपरस्यघटकाणसवर्णसमानकालग्राहक इत्यर्थेन सूत्रसङ्गतिरिति
वदन्तः परास्ताः। अण्ग्रहणाननुवृत्त्या विधायकत्वमिति सिद्धान्तकल्पे तावतापि
दोषस्य दुर्वारत्वात्। अनुवृत्तिकल्पेऽपि तस्य तपरपदविशेष्यतयाऽन्वये सूत्रा-
साङ्गत्यं दुर्वारम्। समासार्थमध्ये तदन्वयस्त्वव्युत्पन्न एवेति यथाकथञ्चिदपि
तादृशार्थस्य दुर्वचत्वादिति दिक्। तपरकरणादिति। गुणाभेदकत्वपक्षे
पूर्वत्र तकारस्यानावश्यकता। यद्यप्यसन्देहार्थं तत्स्यात्तथापि ओतोमित्यादाविव
व्याख्यानतो निर्णयसम्भवात्तपरार्थमेव तपरकरणमिति भावः। नन्वेवमप्यदे-
ङित्यत्र पूर्वत्र कृतार्थत्वादनिर्वाह इत्यत आह। भाष्यप्रामाण्याच्चेति।
तात्परशब्दबोध्यो वर्ण इति। अयं भावः। एजादावाकारादिना न
प्लुतग्रहणप्रसक्तिः। तस्यानुच्चारणेनाप्रत्यायकत्वात्। किन्तु आद्यवर्णेनैव
तत्प्रसक्तिः। तस्योच्चारिताभेदेनोपस्थितत्वात्। सैव प्रसक्तिरनेन वार-
णीया। प्रकृते तात्परशब्दोपस्थाप्य उच्चारिताभेदेन गृहीतो वर्ण एकारादि-
स्स्वसमकालस्य ग्राहक इत्यर्थेन पूर्वोक्ता प्रसक्तिर्वारयितुं शक्यत इति। एतेनेद-
मप्युक्तम्। उच्चारितस्यैव प्रत्यायकत्वात्। इण्प्रत्याहारे प्लुतो घटकत्वापत्तौ
ततः परस्य षत्वानापत्तेश्च। तस्मात्तात्परशब्दः स्वबोध्यसमकालग्राहक इति

**शब्दबोद्ध्यो वर्णः स्वसमकालग्राहक इत्यर्थेनादोषः । इदं च विध्यर्थमेवाण्ग्रहणाननुवृत्तेः । गुणानां भेदकतयाऽनणि विधित्वेऽपि वृद्धि-**

---

तूचितमित्याचार्योक्तमपास्तम् । एच्छब्दबोध्यत्वस्य प्लुतेऽपि सत्त्वेन तत्काल-ग्रहणस्यैवमपि दुर्वारतया भक्षितेऽपि लशुन इति न्यायावताराच्च । यदपि तात्परशब्दस्स्वबोध्यसवर्णो यस्तपरवर्णसमकालोवर्ण स्तस्य ग्राहक इत्यर्थः । प्रत्यासत्त्या तात्परवर्णश्च यादृशतकारात्परस्य ग्राहकत्वं वक्तव्यं तादृशतकारात्पर एव गृह्यते । तेनोदासीनतपरवर्णसमकालत्वमादाय नातिव्याप्तिः प्लुतैकारादाविति बोध्यमित्युक्तं प्रकाशकृता, तदपि न । मूलोक्तरीत्या सकलनिर्वाहे ईदृशप्रयासवैफल्यात् । तपरशब्देन तात्परशब्दबोधेन तस्यैव तच्छब्देन परामर्शौचित्यात् । तात्परवर्णसमकाल इत्यर्थालाभाच्च । तच्छब्देन शब्दपरामर्शेन तद्बोध्यलक्षणया स्वबोध्यरूपार्थलाभेऽपि तस्यैकदेशार्थत्वेनोत्तरपदार्थ एवान्वयौचित्येन स्वबोध्यसवर्ण इत्यर्थालाभाच्च । उदासीनतपरवर्णस्य प्लुतस्यादृष्टचरत्वेन प्लुतैकारादावतिव्याप्तिवारणाय प्रत्यासत्त्याश्रयणस्यासङ्गतेश्चेति दिक् । **विध्यर्थमेवेति** । व्यक्तिपक्ष इति भावः । यद्यपि भाष्येऽण्ग्रहणानुवृत्त्यननुवृत्तिभ्यां नियमत्वं विधित्वञ्च दर्शितम् । तथापि लाघवोपहितत्वाद्विधित्वपक्ष एवादृतः । किञ्च गुणानां भेदकत्वेऽण्ग्रहणानुवृत्तौ दीर्घादिभिस्सवर्णग्रहणं न स्यात् । अभेदकत्वे तु कौस्तुभोक्तरीत्या स्वमित्यनुवृत्त्या स्वस्यैवेति नियमेनोपपत्तावण्ग्रहणानुवृत्तेस्तत्कालग्रहणस्य चानावश्यकतया न सूत्राक्षरानुगुणस्स पक्ष इति विधित्वपक्ष एवादृत इति बोध्यम् । **अननुवृत्तेरिति** । तदनुवृत्तौ तु पूर्वसूत्रेणैव तत्कालानामपि ग्रहणसिद्धावारभ्यमाणस्यास्य नियामकत्वमेव स्यादिति भावः । यत्तु वस्तुतस्त्वेतदनुवृत्तावप्यनवकाशत्वाद्बाधनद्वारा विधित्वसम्भवादयं हेतुश्चिन्त्य इति प्रकाशकृतोक्तम् । तन्न । तदनुवृत्तौ

**रादैजित्यादावाकारांशे सावकाशेनानेनातो भिस इत्यादौ परत्वेनाणुदित्सूत्रबाधः। संख्याकृतव्यवहारस्य परस्परपारिहारेणैव दृष्टतयेह**

पूर्वसूत्रासिद्धविषयालाभेनापूर्वार्थबोधकत्वरूपविधित्वालभात्। **सावकाशेनेति**। तस्यानण्त्वात्पूर्वसूत्राप्रवृत्तेरिति भावः। एतेन प्लुतादेर्भिन्नकालस्य व्यावृत्त्येति प्रकाशकृदुक्तिः परास्ता। **अतो भिसइति**। अनुवृत्तिनिर्देशेष्वण्सदृशस्सवर्णान्गृह्णातीत्यर्थेन स्वसदृशवाच्यलक्षणया वा सवर्णग्रहणमिति प्राचीनरीत्या इदम्। स्वरीत्याह। **आदाविति**। वृद्धिरादैजित्यादावैजादेराद्यवर्णस्य चकारादिचिह्नेनाणुदित्सवर्णसूत्रप्रवृत्तेरितिभावः। **बाध इति**। न चानाकडारीयसंज्ञानां समावेशस्यान्यत्रोक्तत्वेन कथं तयोर्बाध्यबाधकभावइति वाच्यम्। अनाकडारीयसंज्ञात्वमेव न समावेशप्रयोजकम्। किन्तु विरोधाभाव इति तदाशयेन प्रकृते विरोधस्य सद्भावेन बाध्यबाधकभाव इत्याशयात्। अत्र विरोधं दर्शयति। **सङ्ख्याकृतेति**। विप्रतिषेधाद्बाधकत्वप्रतिपादकभाष्यप्रामाण्यात्तात्पर्यविषयीभूतसङ्ख्याकृतविरोधोऽपि विप्रतिषेधशास्त्रप्रवृत्तिप्रयोजकतया स्वीक्रियत इति भावः। **दृष्टतयेति**। नहि त्रिपुत्रो द्विपुत्रव्यपदेशं लभत इति भाष्य इत्यर्थः। एतेनेदमयुक्तम्। आकडारादन्यत्र संज्ञयोर्बाध्यबाधकभावाभावात्। न च स्वतोविरोधरहितयोस्तद्बहिर्भूतयोर्बाध्यबाधकभावाभावेऽपि स्वतोविरुद्धयोस्तद्बहिर्भूतयोस्सोऽस्त्येवेति वाच्यम्। सङ्कोचे मानाभावात्। किञ्च तपरष्षण्णां संज्ञा, अणष्टादशानां संज्ञेत्यनुक्त्या सवर्णग्राहकत्वतात्कालिकसवर्णग्राहकत्वयोरविरोधेन च विप्रतिषेधशास्त्राप्रवृत्तिः। एतेन गुणानामभेदकत्वे त्वनवकाशत्वाद्बाध इत्यग्रिमग्रन्थोऽप्यपास्तः। तस्मादण्ग्रहणानुवृत्त्या नियमार्थ एवायं युक्तः। गोतोणिदित्यत्र तकारोच्चारणसामर्थ्याद्गकारोऽविवक्षित इत्याचार्यास्तदनुयायिनोऽन्ये च परास्ताः। गुणानामभेदकत्वेत्वित्याद्यग्रिमग्रन्थेनास्य गुणभेदपक्षाभिप्रायकत्वलाभेन वृद्धिसूत्रे स्वरभिन्ना-

विरोधस्य सत्त्वात् । गुणानामभेदकत्वेत्वनवकाशत्वाद्बाध इति बोद्धव्यम् । अत्रावध्यवधिमतोः साजात्येन वर्णस्यैव सञ्ज्ञात्वेऽपि विशिष्टाद्विभक्त्युत्पत्तिः सौत्रत्वाद्बोध्या । तत्कालस्येत्यस्य तदुच्चारणकालसमकालस्येत्यर्थस्तदाह । समकालस्यैवेति । एवकारो न्यायसिद्धबाध्यबाधकभावस्यानुवादक इति भावः । जातिपक्षे तु नियमार्थमेव, सवर्णग्रहणानुवृत्तेः । एवं गुणानामभेदकत्वमिति "वृद्धि-

---

नामत्र पक्षे ग्रहणस्य दुर्वचत्वाच्च । गुणानामभेदकत्वेत्विति । उदात्तानुदात्तस्वरितानुनासिकत्वानामभेदकत्वं ह्रस्वत्वादीनां भेदकत्वमेवेति कौस्तुभोक्तगुणाभेदकत्वपक्ष इत्यर्थः । अनवकाशत्वादिति । अणुदित्सूत्रगुणाभेदकत्वाभ्यामव्याप्तविषयाभावादिति भावः । नन्वत्र सवर्णग्रहणानुवृत्त्या विशिष्टसवर्णाप्रसिद्धिरत आह । अत्रेति । अवध्यवधिमतोरिति । भाष्यप्रामाण्यात्पञ्चम्यर्थबहुव्रीहेराश्रयणादिति भावः । इदं बहुव्रीहिसमासोदाहरणविषयम् । तेनादेङित्यादावेङादेरवधिमत्त्वेऽपि न क्षतिः । तत्र गतिर्यद्यपि संज्ञेत्यादिनोक्तैव । सौत्रत्वादिति । छन्दसि व्यवहितेऽपि प्रवृत्तेः । अवयवात्तु सन्निपातपरिभाषया न सुप् । यत्तु पारिभाषिकार्थवत्त्वस्य विशिष्ट एव सत्त्वात्सौत्रत्वाश्रयणं विफलमिति, तन्न । विशिष्टे वृत्तेरभावेन वृत्त्यार्थबोधकत्वरूपार्थवत्त्वस्याभावात् । विवेचयिष्यते चेदमर्थवत्सूत्रे । ननु विधित्वे मूल एवकारोऽसङ्गतोऽत आह । एवकार इति । नियमार्थमेवेति । तत्पक्षे जातिग्रहणाग्राह्यतपरसूत्रग्राह्यविषयालाभात् । तपरस्सवर्णस्य चेत्सर्वस्य जात्याश्रयतया ग्राहकस्तर्हि समकालस्यैवेति निमार्थमित्यर्थः । नियमार्थत्वोपपत्तय आह । सवर्णग्रहणानुवृत्तेरिति । एवञ्च विजातीयवर्णग्रहणार्थमपि न सूत्रमिति भावः । यद्यपि विधिपक्षेऽपि सवर्णग्रहणानुवृत्तिरस्ति, तथापि सवर्णग्रहणानुवृत्तिमन्तरा नियमपक्षस्य सम्भव एव नेति सूचयितुमिदमुक्तम् । व्यक्तिपक्षेऽप्याह । एवमिति । गुणानामभेदक-

रादैच्" इतिसूत्रभाष्यसम्मतसिद्धान्तपक्षेऽपि नियमार्थमेव। इदम्

---

त्वमिति। एकोऽयमात्मोदकं नामेति दृष्टान्तभाष्याद्ध्रस्वत्वादयोऽपि गुणा एव। उदात्तानुदात्तस्वरितानुनासिक्यानीति भाष्यमुपलक्षणं ह्रस्वत्वादेरपि। तथा च जातिपक्षसमफलकोऽयं गुणाभेदकत्वपक्ष इति तत्रापि नियमार्थमेवेदं सूत्रम्। न चैवं दीर्घनिर्देशे ह्रस्वादेर्ग्रहणं स्यादत्र पक्ष इति वाच्यम्। द्विमात्रिकोच्चारणरूपप्रयत्नसत्त्वेन तत्र गुणभेदकत्वस्यैव स्वीकारात्। तदेतदाह। सिद्धान्तपक्षेऽपीति। यद्वा एवमित्यादेरयं भावः। व्यक्तिपक्षेऽणग्रहणसत्त्वेन गुणभेदकत्वेऽभेदकत्वे वा परत्रानवकाशत्वाभ्यामणुदित्सूत्रबाधनेन सूत्रसार्थक्यमेवेति लाघवाद्विधित्वमेव। जातिपक्षे विधित्वे बाध्यशास्त्रस्यैवाभावेन जातिनिर्देशेन भिन्नकालग्रहणस्य दुर्वारतया नियमार्थत्वमेव स्यादिति नियमार्थत्वं पक्षद्वयेऽपि। सिद्धान्तपक्षेऽपीत्यपिना भेदकत्वसमुच्चय इति। एतेनायं ग्रन्थो गुणानामभेदकत्वे त्वनवकाशत्वाद्बाध इति पूर्वग्रन्थविरुद्ध इत्याचार्योक्तमपास्तम्॥

अन्ये तु जातिपक्षेऽपि गुणानां भेदकत्वे नियामकत्वं दुर्घटमत आह। एवञ्चेति। ननु जातिपक्षाश्रयणसामर्थ्यादेव गुणान्तरयुक्तस्यापि ग्रहणं भविष्यति। अन्यथा ह्रस्वत्वादिगुणानामपि भेदकत्वात्तत्पक्षाश्रयणं व्यर्थं स्यादिति किमर्थं गुणाभेदकत्वमङ्गीक्रियतेऽत आह। सिद्धान्तेति। तथा च तस्यैव सिद्धान्तभूतत्वेनैवोपपत्तौ जातिपक्षाश्रयणसामर्थ्योपवर्णनं विफलमिति सूचितम्। पक्षेऽपीत्यपिस्समुच्चये तेन जातिपक्षसंग्रहः। एवञ्च गुणाभेदकत्वमिति पक्षसहिते जातिपक्षे सूत्रं नियमार्थमिति तात्पर्यमित्याहुः। अत्र व्याख्याने जातिपक्षे तु नियमार्थमेव। सिद्धान्तपक्षेऽपि नियमार्थमेवेत्यक्षरस्वारस्यभङ्गः॥

"आद्गुणः" इत्यादौ विभक्तितकारे न प्रवर्त्तते । "उपसर्गादृति" इति तपरकरणात् । "ऋदोरप्" इत्यादौ दकार एवेति न दोषः । स च पञ्चमीसमासाभावे तकार इवोच्चारणार्थो मुखसुखार्थो वा । तपरसूत्रे दकारप्रश्लेषपक्षे तु धकारादिस्थानिको दकारो बोध्यः ॥

वृद्धिरा । वृद्धिः आत् ऐजिति पदत्रयमिति न समासान्तादि-

---

न प्रवर्तत इति । प्रवृत्तौ तु रमेश इत्यत्रैव स्यात् । उपेन्द्र इत्यादौ न स्यात् । यद्यत्र ह्रस्व एव लक्षणवशाद्दीर्घ उच्चारित इत्युच्यते तदोपेन्द्र इत्यत्रैव स्याद्रमेश इत्यादौ न स्यादिति भावः । नन्वस्माद् ज्ञापकाद्परेऽयं न प्रवर्तत इति ज्ञापयितुमुचितम् । अत एव ऋदोरबित्यनेन लव इत्यादिसिद्धिरिति चेन्न । वृद्धिरादैजित्यादावप्रवृत्त्यापत्तेः । तर्हि लव इत्यादिसिद्धिः कथमत आह । ऋदोरबिति । पञ्चमीसमासाभावेऽपीति । अकस्सवर्ण इति सूत्रे दीर्घ इति योगं विभज्यैकः पूर्वपरयोरित्यधिकृत्य योऽयमेकादेशस्सदीर्घ इत्यर्थेन खट्वेन्द्रादौ त्रिमात्रादिव्यावृत्तिरित्येओङ्सूत्रभाष्यरीत्या तदभावेऽपीत्यर्थः । दकारप्रश्लेष-पक्ष इति । अयं पक्षस्तिति प्रत्ययग्रहणमिति वार्त्तिकप्रत्याख्यानावसरे उक्तः ॥

कृतमनयोस्साधुत्वमिति प्रकृतसूत्रभाष्यस्योद्देश्यविधेयखण्डयोरित्यर्थक-तया कथञ्चिद्योजयितुं शक्यत्वाद्वृद्धिः आत् ऐजिति कण्ठरवेण पस्पशास्थ-भाष्योक्तपदविभागस्य त्यागोऽयुक्त इत्याशयेनाह । पदत्रयमिति । नन्वादै-जिति समासस्वीकारे वृद्धिपदस्य तन्त्रादिकमन्तरा निर्वाह इति लाघवोपहित-त्वात्कृतमनयोरिति भाष्यबलात्पदद्वयमेव न्याय्यं, पस्पशास्थभाष्यन्तु लाघवा-नादरेण प्रवृत्तमिति न तद्विरोध इत्यत आह । न समासान्तादीति । भाष्यस्यैवमभिप्रायकत्वे कुत्वादिशङ्कापरिहाराविव समासान्तादिशङ्कापरिहारौ वक्तव्यौ स्यातां तदनुक्त्या पदत्रय एव भाष्यतात्पर्यमुन्नेयं तन्त्रस्थलेऽर्थद्वयता-

**प्रवृत्तिशङ्का। तपरकरणमसन्देहार्थतया पूर्वार्थम्। प्रकृतसूत्रे भाष्येऽत्र शास्त्रे गुणानामभेदकत्वं ज्ञापकादाश्रित्य सवर्णग्रहणार्थत्वाभावस्योक्तत्वात्। कृष्णौत्कण्ठ्यं गङ्गौघ इत्यादौ त्रिमात्रव्यावृत्तये परार्थमपि। वृद्धिशब्दोऽत्र पदपरोऽर्थपरत्वासम्भवात्। आदैचो वृद्धिपदाभिन्ना इति वाक्यार्थः, पदपदार्थयोस्तादात्म्यस्याङ्गीकारात्।**

---

त्पर्येण सकृदुच्चारणमेवेति न गौरवावकाशः। बोद्धुस्त्वावृत्त्येति त्वन्यदेतदिति भावः। यद्यप्यत्रेतरेतरयोगद्वन्द्वे सुपां स्थितिलुका न द्विवचनश्रवणं समाहारे समासान्तविधेरनित्यत्वेन द्वन्द्वाच्चुदषेति न प्रवर्तत इति वक्तुं शक्यते, तथापि शङ्कासमाधानयोः करणस्य भाष्यशैलीसिद्धस्य त्याग एव पदत्रयतात्पर्योन्नायकम्। तदेतत्सूचयन्नाह। **प्रवृत्तिशङ्केति। पूर्वार्थमिति।** अत एव तद्विशिष्टस्य पूर्वस्य पदत्वेन जश्त्वसिद्धिः। प्लुतव्यावृत्त्यर्थन्तु न। आकारस्यानण्त्वात्। जातिपक्षेऽपि द्विमात्रोच्चारणरूपप्रयत्नवशाद्व्याप्यजातिनिर्देशस्यैवाश्रयात्। षण्णां ग्रहणार्थन्तु नेत्याह। **प्रकृतसूत्र इत्यादि।** षण्णां ग्रहणं गुणाभेदकत्वेन सिद्धमिति भावः। नन्वौतोम्शसोरितिवत्सन्देहस्य व्याख्यानतो निवर्तयितुं शक्यत्वेन किं तपरकरणेनेत्यत आह। **परार्थमपीति।** एवञ्च परार्थमावश्यकस्य पूर्वत्र सन्देहनिवर्तकत्वसम्भवे तदर्थं व्याख्यानाश्रयणक्लेशो नेति भावः। **अर्थपरत्वासम्भवादिति।** अप्रतीतपदार्थकत्वाल्लौकिकाभिवृद्धिरूपार्थस्यादैजभेदासम्भवादिति भावः। अर्थे वाचकत्वासम्भवादित्यर्थ इति तु न युक्तम्। वाचकत्वज्ञानस्यैतत्सूत्रजबोधाधीनतया शब्दपरत्वनिश्चयं विना तस्य वाचकत्वस्यैवानिश्चितत्वेन तदसम्भवस्य पदार्थनिश्चयानुपयोगित्वात्। **वृद्धिपदाभिन्ना इति।** अत्राभेदस्तादात्म्यं तदेव शक्तिरिति तत्त्वम् तदाह। **तादात्म्याङ्गीकारादिति।** तादात्म्यञ्च भेदसहिष्णुरभेदः। तत्र भेदो व्यावहारिकोऽभेदः प्रातिभासिकः। एवञ्च वह्निवह्निशब्दयोः प्रातिभासिकाभेदेऽपि

"रामेति द्व्यक्षरं नाम मानभङ्गः पिनाकिनः" इत्यादौ तयोरभेदप्रतीतेरनुभवसिद्धत्वादित्यन्यत्र विस्तरः । वृद्धिशब्दस्य सञ्ज्ञात्वं तु

---

व्यावहारिकभेदसत्त्वान्न मुखे दाहप्रसङ्ग इत्यादि मञ्जूषायां विस्तरतो निरूपितम् । पदपदार्थयोस्तादात्म्यं लोकव्यवहारेण प्रमाणयति । रामेतीति । अस्योत्तरार्थन्तु "शौर्यभङ्गो रावणस्य मदभङ्गश्च वालिन" इति । अत्र नाम्नो न मानभङ्गादिप्रयोजकत्वमपितु तत्प्रतिपाद्यदशरथापत्यस्यैवेति तादृशव्यवहारस्तयोस्तादात्म्यं गोचरीकरोतीति भावः । इत्यादावित्यादिना हिरण्यपूर्वं कशिपुं प्रचक्षत इति, पुरोवर्तिव्यक्तिं पश्यतो वाचकजिज्ञासया कोऽयमिति प्रश्ने गौरयमिति, परोक्षव्यक्तिविषये क आनेय इति प्रश्ने गौरानेय इत्यादयो ग्राह्याः । अभेदप्रतीतेरिति । तादात्म्यप्रतीतेरित्यर्थः ॥

एतेन वस्तुतस्तु पदपदार्थयोस्तादात्म्यमयुक्तम् । वह्निरित्युक्ते मुखे दाहापत्तेः । न च भेदाभेदयोरङ्गीकारेणोक्तदोषनिस्तारः । भेदमात्राङ्गीकारेणोक्तदोषनिरसनोपपत्तावभेदाङ्गीकारे मानाभावात् । रामेति द्व्यक्षरं नामेति लक्षणयार्थपरम् । आदैचो वृद्धिपदाभिन्ना इति वाक्यार्थ इत्यप्ययुक्तम् । तथा सति शक्तिग्राहकत्वानापत्तेः । अभेदस्य त्वया संसर्गत्वानङ्गीकाराच्च । तत्पदाभिन्नत्वेन तच्छक्त्यनुमानात् परम्परया शक्तिग्राहकत्वमित्यपि न । वृद्धिपदाभेदतद्वाच्यत्वयोस्सहचारग्राहकमानाभावात्तयोर्व्याप्तिग्रहासम्भवात् । वृद्धिसंज्ञासूत्रे साक्षात्संज्ञासंज्ञिभावस्यैव वाक्यार्थत्वोक्तेश्च । तस्मादादैचो वृद्धिपदवाच्या इत्येव वाक्यार्थः । वाच्यवाचकभावस्य संसर्गमर्यादया भानाङ्गीकारात् । न च समानविभक्तिकनामार्थयोरभेदान्वयव्युत्पत्तिभङ्गः । प्रतीतपदार्थकतदर्थयोरभेदेनान्वयः। अप्रतीतपदार्थकतदर्थयोर्वाच्यवाचकभावेनान्वय इति व्युत्पत्त्यङ्गीकारात् । तदुक्तं भाष्ये वृद्धिसूत्रे । इदं खल्वपि भूयस्सामानाधिकरण्यमेकविभक्तिकत्वञ्च द्वयोश्चैतद्भवति विशेषणविशेष्ययोर्वा संज्ञा संज्ञिनोर्वा तत्रैतत्स्याद् विशेषणविशेष्ये

इति तच्च न। द्वयोर्हि प्रतीतपदार्थकयो र्लोके विशेषणविशेष्यभावो भवति। न चादैच्छब्दःप्रतीतपदार्थकस्तस्मात्संज्ञासंज्ञिनावेवेत्यचार्योक्तमपास्तम्। स्वारसिकव्यवहारेषु लक्षणया निर्वाहानौचित्यात्। वाचकजिज्ञासया कृते कोऽयमिति प्रश्नेऽयं गौरित्युत्तरे तदात्म्येन शब्दस्य विधेयताप्रतीतिरित्युद्योते स्पष्टमुक्ततया तत्र तदर्थलक्षणाया अनवकाशान्न विधौ परश्शब्दार्थ इति न्यायाद्वृद्धिपदाभिन्ना इत्यत्र तादात्म्यस्य संसर्गतया भानात्तस्यैव शक्तित्वेन साक्षाच्छक्तिग्राहकत्वोपपत्तेः। एतन्मतेऽभेदस्य संसर्गत्वानङ्गीकारेऽपि प्रातिभासिकाभेदघटिततादात्म्यस्य तत्त्वाङ्गीकारे बाधकाभावात्। नामार्थयोरभेदान्वयविरोधेनादैचो वृद्धिपदवाच्या इति वाच्यवाचकभावेनान्वयप्रदर्शनस्यायुक्तत्वात्। अप्रतीतपदार्थकतदर्थयोर्भेदेनान्वय इति व्युत्पत्त्यन्तराङ्गीकारे मानाभावात्। वृद्धिसूत्रभाष्यन्तु न मानम्। संज्ञा संज्ञिभावस्य विशेषणविशेष्यभावाद्भेदेन भाष्यानभिप्रेतत्वात्। न च द्वयोश्चैतद्भवतीति भाष्येण तयोर्भेदप्रतीतिरिति वाच्यम्। संज्ञासंज्ञिनोरप्यस्ति विशेषणविशेष्यत्वं प्रसिद्ध्यप्रसिद्धिवशात्तु भेदेनोपादानमिति कैयटग्रन्थेनैव दत्तोत्तरत्वात्। संज्ञासंज्ञिनोरपि विशेष्यविशेषणभावस्योद्भिदादिसंज्ञा हीत्यादिनोद्योते प्रतिपादितत्वाच्चेति दिक्। अत्र प्रकाशकारः॥

परे तु वस्तुतोऽभेद एवेति तात्पर्यम्। न च मुखे दाहापत्तिः। दाहं प्रति वह्नेस्संयोगेनैव हेतुत्वेनावच्छेदकतया तत्सद्भावेऽपि संयोगेन तदभावात्। न हि येन केनापि सम्बन्धेन वर्तमानं वस्तु क्वचिदपि कारणं, किन्तु कारणतावच्छेदकसम्बन्धेन सदेव। कथमन्यथा शब्दार्थयोर्भेदं मन्यमानानां तार्किकाणामपि मते मुखे कालिकेन सताऽग्निना प्रसक्तो दाहो निराक्रियेत। अत एव शब्दस्य प्रश्नेऽपि गौरित्युत्तरमर्थस्य प्रश्नेऽपिचेति संगच्छते। अत एव च संज्ञासंज्ञिनोस्समानाधिकरणविभक्त्यन्तता स्वरसतस्संगच्छते। नन्वेवं घटस्य चाक्षुषत्वाद्घटशब्दस्यापि तदापत्तिरिति चेन्न। इष्टापत्तेः। परन्तु यथा घटादौ

गन्धवत्त्वे सत्यपि घटत्वादिनैव चाक्षुषत्वम्, न तु गन्धवत्त्वादिनापि तथा घटत्वेनैव न तु घटशब्दत्वेन तयोर्भेदोपगमात् । येनेन्द्रियेण यद्गृह्यत इति नियमास्वीकाराच्च । न चैवमपि घटशब्दं पश्यामीति घटं शृणोमीति चानुव्यवसाय आपद्येतेति वाच्यम् । घटशब्दत्वे चाक्षुषस्य घटत्वे श्रावणस्य च प्रत्यक्षस्याभावेन तेन तेन रूपेण तादृशतादृशप्रत्यक्षविरहेण तथाविधानुव्यवसायासम्भवात् । न च शब्दानां नित्यत्वेऽनित्यत्वे वा तादात्म्यं दुरुपपादम् । आद्ये नित्यानित्ययोश्शब्दार्थयोरैक्यासम्भवात् । अन्त्येऽपि शब्दानां क्षणिकत्वेनार्थानां चिरन्तनत्वेन तदसम्भवाच्चेति वाच्यम् । यथा घटे नष्टे मृदस्तद्व्यक्तित्वेन घटत्वेन वा ध्वंसप्रतियोगित्वं, न तु मृत्त्वेनापि एवमिहापि शब्दनित्यत्वकल्पे घटादीनां तद्व्यक्तित्वेनैव ध्वंसप्रतियोगित्वं न तु घटशब्देनापीत्यस्यानित्यत्वे शब्दानां शब्दत्वेनैव क्षणिकत्वं न तु घटत्वादिनापीत्यस्य च कल्पनेनादोषात् । न चैवमपि वह्निशब्दाद्दाहो जात इति प्रतीत्यापत्तिरिति वाच्यम् । तादृशप्रतीतिवारणाय वह्निशब्दत्वे दाहजनकतावच्छेदकत्वाकल्पनादित्याहुः । तन्न । मञ्जूषोक्तविरुद्धतात्पर्यकल्पनाया अनौचित्यात् । मीमांसकमते शब्दस्य द्रव्यत्वेन तस्य संयोगेन मुखवृत्तित्वात्कारणतावच्छेदकसंयोगसम्बन्धेन शब्दाभिन्नवह्नेस्सत्त्वेन दाहापत्तेर्वारयितुमशक्यत्वात् । गुणसमूहो द्रव्यमिति तस्य भाव इति सूत्रभाष्यसम्मते पक्षे गुणगुणिनोरभेद इति योगपातञ्जलभाष्योक्तपक्षे च तस्याकाशरूपत्वेन तस्य च विभुत्वेन शब्दस्य मुखसंयोगो नास्तीति वक्तुमशक्यत्वाच्च । वह्नेर्द्रव्यत्वेन तदभिन्नस्य शब्दस्य तत्स्वरूपतया द्रव्यत्वं नास्तीति वक्तुमशक्यत्वेन शब्दसंयोगस्य मुखे सूपपादत्वाच्च । शब्दार्थविषयकप्रश्ने गौरित्युत्तरं तादात्म्यमेवावगमयतीति सुवचत्वाच्च । तस्मात्तादात्म्यमेव दाहापत्तिवारकमित्यवश्यमभ्युपगन्तव्यम् । एवञ्च सति व्यावहारिकभेदेन शब्दस्य चाक्षुषत्ववारणेऽनुभवविरुद्धे तस्मिन्निष्टापत्त्याश्रयणं घटशब्दं पश्यामि

व्याख्यानात्। विधेयत्वेऽपि तस्य पूर्वपाठो मङ्गलार्थः। "अपृक्त एकाल्" इत्यादौ तथा करणं विधेयस्य प्रथमं प्रयोगेऽसाधुत्वभ्रमवारणायेति भाष्ये स्पष्टम्। सर्वशब्दानां सर्वार्थवाचकत्वेऽपि वाचकत्वस्य गृहीतस्यैव बोधजनकतया सञ्ज्ञासूत्राणामज्ञातशक्तिज्ञापकतया विधित्वम्। किञ्च सर्वे सर्वार्था इत्यभ्युपगमो योगिदृष्ट्या

---

घटं शृणोमीत्यनुव्यवसायवारणक्लेशावलम्बनं तादात्म्याद्युपपादनादिक्लेशाश्रयणं मुधैव। वस्तुतस्तु बौद्धयोरेव शब्दार्थयोर्वाच्यवाचकभावस्तयोरेव तादात्म्यमिति मञ्जूषायां सिद्धान्तितत्वेन नैवैवंविधचर्चावकाश इति दिक्॥

व्याख्यानादिति। एकस्यानेकसंज्ञाप्रणयनानुपयोग इत्यादि प्रकृतसूत्रभाष्यादित्यर्थः। ननु "यच्छब्दयोगःप्राथम्यमित्याद्युद्देश्यलक्षणमि" त्यभियुक्तोक्त्या वृद्धिशब्दस्योद्देश्यबोधकत्वप्रतीत्या तस्य विधेयबोधकत्वमनुपपन्नमत आह। मङ्गलार्थ इति। तथा च मङ्गलार्थं पूर्वं पठितस्यापि परत्रानुसन्धानेन विधेयत्वप्रतीतिरिति नाभियुक्तोक्तिविरोध इति भावः। अपृक्त एकालित्यादावपृक्तपदस्य पूर्वप्रयोगोपपत्तये परिभाषात्वाश्रयणं कैयटस्यापृक्तसंज्ञायामिति भाष्यविरोधादयुक्तमिति सूचयन्नाह। अपृक्तेति। एवञ्चाभियुक्तोक्तिस्तथा प्रयोगे युक्तत्वबोधिका न तु विपरीतप्रयोगेऽसाधुत्वबोधिकेति भावः। संज्ञासूत्राणां नियामकत्वं कृतिमाकृत्रिमन्यायबीजतया प्राचीनोक्तमयुक्तमिति सूचयन्नाह। सर्वशब्दानामिति। सर्वार्थवाचकत्वेऽपीति। सिद्धे शब्दार्थसम्बन्ध इति वार्त्तिकेन शक्तेर्नित्यत्वबोधनेनासत्याश्शक्तेश्शास्त्रसहस्रेणाप्युत्पादयितुमशक्यत्वेनादैज्बोधानुकूलशक्तेः पूर्वं सत्त्वेऽपीति भावः। गृहीतस्यैवेति। अन्यथाऽव्युत्पन्नस्यापि बोधप्रसङ्ग इति भावः। विधित्वमिति। विधित्वे सम्भवति नियमत्वायोगात्प्राचीनोक्तनियामकत्वपक्षोऽनुचित इति भावः। किञ्च नियामकत्वं दुर्घटमेवेत्याशयेनाह। किञ्चेत्यादिना। योगिदृष्ट्येति। तेषां सर्व

**नास्मदृष्ट्या, सर्वशब्दानामर्थानाञ्च विशिष्यज्ञानाभावात्। सामान्यतस्तथा ज्ञानञ्च न बोधोपयोगि । शास्त्रं त्वस्मदाद्युद्देशेनैव प्रवृत्तमिति**

---

ज्ञत्वादिति भावः। **विशिष्यज्ञानाभावादिति।** प्रातिस्विकधर्मपुरस्कारेण ज्ञानाभावादित्यर्थः। तथाच तत्तद्धर्मावच्छिन्ने शक्तिग्रहो न घटत इति भावः। ननु वस्तुत्वादिसामान्यधर्मपुरस्कारेण सर्वार्थज्ञानस्यासर्वज्ञस्यापि सम्भवेन तदादाय सामान्यधर्मावच्छिन्ने तत्तद्व्यक्तौ शक्तिग्रहस्सुलभ इत्यत आह। **न बोधोपयोगीति।** प्रवृत्तिनिवृत्त्यन्यतरफलकविशेषधर्मप्रकारकबोधोपयोगी नेत्यर्थः। घटपदस्य द्रव्यत्वावच्छिन्ने शक्तिग्रहवतः पुंसो घटत्वप्रकारकबोधवारणाय शक्तिग्रहपदार्थोपस्थितिशाब्दबोधानां समानाकारकत्वनियमस्याभ्युपगन्तव्यतया-सामान्यधर्मप्रकारकशक्तिज्ञानाद्विशेषधर्मप्रकारकबोधासम्भवाच्छास्त्रीयप्रक्रियाऽनिर्वाहात्संज्ञाशास्त्राणां शास्त्रेऽनुपयोगापत्तिरिति भावः। ननु योगिनां विशिष्य शक्तिग्रहसम्भवान्नियामकत्वं सुघटम्। पाणिनेर्योगित्वेन तत्तात्पर्यस्य नियम एवोन्नेतुं शक्यत्वादत आह। **शास्त्रंत्विति।** अस्मदाद्युद्देशेन प्रवृत्तशास्त्रस्य अस्मदादिबोधतात्पर्येणैव कृतत्वेनास्माकं विधित्वेनैव बोधसम्भवात्तादृशमेव पाणिनेस्तात्पर्यमुन्नेयमिति भावः। **अस्मदाद्युद्देशेनैवेति।** प्राधान्येनेति शेषः। तेन तेषामपि शास्त्रप्रक्रियास्मरणपूर्वकप्रयोग एव धर्मोत्पत्तावपि न क्षतिः। अन्ये तु वृद्ध्यादिपदे पदत्वेनार्थबोधकत्वसिद्धौ वृद्ध्यादिपदमादैजादिबोधकमादैजादीतराबोधकत्वे सत्यर्थबोधकत्वादित्यनुमित्यात्मकशक्तिज्ञानेन विशेषरूपेण बोधसम्भवान्नियमार्थमेवेदमित्याहुः, तन्न। आदैजादीतराबोधकत्वस्येदानीमनिर्णयेन हेतोरसिद्धेः। नन्वेषां नियामकत्वनिराकरणायैतावान्प्रयासो विफलः योगिदृष्ट्यापि नियामकत्वासम्भवात्। सर्वार्थवाचकत्वञ्च नित्यानामयदृच्छाशब्दानामनादिसंकेतितानामेव। न चैते तथा। तेषां यदृच्छाशब्दत्वेनानित्यत्वेन च तत्र तत्र व्यवहारात्। तथाच नियामकत्वमेषां सर्वथा दुर्घटमेवेति

बोध्यम्। तत्रैव सङ्केतग्राहकशास्त्रकरणं स्वेच्छयैवेत्येषां यदृच्छाशब्दत्वेन व्यवहारः, स्वेच्छया सञ्ज्ञाः क्रियन्त इति च। एतदुपदेशरूपसङ्केतात्प्राक् तत्र सञ्ज्ञात्वाग्रहेण तासामनित्यत्वव्यवहारः। अत एव तत्तत्सञ्ज्ञाकरणज्ञानरूपप्रकरणादन्यार्थाग्रहणरूपनियमः कृत्रिमाकृत्रिमन्यायमूलतयोक्तः संख्यासञ्ज्ञासूत्रे भाष्ये। आर्थिकमेवामुं नियममादाय सञ्ज्ञासूत्रेषु नियमत्वव्यवहारो

---

प्राचीनमतं निराकर्तुमुचितम्। एवञ्च योग्युद्देशेनापि शास्त्रप्रवृत्तौ न विधित्वभङ्ग इति कैश्चिदुक्तं नियामकत्वखण्डनन्तु न युक्तमिति सूचयंस्तादृशव्यवहारानन्यथोपपादयति। तत्रैवेत्यादि। सङ्केतग्राहकशास्त्रकरणवृत्तियादृच्छिकत्वं शब्देष्वारोप्य व्यवहारः। अत एव वृद्धिसूत्रे भाष्ये वृद्धिरस्मायविशेषेणोपदिष्ट इत्यादिसाधुत्वप्रतिपादनं संगच्छत इति भावः। अनित्यत्वव्यवहारमुपपादयति। एतदुपदेशेति। एवञ्च तद्वृत्तिसंज्ञात्वग्रहोत्पत्तिं तेष्वारोप्यानित्यत्वव्यवहार इति भावः। ननु व्यवहाराणां स्वारसिकत्वमेवास्तु किमारोपेणेत्याशङ्क्य वस्तुत एषामयादृच्छिकत्वं नित्यत्वञ्चेति प्रमाणप्रदर्शनेन व्यवस्थापयन् प्राचीनोक्तं कृत्रिमन्यायबीजं संज्ञासूत्राणां नियामकत्वमित्यप्ययुक्तमिति सूचयन्नाह अत एवेति। प्रकरणं हि नानार्थकं शब्दमन्यार्थेभ्यो व्यावर्त्य स्वविषयमर्थं गोचरयति। एतेषां शब्दानामाधुनिकत्वे नानार्थत्वस्यैवाभावेन प्रकरणादन्यार्थाग्रहणरूपनियमस्य कृत्रिमाकृत्रिमन्यायमूलत्वोक्तिर्भाष्यकाराणामसंबद्धमेव स्यात्। एतद्विरोधेनान्यादृशं न्यायबीजकथनमयुक्तञ्चेति भावः। केचित्तु अत एवेत्यस्य संज्ञानामनित्यत्वादेवेत्यर्थः। संज्ञाकरणेति। नित्यत्वे तु नेदं सम्भवेत्। नित्यानां करणासम्भवात्। किञ्चैवं कृत्रिमत्वमप्यसम्भवि स्यादिति भावमाविश्चक्रुः। तन्न, प्रकरणादन्यार्थाग्रहणरूपनियम इत्यक्षरस्वारस्यभङ्गापत्तेः। सङ्केतग्राहकशास्त्रकरणमिति पूर्वग्रन्थेन तत्तच्छास्त्राणां करणमेव लभ्यते। न तु संज्ञाशब्दानां करणमिति पूर्वग्रन्थानानु-

**व्यवहाराय नियमः सञ्ज्ञायाः सञ्ज्ञिनि क्वचिदित्यादिना कृतः। वाचकताबोधकत्वेऽपि तदनुत्पादकत्वान्न शब्दार्थसंबन्धनित्यता-हानिः । आसाञ्च शिष्टप्रयुक्तत्वात्साधुत्वमित्यन्यत्र विस्तरः ।**

---

गुण्याच्च। एषां कृत्रिमत्वव्यवहारोऽप्यनित्यत्वव्यवहारवदौपचारिक इति स्वीकारेणादोषाच्चेति, तत्रैवेति ग्रन्थस्यालग्नकत्वापत्तेश्चेति दिक्। ननु संज्ञासूत्राणां नियामकत्वानङ्गीकारे हरिकृतोनियमव्यवहारो विरुध्येतेत्यत आह। **आर्थिकमेवेति** । अत्र सङ्केतग्राहकशास्त्रकरणादन्यार्थनिवृत्तेर्न्यायलब्धत्वादयमर्थ आर्थिको न तु शब्दमर्यादालब्ध इति भावः। ननु शब्दार्थयोस्सम्बन्धो वाचकता तस्या एतच्छास्त्राधीनत्वेनाधुनिकतया पूर्वोपपादितरीत्या शब्दानां नित्यत्वे "सिद्धेशब्दार्थसम्बन्ध" इति वार्त्तिकविरोधः। तस्माच्छब्दानामप्याधुनिकत्वमेव युक्तमित्याशङ्क्य वार्त्तिकविरोधं परिहरति। **वाचकताबोधकत्वेऽपीति**। यथा दीपानयनानन्तरं पूर्वं सन्नेव घटो ज्ञायते न तदानीमुत्पद्यते तद्वत्पूर्वं सती वाचकता ज्ञायत इति न नित्यताभङ्ग इति भावः। अनेन तत्तच्छब्दानां पूर्ववृत्तित्वोक्त्या नित्यत्वं सूचितम्। नन्वेषां शब्दानां पूर्ववृत्तित्वेऽपि अश्वशब्दस्य पशुविशेषेऽसाधुत्वस्य धनहीने साधुत्वस्य च लाभाय साधुत्वस्यार्थविशेषाधीनताया अङ्गीकरणीयतया सङ्केतितार्थे साधुत्वस्य शास्त्रानुपदिष्टत्वात्कथं तेषां साधुतेत्यत आह। **आसाञ्चेति**। एवञ्चास्मिन्नर्थे शिष्टप्रयोगात्साधुत्वमनुमीयते निपातनवत्। अत एव सर्वनामानीत्यत्र निपातनाण्णत्वाभाव उक्तो भाष्ये इति दिक्। ननु शास्त्रे यथोद्देशकार्यकालयोर्व्यवस्थितत्वादत्र कार्यकालाङ्गीकारेण तत्पक्षे संज्ञानामपि लाघवाद्यत्र वृद्धिपदं तत्रादैजुपतिष्ठत इत्येव मर्थेन विधिप्रदेश आदैजुपस्थित्या तेषां विधेयतयाऽन्वयेन पदैकवाक्यतया स्वीकर्तुं शक्यत्वेन तत्र तैर्विधेयत्वेन सवर्णग्रहणाप्रसक्त्या न परार्थमपि तपरकरणमिति प्राचीनोक्तमयुक्तमिति दूषयन्सिंहावलोकनन्यायेन तपरकरणफलं द्रढयति ।

कार्यकालपक्षेऽपि "मृजेर्वृद्धिः" इत्यादौ वृद्धिपदार्थजिज्ञासायां वृद्धिरादैजित्युपस्थित्या तदर्थबोधरूपे शक्तिग्रहे वृत्ते विधिवाक्यार्थबोधः। अत एव "ष्यङः संप्रसारणम्" इति सूत्रे भाष्ये "कार्यकालं सञ्ज्ञापरिभाषं भस्येत्युपस्थितमिदं भवति यचि भमिति" इत्युक्तम्। "ईदूदेद्" इति सूत्रे भाष्येऽपि "कार्यकालं सञ्ज्ञापरिभाषं प्रगृह्याः प्रकृत्येत्युपस्थितमिदं भवति ईदूदेद् द्विवचनं प्रगृह्यमिति"। निष्ठेति सूत्रे कैयटोऽपि "निष्ठेत्युक्ते सञ्ज्ञावाक्यं क्तक्तवतू निष्ठेति स्मर्यते" इत्याह। अत्र पक्षे एकत्र शक्तिग्रहे वृत्तेऽपि तत्प्रदेशस्थस्यैव तत्रार्थे शक्तिरिति सम्भावनया प्रदेशान्तरस्थे बोधो न स्यादिति सर्वप्रदेशेषु तत्तत्पदशक्तिग्रहपूर्वकं विधिवाक्यार्थबोधः। यथोद्देशे तु

---

कार्यकालपक्षेऽपीति। वृद्धिरादैजित्युपस्थित्येति। वृद्धिपदघटितोपस्थितिप्रदर्शनेन विधिसूत्रस्थस्योपस्थितस्य संज्ञासूत्रघटकस्य च द्वयोर्वृद्धिपदयोः पदैकवाक्यतायां नैरर्थक्येन सा दुर्वचेति सूचितम्। तस्माद्वाक्यैकवाक्यतयैवास्योपयोगइति भावः। तदाह। शक्तिग्रहे वृत्त इति। पृथग्वाक्येनेति भावः। सति सप्तम्या वाक्यार्थयोः पौर्वापर्यबोधनाद्वाक्यैकवाक्यतयैव विध्युपकारकत्वं संज्ञासूत्राणामिति सूचितम्। एवञ्चादैच्पदोपस्थितानां विधेयत्वेनानन्वयान्न भाव्यमानपरिभाषया निर्वाह इति, अतत्कालव्यावृत्तिस्तपरत्वाधीनैवेत्याशयः। ननु यत्र वृद्धिपदं तत्रादैजित्युपतिष्ठत इत्येवं संज्ञासूत्राणामर्थान्न संज्ञासूत्राद्वृद्धिपदोपस्थितिः। विधिघटकवृद्धिपदन्तूपस्थितादैक्ष्वभेदेनान्वेतीकपरिभाषोपस्थितये। एवञ्च पदैकवाक्यता सुलभेत्यत आह। अत एवेति आहेत्यन्तम्। एवञ्च तत्र भपदादिघटितस्योपस्थितिप्रदर्शनेन वाक्यैकवाक्यताया लाभेन पदैकवाक्यत्वाङ्गीकारस्तद्विरोधेन प्राचामयुक्त इति भावः। नन्वेवं सति पक्षद्वयेऽपि वाक्यैकवाक्यतयाऽन्वयस्वीकारे पक्षयोरवैलक्षण्यमत आह। यथोद्देशेत्विति। अत्र

एकदैव शक्तिग्रहात्सर्वत्र बोध इति विशेषः । एतेन "कार्यकालपक्षे तपरत्वं स्पष्टार्थमेव । आदैच्पदार्थस्य वृद्धिविशेषणतया विधेयत्वेन सवर्णग्रहणाप्रसक्तेः । यत्र वृद्धिपदं तत्रादैजित्युपतिष्ठते इति क्रमेण सञ्ज्ञासूत्राणामर्थात्" इत्यपास्तमित्यन्यत्र विस्तरः । अत्रातद्भावितानामप्यादैचां ग्रहणं तेन शालीयादिसिद्धिः ॥

---

पक्षे स्वदेश एवैकवाक्यता, कार्यकाले तु विधिदेश इति पक्षयोर्भेद इति भावः। एतेनेति । पदैकवाक्यताया असम्भवेनेत्यर्थः । वृद्धिविशेषणेति । बहुव्रीहिरयम् । वृद्धिविशेष्यतयेत्यर्थः । वृद्धिपदस्य विशेषणतयाऽन्वय इक्परिभाषोपस्थानायेति पूर्वमेवोक्तम् । अन्यत्र विस्तर इति । अत्र पदैकवाक्यतायास्सुतरामसम्भवः पक्षयोः फलांशेऽपि वैलक्षण्यञ्च परिभाषेन्दुटिप्पणीतोऽवसेयः ॥

आदिशब्दयोर्व्यवस्थाप्रकारवाचिनोरेकशेषः । भूश्च वाश्चेति द्वन्द्वः । ततो बहुव्रीहिः । अत्रैकशेषद्वन्द्वयोस्साहित्याभावेऽपि साधुत्वमाद्यन्तौ टकितावित्यत्रेव बोध्यम् । भूवौ परस्परसाहचर्यात्क्रियावाचिनौ ग्राह्यौ । व्याख्यानात्परस्मैपदानामित्यत्र सूत्रान्तरीयक्रममादायेव विग्रहवाक्यीयक्रममादाय यथासंख्येनान्वयः । एकपदोपस्थाप्ययोरपि खण्डशक्तिस्थले परस्परान्वयदर्शनेन श्लिष्टरूपकस्थल इव क्रियावाचिधातुगणपठितयोः परस्परमभेदान्वयः । एतेन भूवादयश्च भूवादयश्चेत्येकशेषविग्रहवाक्यं प्रदर्शयन्तः परास्ताः । अत्र व्याख्याने एकत्र भूग्रहणस्यापरत्र वाग्रहणस्य च साहचर्यैकशेषनिर्वाहातिरिक्तफलाभावेन नैरर्थक्याच्च । यत्तु-भ्वादय इत्यस्यावृत्तिर्न्याय्या वाशब्दो मध्ये मङ्गलार्थ इति भाष्यस्वारस्यात् सादृश्यप्रतियोगिसमर्पकश्च भूशब्दः क्रियावाचक एव वाशब्दवत् । तथापि समासमध्ये वाशब्दप्रवेशस्य सौत्रत्वमावृत्तिश्चेति क्लेशाधिक्यादेवमुक्तमिति, तन्न । तत्र वकारस्यागमत्वस्यैव भाष्यतो लाभात् । आगमस्य समासमध्ये प्रवेशे

भूवादयो। क्रियावाचिनः किम्। विकल्पार्थकवाशब्दस्य निपातस्य धातुत्वेऽप्रातिपदिकत्वात्सुबभावे पदत्वानापत्तेः। तदुक्तौ तु न दोषः। वार्थस्य विकल्पस्य भूतभविष्यत्कालसम्बन्धाभावेन क्रिया-

---

बाधकाभावान्निपातनाद्वकारानुमानात्। अत्रापि पक्षे साहित्याभावेऽपि द्वन्द्वस्य सौत्रत्वेनैव निर्वाह्यत्वाच्च। तस्माद्भाष्योक्तव्याख्याने क्रियावाचकस्य भूशब्दस्य ग्रहणमिति यत्नसाध्यम्। अत्र व्याख्याने सहचरितपरिभाषया तल्लाभः स्वारसिक इत्याशयेनैवं व्याख्यानमादृतं मनोरमाकृतेति बोध्यम्। क्रियावाचिनः किमिति। इति तु नेति शेषोऽत्र बोध्यः। पदत्वानापत्तेरिति पञ्चम्यन्तान्वयानुरोधात्। पदत्वानापत्तेरिति। तथा च वा करोतीत्यत्र तिङतिङ इति निघातानापत्तिरिति भावः। अत्र केचित्। इदं चिन्त्यम्। निपातस्यानर्थकस्येति वार्त्तिके अनर्थकग्रहणप्रत्याख्यानेन वाशब्दस्य वार्त्तिकेन प्रातिपदिकत्वस्य वक्तुं शक्यत्वात्। तस्माद्व्युत्पन्नादिवृ शब्दस्य धातुत्वे स्वादयो न स्युरिति भाष्योक्तमेव प्रत्युदाहरणीयमित्याहुः। तन्न। अर्थवत्सूत्रे भाष्ये अधिपरी अनर्थकाविति ज्ञापकादनर्थकानां प्रातिपदिकसंज्ञासिद्धिमाश्रित्य निपातस्यानर्थकस्येति वार्त्तिकस्यैव अथवेत्यादिना प्रत्याख्यानेन वाशब्दस्य प्रातिपदिकत्वस्य अन्यथादुस्साधत्वात्। अर्थवत्सूत्रभाष्यविरोधेनैतत्सूत्रे वार्त्तिकेन साधनस्यैकदेशयुक्तित्वात्। दिवित्यत्र दिव औदिति ज्ञापकेन भाष्योक्तरीत्या स्वादीनां सुसाधत्वाच्चेति दिक्। ननु विपूर्वकक्लृप्त्यर्थस्य विकल्पस्य क्रियात्वात्तस्यैव वाशब्देन बोधनात्क्रियावाचकत्वाक्षतेर्भक्षितेऽपि लशुन इति न्यायावतार इत्यत आह। वार्थस्येति। अयं भावः। कालान्वयित्वं कालान्वयितावच्छेदकविलक्षणरूपवत्त्वरूपसाध्यत्वेन प्रतीयमानत्वं वा प्रकृते क्रियात्वम्। वाशब्दार्थस्य धात्वर्थस्य विकल्पस्यैकत्वेऽपि वाशब्देन निरुक्तक्रियात्वरूपेण क्रियाया नोपस्थितिः। व्युत्पत्तिवैचित्र्येण शब्दभेदे विभिन्नरूपेणोपस्थितिस्वीकारात्।

त्वाभावात् । अस्त्याद्यर्थस्यापि तत्त्वं भूतभविष्यत्कालसंबन्धात् । भ्वादयः किम् । आणवयति वट्टयतीत्यादीनां धातुत्वे शास्त्रविषयतया सा-

---

प्रकृते च निरुक्तक्रियात्वरूपेण क्रियोपस्थापका एव क्रियावाचिन इत्यनेन विवक्षिता इति । एतेन न तावद्धात्वर्थत्वं क्रियात्वं क्रियावाचित्वे ज्ञाते सति धातुत्वज्ञानं धातुवाच्यत्वे क्रियात्वज्ञानमित्यन्योन्याश्रयात् । नापि लिङ्गाद्यनन्वयित्वं तत् । वार्थविकल्पेऽपि तत्सत्त्वात् । नापि साध्यतया प्रतीयमानत्वं तत् । धात्वर्थत्वे तथात्वं निपातार्थत्वे नेति शपथैकगम्यत्वादित्यपास्तम् । क्रियान्तराकाङ्क्षानुत्थापकतावच्छेदकरूपवत्त्वन्तु न साध्यत्वलक्षणम् । क्रियाघटितत्वेनान्योन्याश्रयात् । किन्तु परिचायकमिति बोध्यम् । क्रियावाचकत्वं च साध्यत्वविशिष्टत्वं । वैशिष्ट्यंच । स्वावच्छिन्ननिरूपितशक्तिपर्याप्त्यधिकरणत्व स्वावच्छिन्नेतरनिरूपितशक्तिनिरूपकार्थविषयकबोधतात्पर्येणोच्चारिताघटितत्व स्वावच्छिन्ननिरूपितशक्तिनिरूपकार्थविषयकबोधतात्पर्येणोच्चारितत्वैतत्त्रितयसंबन्धेन । आदिसंबन्धदाने न भावतिङन्तस्य न क्रियावाचकत्वम् । द्वितीयसंबन्धदानेन दरिद्रातीत्यर्थकदरिद्राशब्दे न क्रियावाचकत्वम् । तृतीयसंबन्धदानेन विकल्पार्थकवाशब्दस्य न क्रियावाचकत्वमिति केचित् । अत्र भावतिङन्तस्य क्रियावाचकत्वनिरसनप्रयासो विफलः । तस्य धातुत्वेऽपि दोषाभावस्य शब्दरत्ने उपपादितत्वात् । प्रकाशकृतस्तु क्रियानिष्ठमुख्यविशेष्यताकबोधानुकूलशक्तिविशिष्टत्वम्, तत्त्वम् । वैशिष्ट्यं च स्वपर्याप्त्यधिकरणत्व स्वनिरूपकार्थविषयकबोधतात्पर्येणोच्चारितत्वैतदुभयसंबन्धेन । पूर्वोक्तदरिद्रा शब्दे द्वितीयसंबन्धाभावेन दुर्गतित्वावच्छिन्नार्थविषयकबोधानुकूलशक्तिमादाय प्रथमसंबन्धाभावेन कुत्सामुख्यविशेष्यकबोधानुकूलशक्तिमादाय च नातिव्याप्तिः । लिडादौ च नाव्याप्तिरित्याहुः । भ्वादयः किमिति । साहचर्यार्थं तु न तत् । तावन्मात्रार्थकत्वे क्रियार्था धातव इत्येव ब्रूयादित्याशयः । आणवय-

धुत्वापत्तेः। सूत्रशेषे भाष्ये स्फुटमेतत्। स्तम्भ्वादीनामुदित्त्वेन धात्व-

---

तीति। आज्ञापयतीत्येतदर्थकाणवेदीत्यस्य स्थाने आपाद्यमानमिदम्। वट्ट-यतीति। वर्तयतीत्यर्थकवट्टेदीत्यस्य स्थाने आपाद्यमानमिदम्। उभयत्रै-कारान्तस्य क्रियावाचकत्वमिति केचित्। तन्न। तिङापत्तेरेव वक्तव्यत्वे शास्त्र-विषयतया साधुत्वापत्तिकथनवैयर्थ्यापत्तेः। तस्मादाणवयतीत्यादिविशिष्टमेव आज्ञापयतीत्यादीनामपभ्रंशभूतम्। तत्र प्रकृतिभागस्य धातुत्वापत्तिर्बोध्येति चिदस्थिमालाकाराशय इति प्रकाशकृत्। शास्त्रविषयतयेति। अयं भावः। धातुसंज्ञा हि शास्त्रीयकार्यनिर्वाहार्थं विधीयते। शास्त्रीयं च कार्यं साधुष्वेव प्रवर्तते। एवं च क्रियावाचित्वेन विधीयमाना धातुसंज्ञा तेषां साधुत्वमनुमापये-दिति। प्रकाशकृतस्तु साधुशब्देष्वेव शास्त्रप्रवृत्त्या इदं सूत्रं भ्वादयस्साधवस्ते च धातव इत्युभयं विधत्ते। भूसत्तायामित्यादिना बहूनां साधुत्वविधायकत्वे गौरवात्। एवं च भ्वादिग्रहणाभावे क्रियावाचिनस्साधवस्ते च धातुसंज्ञा इत्यर्थापत्तौ एतेषां साधुत्वापत्तिरित्याशयमाविष्कृत्य यदि तु भूसत्तायामित्यादीनां साधुत्व-विधायकत्वमभ्युपेत्य भ्वादिग्रहणं खण्ड्यते तदा कस्मात्त्वं नद्या इत्यादिवाक्यैक-देशप्रयोगे कस्मादित्यादीनामागमनादिबोधकत्वेन धातुत्वापत्तिस्सुब्लुगापत्तिश्च दोषो बोध्य इत्याहुः। तन्न। कस्मादित्यस्य क्रियावाचकत्वाभ्युपगमे तुल्ययु-क्त्वा दरिद्रातीत्यर्थे आतोऽनुपसर्ग इति निष्पन्नदरिद्रशब्दान्निष्पन्नदरिद्राशब्दस्य वाक्यैकदेशस्य प्रयोगे धातुत्वापत्तिः। तस्माद्वाक्यैकदेशप्रयोगे क्रियावाचकत्वा-भाव एवावश्यं वाच्यः। तथा च तदुक्तदोषो न लगत्येवेति भाति। यदि तु सनाद्यन्ता इति सूत्रारम्भात्पठितानामेव संज्ञेत्युच्यते तदा भ्वादिग्रहणं शक्यम-कर्तुम्। भ्वादिगणापठितानां केषांचिदिष्टं धातुत्वमुपपादयति। स्तम्भ्वादी-नामिति। ननु नुमर्थमुदित्करणं स्यादत आह। धात्वधिकारेति। आदिना तत्प्रकृतिकच्ल्यनुवादेनाङ्विधानस्य संग्रहः। सार्वधतुके विकरणविधानसंग्रहकथ-

धिकारविहितकार्योद्देश्यत्वादिना स्थितपाठभ्रंशानुमानान्न तेषु दोषः॥

प्राग्रीश्व । 'अधिरीश्वरे' इत्यभिव्याप्य प्राङ्निपाता इत्यधिकारः। प्राक् निपाताः सन्तो गत्यादिसञ्ज्ञका इत्यर्थः। तेन ताभिः समावेशः "अधिरीश्वरे" "विभाषा कृञि" इत्यत्र निपातपदसंबन्धश्च सिद्धः। एषां द्योतकत्वं वाचकत्वञ्च यथाकार्यं यथाप्रयोगं बोद्धव्यमित्यन्यत्र विस्तरः ॥

---

नन्तु न युक्तम् । तेषामपि धात्वधिकारीयकार्यत्वात् । तैरपूर्ववचनकल्पनापेक्षया प्रकृतसूत्रविषयतासंपादनमुचितमित्याशयेनाह । स्थितेति ॥

रीश्वरादिति पञ्चमी प्रागित्येतद्योगनिबन्धनेति भ्रमवारणायाह । अधिरीश्वरइत्याभिव्याप्येति। ल्यब्लोप इति, अभिव्याप्त्यर्थकाङध्याहारेण वा पञ्चमीति भावः । प्रागित्येतद्घटितस्य अधिकारस्वीकारे अभिव्याप्ति-स्वीकारे च फलं दर्शयति । तेनेति। विभाषा कृञीति। अधिरीश्वर इत्यस्या-त्रानुवृत्तेरिति भावः। द्योतकत्वमिति। अनुभूयत इत्यादौ। वाचकत्वमिति। अहंयुरित्यादौ। यथा कार्यमित्यादि। एतेनोपसर्गाणां द्योतकत्वम्, तदति-रिक्तनिपातानां वाचकत्वमिति नैयायिकोक्तम्, अर्धजरतीयस्यानौचित्यात् सर्वेषां द्योतकत्वं वाचकत्वं वेति दीक्षितोक्तञ्च परास्तम्। शरैरुस्रैरिवेत्यादौ तृतीयासाधुत्वाय द्योतकत्वाङ्गीकारस्यावश्यकत्वाच्च। यथा प्रयोगमिति। नत्वपूर्वतया द्योतकत्वादिविवक्षाभेदेन कार्यभेद आपादनीय इति भावः। एतेन शरैरुस्रैरित्यादौ कदाचिद्वाचकत्वविवक्षया पाक्षिकषष्ठ्यन्तप्रयोगापत्तिरपास्ता। तादृशानामप्रयोगात् ॥

ननु पर्युदासेन व्याख्यानमनुचितं, भाष्ये तत्पक्षे विप्रशब्दे दोषमुद्भाव्य प्रसज्यप्रतिषेधस्यैव स्वीकारात्। गौरवन्तु फलानुबन्धित्वान्न दूषकमित्यत आह।

**असत्त्वे इति पर्युदासो लाघवादित्याह । अद्रव्येति । विशेष्यतया द्रव्यभिन्नार्था इत्यर्थः । तेन क्रियाविशिष्टद्रव्यवाचिनां विप्रादिघटकप्रादीनां न । चादयः किम् । स्वरादिपठितानामसत्त्ववृत्तित्वे आद्युदात्तत्वं मा भूदिति ॥**

**उपसर्गाः । योगग्रहणं यदर्थे प्रादीनामन्वयस्तं प्रत्येवोपसर्गत्वादीत्यर्थबोधनाय । तेन विगताः सेचका अस्माद्विसेचको ग्राम इत्यादौ षत्वं न ॥**

---

**विशेष्यतयेति ।** यथा न दोषस्तथास्त्वित्युपसंहारभाष्येण सत्यपि दोषवारणोपाये प्रसज्यप्रतिषेध एवेत्यभिनिवेशाभावसूचनेन पर्युदासेऽप्येवं दोषवारणस्य सुकरतया लाघवात्पर्युदास एवोचित इति भावः । इत्यर्थ इति । द्रव्यभिन्ननिष्ठोपस्थितीयमुख्यविशेष्यताप्रयोजका इत्यर्थः । अत्र द्रव्यपदेन सर्वनाम्ना-परामर्शयोग्यं वस्तु लिङ्गसंख्याविशेष्यत्वेन विवक्षितो वा विवक्ष्यते । "वस्तूपलक्षणं यत्र सर्वनाम प्रयुज्यते । द्रव्यमित्युच्यते सोऽर्थो भेद्यत्वेन विवक्षित" इत्युक्तेः । येन वस्तूपलक्ष्यते परामृश्यते तत्सर्वनाम यत्र परामर्शाय प्रयुज्यते सोऽर्थो द्रव्यमित्युच्यते । अथ वा लिङ्गसंख्याविशेष्यत्वेन विवक्षितो द्रव्यमित्युच्यत इति कारिकार्थः । न तु गुणाद्याश्रयं विवक्ष्यते गुणादिवचनानाम द्रव्यार्थत्वापत्तेः । **असत्त्ववृत्तित्वे इति ।** असत्त्ववृत्तिषु केषु चिदेव प्रातरादिषु दोषो न तु सर्वत्रेति सूचितम् । एतेन स्वरादिपाठसामर्थ्यादेव निपातत्वमिति प्रत्युक्तम् । सत्त्ववृत्तितायां तत्पाठस्य चारितार्थ्यात् ॥

उपसर्गाः । क्रियेति लुप्ततृतीयान्तपदेन स्तोःश्चुनेत्यत्रेव योग इत्यर्थलाभाद् योगग्रहणं व्यर्थमत आह । **योगग्रहणमिति ।** अयं भावः । क्रियेति लुप्ततृतीयान्तः स्तोःश्चुनेत्यत्रेव योग इत्यस्याध्याहारः । सूत्रे योग इति चार्श-

गतिश्चेति । च उपसर्गसञ्ज्ञासमावेशार्थः । तेन प्रतिप्रणीतमित्यादौ गतित्वात् "गतिरनन्तरः" इति स्वर उपसर्गत्वाण्णत्वञ्च सिद्ध्यति । प्रादय इति योगविभागस्तु क्रियायोगाभावेऽपि निपातत्वाय । एतत्सिद्धमेवोपसर्गप्रतिरूपकस्य निपातत्वमुक्तं चाद्यन्तर्गणसूत्रेणेति दिक् । प्रपरेत्यादावनुकार्यानुकरणयोरभेदविवक्षया सुब-

---

आद्यजन्तं योगशब्दोऽन्वयवाची । तथा च योग इत्यन्वयिनीत्यर्थकं विषयसप्तमी । तथा च क्रियायोगे प्रादयस्त्वान्वयिक्रियाविषये उपसर्गा इति वाक्यार्थः । क्रियाविषये उपसर्गसंज्ञा इत्युक्त्या तद्वाचकं प्रतीत्यर्थाल्लभ्यते । प्रादिषु क्रियायोगश्च तत्तात्पर्यग्राहकत्वम् । उभयत्र क्रिया प्रत्यासत्त्या एकैव गृह्यते । एवं च स्वार्थक्रियाविषयकतात्पर्यग्राहकाः प्रादयस्तादृशक्रियावाचकस्वनिरूपितोपसर्गत्ववन्त इति । प्रकाशकारस्तु जन्यबोधविषयक्रियाविशेषविषयकतात्पर्यग्राहकत्वे सति प्राद्यन्यतमत्वमुपसर्गत्वं फलितं तत्र यज्जन्यबोधस्तादृशधातुं प्रत्येवोपसर्गत्वं योगग्रहणाल्लभ्यत इति तत्त्वमित्याहुः ॥

गतिसंज्ञाया निपातसंज्ञासमावेशस्य प्रागित्यधिकारादेव सिद्धत्वादाह । च उपसर्गेति । समावेशफलं दर्शयति । तेन प्रतिप्रणीतमिति । प्रतिशब्दोपादानं प्रसंगादनन्तरग्रहणसाफल्यमपि दर्शयितुम् । न चैकयोगकरणेन संज्ञाद्वयस्य सहविधानेन समावेशस्सुवच इति वाच्यम् । उत्तरत्र गतेरेवानुवृत्त्यर्थं योगविभागावश्यकत्वात् । प्रादय इति योगविभागफलं दर्शयति । योगविभागस्त्विति । निपातत्वायेति । तेन प्रगत आचार्यः प्राचार्य इत्यदावव्ययपूर्वपदप्रकृतिस्वरः सिध्यति । ननूपसर्गप्रतिरूपकस्य निपातसंज्ञायाः पृथगुक्तत्वेनायं योगविभागो विफल इत्यत आह । एतत्सिद्धमिति । एवं च तदर्थमपूर्ववचनकल्पनापेक्षया योगविभागेन तत्संग्रह उचित इति भावः । अभेदविवक्षयेति । तत्पक्षे सादृश्येनैवानुकार्योपस्थित्या वृत्तिसहकारेणार्थ-

नुत्पत्तिः। निस्दुसिति। अत्रेदं बोध्यम्। सान्तग्रहणे रान्तस्याग्रहणमेव। यत्र तु रुत्वमसिद्धं तत्र रान्तग्रहणेऽपि न सान्तग्रहणं तद्दृष्ट्या रुत्वस्यासिद्धत्वात्। यत्र तु रुत्वस्य सिद्धत्वं यथा षत्वणत्वयोस्तद्विषयोपसर्गत्वप्रतिषेधपरे "दुरः षत्वणत्वयोः" इति वार्त्तिके

---

बोधकत्वाभावेन प्रातिपदिकत्वाभाव इति भावः। इदं प्राचामनुरोधेन, स्वमते भेदविवक्षाया एव वक्ष्यमाणत्वात्। यद्वा अभेदविवक्षया प्रकृतिवदनुकरणमित्यनुकार्यस्यानुकरणाभेदबोधनेनेत्यर्थः। सुबनुत्पत्तिरिति। अव्ययत्वेनेत्यादिः। तथा चाव्ययादाप्सुप इति लुक् लुका चानुत्पत्तेरेवान्वाख्यानमिति भावः। अत्र पक्षे अनुकार्यस्वरूपभङ्गभिया न पदत्वकार्यमिति बोध्यम्। सान्तग्रहणे इति। अभिनिसस्तनः, निसस्तपतावित्यत्र। रान्तस्याग्रहणमेवेति। यत्र तु रुत्वमसिद्धं तत्र सान्ताग्रहणाय यत्र तु रुत्वं सिद्धं तत्रोभयग्रहणाय च रान्तग्रहणस्य शास्त्रे क्लृप्ततया अत्राप्यैकरूप्यार्थं रान्त एवोच्चारणीये सान्तग्रहणसामर्थ्यात्प्रतिपदोक्तपरिभाषया वेति भावः। यत्तु, न च रुत्वविसर्जनीयसत्वेष्वस्यापि लाक्षणिकत्वमेवेति वाच्यम्। सामर्थ्याद्भूतपूर्वप्रतिपदोक्तस्य ग्रहणेन सम्भवादिति प्रकाशकृदुक्तम्, तन्नसम्यक्। प्रतिपदोक्तस्यासम्भवात्प्रतिपदोक्तपरिभाषाया अप्रवृत्त्या सूत्रसार्थक्यसम्भवेन सामर्थ्याभावाद्भूतपूर्वप्रतिपदोक्तत्वेन निर्वाहासम्भवात्। वाक्यार्थबोधकाल एव पदैकवाक्यतया परिभाषया संस्कारे तु प्रतिपदोक्ते गृहीतेऽस्यापवादत्वात्तद्विषये रुत्वादीनामप्रवृत्तिरेव युक्तमिति सर्वथा सामर्थ्याद्भूतपूर्वप्रतिपदोक्ताश्रयणमसंगतमेवेति दिक्। रान्तग्रहणे क्वचित्कृतरुत्वस्य ग्रहणं क्वचिद्रेफान्तस्यैवेति वैषम्यमित्याह। यत्र त्विति। निरः कुषः निरोदेशे सुदुरोरधिकरणे इत्यादावित्यर्थः। असिद्धत्वादिति। प्रतिपदोक्तपरिभाषया च न सान्तस्य ग्रहणमित्यपि बोध्यम्। न चैवमेकाच उपदेश इत्यस्यानन्तरं निरः कुषो निष्ठायामिति न्यासेन सिद्धे स्वरतीति प्रकरणे निरः

कुषः, इण्निष्ठायामिति गुरुभूतन्यासवैयर्थ्यम् । उपसर्गद्वयेन रूपद्वयस्य सिद्ध-त्वादिति वाच्यम् । एवं सत्यनिष्ठायामिति पर्युदासेन कृत्स्नेव प्रसंगात् । न निष्ठायामिति पृथग्योगेन निषेधस्य निषेधकरणे तु तदनुवृत्तिरुत्तरत्रापि संभाव्येत नापि च लाघवमिति ज्योत्स्नाकारः । आचार्यास्तु इदमयुक्तम् । इण्निष्ठायामिति सूत्रस्थभाष्यविरोधात् । तत्र हि इड्ग्रहणेऽनुवर्तमाने पुनरिड्ग्रहणं किमर्थम् । नित्यार्थोऽयमारम्भः नैतदस्ति प्रयोजनम् । सिद्धात्र विभाषा निरः कुष इत्यनेन । तत्रारम्भसामर्थ्यान्नित्योऽपि विधिर्भविष्यति । नात्र पूर्वेण विभाषा प्राप्नोति । किं कारणम् । यस्य विभाषेति प्रतिषेधात् । तत्रारम्भसामर्थ्याद्विभाषा लभ्येत । पुनरिड्ग्रहणादिडेवेति । तत्र यदुपाधेर्विभाषा तदुपाधेः प्रतिषेध इति भाष्यकृता सिद्धान्तितत्वात् । निरःकुषो निष्ठाया यस्यविभाषेति प्रतिषेधेऽपि निसः कुषो निष्ठाया इट् संभवान्निष्कुषितं निष्कुष्टमिति रूपद्वयस्य सिद्धौ नात्र पूर्वेण विभाषा प्राप्नोतीति भाष्यासंगतेः । इड्ग्रहणे क्रियमाणेऽप्युक्तरीत्या इड्विकल्पापत्त्या पुनरिड्ग्रहणादिडेवेति भाष्यासंगतिश्च । उक्तरीत्याविकल्पप्राप्तौ इण्निष्ठयामिति सूत्रवैयर्थ्यं च । तस्मादिण्निष्ठायामिति सूत्रारम्भसामर्थ्यादुक्तभाष्यप्रामाण्याच्च यत्र रुत्वस्यासिद्धत्वं सिद्धत्वं वा तत्र रान्तग्रहणे सान्तग्रहणं भवत्येवेत्याहुः । ग्रन्थतत्त्वविदस्तु अस्माद्भाष्यात्सूत्रप्रामाण्यान्निसः कुषावनभिधानमित्येव युक्तम् । सर्वत्र सान्तस्यापि ग्रहणमिति तु न युक्तम् । एतद्दृष्ट्या रुत्वस्यासिद्धत्वेन लाक्षणिकत्वेन तद्ग्रहणासंभवात् । भाष्यप्रामाण्यात्सूत्रारम्भाच्चासिद्धत्वबाधकल्पने तस्योपसर्गनिमित्तककार्यमात्रविषयकत्वेन निरयते दुरयते इत्यादावपि लत्वापत्तिः । प्रादिषु दुसः पाठसामर्थ्याज्ज्ञापकस्य विशेषापेक्षत्वे तु प्रकृतसूत्रमात्रविषयकताया एव वक्तुं युक्तत्वेन सर्वत्र सान्तस्यापि ग्रहणमिति वक्तुमशक्यत्वात् । अनभिधानाश्रयणेन सामञ्जस्ये पूर्वत्रासिद्धमिति सूत्रबाधकल्पनायाःप्रतिपदोक्तपरिभाषाबाधकल्पनायाश्चानौचित्याच्च । तस्माद्यत्र

कृतरेफसान्तस्यापि ग्रहणम्। षत्वणत्वयोरित्यस्य तद्विधायकशास्त्रयोरित्यर्थात्। अत एव सुषामादिषु दुःष्ठुशब्दपाठः सार्थकः। स हि "अपदुःसुषु स्थः कुः" इति दुस्पूर्वकस्थाधातोः कुप्रत्यये साधुः। अन्यथा दुस्पूर्वकात्कुप्रत्यये उपसर्गादित्येव षत्वे सिद्धे तद्वैयर्थ्यं

---

रुत्वमसिद्धमिति ग्रन्थस्य निसः कुषोऽनभिधानमित्याशयेन निरः कुष इत्येतदतिरिक्तरान्तग्रहणस्थलाभिप्रायेण वा प्रवृत्तत्वमिति स्वीकारे न पूर्वोक्तभाष्यविरोधादिप्रसङ्ग इत्ययुक्तत्वप्रतिपादनमाचार्याणामभिमानत एवेति सुधीभिराकलनीयमित्याहुः। कृतरेफेति। सकारविशेषणम्। सान्तस्यापीति। तेन दुस्स्थितमित्यत्र कदाचिदपि षत्वं न। ननु षत्वणत्वयोरिति वार्त्तिके कार्ययोरुपादानात्तयोः कर्तव्ययोरुपसर्गत्वप्रतिषेध इत्यर्थे वार्त्तिकस्योपसर्गसंज्ञासूत्रस्थत्वलाभाद्यत्र तु रुत्वं सिद्धमित्यस्यैतदुदाहरणत्वमनुपपन्नमित्यत आह। षत्वणत्वयोरित्यस्येति। तच्छास्त्रयोरुपसर्गपदार्थे दुरतिरिक्तत्वेन संकोचःकार्य इति तदर्थेन तत्तत्सूत्रस्थत्वं वार्त्तिकस्येति भावः। ननु षत्वणत्वयोरित्यस्य यथाश्रुतार्थकत्वमेव किं न स्यात्तथाच रुत्वस्यासिद्धत्वात्सान्तग्रहणं दुर्लभम्। किञ्च लाक्षणिकत्वाच्च कृतरेफसान्तग्रहणं दुर्लभमत आह। अत एवेति। अन्यथेति। कृतरेफसान्तस्याग्रहणे इत्यर्थः। तद्वैयर्थ्यमिति। न च दुर्पूर्वकस्थाधातोःकुप्रत्यये षत्वविनिर्मुक्तप्रयोगवारणाय तत्सार्थकमिति वाच्यम्। स्वपदुस्सुषु स्थ इति न्यासेन सप्तमीबहुवचने रोरेव विसर्जनीयसंभावात्सान्त एवोपपदे कुप्रत्यय इत्यर्थलाभेन यथान्यासेऽपि दुस्सुष्वित्यत्र सकारप्रश्लेषेण सान्तदुसेव प्रत्यय इत्यर्थेन वा रेफान्ते कुप्रत्ययाभावस्वीकारेणैव सिद्धावेतद्वैयर्थ्यमित्याशयात्। स्पष्टमेवेति। तथाच यावता विनानुपपत्तिरिति न्यायेन प्रतिपदोक्तपरिभाषाया अप्रवृत्तिः षत्वणत्वयोरित्यस्य तद्विधायकशास्त्रपरता चेत्युभयं ज्ञाप्यत इति भावः।

स्पष्टमेव । न चास्य रूढत्वेनावयवार्थाभावादुपसर्गत्वाभावः । अत्यन्तरूढेषु प्रतिष्ठानिष्ठादिषु षत्वानापत्तेः । अर्थवत्त्वारोपेण चेत्प्रकृतेऽपि। दुसः पाठस्तु दुरयते इत्यादौ रुत्वासिद्ध्या लत्वाभावार्थ इति दिक् ॥

न वेति। इतिर्लोकेऽर्थपदार्थकस्य शब्दपदार्थकत्वकृत् । यथा 'गवित्ययमाह' इत्यादावनुकरणे । इह तु "स्वं रूपं" इति परिभाषणाच्छब्दपदार्थकस्यार्थपदार्थकत्वकृत् । क्वचिदितेर्न पदार्थविपर्यासकत्वं यथाऽनुवादवाक्ये । स च न वाशब्दाभ्यां प्रत्येकं संबध्यते

---

उपसर्गत्वाभाव इति । तथा चात्र षत्वाप्राप्त्या तदर्थं पाठसार्थक्येन कथं ज्ञापकत्वमिति भावः । प्रकृतेऽपीति । सममिति शेषः। ननु पूर्वोक्तनिर्देशैर्निस्निर्दुरां साफल्येऽपि दुसः किम्फलमित्यत आह । दुस इति । इत्यादाविति । आदिना निरयते इत्यस्य संग्रहः। दिगिति । दिगर्थस्तु न्याय्यत्वादेवं ग्रहणाग्रहणयोस्सिद्ध्योस्तत्रोपसर्गान्तरेण पाक्षिकं रूपमिष्टमेव यद्यभिधानम् । चतुर्णां पाठस्य फलन्तु निरयते निलयत इत्यादौ लत्वतदभावावेव सुव्यक्ताविति ॥

इतिकरणप्रयोजनं दर्शयति । इतिर्लोक इति । अर्थपदार्थकस्यापीति । विशेष्यतया अर्थोपस्थापकस्यापीत्यर्थः । शब्दपदार्थकत्वकृदिति । विशेष्यतया शब्दोपस्थापकत्वे तात्पर्यग्राहक इत्यर्थः । अयं भावः । लोके शब्दानां शब्दविशिष्टेऽर्थे शक्तिः । शब्दस्यापि शाब्दे भानस्य शाब्दिकैरङ्गीकारात् । इति शब्दः प्रयुज्यमानः अर्थविशिष्टे शब्दे तात्पर्यमवगमयंस्तत्र लक्षणां गमयतीति । यद्वा शब्दस्य शब्देऽर्थे च खण्डशः शक्तिः । तत्रार्थे शब्दस्य विशेषणतयान्वयः स्वारसिकः । शब्देऽर्थस्य विशेषणतयान्वयो यत्नलभ्यः । तथाविधमन्वयमितिशब्दो गमयतीति । इह त्विति । शास्त्रे तु लोकाद्विलक्षणो विशेषणविशेष्यभावः । स्वं रूपमिति शास्त्रस्य शब्दस्य विशेष्यतायां तात्पर्यग्राहकस्य सत्त्वादिति भावः । अनुवादवाक्ये इति । "आः किमेतदिति

व्याख्यानात्। तेन न वाशब्दयोरर्थौ संज्ञिनौ। स्वं रूपमित्यस्य

---

क्रोधादाभाष्य महिषासुर" इत्यादावित्यर्थः। व्याख्यानादिति। "महत्याः संज्ञायाः करणे एतत्प्रयोजनमुभयोस्संज्ञा यथा विज्ञायेत नेति च वेति चेति" भाष्यरूपादिति भावः। यत्तु द्वन्द्वान्ते श्रूयमाणमिति न्यायरूपादिति भाव इति। तन्न। महासंज्ञाकरणसामर्थ्यवर्णनपरभाष्याद्द्वन्द्वाभावस्य लाभात्। निपातद्वयस्य द्वन्द्वासंभवाच्च। अत एव व्याख्यानादित्येवोक्तम्। अन्यथा द्वन्द्वनिर्देशादित्येव वदेत्। किञ्च यदि प्रत्येकमितेस्संबन्धार्थं द्वन्द्वनिर्देश आवश्यकःस्यात्तदा विभाषेत्यत्रापीतेस्संबन्धादर्थस्य संज्ञात्वकथनं कौस्तुभकृतः कथं संगच्छते। एवं च द्वन्द्वमाश्रित्य तदुत्तरद्विवचनस्य सौत्रत्वाल्लुगाश्रयणं तस्योत्तरत्रासांगत्यकथनं च विफलमेव। द्वन्द्वपरतया व्याख्यानस्य मूलाक्षरैरलाभाच्चेति दिक्। न वा शब्दयोरर्थाविति। क्रियावाचकपदसन्निधाने नवाशब्दयोर्यावर्थौ द्योत्यावभावविकल्पौ तावित्यर्थः। स्पष्टं चेदं कैयटे। विभाषापदघटितस्थले क्रियाया विध्यन्वयित्वेन प्रसिद्धेस्तदन्वयी चाभावः निषेध एवेत्याशयेन मूले निषेधविकल्पयोरिति वृत्तिरुक्ता। निरुक्तवृत्त्या च ज्ञायते विध्यन्वयिक्रियान्वय्यभाव एवात्र संज्ञित्वेन विवक्षित इति। अत एव विधिपूर्वकत्वात्प्रतिषेधसंप्रत्यय इत्युक्तं भाष्ये। कैयटे च प्रदेशवाक्यार्थं पर्यालोच्य इयं संज्ञा व्यवस्थाप्यत इत्युक्तम्। अत एव विधिप्रतिषेधयोर्युगपद्वचनानुपपत्तिरिति भाष्यस्य भावाभावौ विधातुं न शक्येते इत्यर्थं व्याख्यत्कैयटः। तेन च विहितस्याभावस्य प्रतिषेधत्वमिति स्पष्टं लभ्यते। एतेनात्र निषेधविकल्पयोर्विभाषासंज्ञा स्यादिति वृत्तिश्चिन्त्या। अभावविकल्पयोरिति वक्तव्यत्वात्। निषेधो हि लिङादिघटितवाक्यघटकनञा प्रवृत्ताविष्टसाधनत्वाभावबोधोत्तरमप्रवृत्तिलक्षणोऽर्थात्प्रतीयते। न तु स नञर्थ इति बोध्यमिति प्रकाशकृदुक्तिः परास्ता। निषेधान्न प्रवर्तेत इत्यनुभवान्निषेधस्याप्रवृत्तिलक्षणत्वकथनासंगतेः। निषेधस्य निरुक्तरीत्या शाब्द-

**प्रत्याख्याने त्विविति शब्दो व्यर्थ एव, अर्थे कार्यस्याबाधात् ।**

---

त्वादर्थात्प्रतीयत इत्यस्यासंगतेश्च । प्रत्याख्याने त्विविति । लोकवदर्थस्य विशेष्यतायामन्वयानुपपत्तिरूपलक्षणाबीजस्य सत्त्वादितिं विनापि लक्षणादिना शब्दविशेष्यकोपस्थितिस्सुलभा । यद्वा शब्दस्य विशेष्यतायां तात्पर्यग्राहकस्य प्रातिपदिकाद्यभेदान्वयादेस्सत्त्वेन शब्दस्य विशेष्यतया बोधस्सुलभ इति च तत्प्रत्याख्यानेत्वित्यर्थः । अर्थे कार्यस्याबाधादिति । संज्ञाकरणादर्थस्य प्रदेशस्थक्रियया अन्वयसंभवेन लक्षणाबीजस्यान्वयानुपपत्तेरभावेनार्थस्य विशेष्यतया उपस्थितेस्स्वारसिकयास्त्यागे मानाभावाच्छब्दस्य विशेष्यत्वे तात्पर्यग्राहकस्याभावात्स्वारसिकस्यार्थस्य विशेष्यतया बोधस्य त्यागे मानाभावाच्चेति भावः । ननु धात्वर्थक्रियाप्रकारकाभावविशेष्यकबोधे नञ्जन्योपस्थितेर्हेतुतया प्रकृते विभाषापदाधीनाभावोपस्थितौ सत्यामपि कथं क्रियाप्रकारकाभावविशेष्यक बोध इति चेन्न । संज्ञाकरणसामर्थ्याद्विभाषापदाधीनोपस्थितेरपि हेतुत्वाङ्गीकारेणादोषात् । न च नञर्थाभावनिष्ठविशेष्यतानिरूपितप्रकारतासंबन्धेन शाब्दं प्रति धातुजन्योपस्थितेर्विशेष्यतया हेतुत्वस्याभावः प्रमेयः अभावश्चतुर्विध इति तात्पर्येण न प्रमेयः न चतुर्विध इति प्रयोगवारणायावश्यकतया प्रकृते नञर्थाभावे विभाषापदस्याभेदान्वयानुपपत्तिरिति वाच्यम् । भाष्यप्रमाण्यात्सूत्रारम्भसामर्थ्याद्विभाषापदजन्यविभाषापदोपस्थितेर्नञर्थाभेदान्वयबोधे हेतुतास्वीकारेणादोषात् । एतेन परे तु न वाशब्दयोर्द्वन्द्वोऽयुक्तः निपातयोर्द्वन्द्वस्यानभिधानात् । किंचात्र न वाशब्दाभ्यामभावविकल्पबोधोऽप्यसम्भवी । ताभ्यां तद्बोधे पदार्थान्तरनिष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेन शाब्दबोधसामग्र्या अपेक्षणात् । असमस्तनञर्थात्यन्ताभावस्य वार्थविकल्पस्य च क्रियान्वयस्यैव क्लृप्तत्वाच्च । नञर्थाभावे वार्थविकल्पे च समभिव्याहृतप्रथमान्तार्थाभेदान्वयस्याव्युत्पन्नत्वाच्च । अत एवाभावश्चतुर्विधइति तात्पर्येण न चतुर्विध इत्यस्य विकल्पः प्रमेय इति तात्प-

र्थेण वा प्रमेय इत्यस्य च न प्रामाण्यम् । तस्मादव्ययस्येतिशब्दस्याभावो विकल्पश्चार्थः । न वेति पदद्वयं तात्पर्यग्राहकमित्येव युक्तम् । एवं च स्वंरूपसूत्रस्यारम्भे प्रत्याख्याने वा इतिशब्दस्सार्थक एव स्वंरूपसूत्रबाधस्तु पक्षिमत्स्यमृगान् हन्तीत्यादाविव बोध्यः । एवमाः किमेतदित्यादाविति शब्दस्य स सोऽर्थः तत्तत्पदानि तु तात्पर्यग्राहकाण्येव । नारद इत्यबोधि स इत्यादावपीतिशब्दस्यैव नारदोऽर्थः । नारदपदं तात्पर्यग्राहकम् । इतिशब्दार्थोऽदश्शब्दार्थेनाभेदान्वयी । द्वितीयाया अव्ययत्वाल्लुक् । एतेन निपातेन कर्मण उक्तत्वान्न नारदपदाद्द्वितीयेति प्राचां ग्रन्थः नारद इतीति ज्ञानस्वरूपपरमिति नव्यग्रन्थश्च समाधानाभासत्वाद्धेय एवेत्याहुरिति प्रकाशकृदुक्तिः परास्ता । सिद्धन्तु पूर्वस्योत्तरेण बाधितत्वात् । सिद्धमेतत्कथं पूर्वविधिमुत्तरो विधिर्बाधते इति भाष्येण विरोधापत्तेश्च । तथाहि । विधिशास्त्रे विभाषापदेन संज्ञाशास्त्रोपात्तक्रमेणैव निषेधविकल्पयोरुपस्थितावर्थद्वयकसंज्ञाकरणसामर्थ्याद्वाक्यभेदेन क्रमेण तयोरन्वयस्वीकारात् । निषेधविधेः पूर्वत्वं विकल्पविधेः परत्वमभ्युपैति भाष्यकारः । स्पष्टं चेदं प्रदीपोद्योतयोः । वक्ष्यति चोत्तरत्र "श्रुतक्रमानुरोधात्पूर्वं किन्तु निषेध इत्यादि" । भवदुक्तरीतौ संज्ञाशास्त्रेऽपीतिशब्देनैवाभावविकल्पयोरुपस्थित्या तत्राप्युपस्थितिक्रमाभावेन पौर्वापर्यकथनं निर्युक्तिकमेव स्यादिति तदसंगतिःस्पष्टैव । किंचैवमिहापि नवाशब्दादितिकरणः प्रयुज्यमानो नवाशब्दं स्वस्मात्पदार्थात्प्रच्यावयति सोऽसौ स्वस्मात्पदार्थात्प्रच्युतो यासौ शब्दपदार्थकता तस्या लौकिकमर्थं प्रत्याययतीति भाष्ये सोऽसाविति नवाशब्दपरामर्शेन तस्यैवार्थप्रत्यायकत्वकथनात्तद्विरोधेनेतेरर्थप्रत्यायकत्वकथनमयुक्तमित्यलं भाष्यविरुद्धकल्पनया । एवं च स्वंरूपमिति प्रत्याख्याने इति शब्दो व्यर्थ एवेति सम्यगेवेति सुधियो विभावयन्तु । ननु स्वंरूपमिति सूत्रसत्त्वेऽपि इतिर्मास्तु शब्दे कार्यस्य बाधादेवार्थपरता स्यादत

तयोरेव संज्ञित्वे तु 'विभाषा श्वे'रित्यादौ नवाशब्दावादेशौ स्याताम् । प्राप्तविभाषासु नास्योपयोगः, तासां पक्षे निवृत्तिमात्रफलकत्वात् । अप्राप्तविभाषास्वपि न, तासां पक्षे विधिमात्रार्थत्वात् । अप्राप्तत्वेन निषेधासंभवाच्च । तस्मादुभयत्र विभाषार्थमिदम् । "विभाषा श्वेः" इत्यादावेतदभावे यदि विधिमुखेन प्रवृत्तिस्तर्हि पित्स्वेव विकल्पः स्यात् । कित्सु तु नित्यमेव संप्रसारणं स्यात् । निषेधमुखेन प्रवृत्तौ कित्स्वेव प्रवर्त्तेत न पित्सु । उभयथा प्रवृत्तिस्तु वैरूप्याद्वाक्यभेदा-

---

आह । तयोरेव संज्ञित्वेत्विति । एवं सूत्रार्थं निर्णीय संप्रति सूत्रस्य प्रत्याख्यानप्रकारं प्रतिपिपादयिषुः सूत्रस्याल्पविषयतां दर्शयति । प्राप्तेति । अयं भावः । वाविभाषादिपदानां सामानाधिकरण्ये अभावे च खण्डशश्शक्तिः । तयोर्विशेषणविशेष्यभावे कामचारः । समभिव्याहृता क्रिया अभावविशेष्यकस्थले उभयत्र विशेषणतया भासते । सामानाधिकरण्यविशेष्यकस्थले चाभावविशेषणतया सामानाधिकरण्यविशेष्यतया च भासते । तथा च पदान्ताद्वेति प्राप्तविभाषास्थले तुक्सत्तासमानाधिकरणस्तुक्सत्ताभाव इति बोधः । यरोऽनुनासिक इत्याद्यप्राप्तविभाषास्थले चानुनासिकसत्ताभावसमानाधिकरणा अनुनासिकसत्तेत्येवं बोधः । यद्वा अभावसामानाधिकरण्यं तदर्थः । पदान्ताद्वेत्यादौ तुक्सत्ताभावसमानाधिकरणा तुक्सत्तेत्येवं बोधेऽपि तत्र तुक्सत्तायास्सिद्धतया प्राप्ताप्राप्तविवेकन्यायेन अभावसामानाधिकरण्यमात्रे विधिः पर्यवस्यति । यरोऽनुनासिक- इत्यादावनुनासिकसत्ताभावसमानाधिकरणा अनुनासिकसत्तेत्येवं बोधे तत्राभावस्य सिद्धतया सामानाधिकरण्यविशिष्टानुनासिकसत्तामात्रे विधिः पर्यवस्यतीति । अत्रोत्तरव्याख्यैव युक्ता । तासां पक्षे निवृत्तिमात्रफलकत्वादित्युत्तरग्रन्थस्वारस्यानुरोधात् । अन्यथा भावाभावयोरुभयोरपि स्थलभेदेन शब्दतो विधेयत्वलाभेन निवृत्तेः फलत्वेन विधेरर्थत्वेन कथनासंगतिः स्पष्टैव । उभयमुखेन

प्रवृत्तौ वैरूप्यस्य वाक्यभेदस्य पृथग्दोषत्वकथनमपि अस्यामेव संगच्छते। अन्यथा शब्दतोविधेयभेदे वाक्यभेदस्यैव गले पतितत्वेन वैरूप्यादित्यस्यासंगतेः। अस्यां च व्याख्यायामेकवाक्येनैव प्राप्ताप्राप्तविवेकन्यायेन क्वचिद्भावसामानाधिकरण्यांशे विधेयतापर्यवसानं क्वचिद्विधेयांशे तत्पर्यवसानमिति वैरूप्यं स्पष्टमेव। तद्दोषपरिहारार्थं वाक्यभेदस्वीकारे स एव दोष इति ग्रन्थसंगतिरिति दिक्॥

एतेन प्राप्तविभाषास्त्विति। अयं भावः। वाविभाषाऽन्यतरस्यामित्यादिपदानां भावत्वोपलक्षित तत्तद्विधेयतावच्छेदकावच्छिन्नेऽभावत्वोपलक्षिततत्तद्विधेयाभावत्वावच्छिन्ने च खण्डशक्तिः। तथा च क्वचित्तत्तविधेयसमानाधिकरणतादृशाभावस्य क्वचित्तादृशाभावसमानाधिकरणतत्तद्विधेयस्य च बोधः। सामानाधिकरण्यं च स्वीयोद्देश्यतावच्छेदकावच्छिन्नयत्किंचिद्वृत्तित्वसम्बन्धेन। यत्र शास्त्रान्तरेण विधेयस्सिद्धः तत्र तत्सामानाधिकरण्येनाभावस्यैव बोधः। यत्र तु अभावस्सिद्धः तत्र तु तत्सामानाधिकरण्येन तद्विधेयस्यैव बोध इति विवेकः। यथा वाम्शसोरित्यनेनाम्शस्परकस्त्रीशब्दान्ताङ्गस्येयङ्सामानाधिकरण्येन तदभावो विधीयते। तत्र विधेयस्येयङ उद्देश्यतावच्छेदकावच्छेदेन सिद्धत्वात्। यथा वा यरोऽनुनासिक इत्यनेनानुनासिकपरकस्य पदान्तस्य यरोऽनुनासिकाभावसमानाधिकरणोऽनुनासिको विधीयते। उद्देश्यतावच्छेदकावच्छेदेनानुनासिकाभावस्य सिद्धत्वात्। एवं विभाषादिपदैरपि विभाषा श्वि सर्वत्र विभाषा गोरित्यादौ तथा तथा बोधो बोध्य इति। यत्र संज्ञाया उपयोगस्तामाह। उभयत्रेति। विधिमुखेनेति। अभावसमानाधिकरणभावत्वेनेत्यर्थः पित्स्वेव विकल्प इति। तत्रैव भावस्य सिद्धत्वात्तत्सामानाधिकरण्येनैव सम्प्रसारणस्य विधानादिति भावः। निषेधमुखेनेति। भावसमानाधिकरणाभावत्वेनेत्यर्थः। उभयथा प्रवृत्तिस्त्विति। यत्र भावस्सिद्धस्तत्राभावत्वेन यत्राभावस्सिद्धस्तत्र भावत्वेन चेत्यर्थः। वैरूप्यादिति। भावाभवयोर्वैरूप्येणैकपदेनोभयो-

पत्तेश्चाशक्या । सञ्ज्ञाकरणे तु श्रुतक्रमानुरोधात्पूर्वं किन्तु निषेध-
स्ततः किदकिद्रूपे सर्वस्मिन् लिटि ऐकरूप्यं प्रापिते सति पक्षे
भवतीत्येकरूपेण विधिमुखेनैव विकल्पः । भाष्यकृतस्तु एवं हि
"हृक्रोरन्यतरस्याम्" इत्यादावनुपपत्तिर्विभाषापदाभावात् । इति
शब्दस्य विभाषेत्यत्रापि संबन्धाद्विभाषापदार्थः सञ्ज्ञेति तु न

---

बोधासम्भवादिति भावः । आवृत्त्या तत्सम्भवादाह । वाक्येतीति प्रकाश-
कृदुक्तं परास्तम् ॥

संज्ञाकरणेत्विति । तत्सामर्थ्यान्नअर्थघटितं पृथग्वाक्यं स्वीक्रियत इति
भावः । श्रुतेति । संज्ञासूत्रे श्रुतो यः क्रमः अभावविकल्पयोस्तत्क्रमस्य प्रदेशे
विवक्षितत्वाद्वाक्ययोः पौर्वापर्यं संभवतीति भावः । इतिशब्देनैवार्थद्वयोपस्थितिं
वदतां प्रकाशकृतामियं व्यवस्थादुर्घटेति बोध्यम् । एकरूपेणेति । स्वाभावसमा-
नाधिकरणसंप्रसारणसत्त्वेत्येवं रूपेणेत्यर्थः । अथ सूत्रमङ्गीकृत्य वाक्यभेदस्वी-
कारापेक्षया सूत्रमनङ्गीकृत्य वाक्यभेदेनोभयमुखेन प्रवृत्तिरुचिता । न च सूत्रा-
नङ्गीकारे वाक्यभेदो निष्प्रामाणिकस्स्यादिति वाच्यम् । सूत्राङ्गीकर्तृमतेऽपि हृक्रो-
रन्यतरस्यामित्यादौ तादृशस्य वाक्यभेदस्य तवाप्यावश्यकत्वादित्याशयेन
सिद्धान्तमाह । भाष्कृतस्त्विति । ननु हृक्रोरन्यतरस्यामित्यादावपि वाक्यभे-
दस्य प्रामाणिकत्वसम्पत्तये इतिपदं विभाषापदोत्तरमपि संयोज्यम् । एवं च
विभाषापदार्थो विकल्पः संज्ञेति लभ्यते । नचान्यतरस्यामित्यादेरर्थस्य विकल्पस्य
संज्ञात्वेन तस्य निषेधविकल्पयोश्वेष्टादिवदुपस्थापकत्वेऽपि विकल्पस्यापदत्वेन
तयोःपदादनुपस्थिततत्वात्कथं शाब्दान्वयित्वमिति वाच्यम् । एतत्सूत्रारम्भसाम-
र्थ्यादेव प्रदेशघटकविकल्पवाचकपदस्य निषेधविकल्पयोर्लक्षणास्वीकारात्तत्रैव
तात्पर्यग्राहकं सूत्रमिति कौस्तुभोक्तरीत्या निर्वाहान्न तत्र निष्प्रामाणिको वाक्य-
भेद इत्याशङ्क्य कौस्तुभोक्तेरयुक्तत्वमेवेत्याशयेनाह । इति शब्दस्येति ।

युक्तम् । अर्थे सञ्ज्ञात्वस्यादृष्टत्वात् । अर्थाक्षिप्तशब्दमात्रं सञ्ज्ञेत्यपि न युक्तम् । एकस्यार्थस्य समानफलकानेकसञ्ज्ञाकरणस्य "अनाकृतिः सञ्ज्ञा" इति वृद्धिसञ्ज्ञासूत्रस्थभाष्येण तिरस्कारात् । तस्मात्तत्र लक्ष्यानुसारेणैवोभयमुखेन प्रवृत्तिर्वाच्येति विभाषापदघटितेऽपि तथैवास्तु किं सूत्रेणेति जातिव्यक्तिपक्षयोरुभयोरपि सूत्रं प्रत्याचख्युः ॥

---

अदृष्टत्वादिति । शास्त्रे इति शेषः । एवं च शास्त्रशैलीविरोधेनैवं कल्पनानुचितेति भावः । ननु तत्रापीतेस्संबन्धसामर्थ्यादर्थेन वाचकशब्दमात्रस्याक्षेपात्तेषां संज्ञात्वमिति स्वीकारेण न दोष इत्याशङ्क्य निराकुरुते । अर्थाक्षिप्तेत्यादि । एकस्यानेकसंज्ञाकरणस्य प्रत्ययस्य लुक्श्लुलुप इत्यादौ दृष्टत्वादाह । समानफलकेति । अनाकृतिस्संज्ञेति । एका संज्ञा अनेके संज्ञिन इति तद्भाष्याशयः । उभयोरपीति । एतेन अशिष्यो वा विदितत्वादिति भाष्ये वाशब्दो विकल्पे, तेनाकृतिपक्षे लिट्त्वजातौ विधिमुखेन प्रवृत्तौ पित्येव स्यात् निषेधमुखेन प्रवृत्तौ कित्येव स्यान्नतु सर्वत्रेति सूत्रं कर्तव्यम् । सति च सूत्रे लिट्त्वजातौ प्राप्तस्य निषेधे तस्यामेव विकल्पो विधीयमानस्सर्वत्र सिध्यति । व्यक्तिपक्षे तु लक्ष्यभेदेन लक्षणभेदादुभयत्र विभाषारूपं लक्षणं क्वचिद्विधिमुखेन क्वचिन्निषेधमुखेन प्रवर्तत इति सूत्रं नारम्भणीयमिति कैयटाशयो न युक्त इति सूचितम् । व्यक्तिपक्षे सर्वं लक्ष्यं लक्षणं व्याप्नोति न जातिपक्षे इत्यत्र मानाभावाच्च । किं च जातिपक्षे किं तज्जात्याश्रयसकललक्ष्यविषयं लक्षणं उत यत्किंचिद्विषयम् । नाद्यः सूत्रारम्भेऽपि नपदघटितवाक्यस्य तद्विषयताया वक्तुमशक्यत्वात् । तस्य च यत्किंचिद्विषयता वापदघटितस्य सर्वविषयतेति दुर्लभम् । नान्त्योऽपि । न ब्राह्मणं हन्यादित्यादौ जातिपक्षे सर्वविषयताया एव दृष्टत्वात् । किं च तत्र विधिमुखप्रवृत्त्या पिद्विषयत्वं निषेधमुखेन प्रवृत्त्या किद्विषयत्वं

वेत्यत्र विनिगमकाभावात्सूत्रं विनाप्युभयमुखेन प्रवृत्ताविष्टसिद्धेः। न च भावतात्पर्यकता पिद्विषये प्रवृत्तौ विनिगमिका। भावतात्पर्यकतालोभेनाप्राप्त-विभाषात्वस्यैव संभवेन विभाषोपयमन इत्यादौ त्रिसंशयतानुपपत्त्या तादृश-संशयानुरोधेनाधिकाराद्प्राप्तविभाषात्वकथनं भाष्यकृतामसंबद्धं स्यात्। विप्रतिषेधशास्त्रबलात्तेष्वभावतात्पर्यकतापीति चेत्प्रकृतेपि तुल्यम्। तस्मात्पक्ष-द्वयेपि सूत्रप्रत्याख्याने भाष्यतात्पर्यम्। किं च सूत्रे कृते त्रिसंशयाप्राप्तविभा-षास्वपि तत्प्रवृत्तिः स्यादित्यप्राप्तविभाषोच्छेदप्रसङ्गः। तत्र लक्ष्यानुसाराद्-प्रवृत्तौ तु सूत्रं व्यर्थमेवेत्याशयेन त्रिसंशयाप्राप्तविभाषाणां प्रदर्शनमसंबद्धमेव स्यात्। न च तदुत्तरं प्राप्तविभाषाणामुभयत्र विभाषाणां च प्रदर्शनं किमर्थमिति वाच्यम्। अप्राप्तविभाषासु प्रदर्शितासु सर्वत्र सैवेति भ्रमनिरासाय तयोः कथनात्। स्पष्टं चेदमुद्योते। एतेनोत्तरत्र विभाषात्रयस्य प्रासङ्गिकत्वं कौस्तु-भोक्तं परास्तम्। एतेनाशिष्यो वेत्यत्र वाशब्दस्वारस्येन प्रत्याख्यानस्य पाक्षि-कत्वलाभात्प्रदीपकृद्रीतिरेवोचितेति ज्योत्स्नाकृदुक्तमपास्तम्। अशिष्य इत्यक्षर-स्वारस्यभङ्गापत्तेश्च। वाशब्दस्यैवार्थकत्वेन स्वारस्यलाभाच्च। किं च सूत्रसत्त्वे कृत्रिमाकृत्रिमन्यायबाधः क्वचिल्लक्ष्यानुरोधात्कल्पनीयः स्यात्। यत्तु जातिपक्षे तत्र तत्र नवाग्रहणं कृत्वा सूत्रं नारम्भणीयमिति कौस्तुभे उक्तं तन्न। तत्र तत्र तथा ग्रहणेऽपि वाक्यभेदस्य दुष्परिहरत्वात्। सूत्रानारम्भे त्वेक एव बोधः। प्राप्ताप्राप्तविवेकन्यायेन यथायोगं भावाभावयोर्विधेयतापर्यवसानमिति न वाक्य-भेदावसर इति पूर्वोक्तरीत्या निर्वाहः। यत्तु किं च व्यक्तिपक्षेपि लक्ष्यानुरोधेन वाक्यभेदेनैवोभयमुखेन प्रवृत्तिसंभवो नत्वन्यथा, संग्राहकवाक्ये यद्रूपेण प्रवृत्ति-स्तद्रूपेणैवोपप्लुतेष्वपि प्रवृत्तेर्न्याय्यत्वादिति पक्षद्वयेपि वाक्यभेदेन प्रत्याख्यान-मेव भाष्याल्लभ्यत इति ध्येयमिति प्रकाशकृत् तन्न। वाक्यभेदानावश्यकताया दर्शितत्वात्। संग्राहकवाक्ये विशिष्टे बोधिताया विधेयताया उपप्लुते विशेषे

स्वं रूपम् । स्वं रूपमित्यस्य बोध्यमिति शेषो व्याख्यानात् तदाह । संज्ञीति । "राज्ञो यत्" इत्यादौ लौकिकव्युत्पत्त्योपस्थितार्थस्य प्रत्ययेन पौर्वापर्यासंभवात्प्रातिपदिकादित्यनेनान्वयासंभवाच्च तदर्थकशब्दमात्रग्रहणापत्तौ नियमार्थं सूत्रम् । तत्र

---

पर्यवसाने बाधकाभावात् । कथमन्यथा संग्राहके सामान्ये बोधितायास्तस्या उपप्लुते विशेषपर्यवसानम् । तस्मात्पक्षद्वयेऽपि सूत्रानारम्भ एव भाष्यतात्पर्यमिति युक्तमुत्पश्यन्तु सुधियः ॥

नन्वस्य संज्ञासूत्रत्वं नोपपद्यते । समानाधिकरणपदप्रयोगाभावात् । किं च स्वं रूपं संज्ञीति मूलोक्तवृत्तिरसङ्गता । रूपं शब्दस्य संज्ञा भविष्यतीति भाष्यात् स्वरूपस्य संज्ञात्वस्यैव लाभादित्यत आह । **बोध्यमिति शेष इति** । तथा च स्वं रूपं शब्दस्य बोध्यमित्यर्थे शास्त्रोपात्तशब्दानां स्वरूपनिरूपितशक्तिग्राहकत्वलाभात् संज्ञासूत्रत्वम् । सामानाधिकरण्यमेव संज्ञासंज्ञिनोरिति न नियमः । उञ इत्यादौ व्यभिचारात् । किं तु सामानाधिकरण्ये संज्ञासंज्ञिभाव इत्येव वृद्धिसूत्रभाष्याभिप्रेतम् । रूपं शब्दस्य संज्ञेति भाष्ये संज्ञाशब्दः कर्मव्युत्पत्त्या बोध्यपरो न तु बोधकपरः । अन्यथा स्वशब्देनार्थबोधनाय रूपग्रहणमित्युत्तरभाष्यासङ्गतिः । स्पष्टं चेदमुद्योते । एवं च मूलोक्तवृत्तिस्सम्यगेवेति भावः । तदेतत्सूचयन्नाह । **व्याख्यानादिति** । स्वशब्देनार्थग्रहणं रूपग्रहणेन ज्ञाप्यत इति भाष्यरूपादित्यर्थः । **नियमार्थमिति** । आर्थिकनियमार्थमित्यर्थः । यद्येतत्सूत्रं नारभ्येत, तदा शब्देनार्थस्योपस्थितौ तत्र कार्यस्य बाधेन तद्वाचिनस्सर्वस्यापि ग्रहणं प्रसज्येत, आरब्धे त्वस्मिन् योगे प्रकरणाच्छब्दस्यैव प्राधान्यात्तत्र कार्यप्रवृत्त्याऽर्थेन तद्वाचकयावच्छब्दोपस्थितिर्नैव स्यादिति अर्थात्तेषां निवृत्तिः फलतीति भावः । स्पष्टं

**स्वशब्द आत्मीयत्वेनार्थमाह । रूपशब्देन स्वरूपम् । एतदुभयं सञ्ज्ञीत्यर्थः । तत्रार्थो न विशेष्य, उक्तयुक्तेः । किं तु शब्दविशेषणम् । एवञ्चार्थविशिष्टः शब्दः सञ्ज्ञीत्यर्थवद्ग्रहणपरिभाषा सिद्धा ।**

---

चेदमुद्योते । यत्त्वर्थे कार्यबाधे उपात्तशब्दबोध्यार्थवाचकसर्वग्रहणं यत्र प्रसक्तं तत्र तादृशार्थविशिष्टोपात्तस्यैव ग्रहणमित्येवं नियमार्थमित्यर्थः । नत्वपूर्वविधित्वं, गौरवात् । आरम्भप्रत्याख्यानयोः फलभेदाच्च । अत एवापत्यादिषु न स्वरूपग्रहणमिति भाव इति श्रीधरप्रकाशकृतावाहतुस्तन्न । भवदुक्तनियमेऽर्थे कार्यबाधस्थलमात्रविषयकत्वेनास्य सूत्रस्य शब्दसंज्ञासु अर्थे कार्यस्याबाधात्तत्रार्थोपस्थितौ बाधकाभावेनाशब्दसंज्ञेत्यस्य वैयर्थ्यापत्तेः । जनपदापत्यपशुदेवतादेः प्रत्याख्यानत्वफलकथनपरोत्तरग्रन्थाननुगुणत्वाच्च । विधेर्नियमापेक्षया गुरुत्वकथनासङ्गतेश्चेति दिक् । स्वमित्यनेन शब्दरूपं, रूप्यते बोध्यत इति व्युत्पत्त्या रूपशब्देनार्थो गृह्यत इति प्राचीनोक्तं, रूपग्रहणाद् ज्ञापकादर्थो ग्राह्यः स्वं रूपमिति वचनाद्रूपमिति कौस्तुभोक्तं चायुक्तम् । अस्त्यन्यद्रूपात्स्वं शब्दस्येति किं पुनस्तदर्थ इति भाष्यात्स्वशब्दस्यार्थबोधकत्वलाभेन तद्विरोधादित्याशयेनाह । **स्वशब्द आत्मीयत्वेनार्थमाहेति** । न च स्वशब्दस्यात्मीयपरत्वे विशेष्यनिघ्नतया अर्थ इति विशेष्यानुरोधात्पुंलिङ्गापत्तिरिति वाच्यम् । विशेष्यासन्निधानेन सामान्ये नपुंसकेन निर्वाहात् । आत्मीयत्वेनार्थबोधनात् । यद्विषयकबोधजनकत्वप्रकारकतात्पर्येणोच्चरितो यः शब्दस्स एव तस्यात्मीयोऽर्थ इति स्वजन्यबोधविषयत्वप्रकारकतात्पर्यविषयीभूतस्यार्थस्य लाभ इति बोध्यम् । **रूपशब्देन स्वरूपमिति** । रूपसामान्याद्वा सिद्धमित्यादौ तथा प्रसिद्धत्वादिति भावः । **उक्तयुक्तेरिति** । प्रत्ययेन पौर्वापर्यासम्भवादित्याद्युक्तयुक्तेरित्यर्थः । **अर्थविशिष्ट इति** । वैशिष्ट्यं च स्वविषयबोधजनकत्वप्रकारकतात्पर्यविशेष्यतापर्याप्त्यधिकरणत्वसम्बन्धेन । यदि त्वर्थविशेष्यकतात्पर्यादिस्थलासंग्रहस्तदा तादृश-

**अत्र चार्थः कल्पितान्वयव्यतिरेककल्पितः प्रकृतिप्रत्ययादिबोध्यः शास्त्रीयोऽपि। स च मुख्यः प्रसिद्धश्चेति गौणमुख्यन्यायोऽभिव्यक्त-पदार्था ये इति न्यायश्च सिद्धः। अत एवेयं विशिष्टरूपोपादान एव, इदं सूत्रञ्च। तत्रैवार्थोपस्थितेस्तत्रैवानियमप्रसक्तेश्च। न तु वर्णग्रहणे**

---

विशेष्यताविशिष्टविषयतापर्याप्त्यधिकरणत्वसम्बन्धेन। विषयतायां विशेष्यता-वैशिष्ट्यं च स्वावच्छेदकधर्मव्यापकानुपूर्वीव्याप्यधर्मावच्छिन्नत्वसम्बन्धेन ग्राह्यम्। विस्तरस्तु परिभाषेन्दुटिप्पणीतोऽवसेयः। ननु सिद्धान्ते पदस्य वाक्यस्यैव वार्थ-वत्त्वेन शास्त्रे प्रकृतिप्रत्ययादेरेव सर्वत्र ग्रहणदर्शनेन तत्र कथमर्थोपस्थितिः। कथं वोपस्थितेन विशेषणतयान्वयेनार्थवद्ग्रहणपरिभाषासिद्धिरित्यत आह। **अत्रार्थ इति। कल्पितेति।** प्रक्रियानिर्वाहाय शास्त्रकृत्कल्पितौ यावन्वय-व्यतिरेकौ ताभ्यां कल्पित इत्यर्थः। **शास्त्रीयोपीति।** शास्त्रैकसमधिगम्यः शास्त्रज्ञसमयसिद्ध इत्यर्थः। तत्र प्रकृतेः शास्त्रीयार्थग्रहणान्मदी हर्षे इत्येतद्घटक-स्यादो जग्धिरिति न। प्रत्ययस्य शास्त्रीयार्थग्रहणादृतेरीयङि यङन्तत्वप्रयुक्त-द्वित्वं न। आदिनोपसर्गस्य शास्त्रीयार्थग्रहणादमुत् स्थानमित्यत्र उदस्थेति पूर्वसवर्णो नेत्याद्यूह्यम्। एवमर्थवद्ग्रहणपरिभाषासिद्धिं प्रदर्श्य गौणमुख्यन्याय-सिद्धिमभिव्यक्तपदार्था इति न्यायसिद्धिं च दर्शयति। **स च मुख्यः प्रसिद्ध-श्चेति। अत एवेति।** अर्थस्य विशेषणतयान्वयबललभ्यत्वादेवेत्यर्थः। **विशिष्ट-रूपोपादान एवेति।** वृत्तिनिरूपकतावच्छेदकीभूतानुपूर्वीविशेषविशिष्टवर्ण-समूहात्मकशब्दस्वरूपोपादान इत्यर्थः। तत्रैव प्रवृत्तिफलं दर्शयति। **न वर्ण-ग्रहण इति।** अयं भावः। अशब्दस्य शब्दविशिष्टवासुदेवे, अकारे च पृथक्-शक्तिः। तत्रैकशक्त्युपस्थिते उत्सर्गतः प्राधान्येन भासमानेऽकाररूपार्थे कार्य-स्याबाधात्तत्रैव प्रवृत्त्या सूत्रसार्थक्यस्य सम्भवेनापरशक्त्युपस्थितवासुदेवरूपार्थे प्राधान्येन भासमाने अर्थे कार्यबाधज्ञानपूर्वकप्राधान्यभानवति शब्दे प्रवृत्तौ सूत्र-

**इत्याकरे स्पष्टम्। 'दाधा घु' इत्यस्य 'ई हल्यघोः' इत्यादौ चारितार्थ्ये-नोपसर्गे घोरित्यादौ स्वं रूपमित्यनेन परत्वाद् बाधशङ्कावारणार्थम-**

---

व्यापाराभाव इति। तदेतत्प्रमाणयति। आकर इति। लस्येतिसूत्रे भाष्ये इत्यर्थः। तत्र हि लिट् लुनातीत्यत्र तिबादिकमाशङ्क्य विहितविशेषणाश्रयणेन परिहृतम्। यदीयं परिभाषा वर्णग्रहणेपि प्रवर्तेत, तदाऽनयैव वारणसम्भवे विहितविशेषणाश्रयणं व्यर्थमेव स्यादिति भावः। ननु तत्तत्संज्ञाकरणसामर्थ्यात्स्वरूपग्रहणवारणसंभवे अशब्दसंज्ञेति व्यर्थमत आह। दाधाध्विति। ई हल्यघोरितीति। तत्रात इत्यनुवृत्त्या स्वरूपग्रहणे पर्युदासानर्थक्यान्न स्वरूपग्रहणप्रसक्तिरिति भावः। परत्वादिति। स्वकार्यद्वारा विरोधस्य सत्त्वादिति भावः। न चैवं पेषं वासवाहनधिषु चेति धिग्रहणं व्यर्थम्। तद्धि उदधिरिति रूपसिद्ध्यर्थम्। धाञः केरभावे उदकस्य ध्युत्तरपदपरत्वं नैव सम्भवतीति तद्वैयर्थ्यं स्पष्टमेव। एवं तत्सामर्थ्याद्त्र घुसंज्ञकस्य ग्रहणमिति वाच्यम्। सनि मीमाघ्वित्यत्र दोषसम्भवात्। आपाद्यमानेऽर्थे विशेषानादरेणैतदुक्तम्। ननु ईहल्यघोरित्यादावपि स्वरूपविधेः प्राप्तिसत्त्वेन अहन्निन्यत्र वक्ष्यमाणरीत्या तक्रन्यायेन घुसंज्ञैवास्य बाधिका भविष्यति। यदि त्वतिशदन्ताया इति पर्युदासेन तक्रन्यायेन संज्ञिनोर्बाध्यबाधकभावाभावो ज्ञाप्यत इत्युच्यते, तदा तेन संज्ञासु स्वरूपविध्यभाव एव ज्ञाप्यतामित्यत आह। शङ्केति। उभयोर्ज्ञाप्यांशयोर्मध्ये को वास्य ज्ञाप्यांश इति संशयमूलकसंशयवारणार्थमिति भावः। केचित्तु वर्णग्रहणेऽप्रवृत्त्यर्थमेवाशब्दसंज्ञेति। तद्धि पर्युदासन्यायेन शब्दसंज्ञाभिन्ने वर्णभिन्नत्वेन तत्सदृशे चैतत्सूत्रं प्रवर्तयति। हरिपदवद्वर्णबोधकेषु नानाशक्तिकल्पने तु न मानमिति वदन्तीति प्रकाशकृत्, तन्न। वर्णबोधकत्वस्य, वासुदेवादिबोधकत्वस्य च लोकानुभवसिद्धस्यापलपितुमशक्यत्वेन तत्र वर्णे शक्तिर्नास्तीति वक्तुमशक्यत्वात्। अ इत्यादेरणुदित्सूत्रबोधितसंज्ञात्वस्य सत्त्वेन वर्णभिन्नत्वेन

शब्दसञ्ज्ञेति । नात्र षष्ठीतत्पुरुषः । कर्मसञ्ज्ञादेरर्थसञ्ज्ञात्वेन निषेधाप्रवृत्तौ "कर्मण्यण्" इत्यादौ स्वरूपग्रहणापत्तेः । किं तु सप्तमीतत्पुरुषः । शब्दपदेन च शब्दशास्त्रं तदाह । शब्दशास्त्रे इति । भाष्ये तु अर्थे कार्यस्य बाधेऽप्युपस्थितत्वाद्राज्ञ इत्यादौ तज्जन्यबोधे प्रकारतया भासमानस्य राजन्शब्दस्यैव ग्रहणं भविष्यतीति व्यर्थं सूत्रम् । उपस्थितार्थत्यागे मानाभावेन तस्य विशेषणतयाऽन्वयसंभवेन चार्थवत्परिभाषापि सिद्धा । लक्ष्यानुसारात् तत्तत्संज्ञाकरणज्ञानरूपप्रकरणाच्च षान्तसंख्यावाचकषट्शब्दस्य षट्सञ्ज्ञाकरणेन शब्द-

---

सादृश्यस्य ग्रहीतुमशक्यत्वाच्च । कर्मसंज्ञादेरिति । तासां परत्वेऽप्यन्तरङ्गत्वादियमेव स्यादिति भावः । तासां चारितार्थ्यन्तु कर्मणो रोमन्थतपोभ्यामित्यादौ स्वरूपग्रहणासम्भवाद्बोध्यम् । एवं सूत्राशयमुपवर्ण्य सूत्रस्य वक्ष्यमाणदोषदूषितत्वेन प्रत्याख्यानमेव वरमित्याशयेन तत्प्रकारं दर्शयति । भाष्ये त्विति । उपस्थितत्वादिति । "न सोऽस्ति प्रत्ययो लोके यश्शब्दानुगामादृते" इति हर्युक्त्या शब्दविशिष्टेऽर्थे शब्दानां शक्तिबोधनादिति भावः । शब्देऽर्थे च सर्वशब्दानां खण्डशक्तिस्वीकारादिति भाव इति प्रकाशकृदुक्तं तु न सम्यक् । तथा सत्युपस्थितिद्वयस्य शाब्दसामग्रीप्रवेशे आकाङ्क्षाज्ञानादीनां विशेषणविशेष्यभावव्यत्यासेन कारणताबाहुल्यापत्त्या गौरवात् । स्पष्टं चेदं व्युत्पत्तिवादे । अत एव फलव्यापारयोः खण्डशक्तिं विहाय विशिष्टशक्तिरेव नागेशेनादृता । यत्र तु विशेष्यतया बोध इष्टस्तत्र विशेषणविशेष्यभावव्यत्यासेन लक्षणैवाश्रयणीया । अत एव लक्षणाबीजतयाऽर्थे कार्यबाधप्रदर्शनं स्वरसत उपपद्यत इति दिक् । नन्वर्थवद्ग्रहणपरिभाषासिद्ध्यर्थं सूत्रमावश्यकमित्यत आह । उपस्थितार्थस्येति । नन्वशब्दसंज्ञेति निषेधे प्रतियोगिज्ञानसम्पत्त्यर्थं सूत्रमनुवादरूपं स्यादित्याशङ्क्य निषेधस्याप्यनावश्यकत्वेन न तदर्थमपि तदित्याशयेनाह । लक्ष्यानुसारा-

शास्त्रीयसञ्ज्ञायां स्वरूपाग्रहणज्ञापनाच्च "उपसर्गे घोः" इत्यादावदोषेणाशब्दसञ्ज्ञेत्यपि व्यर्थमित्युक्तम् । अत एव जनपदापत्यपशुदेवतादिशब्देषु न दोषः । अत एव वृक्षादिषु विशेषाणां ग्रहणम् "स्वे पुषः" इत्यत्र पर्यायाणां विशेषाणां स्वरूपस्य च ग्रहणं "सभाराजा" इत्यत्र पर्याणामेव ग्रहणं "पक्षिमत्स्यमृगान्हन्ति" इत्यादौ मृगपक्षिणोः पर्यायाणां विशेषाणां स्वरूपस्य च ग्रहणं मत्स्यपदेन स्वरूपस्य विशेषाणां मीनरूपपर्यायस्य च ग्रहणं सिद्ध्यति। अन्यथा

---

दिति । लक्ष्यानुसरणस्यागतिकगतित्वादाह । तत्तदित्यादि । ननु प्रकरणात्तत्तत्संज्ञिनां ग्रहणेप्युभयगत्या स्वरूपग्रहणमपि स्यादत आह । ज्ञापनाच्चेति । ननु षड्भ्यो लुगित्यादौ स्वरूपग्रहणेन न निर्वाहः । तत्र विहितविशेषणसत्त्वेन परमषडित्याद्यसिद्ध्यापत्तेः । संज्ञाकरणे तु षान्तत्वस्य नामीति सूत्रोक्तदिशा संख्याप्रकारकसंख्येयविशेष्यकबोधजनकत्वस्य च परमषड्छब्दे सत्त्वेन न दोष इति चेन्न । एतज्ज्ञापनपरभाष्यप्रामाण्येन परमषडित्यादेरनभिधानात् । एतेन नामीति सूत्रे वक्ष्यमाणस्य सूत्रानुयायित्वादिति समाधानं परास्तम् । तस्यानभिधान एव तात्पर्यमिति नामीत्यत्र विस्तरेण विवेचयिष्यमाणत्वेन मतभेदाभिप्रायकत्वकल्पनानौचित्यात् । व्यर्थमिति । एवं चोद्योतोक्तरीत्या प्रत्यासत्तिसिद्धार्थानुवादकत्वेन मन्दमत्युपयोगितया यथाकथंचित्सूत्रसार्थक्यसम्भवेऽपि निषेधांशस्तु व्यर्थ एवेति तदाशयः । सूत्रारम्भपक्षापेक्षया प्रत्याख्यानस्य ज्यायस्त्वं फलप्रदर्शनेन सूचयति । अत एवेति । नन्वर्थे कार्यबाधे उपात्तशब्दबोध्यार्थवाचकसकलग्रहणं यत्र प्रसक्तं, तत्र तादृशार्थविशिष्टोपात्तस्यैव ग्रहणमित्येवं शब्दनियमपरं सूत्रमस्तु । अर्थे कार्यस्याबाधेनैतत्सूत्राप्रवृत्तिरित्येतदनुवादकमेवाशब्दसंज्ञेति स्वीक्रियते । एवं चोदाहृतेष्वर्थे कार्यस्याबाधादेवार्थग्रहणमारम्भपक्षेऽपि सिद्ध्यतीत्यत आह । अत एव वृक्षेति । एतदर्थं

**तदर्थं यत्नः कर्त्तव्यः। "परेश्च घाङ्कयोः" इत्यत्र घशब्देन स्वरूपग्रहणं नदीपौर्णमासीत्यत्र नदीपदेन च स्वरूपग्रहणं सिद्ध्यति। लक्ष्यानुसारिव्याख्यानेन च मम सर्वेष्टसिद्धिः। ज्ञापकपक्षेऽपि ज्ञापकसिद्धस्यासार्वत्रिकत्वान्न दोषः। अत एव भगवता ज्ञापकेन सिद्धं वचनं प्रत्याख्यातमिति दिक्॥**

---

लक्ष्यानुसारस्य तवाप्यावश्यकत्वेन तेनैव सर्वनिर्वाहे सूत्रं मन्दप्रयोजनमिति भावः। यत्नः कर्तव्य इति। सित्तद्विशेषाणां पित्पर्यायवचनस्य च ञित्पर्यायवचनस्यैव घित्तस्य च तद्विशेषाणां चेत्येवं वचनरूप इत्यर्थः। एतेन सूत्रारम्भे महद्गौरवमिति सूचितम्। गौरवाङ्गीकारेपि मीनरूपपर्यायग्रहणाय लक्ष्यानुसरणं गले पततीति सूचनाय भाष्ये अस्यैकस्य पर्यायवचनस्येष्यते मीनान् हन्ति मैनिक इत्युपसंहारेण प्रत्याख्यानस्य ज्यायस्त्वं ध्वनितम्। अत एव भाष्ये शब्दपूर्वकश्चार्थस्य सम्प्रत्यय इति प्रसिद्धिप्रतिपादकचशब्दप्रयोगेण प्रत्याख्यानस्य युक्ततरत्वं सूचितम्। स्पष्टं चेदमुद्योते। एवं सूत्रसत्त्वे प्रसक्तदूषणगणं प्रदर्श्याशब्दसंज्ञेतिकरणे प्रसक्तं दोषं निरूपयति। **परेश्चेति**। तत्र तत्रोपायान्तरानुसरणे तु गौरवमिति भावः। स्वमते सिद्धिमाह। **ममेति**। ननु ज्ञापकेन सिद्धवचनप्रत्याख्यानं न युक्तमित्याशङ्क्य ज्ञापकेन तदर्थस्वीकारे फलाधिक्यमाह। **न दोष इति**। तत्प्रमाणयति। **अत एवेति**॥

**दिगिति**। अत्र केचित्। आरम्भपक्षेऽपि जनपदादिष्वर्थेषु कार्यस्याबाधादनियमाप्रसक्तेर्वृक्षादिषु लक्ष्यानुसारात्सिदादिग्रहणाद्वाऽदोषात्परेश्चेत्यत्र परिशब्दात्परयोस्तरप्तमपोरसम्भवादङ्कशब्दसाहचर्याच्च स्वरूपग्रहणात्पौर्णमास्याग्रहायणीग्रहणसामर्थ्यान्नदीशब्दे स्वरूपग्रहणाच्च न दोषः। प्रत्याख्यानपक्षे च गोतो णिदित्यादौ गोशब्दस्य नानार्थतया यावन्तोऽर्थास्तावदावृत्तिः

कर्तव्या भवति । किं च लक्ष्यार्थानामनियततया यावन्तो लक्ष्यार्थास्तावदावृत्तिस्सर्वत्र कर्तव्या भवतीति गौरवम् । अणिञोः केऽण इत्यादौ प्रकृत्यसमभिव्याहारे प्रत्ययैरर्थानुपस्थित्याऽनर्थके प्रवृत्त्यापत्तिः । प्रत्ययाप्रत्यययोरिति परिभाषायाः स्वमतेऽभावान्न तयापि निर्वाह इति राकेत्यादौ ह्रस्वो दुर्वार इत्यारम्भपक्ष एव ज्यायानित्याहुः । तत्त्वविदस्तु जातिपक्षे तत्तदर्थविशिष्टगोशब्दत्वावच्छिन्नात्परमित्येवं रीत्याऽन्वयेनावृत्तेरनावश्यकत्वाद्व्यक्तिपक्षे प्रतिलक्ष्यं लक्षणोपप्लवाल्लक्ष्यभेदेन सूत्रभेदस्य सर्वैरप्यङ्गीकर्तव्यत्वाल्लक्ष्यार्थस्थलेऽपि शक्यार्थबोधमादायैव साधुत्वबोधनस्येष्टत्वान्न गौरवम् । अत्रार्थस्य कल्पितान्वयव्यतिरेककल्पितस्यापि भाष्यप्रामाण्याद्ग्रहणेन प्रक्रियाज्ञानवतां प्रकृत्यसमभिव्याहृतेनापि प्रत्ययेनार्थोपस्थितौ बाधकाभावेनार्थवद्ग्रहणपरिभाषयैव राकेत्यादौ दोषवारणसम्भवान्न तदर्थमपि सूत्रम् । कथमन्यथा नियमार्थत्वं त्वमन्मते इति विभावय । किंचात्मीयत्वेनार्थोपस्थितावपि न तेन रूपेणोपस्थितोऽर्थस्साधुत्वबोधनोपयोगी । गोत्वावच्छिन्नेऽयं साधुरिति ज्ञानस्य तावताप्यनुदयात् । आत्मीयत्वावच्छिन्ने साधुरित्येवं ज्ञानस्यैवोदयात् । गोत्वावच्छिन्नेऽयं साधुरिति व्यवहारानुपपत्तेः । किं तु यदर्थतात्पर्येण यःशब्द उच्चरित आत्मीयत्वेनोपस्थितस्तदर्थविशिष्टस्यैव तत्कार्यमिति स्वीकार्यम् । तथा चाऽर्थान्तरविशिष्टस्य तत्कार्यं पृथक्तयापि बोधनीयम् । किं च शब्दविशिष्टेऽर्थे शक्तिरिति स्वीकारे शब्दस्यैकस्यानुगमकत्वेनानुगमकशब्दपुरस्कारेण तत्र मते आत्मीयत्वपुरस्कारेणेव सर्वार्थोपस्थितौ तावदर्थविशिष्टस्य सकृदेव कार्यबोधने न किंचिद्बाधकम् । यदि चार्थभेदाच्छब्दो भिद्यत इति नानुगमकत्वं शब्दस्येत्युच्यते तदा तत्तच्छब्दस्य तत्तदर्थ आत्मीयो न तु कस्यापि सर्वेऽर्था आत्मीया भवन्तीति नात्मीयत्वस्याप्यनुगमकत्वसम्भव इति समम् । आत्मशब्दस्य तत्तच्छब्दव्यक्तिपर्यवसानात् । एवं च सूत्रारम्भेऽनाश्रयणीयं गौरवं न किमपि प्रत्याख्यान इति

**येन वि।** येनेति करणे तृतीया, विधिरिति भावे किः। कर्मात्र विधेयं, कर्ता चाचार्यः प्रसिद्धत्वाल्लभ्यत एव। यत्तु करणं कर्तृपरतन्त्र मिति तृतीयया पारतन्त्र्यं लक्ष्यते तच्च शब्दानां विशेषणत्वेनेति

---

प्रत्याख्यानपक्ष एवादृतो भाष्ये। ज्ञापकेन सिद्धवचनप्रत्याख्यानमप्यारम्भपक्षे गौरवमवगमयतीत्यलं भाष्यविरुद्धकल्पनाप्रयासेन। विना विरोधं प्रत्याख्यान-भाष्यस्यैकदेशयुक्तित्वकल्पनानौचित्यादित्याहुः ॥

**करणे तृतीयेति।** कर्तरि तु न षष्ठ्यापत्तेः। हेतुतृतीयाया उपपद-विभक्तेरिति न्यायेन बाधितत्वान्न सा। न च कर्मात्र विधेयमित्यनेन कर्मणो-ऽध्याहारसूचनेनोभयप्राप्तौ कर्मणीति कर्तरि षष्ठ्यप्राप्त्या करणे इति कथ मिति वाच्यम्। कर्मणः प्रसिद्ध्या लाभप्रदर्शनेन तस्याध्याहाराभावसूचनात्। यद्वा भाष्यप्रामाण्यादेवैषा करणतृतीयेति भावः। **भावे किरिति।** कर्मणः प्रसिद्ध्यैव लाभाद्भावे प्रत्ययस्य स्वारसिकत्वादिति भावः। एतेन कर्मणि किरिति कैयटाद्युक्तं नातीवोपयुज्यत इति सूचितम्। **कर्मात्र विधेयमिति।** प्रदेशवाक्यविधेयमेवैतद्विधानक्रियाकर्मेत्यर्थः। विधानकरणं चार्थाद्विशेषण-मेवेति तच्च समानाधिकरणमेवेति वक्ष्यति। सूत्रे बोधकमिति शेषः। एवं च समानाधिकरणविशेषणं तदन्तस्य बोधकमित्यर्थादस्य संज्ञासूत्रत्वमिति लभ्यते। कौस्तुभोक्तविशेषणलाभोपायो न युक्त इत्याशयेन तमनूद्य निराकरोति। **यत्त्विति। पारतन्त्र्यं लक्ष्यत इति।** कर्त्रधिष्ठितस्यैव करणत्वेन करणस्य कर्तृपरतन्त्रत्वाद्विशेषणस्य प्रायो विशेष्यलिङ्गाद्यधीनलिङ्गादिकत्वेन च विशेष्य परतन्त्रत्वाच्च सादृश्यलक्षणया पारतन्त्र्योपस्थितौ यन्निष्ठपारतन्त्र्यप्रयोज्यं कार्यं तत्तदन्तस्य संज्ञेत्यर्थेऽर्थाद्विशेषणमिति लब्धमिति तदाशयः। यत्तु यन्निष्ठपार-तन्त्र्यप्रयोज्यविधेयकर्मकविधिरिति प्रकाशकृतोक्तं तन्न। कौस्तुभकृन्मते विधि-

विशेषणमिति लब्धमिति, तन्न । सुब्विभक्तौ न लक्षणेत्यस्य सर्वसम्मतत्वात् । किं बहुना येषां प्रत्ययानामन्येषां वा शब्दानामार्थे विधानं कृतं शास्त्रेण तेषामन्यत्रार्थे तदर्थे चान्येषां लक्षणयाऽपि साधुत्वाभावस्य "प्रत्ययः" "पुंयोगाद्" इत्यादि

---

शब्दस्य कर्मसाधनत्वेन तादृशार्थालाभात् । सुब्विभक्तौ न लक्षणेति । यत्तु अत एव सुपां सुलुगिति सुविधानं सार्थकम् । अन्यथा प्रथमैकवचनसोरेव तत्तद्विभक्त्यर्थे लक्षणया निर्वाहे तद्वैयर्थ्यं स्पष्टमेव । अत एव च कर्तृकर्मणोरिति षष्ठीविधानं सार्थकम् । अन्यथा शेषषष्ठ्यैव लक्षणया कर्तृत्वादिबोधसम्भवात्तद्वैयर्थ्यं स्पष्टमेवेति । तन्न । अभेदान्वयबोधे विशेष्यवाचकपदोत्तरवर्तिविभक्तिप्रयोजकतात्पर्यविषयीभूतसंख्याविरुद्धसंख्याया अविवक्षायां विशेष्यविशेषणवाचकपदयोस्समानवचनकत्वनियमेन ऋजवः सन्तु पन्था इत्यत्र जसोऽसाधुत्वापत्त्या तत्साधुत्वसम्पत्त्यर्थं सुविधानसार्थक्यात् । कर्तृत्वादिना बोधे तृतीयाप्रयोगवारणाय षष्ठीविधानसार्थक्याच्च । न चैवं द्वन्द्वे च न बहुव्रीहौ, इत्यत्र सप्तम्याः प्रथमार्थत्वानुपपत्तिरिति वाच्यम् । सौत्रत्वेन व्यत्ययेन प्रथमार्थे सप्तमीविधानात् । न चात्रापि व्यत्ययेन पारतन्त्र्ये तृतीया स्यादिति वाच्यम् । विभक्तेः पारतन्त्र्यार्थकताया अप्रसिद्धत्वात् । अस्मन्मते न केवलं सुब्विभक्तावेवेत्याह । किं बहुनेति । येषां प्रत्ययानामिति । मतुबादीनामित्यर्थः । अन्येषां वा शब्दानाम् । शालीनकौपीनादीनामित्यर्थः । अन्यत्रार्थे इति । अन्यथा अर्यः स्वामिवैश्ययोरित्यादितत्तदर्थनिर्देशस्यैकस्यैव प्रत्ययस्यार्थभेदेन पृथग्विधानस्य च वैयर्थ्यापत्तिरिति भावः । तदर्थे चान्येषामिति । गर्गापत्याद्यर्थे गार्ग्यादिवद्गर्गादीनामित्यर्थः । साधुत्वाभावस्येति । व्याकरणस्मृतेस्साधुत्वपरतया तत्तदर्थ एव तत्तत्प्रत्ययानां च साधुत्वबोधनात् । अन्यत्र प्रयोगेऽसाधुत्वापत्त्या तादृशं प्रयुञ्जानाः प्रत्यवयन्त्येव । बोधस्तु

भाष्यतो लाभात्। करणस्य व्यापारवत्त्वनियमादन्येषाञ्च व्यापारा-

---

लौकिकतया लोकसिद्धव्युत्पत्त्या अपभ्रंशेभ्य इव लोके भवतु न तथा शास्त्रे। तथा बोधाङ्गीकारेऽसाधुशब्दप्रयोगेण पाणिनावनाप्तत्वज्ञानेन तत्कृतशास्त्रस्यानुपादेयत्वापत्तिः। सौत्रत्वात्साधुत्वं चागतिकगतिरिति भावः। ननु सुब्विभक्तौ न लक्षणेति प्रवादो निर्मूलः। न च प्रत्ययानुशासनवैयर्थ्यापत्तिस्तन्मूलम्। तिङ्क्ष्वपि तस्य तुल्यत्वेन रथो गच्छतीत्यादौ व्यापारे लक्षणाया सुब्विधौ न लक्षणेति वदद्भिर्नैयायिकैरेवाङ्गीकारात्। अत एव प्रयाजशेषेण हवींष्यभिघारयतीत्यत्र प्रयाजशेषं हविष्षुक्षारयेदिति मीमांसका व्याचख्युरिति कौस्तुभोक्तरीत्या प्रकृते लक्षणास्त्वित्याशङ्क्य तस्यायुक्तत्वं सूचयन् स्वोक्तं प्रमाणेन भूषयति। प्रत्ययः पुंयोगादित्यादिभाष्यत इति। तत्राद्ये प्रत्यय इति महासञ्ज्ञाकरणेन स्वीयमर्थं प्रत्याययन्तीति विग्रहः प्रदर्शितः। तेन यत्रार्थे यः प्रत्ययो विहितः स एवार्थस्तस्य स्वीय इति स्वीय एवार्थे तेषां साधुत्वं सूचितम्। तेनान्यत्रार्थेऽसाधुत्वं स्पष्टं लभ्यते। साधुत्वपर्यन्तं शास्त्रस्य व्यापारात्। अन्त्ये किं पुनरिहोदाहरणं प्रष्ठी प्रचरी। कथं पुनरयं प्रष्ठशब्दोऽकारान्तस्त्रियां वर्तते तस्येदमित्यनेनाभिसम्बन्धेन। यद्येवं पुंयोगादाख्यायां तद्धित लुग्वचनं कर्तव्यं तस्येदमिति प्राप्नोति। न तर्हीदानीमिदं भवति प्राष्ठ्य इमाः प्राचर्य इमाः। भवति च विभाषा लुग्वक्तव्यः। यदा लुक् तदा प्रष्ठी यदा न लुक् तदा प्राष्ठी। यद्येवं नार्थो लुका विभाषा तद्धितोत्पत्तिः। यदा तद्धितोत्पत्तिस्तदा प्राष्ठी यदा न तद्धितोत्पत्तिस्तदा प्रष्ठी। एवमपि लुग्वक्तव्यः। न ह्यन्तरेण लुकं परार्थे शब्दो वर्तत इत्युक्तम्। अन्यथा प्रष्ठादिशब्दानां लक्षणया तद्धितार्थे वृत्तिसम्भवाल्लुगावश्यकत्वप्रदर्शनपरनह्यन्तरेणेति भाष्याक्षरस्वारस्यभङ्गः। अत्र परार्थे शब्दो न प्रवर्तत इति सामान्यतोऽभिधानेन प्रकृतेःप्रत्ययस्य च प्रसिद्धस्यार्थं परित्यज्यान्यत्र वृत्तिर्नास्तीति स्पष्टं लभ्यते।

**भावाद्विशेषणमेवात्र करणतृतीयान्तेनोच्यते। तस्य चेतरव्यावृत्तिकरणमेव व्यापारः। तदुक्तं भाष्ये "येनेति करणे एषा तृतीयाऽन्येन चान्यस्य विधिर्भवति यथा चैत्रस्य सङ्ग्रामं हस्त्यश्वादिभिर्विधत्ते, एवम् अचो यदिति अचा धातोर्यतं विधत्ते" इति।**

---

इत्यादीत्यादिना परश्चेति सूत्रसंग्रहः। तत्र हि बभ्रोरपत्यमित्यर्थे यञि विहिते तत्रार्थे प्रकृतेस्साधुत्ववारणाय तस्मादित्युत्तरस्येत्यनेन षष्ठ्यंशविकलोत्तरत्वांशोपस्थित्या सिद्धे प्रत्ययः परो भवत्येवेति नियमार्थमिदमित्युक्तम्। प्रकृतेर्लक्षणया प्रत्ययान्तार्थकत्वे तदसङ्गतिः स्यादिति ततोपि निरुक्तार्थसिद्धिः। एवं प्रमाणभूषिते लक्षणाभावे तद्विरोधेन लक्षणास्वीकारः कौस्तुभकृतोऽसङ्गत एव। नैयायिकानां तु पुनः परस्परविरोधो नास्माकं प्रतिबन्धकः मीमांसकव्याख्यानमपि फलितार्थपरतया कथंचिन्नेयम्। न तु तदनुरोधेन प्रकृतशास्त्रीयप्रमाणविरुद्धकल्पना युक्तेति दिक्। स्वमते विशेषणरूपार्थलाभं दर्शयति। **करणस्येति**। **करणतृतीयान्तेनोच्यत इति**। तेनार्थाल्लभ्यत इत्यर्थः। अयं भावः। यत्करणकं कार्यविधानं स शब्दस्तदन्तस्य संज्ञेत्यर्थे, कार्यविधानकरणशब्दस्य संज्ञात्वलाभादितरव्यावृत्तिरूपव्यापारस्य विशेषणीभूतशब्द एव सत्त्वेन कार्यविधानकरणभूतः शब्दोऽर्थाद्विशेषणमेव भवतीति। यत्तु येनेति करणतृतीयान्तेन परतन्त्रो लक्ष्यते। परतन्त्रश्च व्यापारवान् भवति। शब्दे चेतरव्यावृत्तिरूप एव व्यापार इति तादृशव्यापारस्योद्देश्येऽभावादुद्देश्यतावच्छेदकं गृह्यते। तच्च विशेषणमेवेति विशेषणमिति लभ्यत इति, तन्न। करणतृतीयान्तस्य परतन्त्रलक्षकत्वे तस्य विधिशब्देनान्वयासम्भवात्। एतेन तृतीयान्तेनेति प्रतीकमुपादाय गौणलक्षणयेति भावः। मम तु न तद्विरोधः। विशिष्टार्थानुशासकाभावात्। बोधस्य तत्प्रकारकस्यैवाङ्गीकाराच्चेति भट्टोक्तमपास्तम्। स्वोक्तमर्थं प्रमाणयति। **तदुक्तं भाष्ये इति**। **विधत्त इति**। सेनापतिरिति शेषः। **यतं विधत्त इति**।

**अन्येन चान्यस्येत्यनेन यस्य कार्यं यस्मिन्परतश्च तयोरकरणत्वं दर्शितम् । अन्यस्येत्यन्यस्मिन्नित्यस्याप्युपलक्षणम् । तत्र शब्दोपस्थितविशेष्यस्य तादृशं विशेषणमेव तदन्तग्राहकम् ।**

---

आचार्य इति शेषः । अत्र चैत्रसमशीलो धातुः । संग्रामसमशीलो यत् । हस्त्यश्वादि समशीलोऽच् । सेनापतिसमशीलश्चाचार्यः । यथा संग्रामोत्पादे हस्त्यादीनां करणत्वं तथा यदुत्पत्तावचः करणत्वमिति भावः । ननूद्देश्यस्यापीतरस्य विधिव्यावर्तकतया करणत्वं कुतो नेति चेन्न । वाक्यार्थबोधात्पूर्वं विधेयस्यासिद्धतया तद्व्यावर्तकत्वस्य तदानीमुद्देश्येऽसम्भवेन तेन तदन्तसंज्ञाया अप्रसक्तेः । एतदेवाभिप्रेत्याह । **अन्येन चान्यस्येत्यनेनेति । यस्मिन् परतश्चेति ।** सप्तम्यन्ततयोपात्तनिमित्तस्य विधेये अन्वय इति मते तस्यापि विधेयव्यावर्तकतया पूर्वोक्तरीत्या न तदन्तविध्यादिप्रसक्तिस्तत्रेति भावः । ननु तस्य विधेयेऽन्वये दोषस्य सत्त्वेनोद्देश्य एवान्वयो न्याय्यः । विवेचयिष्यते चेदमस्माभिर्विप्रतिषेधसूत्रव्याख्यानावसरे । तथा च तस्योद्देश्यव्यावर्तकत्वेन विशेषणत्वाविशेषात्तेन तदन्तविधिर्दुर्वार इत्यत आह । **अन्यस्येत्यन्यस्मिन्नित्यस्याप्युपलक्षणमिति ।** अन्यथा स्योन इत्यादौ तदादिविधेर्दुर्वारतया तत्र दोषोद्धारार्थतदुपायकथनं भाष्यकृतामसम्बद्धमेव स्यादित्युपलक्षणतया तद्भाष्यं नेयम् । तथा च तद्भाष्यप्रामाण्यादुद्देश्यनिमित्तयोरकरणत्वं स्वीक्रियत इति भावः । नन्वेवमपीकोयणचीत्यादौ शब्दस्वरूपस्य विशेष्यस्याध्याहारे तस्यैवोद्देश्यत्वेनाकरणत्वेपि तद्विशेषणस्येक इत्यस्यानिगन्तव्यावर्तकत्वेन करणतया तदन्तविधिर्दुर्वार इत्यत आह । **तत्र शब्देति । तादृशम्** शब्दोपस्थितम् । **तदन्तग्राहकमिति ।** अत्र चेकोयणचीत्यादौ तदन्तविध्यभावाय प्रवृत्तमन्येन चान्यस्येत्यादि भाष्यमेव मानम् । अन्यथा तत्र तदन्तविधेर्दुर्वारतया तदसङ्गतिः स्पष्टैवेति भावः । नन्वेवं प्रयोजनं सर्वनामाव्यय-

**क्वचित्सति गमके तादृशं शब्दरूपं विशेष्यमादायापि तदन्तविधिः । तच्चान्तरङ्गत्वात्समानाधिकरणमेव । तत्र तदन्तविधौ सति तथा-विशेषणत्वयोग्यताप्येतत्प्रवृत्तौ निमित्तम् । अत एव "इन्हन्" इत्यादौ इनंशे तदन्तविधिः । न हि इनङ्गमित्यन्वयो भवति ।**

---

संज्ञायामित्युत्तरभाष्यविरोधः । तत्र शब्दोपस्थितविशेष्यस्याभावात्प्रकृतसूत्रा-विषयतया तत्र प्रयोजनकथनासङ्गतेरित्यत आह । **क्वचित्सति गमक इति ।** तत्र च गमकं द्वन्द्वे चेत्याद्यूह्यम् । ननु सप्तम्यन्ततयोपात्तस्यैतत्सूत्राविषयत्वे तदन्तविधेरपवादस्तदादिविधिरिति न स्यात् । किं च पञ्चम्यन्तेन सर्वत्र तदन्तविध्यापत्तौ तत्र तत्रान्तरङ्गबहिरङ्गभावो न प्रकल्पेतेत्यभिप्रेत्य सर्वानुगतं समाधानमाह । **तच्चान्तरङ्गत्वादिति ।** अभेदस्य स्वमते संसर्गत्वानङ्गीकारेण समानाधिकरणविशेषणतायाः संसर्गानवच्छिन्नत्वेन तदाश्रयस्यान्तरङ्गत्वमिति भावः । अत्रान्तरङ्गत्वं शीघ्रोपस्थितिकत्वरूपं बोध्यम् । एवं चान्येन चान्यस्येति-भाष्यं सर्वानुगतत्वादेतदर्थोपलक्षकमेवेति तात्पर्यम् । नन्वेवमिन्हान्नित्यत्र तदन्तविधिर्न स्यात् । अङ्गस्येनोऽसमानाधिकरणत्वादत आह । **तत्र तदन्त-विधाविति । योग्यतापीति ।** यदि तदन्तविधिस्स्यात्तदा समानाधिकरणं स्यादिति सम्भावनाविषयसामानाधिकरण्यमप्येतत्प्रवृत्तौ निमित्तमिति भावः । अत्र मानमनिनस्मिन्ग्रहणानीति भाष्यमिति बोध्यम् । **नहीनङ्गमितीति ।** अशब्दादिन् तु न । एकाजभ्यस्तत्प्रतिषेधात् । यद्यपि इनमततीतीनात् ततोण्य-न्तात् क्विपि तत्सम्भवः । न च तत्र णिलोपस्य स्थानिवद्भावः । दीर्घविधौ तन्निषेधात् । तथाप्यनर्थकेनेना तदन्तविधिप्रतिपादनं भाष्यकारीयमसम्बद्धमेव स्यात् । "इनस्त्रियामित्यत्रेन्रूपबहुव्रीहेरसम्भवाच्चेति भावः ॥

अत्राचार्याः विधिरिति कर्मणि किः । तदन्तस्येति सम्बन्धिन उपदाना

त्तस्येत्यध्याहारः। तथा च यत्सम्बन्धी यो विधिर्यत्करणकस्तत्कार्यन्तदन्तस्य तस्य बोध्यमिति सूत्रार्थः। अचो यदित्यत्र धातुसम्बन्धी यद्विधिरच्करणक इति तत्कार्यमजन्तस्य धातोस्सम्बन्धि भवति। तदन्तस्येति सम्बन्धसामन्यषष्ठ्यन्तमिति प्रत्ययविधौ प्रकृतेरादेशविधौ स्थानिन आगमविधावागमिनस्संग्रहः। कार्यसम्बन्धिभिन्ने करण एव तदन्तविधेस्सूत्रार्थतो लाभादिको यणचीत्यादौ न प्रवर्तते। इदं कार्यसम्बन्धिनो व्यधिकरणविशेषणे करणे न प्रवर्तते। कार्यसम्बन्धिनि समानाधिकरणतदन्तत्वस्य सूत्रलब्धस्य तत्रासम्भवात्। एवं च तदन्तस्येत्युक्तिबलात्समानाधिकरणविशेषणरूपं करणं पर्यवस्यति। तयोरकरणत्वं दर्शितमिति मूलोक्तन्तु न युक्तम्। इक इत्यनेनानिकोऽचीत्यनेन हल्परकेकश्च व्यावृत्तिकरणत्वसम्भवात्। तच्चान्तरङ्गत्वात्समानाधिकरणमेवेत्यपि न। शब्दतो विशेषणमित्युक्तावन्तरङ्गत्वात्समानाधिकरणमिति कथं चिल्लभ्येत। येनेति शब्देन करणमेवालोपात्तम्। अन्तरङ्गत्वमपि यत्र द्वयोर्ग्रहणासम्भवस्तत्रान्यतरस्य ग्रहणे नियामकम्। प्रकृते तु न तथा। उभयोर्ग्रहणसम्भवात्। प्रतिलक्ष्यं लक्षणभेदान्न सकृदुच्चरितन्यायावसरः। तदन्तसम्बधित्वं चात्र परम्परया बोध्यम्। तेनोतश्च प्रत्ययादित्यत्र हेरेव साक्षात्कार्यसम्बन्धित्वेप्यङ्गस्य परम्परया तथात्वान्न दोषः। एवं तथाविशेषणत्वयोग्यतापीत्यसङ्गतम्। समानाधिकरणविशेषणत्वस्य तदन्तविधिप्रयोजकतायास्सूत्राक्षरास्पर्शित्वादित्याहुः॥

तत्त्वविदस्तु "आचार्योक्तार्थस्वीकारेऽस्य परिभाषात्वापत्त्या संज्ञात्वव्यवहारोऽभियुक्तानां भज्येत। किं च तादृशार्थे सूत्रस्वारस्यभङ्गापत्तिः। तथा हि। यत्सम्बन्धिकार्यं यत्करणकमित्यर्थे यत्सम्बन्धिकार्यमुद्दिश्य यत्करणकत्वं विधीयत इति लाभेनोद्देश्यबोधकस्य प्राथम्यस्वारस्येन विधिर्येन तदन्तस्येत्याचार्योक्तव्याख्याने पाठोन्याय्यः। यथाश्रुतन्यासे मूलोक्तार्थ एव स्वारस्यमधिरोहति। किंचाचार्यमते कार्यसम्बन्धित्वं परम्परया स्वीकृतम्। एवं

तदन्तस्येत्यस्य तदन्तशब्दस्येत्यर्थः । नन्वेवम् "एरच्" इति अय इत्यत्र न स्यादत आह । स्वस्य चेति । स्वमित्यनुवृत्तं षष्ठ्या विपरिणम्यत इति भावः । स्वं रूपमित्यस्य प्रत्याख्याने तु तस्य

---

चोद्देश्यतावच्छेदककोटिप्रविष्टं सर्वमपि कार्यसम्बन्धि भवतीति तद्भिन्नं करणं दुर्निरूपमिति कार्यसम्बन्धिभिन्ने करण एवैतत्प्रवृत्त्या इको यणचीत्यादौ न तदन्तविधिरिति स्वेनैव स्वीकृतत्वेनैतत्सूत्रस्य निर्विषयतापत्त्या साक्षात्कार्यसम्बन्धिन एव ग्रहीतव्यतयोतश्च प्रत्ययादित्यादौ तदन्तविधिर्दुरुपपाद एव स्यात् । मम तु समानाधिकरणविशेषणमात्रविषयकतया सूपपादः मूलोक्तव्याख्याने तदुक्तदोषाणामप्रसङ्ग एव । तथा हि । उद्देश्यनिमित्तयोर्व्यावर्तकत्वाभावस्य पूर्वमुपदर्शितत्वात् । तच्चान्तरङ्गत्वात्समानाधिकरणमेवेत्यस्य सिद्धान्ततया व्यवस्थापितत्वेन तत्र दोषशङ्काया अप्यनवकाशात् । शब्दतो विशेषणस्यानुपादानेपि व्यावर्तकरूपकरणस्योपादानेन तस्यैव लघुभूतस्य ग्रहणे सूत्रतात्पर्यात् । अन्तरङ्गमपि यत्र द्वयोर्ग्रहणासम्भवस्तत्रान्यतरस्य ग्रहणे नियामक इत्याद्यपि न । संग्राहकवाक्ये लाघवात्समानाधिकरणव्यावर्तकस्य ग्रहणे सिद्धे तदनुरोध्युपप्लुतवाक्येपि तादृशस्यैव ग्रहणात् । संग्राहकवाक्ये च नोभयग्रहणं सकृदुच्चरितन्यायात् । अन्यथाऽर्थवद्ग्रहणपरिभाषाविषयेप्यनर्थकविषयकतयोपप्लुतवाक्येऽर्थवद्ग्रहणासम्भवेनानर्थकव्यावृत्तेः कर्तुमशक्यतया परिभाषा निर्विषया स्यात् । मम तु तत्परिभाषया संग्राहकवाक्यस्यार्थवन्मात्रविषयकतया तदनुरोध्युपप्लुतवाक्यमपि अर्थवन्मात्रविषयकमेवेति नानर्थकेऽतिप्रसङ्ग इति दिगित्याहुः ॥

प्रत्याख्यानेत्विति । यत्तु इदं चिन्त्यम् । पृथग्योगस्य दृष्टफलाभावेन प्रत्याख्यातत्वेऽप्युत्तरत्रानुवृत्तौ बाधकाभावात् । अन्यत्र तथा दृष्टत्वादिति

चेति पाठ्यमिति बोध्यम् ॥

**समासप्रेति** । विशेषणविशेष्यभावव्यत्यासे तात्पर्यग्राहक-मिदम् । एवञ्च "द्वितीयाश्रित" इत्यादौ श्रितादयोऽधिकारप्राप्त समर्थैरित्यस्य विशेष्यभूता इति न तदन्तविधिः । तस्य तत्प्रकृतिके

---

तन्न । स्वं रूपमित्येतत्प्रत्याख्यात्रा कात्यायनेन स्वमित्यस्योत्तरत्रानुवृत्तेरस्वीकारेण तस्य चेत्यस्य प्रणयनात् । अत एवाद्यन्तवत्सूत्रेऽन्तवत्त्वे प्रयोजनकथनावसरे येन विधिस्तदन्तत्वे इति प्रयोजनमुक्तम् । स्वमित्यनुवृत्तौ तु अय इत्यत्र तेनैवाचः सिद्धौ प्रयोजनकथनमसम्बद्धमेव स्यात् । स्पष्टं चेदं प्रदीपोद्योतयोः। एवं च वार्त्तिकाशयवर्णने स्वकपोलकल्पना न प्रवेशयितव्येति दिक् । **पाठ्यमिति** । तत्फलं तु व्यपदेशिवद्भावोऽप्रातिपदिकेनेत्यस्य विषये रौण इत्यादौ बोध्यम् । यत्तु लोकन्यायसिद्धस्य व्यपदेशिवद्भावस्य वचनेन बाधः स्यादिति भाव इत्याहुः, तन्न । तदन्ते कार्यबोधनेन सार्थक्येन बाधकत्वायोगात् । व्यपदेशिवदेकस्मिन्निति परिभाषावतरणस्थग्रन्थविरोधाच्च । अत्र केचित् । व्यपदेशिवद्भावोऽप्रातिपदिकेनेति परिभाषा धर्मिग्राहकमानाद् व्यपदेशिवद्भावेनातिदिदिक्षितधर्मस्य सूत्रगृहीतत्व एव प्रवर्तते । स्पष्टं चेदं प्रकृतसूत्रे कैयटे । उगितश्च परिमाणान्तस्यासंज्ञाशाणयोरित्यत्र शेखरे च । तथा च रौण इत्यादौ तत्परिभाषाया अप्रवृत्त्या व्यपदेशिवद्भावेनैव सिद्धि रित्याहुः । परे तु प्रत्ययविधिविषयत्वमस्य स्वीकार्यम् । तेनाऽग्रान्तेत्यादौ नैषेत्याहुः । तन्न तदप्रवृत्तौ प्रमाणानुपलम्भात्प्रत्ययविधिविषयत्वमस्याः कैयटानुरोधेनैव । न तु तत्र फलाभिनिवेशः कार्यः । अत एव नान्तादसंख्या-देरित्यस्यैतज्ज्ञापकता नागेशोक्ता स्वरसत उपपद्यते । अत्रत्यशेखरग्रन्थस्तु तस्य चेति वार्त्तिकाशयवर्णनपरभाष्यानुरोधीति बोध्यम् । वार्त्तिकस्यापूर्वत्वे गौरवमतस्तन्निरासायाह । **विशेषणेति** । **तत्प्रकृतिक इति** । तन्मा-

लक्षणया सुपेत्यनेनान्वयः। तेन कृष्णं परमश्रित इत्यत्र न समासः। "नडादिभ्यः फक्" इत्यादावपि नडादि विशेष्यं प्रातिपदिकं विशेषणमिति सौत्रनाडिरित्यत्र न फक्। उगिदिति। तेनातिभवतीत्यत्र "उगितश्च" इति ङिप् दाक्षिरित्यत्र अत इञ्च सिद्धः। एवञ्चोक्तनिषेधः प्रत्ययांशे गृह्यमाणप्रातिपदिकविषये, प्रत्ययविधिविषयेण "गृह्यमाणप्रातिपदिकेन तदन्तविधिर्नास्ति" इत्यनेनैकवाक्यत्वलाभात्। उगिद्वर्णेति त्वेकदेशानुवाद इति बोध्यम्। अत एव "वनो र च" इत्यादौ प्रत्ययग्रहणे तदन्तग्रहणमित्यस्य नायं निषेध इति दिक्॥

---

त्रस्य सुबन्तत्वासम्भवात्सम्बोधनेप्यन्तरङ्गानपीतिन्यायेन एङ्ह्रस्वादिति सम्बुद्धिलोपात्पूर्वमेव समासप्रवृत्त्याऽसम्भव एवेति भावः। एतेनाऽन्यथा श्रितादीनां सम्बोधन एव सुबन्ततया तत्रैव स्यान्न तु कृष्णं श्रित इत्यादाविति वदन्तः परास्ताः। अत्र समर्थविशेषितश्रितादीनामेव तत्प्रकृतिके लक्षणा बोध्या न तु श्रितादीनां तत्प्रकृतिके लक्षणानन्तरं समर्थपदेन सम्बन्धः। तथा सति परिनिष्ठितविभक्त्या समासपक्षे सुबन्तावधिकैकार्थीभावापत्तौ सुबर्थस्यापि समासेनोक्तत्वात्तद्विशिष्टस्य समासार्थस्य प्रातिपदिकार्थत्वेन प्रथमापत्तेरिति केचित्। अन्ये तु कारकप्रकरणे वक्ष्यमाणरीत्या श्रिताद्यर्थसम्बद्धस्य सुबर्थस्य समासेनोक्तत्वेपि विशिष्टसमासार्थसम्बद्धस्य तस्यानुक्ततया द्वितीयाद्युपपत्त्या वाक्यलक्षणाश्रयणक्लेशो नावश्यकः। अत एव तृतीयेत्यादियोगविभागसाध्यानां सुप्सुपेत्यनेन सिद्धिमभ्युपगच्छतां न भवदुक्तदोषावकाश इत्याहुः। अत्र युक्तमुत्पश्यन्तु सुधियः। ननूगिद्वर्णेति न्यूनम्। यञिञोश्च, वनोरचेत्यादावपि तदन्तविधेरिष्टत्वादत आह। एवं चेति। गृह्यमाणप्रातिपदिकविषय इति। एवं चैतन्मूलकमेव तद्वार्त्तिकं नापूर्वमिति भावः। तदाह। एकदेशानुवाद इति। प्रत्ययस्यापि प्रातिपदिकग्रहणव्यावर्त्यत्वादिति भावः॥

विरामः । भावे घञ् । शब्दानुशासनप्रस्तावादाह । वर्णाना-मिति । उच्चारणाभाव इत्यर्थः । स च व्याख्यानात्किंचिद्वर्णोच्चारणा-

---

भावे घञिति । विरम्यतेऽनेनेति करणसाधनत्वे, चरमस्यैवावसान-संज्ञायां खरवसानयोरित्यत्र सप्तम्यर्थे वैरूप्यापत्तिरिति भावः । ननु विराम-शब्दस्याभावार्थकत्वे तस्य प्रतियोग्याकाङ्क्षाशालित्वेऽपि वर्णस्यैव प्रतियोगि-तया सम्बन्ध इत्यत्र किं विनिगमकमत आह । शब्दानुशासनेति । ननु यावद्ब्रह्मविष्ठितं तावती वागिति श्रुत्या वर्णस्य देशकालाभ्यामपरिच्छेदेन नित्यतया तदभावोऽसम्भवीत्यत आह । उच्चारणेति । ननु संज्ञायाः कार्यार्थ-तयाऽनुच्चारितस्य कार्यासम्भवाद्यस्य कस्याप्युच्चारणस्य कार्यविधाने आवश्यक-तया तादृशोच्चारणज्ञानस्योच्चारणाभावज्ञाने प्रतिबन्धकतया संज्ञादेर्वैयर्थ्यापत्तिः। किं च पूर्वकालिकाभावस्यापि संज्ञापत्तिः । तथाच रस इत्यादावादिरेफादेर्विसर्गा-द्यापत्तिः । न च तत्र पदान्तत्वाभावान्न दोष इति वाच्यम् । अवसाने रेफविधाय-कवाक्ये सिद्धान्ते रेफान्तस्य पदस्येत्यर्थे फलाभावेन यत्र फलाभावस्तत्रानुवृत्तस्य पदस्येत्यस्य पदावयवस्येत्यर्थकतया प्रकृते दोष ध्रौव्यात् । स्पष्टं चेदमुद्योते । न च प्रदेशेष्ववसानपदस्य सप्तम्यन्ततया तत्र पूर्वस्यैव कार्यबोधनान्नोक्तापत्तिरिति वाच्यम् । निर्दिष्टपरिभाषायां दिशेरुच्चारणार्थतया यत्र सप्तम्यन्तार्थस्योच्चारणक्रि-याकर्मत्वसम्भवस्तत्रैव तत्परिभाषोपस्थितेरत आह । स चेति । व्याख्यानादिति । आद्ये व्याख्यानं तत्तद्विधिमूलकम् द्वितीये च वोरुपधाया इति निर्देशरूपं बोध्यम् । एवं च वर्णोच्चरणविशिष्टोऽभावोऽवसानसंज्ञ इति विवक्षितोऽर्थः । वैशिष्ट्यं च स्वविशिष्टक्षणवृत्तित्व स्वप्रतियोगिकत्वोभयसम्बन्धेन । तत्र वैशिष्ट्यं च स्वकर्तृ-कर्तृकोच्चारणानधिकरणत्व, स्वाधिकरणकालविशिष्टत्वोभयसम्बन्धेन । काल-वैशिष्ट्यं च स्वोत्तरत्व स्वोत्तरार्धमात्राधिककालानुत्तरत्वोभयसम्बन्धेन । तेन यत्किंचिद्वर्णोच्चारणाभावं यावद्वर्णोच्चारणाभावमर्धमात्राधिककालव्यवायेनो-

नन्तरकालिक एव गृह्यते । प्रदेशाः "वाऽवसाने" इत्यादयः । अभावस्यापि बुद्धिकृतं पौर्वापर्यं वर्णवत् । परशब्दो नान्यार्थोऽन्यत्वस्याव्यभिचरितत्वादत आह । अतिशयित इति ।

---

च्चारणं पुरुषान्तरीयोच्चारणं चादाय न दोष इति बोध्यम् । कालिक एवेति । एवकारेणोच्चारणकालिकस्य पूर्वकालिकस्य वा व्युदासः । वस्तुतस्तस्मिन्निति सूत्रे निर्दिष्टग्रहणप्रत्याख्यातृभाष्यकारनये तत्परिभाषायास्सप्तम्यन्तार्थोच्चारणापेक्षाभावेन तथैव पूर्वकालिकोच्चारणाभावसंज्ञाप्रयुक्तदोषवारणसंभवेन निरुक्तार्थो व्याख्यानान्तरं नापेक्षत इत्याशयेन प्रदेशान् दर्शयति । प्रदेशा इति । एतेनान्यत्र प्रदेशानुक्त्यात्र तदुक्तिर्ग्रन्थशैलीं न पुष्णातीत्यपास्तम् । यत्तु अन्यासां सञ्ज्ञानां प्रदेशास्सापादिकास्त्रैपादिकाश्च । तत्र सापादिकेषु संज्ञानां चारितार्थ्येन त्रैपादिकेष्वप्रवृत्तिस्सम्भाव्यते । अस्य तु त्रैपादिका एव प्रदेशाः । तत्र च सामर्थ्यादसिद्धत्वाभावः कल्पनीयः । स च सामान्यतस्संस्कारकदृष्ट्या संस्कार्यं नासिद्धमिति कल्पनीयः । तेन संज्ञानां त्रिपाद्यां प्रवृत्तिसिद्धिरिति सूचयितुं प्रदेशप्रदर्शनमिति तन्न । संज्ञानां त्रिपाद्यां प्रवृत्तिमन्तरा शास्त्रत्वासम्पत्त्याऽसिद्धत्वस्य बोधयितुमशक्यतया तत्र संज्ञाप्रवृत्तेस्स्वारसिकत्वेन ज्ञापकानपेक्षणात् । निरूपितं चेदमन्यत्र । एवमाशयवर्णनस्य सन्दर्भाननुगुणत्वाच्चेति दिक् । ननु यद्यभावस्य पौर्वापर्यं स्यात्तदा भवदुक्तार्थस्सम्भवति तदेव नेत्यत आह । अभावस्यापीति । वर्णवदिति । संहितासंज्ञासूत्रे पौर्वापर्यमकालव्यवेतं संहितेति वाक्यव्याख्यानावसरे वर्णस्य नित्यत्वानित्यत्वयोरुभयोरपि पौर्वापर्यासम्भवं प्रतिपाद्य बौद्धस्य तस्याश्रिततया प्रकृतेऽपि तथा वक्तुं शक्यमिति भावः ॥

सन्निकर्षस्य दिग्देशकालायोगेन परशब्दस्य तदर्थपरत्वशङ्कानुदयेन सम्भवदर्थपरत्वशङ्कां परिहरति । अन्यत्वस्येति । यत्किंचित्प्रतियोगिकभेदस्येत्यर्थः । अव्यभिचरितत्वादिति । तस्य केवलान्वयित्वादिति भावः । याव-

**स्वभावसिद्धार्धमात्रातिरिक्तकालव्यवायेन रहितः। तेन तद्व्यवायेन वाक्योच्चारणे सञ्ज्ञा न। सन्निकर्षश्च प्रायः परेण। क्वचित्पूर्वेणापि। अत**

---

त्प्रतियोगिकस्त्वसम्भवी। इष्टसन्निकर्षमात्रवृत्ति भेदकूटस्त्वसर्वज्ञदुर्ज्ञेय इति तात्पर्यम्। नन्वतिशयो व्यवधानराहित्यम्। तच्च न सम्भवति। नान्तरीयकार्धमात्राकालव्यवायस्य दुष्परिहारत्वादत आह। स्वभावसिद्धेति। एकपदादौ संहिताया नित्यत्वादाह। वाक्येति। प्रायः परेण क्वचित्पूर्वेणापीति। अयं भावः। सन्निकर्षः प्रत्यासत्तिः। सा च पूर्वत्वपरत्वान्यतररूपा विनिगमनाविरहात्। तच्च कार्यिविशेषणम्। तदाश्रयत्वमेव तद्विषयत्वम्। पूर्वत्वपरत्वयोरवध्यंशे नित्यसाकाङ्क्षत्वादनुपस्थितस्यावधितयान्वयस्यान्याय्यतया विधिषु निमित्ततयोपात्तस्यैवावधितयाऽन्वयः। सप्तम्यन्तोपस्थितनिमित्तस्य परवृत्तित्वनियमात्कार्यिगतपूर्वत्वस्यैव तादृशनिमित्तान्वययोग्यतया तत्र तदेव संहिता, पञ्चम्यन्तनिमित्तस्थले तूक्तयुक्त्या परत्वमेव संहिता। तत्र तु निमित्तानुपादनं यथाऽवसानकार्येषु तत्र सम्भवतः पूर्वस्यैवावधितयान्वय इति तत्रापि पूर्वनिरूपितं परत्वमेव संहिता। न च तत्रावसानस्यैवावधितयाऽन्वय इति वाच्यम्। अव्यवधिमतोस्साजात्यनियमेन वर्णस्यैवाऽवधित्वौचित्यादिति तदाह। क्वचिदिति। सप्तम्यन्तनिमित्तानां बाहुल्यात् प्राय इत्युक्तम्। पञ्चमीनिर्देशानामवसानकार्याणां चाल्पत्वात्क्वचिदिति चोक्तम्। ननु शब्दरूपस्य निमित्तस्योपादानस्थले तन्निरूपितपूर्वत्वपरत्वयोस्संहितात्वेऽप्यवसानकार्येष्वन्वययोग्यावधेरनुपस्थितत्वात्तत्रानुपस्थितस्य पूर्वस्यावधितयान्वये किं मानमत आह। अत एवेति। अत एव वासुदेववाचकाकारादेर्नानुनासिकादीति बोध्यम्। ननु विसर्जनीयस्य स इति सूत्रभाष्यादवसानकार्येषु संहिताधिकारसम्बन्ध इत्येव लभ्यते। तत्र हि वृक्ष इत्यादाववसाने सत्ववारणाय संहितासंज्ञायां प्रकर्षगतिर्विज्ञायते साधीयः परस्सन्नि-

कर्ष इति । कथं साधीयः? यः पूर्वपरयोरित्युक्तम् । अयं भावः । नान्तरीयककालगतपूर्वोत्तरवर्णनिरूपितपौर्वापर्यसमूहः संहिता । तत्परत्वमेव तद्विषयत्वम् । पञ्चम्यन्तनिमित्तोपादाने तद्विशेषणम् । सप्तम्यन्तनिमित्तोपादाने तदनुपादाने च कार्यविशेषणम् । उभयोपादाने तूभयोर्विशेषणम् । यद्यपि वृक्ष इत्यादौ विसर्गतत्पूर्ववर्णमध्यवर्तिनि नान्तरीयककाले तदस्ति । तथापि कार्यिणि तत्परकत्वरूपतद्विषत्वाभावान्न सत्वमिति । तथा चावसानकार्येषु निरुक्तसंहिताया अन्वयायोग्यत्वात्तदसम्बन्ध इत्येव, उत्तरत्र मण्डूकानुवृत्तिरित्येव भाष्याल्लभ्यत इति चेन्न। उभयथा दोषो भवति इष्यन्ते इत उत्तरमवसाने संहिताकार्याणीति तदुत्तरभाष्येणास्य पक्षस्य दूषितत्वेन तदवलम्भेन संहिताधिकारासम्बन्धस्य वक्तुमशक्यत्वात्। तत्र संहिताधिकारासम्बन्धेन पूर्वोक्ताकारादेरानुनासिक्यस्येष्टत्वे तत्रावसानसंज्ञायाश्चारिताऽर्थ्येनानवकाशत्वाद्बाधकत्वशङ्काया भाष्यकृत्कृताया असाङ्गत्यापत्तेश्च। न च तावतापि संज्ञाया अनवकाशत्वं दुर्निरूपमिति वाच्यम्। संज्ञायाः कार्यार्थत्वेन कार्यप्रवृत्तियोग्यस्थले चारिताार्थ्यस्यैवानवकाशत्वविघटकत्वात्। एतेन तत्र चारिताार्थ्यमाचार्योक्तमपास्तम् । यत्तु वर्णावयवस्यापि कृपो रोल इत्यादावनुशासनलाभाद्वर्णेषु तदवयवत्वस्य व्यपदेशिवद्भावलभ्यत्वेन व्यापकत्वाद्वर्णावयवानां सन्निधेरेव संहितासंज्ञाविधाने नैकवर्णस्थलेपि संज्ञायाः प्राप्तेर्निरवकाशत्वमिति तन्न। तथा सत्यवयवयोर्नान्तरीयककालव्यवधानस्याभावेन तत्र संहितासंज्ञायाश्चारिताार्थ्येन येन नाव्यवधानन्यायाविषयतया वर्णयोस्सन्निधेः संज्ञानापत्तौ दधि अत्रेत्यादावसंहितायां निमित्तानन्तर्यस्यालाभेन यणाद्यनापत्तेः। नच षाष्ठे संहिताधिकारस्य प्रत्याख्यानात्कथं तेनात्रानुनासिक्यव्यावृत्तिरिति वाच्यम् । तद्भाष्येण षष्ठाधिकारस्थस्यैव प्रत्याख्यानालाभात् । अत एवाग्रे संहिताधिकारमात्रस्यैव वैफल्यं वक्ष्यति। उभयसाधारणत्वे तु संज्ञाया अपि वैफल्यं ब्रूयात्। न

**एवावसानकार्याणां संहिताधिकारे पाठः । न चावसानसञ्ज्ञया पर-सत्त्वे सावकाशायाः संहितासञ्ज्ञायाः "सत्यपि सम्भवे बाधनं भवति" इति न्यायेन विषयभेदेऽपि बाधः स्यादिति तदसङ्गतिरेवेति**

---

चाधिकारे प्रत्याख्याते संज्ञापि प्रत्याख्यातेति कैयटेन तत्प्रत्याख्यानमपि कृत मेवेति वाच्यम् । उक्तस्थलानुरोधेन संज्ञाया आवश्यकतया तस्य कैयटस्य चिन्त्यत्वात् । अथवाऽवसानकार्येष्वल इति पञ्चम्यन्तपदप्रक्षेपेण दोपवारण मिति कैयटाशयस्य वक्तुं शक्यत्वाच्च । यत्तु प्रत्याख्यानेन तेषामनाभिधान-मिति तन्न । अनभिधाने दृढतरमानाभावात् । नन्ववसानकार्याणां संहिता-धिकारे पाठो न भवदुक्तार्थसाधकः । अवसानसंज्ञाया निरवकाशत्वेन संहितासंज्ञाबाधकत्वस्य भाष्योक्तस्यानपायादित्याशयेन भाष्योक्तं बाधकत्व-माशङ्क्य निराकरोति । **न चेत्यादिना । न्यायेनेति ।** संज्ञास्वन्यत्र न्याया-प्रवृत्तावप्याकडरीयासु तत्प्रवृत्तिरिति भावः । नन्ववसानसंज्ञा चरमवर्णस्य, विरतेर्वा संहितासंज्ञा तु वर्णवृत्तिपूर्वत्वपरत्वयोरिति विषयभेदात्कथं बाध्य-बाधकभाव इत्यत आह । **विषयभेदेपीति ।** प्रथमद्विर्वचनस्य द्वितीय-द्विर्वचनेन बाधोपपत्तये तथाङ्गीकरणीयत्वादिति भावः । न चात्रोद्देश्यतावच्छेद-कयोर्वर्णसन्निधित्ववर्णोच्चारणाभावत्वयोर्व्याप्यव्यापकभावाभावात्कथं बाध्यबा-धकभाव इति वाच्यम् । प्रथमद्विर्वचनस्य द्वितीयद्विर्वचनेन बाधोपपत्तये परम्परासम्बन्धेनापि व्याप्यव्यापकभावस्यावश्याश्रयणीयतया प्रकृते स्वाश्रय-प्रतियोग्युच्चारणकर्मत्व स्वाश्रयाश्रयत्वसम्बन्धाभ्यां व्याप्यव्यापकभावस्य सुव-चत्वात् । नन्वेकस्यैकैव संज्ञेति आकडारसूत्रार्थात्कथं तस्यात्र प्राप्तिः । संज्ञिनो भेदादिति चेन्न । संज्ञाद्वयप्रयुक्तकार्यस्यैकवर्णवृत्तित्वेन संज्ञिनोरैक्यमभिप्रेत्य भाष्ये बाध्यबाधकभावोक्तेरस्याश्शङ्कायास्तदनुसारित्वात् । एतेनान्यत्र विषय-भेदे बाधस्वीकारेपि संज्ञयोस्त्वेकसंज्ञिकत्व एव सः । अत एव राज्ञ इत्यादौ न

वाच्यम् । तदधिकारे तेषां पाठेनाकडारसूत्रस्य स्वशास्त्रीयसञ्ज्ञामात्रविषयत्वकल्पनात् । एते तु न तथा, लोकेऽपि सत्त्वात् । तदुक्तं वार्त्तिककृता 'संहितावसानयोर्लोकविदितत्वात्' इति । न चावसानकार्येषु संहिताधिकारासंबन्ध एवास्तु अग्रे च मण्डूकप्लुतिरस्त्विति वाच्यम् । सत्यामुपपत्तौ मण्डूकानुवृत्तेरयुक्तत्वात् । ध्वनितश्चेदं "विसर्जनीयस्य सः" इति सूत्रे भाष्ये । सन्निकर्षः सामीप्यम् ॥

---

भसंज्ञया विशिष्टपदत्व बाधः । न वा राजपुरुष इत्यादौ भसंज्ञयावयवपदत्वबाधः । अत एवोत्तरपदत्वे चेति वार्त्तिकप्रत्याख्यानाय मध्ये यत्सुबन्तं तदपि भमिति व्याख्यानं संगच्छते । अत इमे शङ्कासमाधाने निर्दले इत्याचार्याद्युक्तमपास्तम् । शङ्कित्रनुसारेणोत्तरयति । तदधिकार इति । संहिताधिकार इत्यर्थः । स्वशास्त्रीयसंज्ञामात्रेति । मात्रपदेन लोक एव व्यवच्छिद्यते न तु शास्त्रान्तरं, तेन शास्त्रान्तरप्रसिद्धयोरपि लघुगुरुसंज्ञयोर्बाध्यबाधकभावः सिद्ध्यति । तदेतद्ध्वनयन्नाह । लोकेऽपीति । एतेनास्यायुक्तत्वमाचार्योक्तमपास्तम् । लोकेपि सत्त्वं प्रमाणयति । तदुक्तमिति । लोकविदितत्वादिति । अनेन संज्ञयोः प्रत्याख्यानलाभादनयोरनाकडारीयत्वेन बाधकत्वशङ्का सुतरां नेति भावः । मण्डूकप्लुतिरस्त्विति । एवं चावसानकार्याणां संहिताधिकारे पाठो न भवदुक्तार्थसाधकः । अनुवृत्तिस्तु तोर्लीत्यत्रावश्यक इति भावः । अयुक्तत्वादिति । पूर्वोक्तलक्ष्यासिद्धेश्चेत्यपि बोध्यम् । एतेन सादेशे खरि चेत्यस्य मण्डूकानुवृत्तिरेकदेशे स्वरितत्वप्रतिज्ञा च तव । मम तु सूत्रद्वये संहितायामित्यस्य मण्डूकानुवृत्तिरिति सममित्यपास्तम् । यत्र कुत्राप्यनुवृत्तिस्थले मण्डूकानुवृत्त्यङ्गीकारेपि शास्त्रेण नियतावधिकेष्वधिकारेषु तस्यायुक्तत्वाच्च । अत एव नलोपः प्रातिपदिकान्तस्येति सूत्रेऽन्तग्रहणं कृतम् । तद्धि उत्तरत्रानुवृत्तस्य पदस्येत्यस्य क्वचिद्वैयधिकरण्यज्ञापनार्थम् । तत्र मण्डूकानुवृत्त्यैव सिद्धे तद्वैयर्थ्यं स्पष्टमेवेति दिक् । ध्वनितं चेदमिति । मण्डूकानुवृत्तेरयुक्तत्वमित्यर्थः । तत्र हि वृक्ष

सुप्तिङ् । सुबिति सुपः पकारेण प्रत्याहारो व्याख्यानात् ।

---

इत्यादाववसाने सत्ववारणायोपात्तयोर्बाधकत्वपक्षपूर्वपरसन्निकर्षसंहितात्वपक्ष-योरुभयोरपि अणोऽप्रगृह्यस्येत्यत्र दोष उक्तः । मण्डूकानुवृत्तिस्वीकारे दोषो-द्भावनमसङ्गतमेव स्यादिति तेनेदं ध्वनितम् । यत्तु अणोऽप्रगृह्यस्येत्यत्र प्रसक्त-दोषस्य परेणासम्भवात्पूर्वेण तत्र संहितेत्युक्त्या दोषवारणसम्भवेपि बाधकत्व-पक्षप्रसक्तदोषोन्मूलनाय यत्नान्तरस्याकरणेनाकडारसूत्रं स्वशास्त्रसंज्ञामात्रपरमिति ध्वनितमित्याहुः, तन्न । आकडारसूत्रस्यैकसंज्ञिकत्व एव प्रवृत्तिरित्यभ्युपगमेनापि दोषवारणसम्भवेन निरुक्तार्थध्वननासम्भवात् । ननु भाष्यसम्मताष्टाध्यायीपाठे-ऽणोऽप्रगृह्यस्येत्युत्तरं संहिताधिकारस्य फलाभावेन तत्रापि संहिताधिकारा-सम्बन्धे दोषो नास्तीत्याशयेनैव भाष्ये दोषानुद्धार इति कथं भवदुक्तार्थध्वनन-मिति चेन्न । अणोऽप्रगृह्यस्येत्युपन्यासस्य खरवसानयोरित्येतदुपलक्षणतया उद्योते उक्तत्वेनादोषादिति दिक् ॥

व्याख्यानादिति । अत्र प्रत्याहारत्वे तिङ्साहचर्यं न ङिसंबुद्ध्योरिति सूत्रं च मानमुद्योतोक्तमेव । सुपः पकारेणेत्यत्र तु सुपः पकारोच्चारणमेव । न च रोस्सुपीत्यत्र विशेषणार्थं तदिति वाच्यम् । तत्रापि खरीत्यनुवृत्त्या प्रत्याहारा-श्रयणेपि सप्तमीबहुवचनलाभेन स्वरूपग्रहणस्यान्यत्राक्लृप्तस्याश्रयणे फलाभावात् । न चाप्रत्याहारसम्पादनेन चारितार्थ्यमिति वाच्यम् । तत्रापि सुपः पकारेण प्रत्याहार इत्यर्थस्योक्तयुक्त्या साधनीयतया ज्ञाप्यकोटिप्रवेशात् । एवं चान्य-पकारेण प्रत्याहारनिर्णयापेक्षया प्रत्याहारमात्रफलकेन सुपः पकारेणेति निर्णय-स्यैवौचित्यमिति बोध्यम् । एतेन सुपः पकारोच्चारणसामर्थ्यादिति तु न युक्तमित्यपास्तम् । एकसूत्रोपात्तत्वेन प्रत्यासन्नत्वाद्वा सुपः पकारेणेति निर्णयः । न च व्याप्तिन्यायाश्रयणं शङ्क्यम् । तथा सति स्वादिष्विति सूत्रे सुपीत्येव सिद्धे आदिग्रहणवैयर्थ्यात् । प्राग्दिशीयानां विभक्तिसंज्ञाविधानवैयर्थ्याच्च ।

**यद्यपि प्रत्ययग्रहणे तदन्तग्रहणमित्युक्तेः शब्दरूपं विशेष्यमादाय तदन्तग्रहणं सिद्धम् । प्रत्ययेन स्वप्रकृत्यवयवकसमुदायस्याक्षेपात्त-**

---

तिङ्साहचर्याद्वा एकसूत्रोपात्तेनेत्यर्थनिर्णयः । न च तत्रापि ष्यङादिङकारादिना प्रत्याहारसंभावनयाऽनिर्णय एवेति वाच्यम् । महिङो ङकारस्यान्यफलकताया वक्तुमशक्यत्वेन तेनैव प्रत्याहार इत्यर्थस्य निर्णेतुं शक्यत्वात् । एवं चोद्योतस्य सुपः पकारेणेत्यर्थानिर्णयप्रयुक्तन्यूनतापि परिहृता भवतीत्यपरमनुकूलम् । यत्तु सुब्ग्रहणात्तिङेकसूत्रोपात्तेनेति तन्न । इदानीं सुप् सुपः पकारेणेत्यनिर्णयेन कपः पकारेण प्रत्याहारे ष्यङादिङकारेण तिङ्प्रत्याहारेपि ततः परेषां ग्रहणाय सुब्ग्रहणस्यावश्यकत्वादिति दिक् । इत्युक्तेरिति । शब्दस्वरूपविशेष्याध्याहारे हेतुः। अन्यथा विशेष्यासन्निधानादिको यणचीत्यादाविव तदन्तविध्यभावस्संभाव्येतेति भावः । शब्दस्वरूपमिति । तदादीत्युपस्थितस्य बहुव्रीहितयान्यपदार्थजिज्ञासायां तत्समर्पणार्थमध्याहृतं शब्दरूपमिति भावः । एतेनोपस्थिततदादिविशेष्यकतदन्तविधेस्सम्भवाच्छब्दरूपाध्याहारो मुधेत्यपास्तम् । अङ्गसंज्ञासूत्रे तदादेः प्रत्ययप्राग्वर्तिन एव ग्रहणस्य क्लृप्ततया अर्थाधिकारादत्रापि तादृशस्योपस्थितौ पश्चादपि सामानाधिकरण्याभावात्तदन्तविधेर्दुरुपपादत्वाच्च । शब्दरूपाध्याहारे तु पूर्वं तद्विशेषणत्वेन तदन्तविधौ पश्चात्तदादीतिविशेषणसंबन्धेऽनायत्या प्रत्ययविशिष्टपरं तदादीत्यन्यदेतत् । एवं चाध्याहृतशब्दरूपे यत्र पूर्वं प्रत्ययरूपविशेषणसंबन्धस्तत्र विशिष्टपरमेव तदादीति, यत्र तु पूर्वं तदादीति विशेषणसंबन्धस्तत्र प्रत्ययप्राग्वर्तिपरमेवेति सिद्धम् । अत एव प्रत्ययग्रहणे चापञ्चम्या इत्यस्यापूर्वत्वाभावेन तत्सिद्धार्थस्य प्रत्ययग्रहणपरिभाषाव्याख्यानावसरे कथनं परिभाषेन्दुशेखरे ग्रन्थकृतस्संगच्छते । एतदेवाभिप्रेत्य प्रत्ययग्रहणे चापञ्चम्या इति परिभाषाव्याख्यानावसरे तदन्तांशोपस्थितौ तूभयोरेकविषयत्वमेव स्यादित्युक्तं ग्रन्थकृता । अत एव चैङ्ह्रस्वादि-

द्विशेषणत्वेन तदन्तविधिरिति न युक्तम् । इयानित्यादौ तस्य तादृशसमुदायेन व्यभिचारेणाक्षेपासंभवात् । आक्षिप्तस्य शाब्देऽनन्वयाच्च । तथापि सञ्ज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणाभावज्ञापनार्थमन्तग्रहणम् । तेन घसञ्ज्ञा तरप्तमपोरेव न तदन्तस्य । तेन गौरीब्राह्म-

---

तिसूत्रे तदादेरुपस्थित्या कतरदित्यादिसिद्धौ तदर्थमङ्गाक्षेपो मुधेति वक्ष्यमाणं संगच्छते । अन्यथा तदुपस्थाने प्रत्ययघटकाकारविशिष्टस्य ह्रस्वान्ततदादित्वेन ग्रहणे तद्दोषतादवस्थ्यमिति तदसंगतिः स्पष्टैवेत्यन्यत्र विस्तरः । ननु कैयटाद्युक्तदिशा आक्षेपेणैवोपपत्तौ शब्दरूपाध्याहारो व्यर्थ इति शङ्कां निराकर्तुं तदुक्तिं खण्डयति । यत्त्वित्यादिना । समुदायेनेति । तृतीयार्थः प्रतियोगिता । व्यभिचारेणेति । अभाववद्वृत्तित्वेनेत्यर्थः । तद्घटकाभावे तृतीयार्थप्रतियोगितायाअन्वयः । यत्तु अभावो व्यभिचारस्तत्र प्रतियोगितायाअन्वय इति तन्न । तस्येति षष्ठ्यन्तस्यानन्वयापत्तेः । नन्वलौकिकवाक्ये सतोऽव्यभिचारस्येदानीमारोप इति चेन्न । स्थानिवत्सूत्रेणाभावानतिदेशात् । शास्त्रीयाहार्यारोपस्य सामर्थ्याच्छास्त्रीयकार्यव्यवस्थापकत्वेपि लौकिकाक्षेपानिर्वाहकत्वाच्च । आक्षिप्तस्येति । अनुमितस्येत्यर्थः । प्रत्ययेनेति हेतूपादानेन तस्यैवाभिप्रेतत्वादिति भावः । अनन्वयाच्चेति । वृत्तिज्ञानाधीनोपस्थितिविषयस्यैव तत्स्वीकारादिति भावः । गौरीब्राह्मणितरेति । नात्र षष्ठीतत्पुरुषः सामानाधिकरण्य एव ह्रस्वप्रवृत्तेः । नापि कर्मधारयः । पुंवत्त्वापत्तेः । किं तु बहुव्रीहिः । तत्राष्टवर्षा भवेद्गौरीतिस्मृत्या गौरीशब्दस्य वयोवचनत्वप्रतीत्या वयोवचनानां पाक्षिकजातिकार्यस्य जातेरितिसूत्रभाष्याभिप्रेतत्वेन जातेश्चेति निषेधेन न पुंवत्त्वप्राप्तिरिति बोध्यम् । नन्वेवमपि प्रदेशे तदन्तविधिना दोषस्तदवस्थ एव, न चोत्तरपदाधिकार इति परिभाषया तत्र न तदन्तविधि-

णितरेत्यत्र न ह्रस्वः । एतन्निषेधसामर्थ्यादेव प्रदेशेष्वपि न तदन्तविधिः । न च ज्ञापितेऽपि व्यर्थं पदप्रदेशे प्रत्ययग्रहणे तदन्तग्रहणेनैव सिद्धेरिति वाच्यम् । पदत्वस्य प्रकृतिसाधारणतया

---

रिति वाच्यम् । तस्या ज्ञापकसाजात्यात्स्वरूपेण प्रत्ययग्रहणमात्रविषयत्वात् । अत एव रात्रेः कृतीत्यादौ न ह्रस्वः । एकतद्धिते चेति सूत्रं तु सर्वनाम्नो वृत्तिमात्र इत्यनेन गतार्थम् । उत्तरपदनिमित्तकस्यैव तद्धितान्तेपि पुंवत्त्वस्य सिद्धे तद्धितग्रहणात्तत्र न तदन्तविधिरित्यपि वक्तुं शक्यमित्यत आह । एतन्निषेधसामर्थ्यादेवेति । न चैतदभावे संज्ञास्थलीयेन प्रादेशिकेन च तदन्तविधिद्वयेन कुमारीपरमब्राह्मणितरेत्यत्र ह्रस्वापत्तिरिति वाच्यम् । गिलगिलेचेति ज्ञापितेन तदन्तविधिनिषेधेन फलभेदस्य सुवारत्वात् । किं चैतन्निषेधस्याडुत्तमस्य पिच्च यासुट्परस्मैपदेषूदात्तो ङिच्चेत्यत्र प्रवृत्तिमन्तरा तत्र तदन्तविधेर्दुर्वारतया पित्त्वङित्त्वातिदेशवैयर्थ्येन तत्सामर्थ्यात्संज्ञाविधावित्यत्र कर्मषष्ठ्या समासं विहाय संबन्धसामान्यषष्ठ्या समासस्य स्वीकार इत्यर्थस्य ज्ञापिततया तादृशसमासस्वीकारस्य प्रादेशिकतदन्तविधिवारणफलकतया तादृशैतन्निषेधसामर्थ्यात्प्रदेशेषु तदन्तविधिनिषेध इत्याशयेन न कोपि दोषः । प्रादेशिकतदन्तविधिनिषेधे प्रकारान्तरेणासमाधेयो यः कश्चन दोष आपतेत् स ज्ञापकसिद्धस्यार्थस्यानित्यत्वेनैव वारणीय इति गूढाशय इति दिक् । नन्वस्याः ज्ञापकभूम्यनुरोधात्प्रत्ययत्वतद्व्याप्यान्यतररूपेण प्रत्ययग्रहण एव प्रादेशिकतदन्तविधिनिषेधस्यापि लाभेन पदपदस्यातथात्वेन तत्प्रदेशे प्रकृतनिषेधाप्रवृत्त्या तत्प्रदेशे तदन्तविधावन्तग्रहणस्य स्वांशे चारितार्थ्यं दुर्निरूपमिति शङ्कते । न चेति । एतेनैतन्निषेधेत्यादिग्रन्थस्य प्रत्ययग्रहणे चापञ्चम्या इति वार्त्तिकस्थकैयटीयपूर्वपक्षग्रन्थानुवादपरतया योजनां कृत्वा तस्यात्यन्तफल्गु-

**पदग्रहणे प्रत्ययग्रहणस्यैवाभावात् । यस्मात्प्रत्ययविधिरित्याद्यनुवृत्तेः**

---

तयाऽनुपादेयतां सूचयितुं तदुत्तरमिमे शङ्कासमाधाने इति वदन्तो भट्टाः, घरूपेत्यत्रोत्तरपदाधिकारपरिभाषया तदन्तविधिनिषेधेन प्रगृह्यसंज्ञायाः प्रत्ययाप्रत्ययसाधारण्येन तत्प्रदेशे तदन्तविध्यप्राप्त्या च तत्संज्ञाशास्त्रे तदन्तविधिनिषेधेनास्य चारितार्थ्यात्सामर्थ्योक्तिरयुक्तेत्याचार्यादयः, न चेत्यादिशङ्कासमाधानयोस्सांगत्यार्यतन्निषेधसामर्थ्यादित्यस्य एतस्य तदन्तविधेर्यो निषेध उत्तरपदाधिकारे प्रत्ययग्रहणे इति तत्सामर्थ्यात्तद्बलादित्यर्थं वदन्तोऽन्ये च परास्ताः। ननु सुप्पदेन तदन्तविधावपि तस्य तदादित्वघटिततया पदसमुदायस्य पदत्वं न सिद्ध्यति, अन्तग्रहणेतु सुबन्ततदाद्यन्तमित्यर्थात्तात्सिद्ध्यतीति तदर्थमन्तग्रहणं स्यादिति कथं ज्ञापकमत आह । **यस्मादित्यादि । अनुवृत्तेरिति ।** अनुवृत्तस्य विशिष्टविशेषणतया पदसमुदायस्य पदत्वं नास्त्येवेति न तदर्थमन्तग्रहणमिति भावः । एतेन प्रत्ययग्रहणपरिभाषयैव तदादेरित्युपस्थित्या अपूर्वस्वरितत्वकल्पनया तदनुवृत्तिकथनं मुधेत्यपास्तम् । प्रत्ययग्रहणपरिभाषोपस्थिततदादेस्सति संभवे तत्परिभाषाबललभ्यतदन्तविधिप्रयोजकविशेष्यस्यैव विशेषणत्वौचित्येन तेन पदसमुदायपदत्वावारणात् । अङ्गमितिविभक्तसूत्रेऽनुवृत्त्यर्थं स्वरितत्वस्य क्लृप्ततयाऽपूर्वत्वाभावात् । यदि चानुवृत्तिपरिभाषोपस्थित्योः समानफलकतामभिप्रैषि तदाप्यनुवृत्त्या अनियमाभावेनानियमविषयायास्तस्या अविषय एव, सर्वस्यद्वे इति सूत्रशेषे कैयटेऽनुवृत्तिरेवोक्तेति दिक् । एतेनानुवृत्तेरित्यस्योपस्थितेरिति क्लिष्टव्याख्यानमपास्तम् । अत एव बृहति परिभाषयोपस्थितिरनुवृत्तेः पार्थक्येनोक्तेति दिक् । **पदसमुदायस्य न पदत्वमिति ।** तेन मा स्माहि ग्राहवती नदीत्यादौ न बहुव्रीहिरित्यन्यत्र स्पष्टम् । यत्तु देवदत्तः पचति भवतीत्यादौ निघाताभावः फलमिति तन्न । पचति भवतीत्यस्य

**पदसमुदायस्य न पदत्वम् । इयानित्यादौ यस्मात्प्रत्ययविधिस्तदादि-तद्धितान्तत्वं व्यपदेशिवद्भावेन बोध्यम् । तेनाशास्त्रीयस्याप्ये-काच्त्वादेरतिदेशात् । विशिष्टनिष्ठव्यवहारनिमित्तकार्याणि अस-हायेऽपि कर्त्तव्यानीति तदर्थात् । अत एवेयन्मात्रमित्यादौ वत्वन्ता-**

---

पदत्वेपि तिङन्तत्वस्य दुरुपपादत्वात् । न च देवदत्तः पचतीत्यस्यातिङन्त-पदत्वे ततः परस्य निघातापत्तिरिति तदाशय इति वाच्यम् । प्रसज्यप्रतिषेधा-ङ्गीकारेण वारणसंभवात् । एकतिङ्वाक्यमिति पारिष्कृतसमानवाक्यत्वस्याभावेन निघाताप्रवृत्तेश्चेति दिक् । ननु प्रत्ययग्रहणपरिभाषायाः प्रकृतेऽनुवृत्त्यैव सिद्धेऽ-नियमाभावादेवाप्रवृत्तिरित्याशयेनैवानुवृत्तिरुक्ता, नत्वेतादृशेष्वन्यत्र तदाद्यंशानु-पस्थितिरित्याशयेनेति सूचयन् कृत्तद्धितेतिसूत्रे तदाद्यंशोपस्थितिं सिद्धवत्कृत्य तत्र तदुपस्थितौ दोषमन्यथा वारयति । इयानित्यादिना । केचित्तु अनुवृत्ते-रित्यस्योपस्थितेरित्यर्थं व्याचक्षाणा नन्वेवं संज्ञाविषये तदाद्यंशोपस्थितौ इया-नित्यादौ कार्यकालपक्षे कथं प्रातिपदिकत्वं तदादेरभावादित्यत आह । इया-नितीत्यवतारयन्ति । ननु तदादित्वस्याशास्त्रीयत्वात्कथमतिदेश इत्यत आह । **तेनाशास्त्रीयेति** । **एकाच्त्वादेरिति** । एतेनावयवत्वतद्व्याप्यान्यतरयोरेवाने-नातिदेश इत्यपास्तम् । निजौ चत्वार एकाच इति भाष्यासंगतेः । अवयवत्वघटि-तस्याप्यतिदेश इति चेत् प्रकृतेऽपि समम् । दृष्टान्तेऽतिदेशस्यावयवत्वास्पर्शादि-त्यन्यत्र विस्तरः । नन्वियानित्यादौ सुब्लुगर्थं प्रवृत्तायास्संज्ञाया एकदेशविकृ-तन्यायेनातिदेशस्सुलभः । न च मध्ये विच्छिन्नस्य कथमतिदेश इति वा-च्यम् । संज्ञानां मध्ये विच्छेदेऽप्यतिदेशस्योपपादयिष्यमाणत्वात् । न हि कार्यकाले उपदेशेनैवैकवाक्यता नातिदेशेनेत्यत्र मानमस्ति । स्पष्टं चेदं बृहच्छेखरे । एवं चाशास्त्रीयस्यातिदेशे नेदं फलमत आह । **अत एवेति** ।

त्स्वार्थे इति मात्रच्सिद्धिः। हरिषु इत्यादौ सोऽस्तु नैवं पदत्वं, "हलि सर्वेषाम्" इति निर्देशेन ससहाये तदप्रवृत्तेः। "निजौ चत्वार एकाचः" इति भाष्यन्त्वभ्युपेत्यवादेन। ध्वनितञ्चेदम् "आदेच उपदेशे" "तास्यनुदात्तेत्" इत्यादौ भाष्ये। तत्र हि ढौकते इत्यौकारस्य हत इत्यादावकारस्यैजन्तोपदेशत्वमकारान्तोपदेशत्वं व्यपदेशिवद्भावेनाशङ्क्यार्थवता व्यपदेशिद्भाव इत्युक्तम्। यो वर्णो ऽर्थवांस्तेन व्यपदेशिवद्भावः वर्णस्यार्थवत्त्वञ्चैयायेत्यादावसहाये एव

---

मात्रच्सिद्धिरिति। यत्तु इदमयुक्तम्। अन्तरङ्गानपीति न्यायेन यस्ये तिलोपं बाधित्वा सुब्लुक्प्रयोजकमात्रचः प्रथमं प्रवृत्तेः। यदि च प्रकृतेऽन्तरङ्गनिमित्तविनाशकत्वाभाव इति मन्यते, तदापि भृशादिसूत्रशेखरेऽधिकव्यवच्छेदकतैवोपस्थिततदादेरित्यस्य न न्यूनव्यवच्छेदकतेत्युक्तत्वेन तद्दिशा मात्रचः सुलभत्वादित्याचार्यादयः, तन्न। न्यूनव्यवच्छेदकत्वाभाव इत्यस्य यत्र तु लोपादिना प्रकृत्येकदेशस्यासत्त्वं "यथा तुर्य" इत्यादौ तत्रैकदेशविकृतन्यायेन यस्माद्विहितस्तत्त्वस्यातिदेष्टुं शक्यतया तादृशन्यूनं न व्यवच्छिद्यत इत्येवाशयः। अत एवाङ्गाधिकारप्रत्याख्यानपक्षे प्राकरोदित्यादावुपसर्गात्पूर्वमडादिवारणाय तदाद्युपस्थितिवदेकदेशात्पूर्वं तद्वारणायोपायाप्रदर्शनं भगवतस्संगच्छते। एवं च प्रकृते एकदेशविकाराभावाद्व्यपदेशिवद्भावमन्तरा गत्यन्तराभावेन फलस्य सुस्थत्वादिति दिक्। एकस्मिन्नित्यस्यासहायार्थकतां द्रढयति। हरिष्वित्यादिना। निर्देशेनेति॥ तेनार्थान्तरकल्पनामपेक्ष्य न्यायसिद्धोक्तार्थकत्वमस्य युक्तमिति भावः। असहायार्थकत्वे प्रसक्तं भाष्यविरोधं परिहरति। निजावित्यादि। अभ्युपेत्य वादेनेति। एकस्मिन्नित्यस्योक्तार्थापर्यालोचनयेति भावः। अस्य भाष्यस्यैवं लापनमेव युक्तम्। अन्यत्रासहायार्थकताया भाष्यतो लाभादित्याशयेनाह। ध्वनितं

न तु प्रकृते इति तदर्थः । एवञ्चैकस्मिन्नित्यस्यार्थोऽर्थवतेत्यनेनोक्त इति दिक् ॥

हलोऽनन्तराः । गर्गाः शतं दण्ड्यन्तामित्यत्र समुदाये शतदण्डनवदत्र समुदायस्यैव सञ्ज्ञा न प्रत्येकम् । अनन्तरा इत्युक्तेश्च ।

---

चेदमिति । दिगिति । तदर्थस्तु भाष्यस्य यथाश्रुतार्थकत्वे कुरुत इत्यादावनर्थके व्यपदेशिवद्भावाप्रवृत्त्या टित्त्वालाभे एत्वानापत्तिरित्याद्यन्यतोऽवसेयः ॥

समुदायसंज्ञासिद्धये आह । गर्गा इत्यादि । न प्रत्येकमिति । तेन सुदृषत्प्रासाद इत्यादौ संयोगान्तलोपादि नेति भावः । ननु ब्राह्मणभोजनन्यायेन प्रत्येकं किं न स्यात् । न च हलित्युक्तावपि वर्णग्रहणे जातिग्रहणेन हल्समुदायग्रहणे सिद्धे हल इति बहुवचनस्यैकशेषेण समुदायबोधकस्य वैयर्थ्येन तत्सामर्थ्यात्समुदाये वाक्यपरिसमाप्तिरेवात्राश्रीयत इति वाच्यम् । तस्य जात्याख्यायामितिसूत्रविहितत्वेन कौस्तुभे उक्तत्वेन सामर्थ्यविरहात् । एतेन लिडित्यादौ दोषाभावाय समुदाये सत्येव प्रत्येकं संयोगसंज्ञेत्यर्थस्य बहुवचनेन बोधनेऽनन्तरग्रहणं व्यर्थमेव स्यादतोऽनन्तरग्रहणेन केवलव्यावृत्तावतिरिच्यमानं बहुवचनग्रहणं समुदायसंज्ञां साधयतीति भट्टोक्तमपास्तम् । कथमन्यथा द्वयोस्संज्ञा स्यादत आह । अनन्तरा इति । अयं भावः । अविद्यमानाऽन्तरा येषामिति विग्रहे मध्ये आधेयस्य द्वयोरेव संभवेन संसर्गवद्विप्रयोगस्यापि विशेषावगतिहेतुतया स्वावधिकपूर्वत्वसामानाधिकरण्यस्वावधिपरत्वसामानाधिकरण्योभयसंबन्धेनाधेयविशिष्टपर्याप्त्यधिकरणत्वाभावरूपानन्तर्यवतोर्द्वित्वपर्याप्त्यधिकरणतावतोरेव संज्ञित्वावगमः । अत एव भाष्ये द्वयोश्चैवान्तरा विद्यते वा न वा इति संयोगविप्रयोगौ दर्शिताविति । तत्र संयोगप्रदर्शनं दृष्टान्तार्थमिति स्पष्टमुद्योते । नन्वानन्तर्यव्यवस्थितानां हलां प्रत्येकं संयोगसंज्ञा प्राप्नोतीति कैयटाद्यानन्तर्यस्योपलक्षणत्वे प्रत्येकं संज्ञा

**तस्य विशेषणताया एवौचित्यात्। यत्तु "संयुज्यन्ते वर्णा यत्रेत्यन्वर्थसञ्ज्ञाबलान्न प्रत्येकं संज्ञा" इति, तन्न। घटपटौ संयुज्येते यत्रेत्यादौ संयुज्यमानपदार्थातिरिक्तस्यैवान्यपदार्थतया प्रतीतेर्व्युत्पन्नत्वेन तदतिरिक्ततद्धटितपदवाक्यरूपसमुदायस्य सञ्ज्ञापत्तावनिष्टापत्तेः। महासञ्ज्ञा तु प्राचामनुरोधादेव। तेन सुहृषद्वातीत्यत्र संयोगान्तलोपो नेत्यन्यत्र विस्तरः। हल इति बहुवचनं सौत्रम्।**

---

दुर्वारेत्यत आह। **तस्येति**। आनन्तर्यस्येत्यर्थः। **औचित्यादिति**। संभवति विशेषणत्वे उपलक्षणत्वस्यानौचित्यादिति भावः। यत्तु तस्येत्यनेन हल्पदैकशेषलभ्यसाहित्यस्य परामर्शादनन्तरा इत्युक्तेस्साहित्यस्य विशेषणताया एवौचित्यादिति समुदित एव हेतुरिति, तन्न। प्रदीपोद्योताभ्यां हल इति बहुवचनस्य जात्याख्यायामिति साधुत्वलाभेनैकशेषस्य दूरापास्तत्वात्। उद्योते आनन्तर्यस्येत्युपादानेनात्रान्यथा व्याख्यानस्यानौचित्याच्च। एतेन तस्येत्यस्यानन्तर्यप्रतियोगितयोपस्थितद्वितीयवर्णस्येत्यर्थ इति व्याचक्षाणा अपि परास्ताः। कैयटोक्तसमुदायसंज्ञासमर्थनं निराकरोति। **यत्त्विति**। **व्युत्पन्नत्वेनेति**। ननु व्रीहयस्संयुज्यन्तेऽत्र राशावित्यत्र वर्तिपदार्थस्यैवान्यपदार्थत्वेन प्रतीतिर्व्युत्पन्नैवेति चेन्न। यत्रातिरिक्तान्यपदार्थासंभवस्तत्र व्यपदेशिवद्भावेन भेदकल्पनेप्यत्र ससहायत्वेनातिरिक्तस्यैव ग्रहणापत्तिरित्याशयात्। एतेनाचार्योक्तस्यायुक्तता परास्ता। **पदेति**। विप्रशब्दस्य तदापत्तौ परमविप्रेत्यत्र मकाराकारस्य गुरोरिति प्लुतापत्तिरिति भावः। **वाक्येति**। अत्र वाक्यशब्देन पदातिरिक्तः पदघटितसमुदायो विवक्षितः। तथा च पाहि माधव उपेक्षसे किं मामित्यादौ वशब्दादेः संज्ञायां धकाराकारस्य प्लुतापत्तिरिति भावः। ननु तर्हि महासंज्ञाकरणं वृथेत्यत आह। **महासंज्ञेति**। बहुवचनसामर्थ्याद्बहूनामेव संज्ञेत्यपि नेत्याह। **हल इतीति**। **सौत्रमिति**। हल्शब्दस्य संज्ञाशब्दतया

यद्वा । हलौ च हलश्चेत्येकशेषः । "स्वरितात्संहितायाम्" इति सूत्रेऽनुदात्तानामिति पदे तथैकशेषस्य भाष्ये करणात् । तेन द्वयोरपीति शिक्षेत्यादौ "गुरोश्च हलः" इत्यप्रत्ययः सिद्ध्यति । यत्रापि बहवः श्लिष्टास्तत्रापि द्वयोर्द्वयोरेव, न बहूनाम् । झलि परे संयोगादिलोपविधानात् । बहूनामपीति चिन्त्यमेव फलाभावात् ।

---

जातिवचनाभाव इति वदतां मतसाधारण्यादेवमुक्तम् । तन्मते छान्दसमित्यर्थः । जातिवचनत्ववादिनां तु जात्याख्यायामिति सूत्रसिद्धमित्यर्थ इति साधारण्यं सिद्ध्यतीति भावः । यद्वाऽऽश्रयगतं बहुत्वं धर्मे आरोप्य जात्याख्यायामिति प्रत्याख्यानपक्षे प्रकृते आरोपे द्वयोर्न स्यादत उक्तं सौत्रमितीति बोध्यम् । प्राचीनरीत्या बहुवचनमन्यथा समर्थयति । यद्वेति । ननु भिन्नवचनोपादाने-नैकशेषः क्वाप्यदृष्ट इत्यत आह । स्वरितादिति । ननु यत्र द्वावेव श्लिष्टौ तत्र द्वयोरेवास्तु संयोगसंज्ञा, यत्र तु बहवः श्लिष्टास्तत्र बहुनामेव स्यादेकाज्द्विर्वचनन्यायात् । न च द्वयोरेवानन्तर्यमिति बहूनां प्रसक्तिरेव नेति वाच्यम् । द्वयोश्चैवान्तरा भवति नवेति भाष्ये त्रयाणां समवधाने द्वयोस्समुदाययोरवधित्वविवक्षणेन द्वयोस्समुदाययोरनन्तरत्वे तत्समुदायवर्तिहलां बहुत्वेन तत्प्रसक्तेः । अन्यथा यान्हि भवांस्तत्र षष्ठ्या प्रतिनिर्दिशतीति बहुवचनासंगतेः । किं च वर्णयोरेवावधित्वे द्वयोश्चैवान्तरेत्यत्रान्तरान्तरेणेति द्वितीयापत्तिः । अन्यसहितस्यावधित्वे तु तत्रावधित्वनियमाभावाद्युक्तग्रहणान्नियतावधिविवक्षाविषयाया द्वितीयाया अप्रवृत्तिस्सिद्धा । स्पष्टं चेद मुद्योते । अत एव बहूनामपीति भाष्योक्तं संगच्छत इत्यत आह । झलि पर इत्यादि । फलाभावादिति । भाष्येऽस्योपन्यासो न्यायतः सूत्रात्संभवमात्रेणेति भावः । न च मङ्क्त्यत्रान्त्यात्पूर्वं नुमि फलं सुवचमिति वाच्यम् । मस्जेरन्त्यात्पूर्वो नुमिति वार्त्तिकमनारम्भणीयमित्याशयात् । न च मग्न इत्यादौ नलोपानापत्तिरिति वाच्यम् । नुमः

**तत्र तत्राङ्गपदघात्ववयवसंयोगस्यैवाश्रयणेन तादृशस्य च त्रयाणां संयोगस्याभावादिति भाष्ये स्पष्टम्। आनन्तर्यं व्यवधानाभावो व्यवधानञ्च विजातीयेनैवेत्याशयेनाह। अज्भिरिति। अत्र कुत्वं न्याय्यम्। अत एव हयवरट्सूत्रे "अचोऽक्षु" इति भाष्यप्रयोगे कुत्वं दृश्यते। स्वरैरव्यवहिता इति तूचिता वृत्तिः। हलः किम्।**

---

पूर्वमेव संयोगादिलोपस्वीकारात्। न च तस्यासिद्धत्वम्, नमुने इति योगविभागेन तस्य सिद्धत्वस्वीकारात्। न च तत् स्वीकारे गौरवं शङ्क्यम्। मस्जेरिति वार्त्तिकाकरणलाघवेनापमार्जनात्। एतेनास्यायुक्तताऽचार्योक्ताऽपास्ता। यत्तु मस्जेरिति वार्त्तिकमकृत्वा नलोपविधायके मस्जेर्नलोपविधायकं करणीयम्। यद्वा नुम्विधायके नशेर्झलि मस्जेस्स इति सूत्रद्वयमस्तु। स इति स्थानषष्ठ्या भ्रस्जेरित्यादाविव सकारस्य निवृत्तिः। एवं च मङ्क्त्यत्र न दोष इति भट्टोक्तं तन्न। अपूर्वविधिकल्पनापेक्षया सिद्धयोगविभागेनासिद्धबाधकल्पनायां लाघवात्। यदप्यन्त्यात्पूर्वं नुम्यपि सजयोर्मध्ये नकारसत्त्वेप्यजव्यवहितयोस्तयोः संज्ञायामिष्टसिद्धिरिति, तदपि न। सास्तिधातोरेतद्भाष्यप्रामाण्यात् षसवशी छान्दसाविति जक्षित्यादयष्षडिति सूत्रभाष्यप्रामाण्याच्चाप्रामाणिकत्वकथनपरोद्योतेन त्रयाणामसत्त्वप्रतिपादनस्यैव लाभेन तद्विरोधात्। एतेन फलाभावादित्यस्यैकस्मिन् प्रयोगे द्वयोर्बहूनां चेति स्वीकारे फलाभावादित्यर्थ इति श्रीधरोक्तमपास्तम्। यदप्यनिर्दितामिति सूत्रे उपधाग्रहणं पूर्वमात्रोपलक्षणमिति मग्न इत्यत्र दोषाभावेनान्त्यात्पूर्वो नुमित्यस्यानावश्यकतया न मङ्क्त्यत्र दोषः। तङ्क्तीत्यादौ तु नुमो बहिरङ्गासिद्धतया न नलोप इति तदपि न। नद्ध इत्यादौ नलोपापत्तेः। पूर्वत्वमजव्यवहितमेवेति स्वीकारे तु न मानमिति दिक्। फलाभावमेव विवृणोति। **तत्र तत्रेति। त्रयाणां संयोगस्येति।** शास्त्रीयकार्योपयोगिन इत्यर्थः। तेन योक्त्रमित्यादौ तत्सत्त्वेपि न क्षतिरिति दिक्। नन्वल्पाच्तरमिति निर्देशात्कुत्वाभावः कल्प्यत इत्यत आह। **अत एवेति। उच्चितेति। अग्भिरित्युक्तौ**

तितउ देव । अत्र गुरोरिति प्लुतः स्यात् । अनन्तराः किम् । द्रप्सम् । अत्र सकारमकारयोः संयोगत्वे स्कोरिति लोपः स्यात् ॥

संयोगे गुरु । भेत्तेत्यादौ गुणस्तु क्ङोः क्ङित्त्वसामर्थ्येन भूतपू-

---

संदेहेनानौचित्यमिति भावः । यत्तु आचार्या अजनुनासिकः अच्ह्रस्वदीर्घेत्यादि-निर्देशात्सर्वत्र कुत्वाभावः, अक्षु इति प्रयोगात्सप्तमीबहुवचन एव कुत्वमिति प्रकृते नानुपपत्तिरिति तन्न । उक्तप्रयोगेण सुप्सु कुत्वमित्यर्थस्यापि संभवात् । प्लुतस्स्यादिति । प्रत्येकं संज्ञापक्षेऽयं दोषः । यत्तु समुदायसंज्ञापक्षेऽपि संयोगान्तलोपापत्तिरिति, तन्न । झल एव लोपविधानात् । अत एव तितउभ्या-मिति विहाय समासपर्यन्तानुधावनं संगच्छते । यदपि समुदायसंज्ञापक्षेऽपि तकाराकारयोः संज्ञायां दोषापादने तात्पर्यमिति, तदपि न । अनन्तरा इत्यस्य विजातीयव्यवधानरहितसजातीयमात्रारब्धसमुदाये संज्ञाविधाने तात्पर्येण प्रकृते दोषविरहात् । अन्यथा सर्वत्र दोषसंभवे तितउ देवेत्येतत्पर्यन्तानुधावनं ग्रन्थकृतो निर्बीजं स्यात् । तितउदेवेति । तितउ ऋतीत्यस्याप्युपलक्षणम् । अत्र तकाराकारस्य प्लुतः स्यात् । यत्तु तितओ इत्यस्योपलक्षणमिति तन्न । तत्र ह्यतोगुण इति पररूपे निरुक्तरूपस्यैवालाभात् । व्यस्तोच्चारणेन गुण एव बाध्यते येन नाप्राप्तिन्यायादिति स्पष्टमन्यत्र । यदपि हेनर, अ इति कुरु राम अइउणं पश्येत्युदाजह्रुः । तदपि न । तत्र संयोगसंज्ञाफलस्य दुर्निरूपत्वात् । अन्त्यस्यागुरोरपि प्लुतविधानात् । वाक्यान्तत्वाभावाच्चेति दिक् । द्रप्समिति । संयोगादिलोपे झल्ग्रहणानुवृत्तौ तु सदित्यस्योपलक्षणमिति बोध्यम् ॥

भूतपूर्वलघूपधेति । भूतपूर्वो यो लघुस्तदुपधेत्यर्थः । तेनेन्दाश्वकारे-त्यादौ न गुणः । धर्मिग्राहकसाजात्येन लघुत्वांशे तत्स्वीकारेऽपि विशिष्टांशे तत्स्वीकारे मानाभावात् । गुतेत्यादौ तु गाङ्कुटादिसूत्रे विहितविशेषणान्न दोषः ।

र्वलघूपधग्रहणाद्बोध्यः। इति सञ्ज्ञेति। प्रथमाध्यायस्थानां सन्धि-कार्योपयोगिनीनां संज्ञानां प्रकरणमिति समाप्तमित्यर्थः। तेनाम्रे-डितप्रगृह्यभसञ्ज्ञालोपसञ्ज्ञाद्यनुपन्यासेऽपि न क्षतिः। "अ अ" इत्याद्युपन्यासस्तु प्रासङ्गिकः॥ इति सञ्ज्ञाप्रकरणम्॥

---

तोतोर्तीत्यस्य छान्दसत्वान्न दोषः। राल्लोप इत्यत्र विषयसप्तम्याश्रयणेन वलोपोत्तरकालिकलघुत्वमादाय गुणप्रवृत्तेर्वा न दोषः। लोपो व्योरिति सूत्रे वग्रहणप्रत्याख्यानेन तोर्वेत्यादेरनभिधानमेव। यत्तु प्रत्ययोपदेशकाले लघूपध इत्यर्थ इति तन्न। असुस्रुवदित्यादौ गुणापादनपरभाष्यविरोधात्। दीधीवेवीटा-मितीड्ग्रहणवैयर्थ्यापत्तेः। पिबतावदन्तत्वेन गुणवारणपरभाष्यासंगतेः। सीद-तीत्यादौ गुणापत्तेश्च। यदपि प्रकृतिप्रत्ययोभयारब्धसंयोगनिमित्तकगुरुसंज्ञा लघुसंज्ञां न बाधत इति कल्प्यत इति तदपि न। कलप्साध्याविति द्वन्द्वे पूर्वस्य लघ्वक्षरत्वेन पूर्वनिपातनियमापत्तेः। यदपि तत्र सूत्रे लघूपधपदेन ह्रस्वोपधस्य ग्रहणमिति, तदपि न। यथाश्रुतेनोपपत्तौ लक्षणायां मानाभावात्। **सन्धिकार्येति**। सुप्तिङन्तमिति पदत्ववतः संहिताप्रयोज्यभावकार्येत्यर्थः। स्वादिष्विति पदसंज्ञासंप्रसारणसंज्ञयोस्तु न पदसन्धावुपयोगः। टिसंज्ञापि तत्र टिपदानुक्तेर्नोपयोगिनीति बोध्यम्। **समाप्तमिति**। तादृशीषु न काप्यवशिष्टे-त्यत्रैव तात्पर्यम्, नत्वन्यादृशीनामत्र नोपन्यास इत्यत्रेति बोध्यम्। तद्ध्वनय-न्नाह। **प्रासङ्गिक इति**। एतेन लोपसंज्ञा एतत्तदोरो रीत्यादौ सन्धिकार्यो-पयोगिनी। किं च लघुसंज्ञा न कथं चिदपि सन्धिकार्योपयोगिनी। यदि च गुरुसंज्ञाबाध्यतया तदुपन्यासस्तदा पदसंज्ञाबाधकतया भसंज्ञाप्युपन्यस्यताम्। किं च स्वादिष्विति पदसंज्ञापि माभ्यामित्यादौ सन्धिकार्योपयोगिनीति तदनु-पन्यासान्न्यूनता। एवं टिसंज्ञाया अनुपन्यासान्न्यूनता। एवं निपात-संज्ञापि न सन्धिकार्योपयोगिनीति सापि न वक्तव्या स्यात्। एवं संप्रसारण-

इको गुण । परिभाषेयं व्याख्यानात् । गुणवृद्धिशब्दाभ्यामिति । गुणवृद्धिग्रहणानुवृत्त्यैव सिद्धे पुनर्गुणवृद्धिग्रहणसामर्थ्या-

---

संज्ञा संप्रसारणाच्चेति सन्धिकार्योपयोगिनीतीदं विशेषणद्वयं व्यर्थम् । मूलं तु प्रायेण सन्धिकार्योपयोगिनीनां प्रकरणं प्रायेण समाप्तमिति व्याख्येयमित्याचार्योक्तमपास्तम् । अतादृशीनां प्रासङ्गिकत्वं यथायथमूह्यमिति दिक् ॥

इति श्रीमन्महामहोपाध्यायतातोपनामक सुब्रह्मण्यशास्त्रिविरचिते
गुरुप्रसादाख्ये लघुशब्देन्दुशेखरव्याख्याने
संज्ञाप्रकरणान्तः प्रथमः खण्डः ॥

॥ इति संज्ञाप्रकरणम् ॥

---

## ॥ अथ परिभाषाप्रकरणम् ॥

व्याख्यानादिति । पुनर्गुणवृद्धिग्रहणसामर्थ्याद्विधित्वासंभवादन्यस्य स्वतोऽसंभवाच्च विधित्वपरिभाषात्वोभयाश्रयणे गौरवाच्च परिभाषात्वमेवेति भावः । स्पष्टं चेदं प्रदीपोद्योतयोः । सामर्थ्यादिति । स्वप्रयोज्यविधेयत्वोपहिततत्तदर्थे तयोर्लक्षणा । एवं च विधीयेते इति न पृथगध्याहर्तव्यमिति भावः । स्वोच्चारणप्रयोज्यप्रतीतिविषयत्वोपहिततत्तदर्थे तयोर्लक्षणाश्रयणीयेति तु न सम्यक् । आश्रितगुणवृद्धिशब्दव्यापारार्थमिति कैयटग्रन्थस्याश्रितोगुणवृद्धिशब्दव्यापार उच्चारणं येषु आदेशु विधीयमानेष्वित्यर्थं वदत उद्योतकारस्य विधेयताया अपि लक्ष्यार्थप्रवेशस्यैवाभ्युपेतत्वात् । अत एव गुणवृद्धिग्रहणं गुणवृद्धिशब्दविहितगुणवृद्धिलाक्षणिकमित्युक्तमुद्योत इति दिक् । ननु पूर्वत्र शब्दपरतयार्थाधिकारानुरोधादनुवृत्तयोश्शब्दपरत्वा च्छब्दयो र्विधानस्यादृष्टतया विधीयेते इत्यध्याहरस्य वक्तुमशक्यतया यत्र ते पदे तत्रेक इत्युप-

**दिति भावः। अनुवर्त्तमानश्च सञ्ज्ञिपरमेव स्यात्। सञ्ज्ञाकरणेनान्यत्र सञ्ज्ञिपरत्वात्। यद्वा तदप्यनुवर्त्य गुणो वृद्धिरिति योजन-**

---

तिष्ठत इत्यर्थापत्तावनुवादेपि प्रवृत्तिस्स्यात्। न चोत्तरत्रार्थाधिकारबाधादत्रापि तद्बाध एवास्तु। अत एवेक इति सूत्रे उद्योतेऽर्थपरत्वमेवोक्तमिति वाच्यम्। शब्दाधिकारादर्थाधिकारस्य मुख्यतया उत्तरत्र बाधेन शब्दाधिकारस्वीकारेप्यत्रार्थाधिकारत्यागे मानाभावादित्यत आह। **अनुवर्तमानं चेत्यादि**। यद्यप्यादैजदेङामनुवृत्त्यैव सिद्धेस्सामर्थ्यं प्रयासमन्तरा सूपपादं, तथापि पदचतुष्टये स्वरितत्वकल्पनापत्त्या गौरवाल्लाघवात्पदद्वये स्वरितत्वकल्पनमुचितमित्याशयेनैवमुक्तं, तत्र हेतुमाह। **संज्ञाकारणेनेति**। **संज्ञिपरत्वादिति**। ननु यत्र स्वातन्त्र्येण तत्तत्पदोपादानं तत्रास्तु संज्ञिपरत्वम्, यत्र तु संज्ञासूत्रादेव तदनुवृत्तिस्तत्रार्थाधिकाराच्छब्दपरतैव। अत एव स्वादिष्वित्यादावनुवृत्तपदादिपदानां न संज्ञिपरता। नचैवं ष्णान्तेति सूत्रे संज्ञासूत्रादनुवृत्तसंख्यापदस्य संज्ञिपरता न स्यादिति वाच्यम्। तत्रार्थाधिकारे ष्णान्तेति विशेषणस्यालग्नकत्वापत्त्या तद्बाधकल्पनेप्यत्र तत्कल्पने मानाभावादिति चेन्न, यत्र विधेयान्तरबोधकपदान्तराभावस्तत्र विधेयाकाङ्क्षावशादुपस्थितसंज्ञाया एव विधानौचित्येन संज्ञापरत्वेऽप्यर्थाधिकारमवलम्ब्यान्यत्राशब्दसंज्ञेति निषेधबाधकल्पनया शब्दपरताया अनौचित्यात्। अत एव गुणवृद्धिग्रहणसामर्थ्यादिति सामर्थ्योक्तिस्स्वरसत उपपद्यते। अत एवानुवृत्त्या प्रथमं व्याख्यायाथवेत्येतत्पक्षकथनं कैयटस्य संगच्छत इति दिक्। एवमुक्तार्थस्य प्रामाणिकत्वेऽनुवृत्तिपरतया योजनस्य स्वरूपव्याक्रियैव पराक्रियेत्याशयेन प्राचीनमतं स्वरूपेण विवृणोति। **यद्वेत्यादिना। योजनयेति।** इतः प्रत्येकमन्वयः। उच्चार्येति शेषः। तस्य च विधानेऽन्वयान्न द्वन्द्वासाधुत्वम्। गुणो गुण इति वृद्धिर्वृद्धिरिति योजनायां तु तत्त्वं दुर्वारम्। नन्वयं प्रयासो विफलः। लक्षणप्रतिपदोक्तपरिभाषया सिद्धेरत

यैतल्लाभः । "स्वादिषु" इति सूत्रेऽनुवृत्तपदपदस्य सञ्ज्ञापरताया एव दृष्टत्वात् । "ष्णान्ता" इति सूत्रे संख्यापदस्य तदन्तत्वासंभवादर्थपरतेति बोद्धव्यम् । लक्षणप्रतिपदोक्तपरिभाषया तु नात्र निर्वाहः । तत्र प्रतिपदोक्तस्येत्यस्य साक्षादुच्चारितस्येति साक्षात्तत्तच्छब्दानुवादेन विहितस्येति वाऽर्थात् । ध्वनितश्चेदमत्रैव भाष्ये ।

---

आह । लक्षणेति । साक्षादुच्चारितस्येति । उच्चार्यमाणवृत्तिधर्मेण साक्षादवच्छिन्नविधेयताश्रयस्येत्यर्थः । विहितस्येति । यत्किंचिच्छास्त्रीयोद्देश्यतावच्छेदकज्ञानसंपादकत्वेनोपयुज्यमानानुपूर्व्यवच्छिन्नोद्देश्यतानिरूपितविधेय -ताश्रयस्येत्यर्थः । एवं च यत्र प्रतिपदोक्तपरिभाषाप्रवृत्तिरिष्टा तत्छास्त्रजन्यबोधोपयोग्यानुपूर्वीविशिष्टत्वं तत्त्वम् । वैशिष्ट्यंच, स्वेन साक्षादवच्छिन्नविधेयताश्रयत्व स्वप्रकारकज्ञानप्रयोज्योद्देश्यतानिरूपितविधेयताश्रयत्वैतदन्यतरसंबन्धेन । अत्र प्रथमसंबन्धदानात् पाघ्रेति शास्त्रजन्यबोधोपयोगिपात्वरूपानुपूर्व्या साक्षात्पापाने इति शास्त्रप्रयोज्यविधेयताया अवच्छिन्नत्वेन तस्य प्रतिपदोक्तत्वं सिद्ध्यति। द्वितीयसम्बन्धदानेन तत्पुरुषे तुल्यार्थेति शास्त्रजन्यबोधोपयोगितृतीयात्वरूपानुपूर्वीप्रकारकज्ञानप्रयोज्योद्देश्यतानिरूपितविधेयता तृतीया तत्कृतेति विहित समासे वर्तत इति तस्य प्रतिपदोक्तत्वं सिद्धम् । एवमन्यत्राप्यूह्यम् । नचैवं सखीमतिक्रान्तोऽतिसखिरित्यत्रानङ् स्यात् । प्रातिपदिकस्य कुत्राप्यविहितत्वादिति वाच्यम् । अग्रहणप्रातिपदिकानामुपदेशः कर्तव्य इत्युक्त्या तस्य विहितत्वलाभात् । यद्वा स्वावच्छिन्नशक्तताश्रयत्वेन प्रसिद्धत्वमपि वैशिष्ट्यनियामकसम्बन्धेष्वन्यतमत्वेन निवेशनीयमतो न काप्यनुपपत्तिः । नचैवं गणयतीत्यादौ दीर्घविधौ न स्थानिवदिति निषेधस्स्यादिति वाच्यम् । पूर्वोत्तरसाहचर्येण तत्पदविहितस्यैव तत्र ग्रहणात् । एवमन्यत्रापि बोद्धव्यम् । ध्वनितमिति । तत्रहि संज्ञया विधाने नियमस्य गुणवृद्धिग्रहणसामर्थ्यादवक्तव्यतोक्ता

अस्याश्च विधेयसमर्पकगुणवृद्धिपदश्रुतिर्लिङ्गं तदाह । विधीयेते इति । अत एव "अतो गुणे" "वृद्धिर्यस्य" इत्यादौ न दोषः । एतेन "शब्दपरयोः पूर्वयोर्गुणवृद्धिपदयोरनुवृत्त्या यत्र ते पदे तत्रेदमुपतिष्ठत इत्यर्थेन "त्यदादीनामः" इत्यादिव्यावृत्तौ सिद्धायामिह गुणवृद्धी इति व्यर्थम्" इत्यपास्तम् । एतन्मूलक एव "विधौ परिभाषोपतिष्ठते नानुवादे" इत्युद्घोषः । एवञ्च पदोपस्थापकपरिभाषाविषये विधीयते इत्यस्यैवाध्याहारो बोद्धव्यः । एवञ्च "तस्मिन्निति निर्दिष्टे" "षष्ठीस्थाने" इत्यादेरनुवादेऽपि प्रवृत्तिः । तेन "प्रत्ययस्थात्कात्पूर्वस्य" "उदात्तस्वरितयोर्यणः" इत्यादौ न दोषः । "उदी-

---

परिभाषयैव सिद्धे तदसंगतं स्यादिति तेनेदं ध्वनितमिति भावः । अत एव क्तोधिकरणे चेति विहिते निष्ठाकार्यमित्येवं रीत्या तत्तत्संज्ञापदाविहिते तत्संज्ञाकार्यं सेत्स्यतीति बोद्ध्यम् । विधेयताघटिते लक्षणाङ्गीकारे फलमाह । अत एवेति । अपास्तमिति । विधेयताघटिते लक्षणायामस्यैव मानत्वसंभवादिति भावः । नन्वेवमपि संपूर्णसूत्रद्वयानुवृत्त्या विधेयताघटिते लक्षणा सुवचेति चेन्न । वृद्ध्यादिपदघटिते अदेङादिपदघटिते चोभयत्रापि प्रवृत्तिसंपादनेनानुवृत्तेस्सार्थक्यादिति दिक् । नन्वयं प्रयासो विफलः विधौ परिभाषोपतिष्ठत इति न्यायेनैव सिद्धेरित्यत आह । एतन्मूलकमेवेति । नन्वत्रैवं निर्वाहेप्यचश्चेत्याद्यर्थमावश्यकी परिभाषेत्यत आह । पदोपस्थापकेति । गुणवृद्धिग्रहणसामर्थ्यात्सामान्यतोऽयमर्थ आश्रीयत इति भावः । अध्याहार इति । इदं प्राचामनुरोधेन । विधेयताघटिते लक्षणेति ग्रन्थकृदभिप्रेतत्वात् । ननु परिभाषैव स्थाने ग्रहणेन सामान्यतो ज्ञाप्यताम् । सामान्यतो ज्ञापनाविशेषादित्यत आह । एवं च तस्मिन्नितीति । एवंच दोषभूयस्त्वात्सा नाश्रयणीयेति तात्पर्यम् । अनुवादेपीति । कर्मणि घञ्, अनूद्यमान विशेषणेष्विति

चामातः स्थाने" इति स्थानेग्रहणन्तु स्पष्टार्थमेव। तत्र विधिवाक्ये प्रथमाया विधेयविभक्तित्वेन तदन्तस्य विधेयसमर्पकत्वनिर्णयः। अत एव गुणादिपदानामिक्पदोपस्थापनेन चरितार्थानामपि वाक्यार्थान्वयिता। तदर्थस्य तदनन्वयित्वे विधेयत्वाभावेन उपस्थापकत्वस्यैव भङ्गापत्तेः। इयश्च एधितेत्यादौ व्यञ्जनानां गुणव्यावृत्त्यर्थं, भिन्नमित्यादौ निषेधप्रवृत्तये इग्लक्षणत्वसंपत्त्यर्थश्चेति दिक्॥

---

तदर्थः। स्पष्टार्थमिति। न तु तत्र फलाभिनिवेशः कार्य इति भावः। यत्तु परिभाषामङ्गीकुर्वतस्तत्र मते विधीयत इत्यध्याहारे तात्पर्यग्राहकं प्रकृतसूत्रे गुणवृद्धिग्रहणमिवेत्यर्थ इति, तन्न, अध्याहाराभावेऽपि शब्दव्यापारलाभार्थं तदावश्यकत्वात्। नन्वेतत्परिभाषालिङ्गे विधेयताया अपि घटकत्वे विधेयताप्रतीतिस्स्थानषष्ठीत्वनिर्णयस्येव वाक्यार्थबोधोत्तरभावितया अलोऽन्त्यपरिभाषापेक्षयान्तरङ्गत्वस्य वक्तुमशक्यतया मिदेर्गुण इत्यादौ दोषतादवस्थ्येन तच्छेषपक्षादविशेषोऽत आह। तत्र विधीत्यादि। प्रथमाया इति। प्रतिबन्धकाभावविशिष्टयेति भावः। तेन यत्र वृद्धिर्यस्येत्यादौ यच्छब्दयोगादिप्रतिबन्धकं तत्र प्रथमा श्रुतावपि न विधेयत्वप्रतीतिः। ननु मास्तु विधेयताया लिङ्गकुक्षिप्रविष्टत्वं मास्तु तद्घटिते लक्षणा प्रथमान्तगुणवृद्धिपदश्रुतिरेव लिङ्गमस्तु तेनातोगुण इत्यादौ न दोषः। वृद्धिर्यस्येत्यादौ तु गुणानां च परार्थत्वादिति न्यायेनैवास्या अप्रवृत्तिः एवं वृद्धिरादैजित्यादावप्रवृत्तिस्सिद्धा। एवं च विधौ परिभाषेति न्यायोपि नाश्रयणीय इति वदतां मते दूषणान्तरमाह। अत एव गुणादीति। वाक्यार्थान्वयितेति। तव तु तत्त्वं प्रयत्नान्तरसाध्यमिति गौरवं मम तु उपजीव्यविरोधाभावादेव तत्त्वं सिध्यतीति गौरवं नेति भावः। तद्ध्वनयन्नाह। तदर्थस्येत्यादि। एधितेति। डउप्रत्ययस्य डित्वं न व्यञ्जनस्य गुणनिवर्तकं उणादीनामव्युत्पन्नत्वात्। स्पष्टं चेदमुद्योते। व्युत्पत्तिपक्षाश्रयणेन तस्य ज्ञापकत्वमभ्युपगच्छतामपि सूत्रमावश्यकमित्याह। भिन्नमित्यादि। दिगिति। तदर्थस्तु एतदर्थं परिभाषाया

प्लुतशब्दैरिति। "ऊकाल" इति सूत्राद् ह्रस्वदीर्घप्लुत इति अजिति चानुवर्त्तते। ह्रस्वेत्यादिपदञ्च तृतीयया विपरिणतमिति भावः। तेन "दिव उत्" "अष्टन आ विभक्तौ" इत्यादावेतदनुपस्थितिः। शेषं प्राग्वत्॥

आद्यन्तौ। यद्यप्यत्र मिलितस्य नैकत्रान्वय इति द्वन्द्वो न

---

आवश्यकतया तत्र तत्र ज्ञापकाद्याश्रयणक्लेशो मुधैव। न च क्ङितिं चेतींग्लक्षणयोरेव निषेध इति नैव स्वीक्रियते। गित्साहचर्याद्धात्वधिकारोक्तक्ङितोरेव निषेध इत्यभ्युपगमान्न दोष इति वाच्यम्। एवमपि कामयत इत्यत्र निषेधापत्तेः। नचेदं ङित्त्वमात्मनेपदार्थं चरितार्थमिति वाच्यम्। विश्न इत्यादौ संप्रसारणार्थस्यापि तस्य गुणनिषेधकतादर्शनात्। न च णित्त्वसामर्थ्यात्तद्बाध इति वाच्यम्। णेरनिटीत्यादौ विशेषणार्थतया सामर्थ्योपक्षयादित्यादिरूह्यः॥

शेषमिति। पदोपस्थापकत्वं विधेयताघटितलक्षणा चेत्यर्थः। यत्तु शब्दव्यापाराश्रयणस्यापि शेषपदार्थतामाहुः। तन्न। तेन दिव उदित्यादिपूर्वग्रन्थेन शब्दव्यापाराश्रयणस्य कृतत्वप्रतीत्या शेषपदार्थत्वकथनासङ्गतेः। आद्यस्य फलं ह्रस्वो नपुंसक इत्यादौ। अन्यथा हलन्तेषु अलोन्त्यस्येत्यस्यैतस्य च विरोधेनोभयोरप्रवृत्तौ सर्वादेशह्रस्वापत्तिः। अन्त्यस्य फलं देवच्छत्रमित्यत्र तुक्सिद्धिः। तुक्तु श्रीपच्छत्रमित्यादौ चरितार्थ इति बोद्धव्यम्॥

एकत्रेति। एकधर्मावच्छिन्ने इत्यर्थः। तेन धवखदिरौ छिन्द्धीत्यत्र तत्तच्छेदनक्रिययोर्भेदेपि न क्षतिः। अन्वय इति। विशेषणतया विशेष्यतयावेति भावः। द्वन्द्वो न प्राप्नोतीति। एकधर्मावच्छिन्नप्रकरतानिरूपितैकधर्मावच्छिन्नविशेष्यताशालिबोधविषयकवक्त्रिच्छारूपसहविवक्षाया अभावादिति भावः। यत्त्वत्र द्वन्द्वपदमित्पदैकशेषस्याप्युपलक्षणमिति। तन्न। द्वन्द्वान्ते श्रूयमाणस्ये-

प्राप्नोति तथापि समूहयोरन्वयबोधोत्तरं "यथासंख्यम्" इति सूत्रारम्भसामर्थ्यात्पुनः प्रत्येकान्वयः। लोके त्वेवं रीत्या प्रयोगोऽसाधुरेवेति भाष्ये स्पष्टम् । अत्रैव यथासंख्यसूत्रोपन्यासो युक्तः। द्वन्द्वान्ते श्रूयमाणस्येच्छब्दस्य प्रत्येकं सम्बन्धः। पुरस्तादपवाद-

---

च्छब्दस्य प्रत्येकं संबन्ध इत्युत्तरग्रन्थस्वारस्यभङ्गापत्तेः । **सामर्थ्यादिति** । हलोयमामित्यादौ लोकन्यायेन सिद्धेरिति भावः । **भाष्ये स्पष्टमिति** । तत्र-ह्यजाविधनौ देवदत्तयज्ञदत्ताविन्युक्ते न ज्ञायते कस्याजाधनं कस्यावय इत्युक्तम् । यत्तु साहित्यरूपैकधर्मावच्छिन्नस्यैकधर्मावच्छिन्ने अन्वयमात्रेण सहविवक्षा द्वन्द्वस्य साहित्यावच्छिन्ने क्रमेणान्वयेन यथासंख्यन्यायस्य चोपपत्तौ द्वेधा बोधाश्रयणं विफलमेव । भाष्यं तु लोके क्रमान्वयनियामकाभावादुपपद्यते । स्थानाख्यलौकिकन्यायस्तु द्वन्द्वगर्भबहुव्रीहिस्थले न प्रवर्तते एतद्भाष्यस्वारस्यात् । अत एव "वानप्रस्थयतिब्रह्मचारिणां दायभागिनः क्रमेणाचार्यसच्छिष्य-धर्मभ्रात्रेकतीर्थिनः" इति स्मृतिप्रयोगोपि संगच्छते । अत एव भाष्ये संदेह-एवोक्तो नत्वसाधुत्वमित्याहुः । तन्न । संभवेदेतन्मनोविलसितं यथाकथंचित् यदि साहित्यविशेषिततत्तदर्थे द्वन्द्वस्य शक्तिस्स्यात् । तदेव न तत्तदर्थसमुदाय एव शक्तेरन्यत्र सिद्धान्तितत्वात् । तथाच कथं विशेषणतया उपस्थितयो-स्तादृशेऽन्वयः । एकदेशे विशिष्टान्वयस्य क्वचिदङ्गीकारेऽपि एकदेशे एकदेशा-न्वयस्य क्वाप्यदृष्टत्वात् । अत एव समूहयोरन्वयबोधोत्तरमित्युक्तं ग्रन्थकृता । स्थनाख्यलौकिकन्यायस्य द्वन्द्वगर्भबहुव्रीहिस्थल एवाप्रवृत्तिरिति संकोचे माना-भावः। स्मृतौ तादृशान्वयालाभमभिप्रेत्यैव क्रमेणेत्युक्तम् । अन्यथा न्यायसिद्धेऽ-भीष्टे तद्वैयर्थ्यमेव स्यात् । ऋष्युक्तत्वादेव तस्य तत्र साधुत्वं । भाष्येऽसाधुत्वानु-क्तिस्तु देवदत्तयज्ञदत्तसमुदाये अजाविसमुदायरूपधनसंबन्धरूपान्वयबोधतात्पर्येण

न्यायेन स्थानेयोगत्वस्यायमपवादः । प्रत्ययपरत्वन्तु परत्वादमुं बाधते । तेन चरेष्ठादयः परा एव भवन्ति । अत एव यत्रैतदभावे स्थानषष्ठीसम्भावना तत्रैवेदं प्रवर्त्तते तदाह । यस्योक्ताविति । आद्यन्ताक्षिप्तोऽवयवी यच्छब्दार्थः । यथासंख्यसिद्धमर्थमाह । क्रमादिति । इताविति किम् । टुकू पर्यायेणाद्यन्तयोर्मा भूत् ॥

---

प्रयोगे साधुत्वानपायः इत्याशयेनैवेति दिक् । परत्वादिति । नच यत्र चरेष्ट इत्यादौ प्रत्ययपरत्वाद्यवयवत्वयोर्विरोधस्तत्र बाधसंभवेपि उपसर्गेघोः किरित्यादौ समावेशसंभवेन विरोधाभावाद्विप्रतिषेधसूत्राप्रवृत्तावाधिं प्रधिमित्यादावेरनेकाच इति यण् स्यादिति वाच्यम् । एकस्यैवावध्यवधिमद्भावस्य अवयवावयविभावस्य च विरुद्धत्वात्तत्सूत्रप्रवृत्तेः । नच समासान्तेषु तदुभयं दृष्टमिति वाच्यम् । समासान्तेषु परश्चेत्यस्य निवृत्त्येष्टसिद्धेर्लोकसिद्धविरोधस्य त्यागे मानाभावात् । यत्त्विमदयुक्तम् । परश्चेत्यस्य पदैकवाक्यतया अन्वयस्य वक्ष्यमाणत्वेन वाक्यार्थबोधात्पूर्वमेव तत्प्रवृत्तेः । अस्य टकितौ यमुद्दिश्य विहितौ तदाद्यन्तौ भवत इत्यर्थेन वाक्यार्थबोधोत्तरमेव प्रवृत्तेरुभयोर्यौगपद्याभावादित्याचार्यास्तन्न, टकितौ यत्र विहितौ तत्राद्यन्ताविति सूत्रार्थेनास्य पदोपस्थापकतया वाक्यार्थबोधात्पूर्वं प्रवृत्त्या यौगपद्यसंभवात् । संभावनेति । अनया आद्यन्तोपस्थितावयववाचकपदसमभिव्याहारादवयवषष्ठीत्वनिर्णयात् षष्ठीस्थाने इत्यस्याप्रवृत्तिरित्यत्र तात्पर्यम् । आद्यन्ताक्षिप्तेति । तदाकाङ्क्षित इत्यर्थः । यच्छब्दार्थ इति । अस्य पदोपस्थापकतया तत्र तत्र तदुपस्थितौ तत्र विद्यमान षष्ठ्यन्तस्यावयविसमर्पकतया नैराकाङ्क्ष्यमिति भावः । इताविति किमिति । टकिनाविति मत्वर्थीयेनेनिना निर्देशः कार्यः मात्रालाघवाभावेपि पदलाघवस्य सत्त्वात् । कुकि ककारश्च न कर्तव्य इत्यपरं लाघवम् । धुडादौ टकाराद्युच्चारणसामर्थ्यादुपदेशे टकवन्तावित्यर्थ इति प्रश्नः । पर्यायेणेति । अस्योभयवत्त्वेन विरोधात्समावेशासंभवेन तृजादिदृष्टान्ते-

नेत्यर्थः । इदमुपलक्षणं प्रेष्यदृष्टान्तेनातिपत्तेरपि । अत्र द्वयोरपि समुदायापेक्षत्वेनाचः परस्मिन्निति सूत्रोक्तान्तरङ्गत्वस्यानियामकतया शब्दविप्रतिषेधाश्रयणेनेष्टसाधने तु शुषः क आदेश्च क इत्यादौ दोषो बोध्य इति भट्टाः । यद्यपि कुकि ककारेणेत्संज्ञकटवत्त्वेनास्य प्रवृत्तौ नियामकमिति सामान्येन ज्ञापयितुं शक्यते । किं चास्यापूर्वत्वापेक्षयाङिच्चेत्यस्यैव तत्र तत्र ककारटकारोच्चारणसामर्थ्यसिद्धार्थानुवादकत्वे लाघवमितीत्संज्ञकविषयत्वमस्य सिद्धम् । तथापि सीयुटो लावस्थायामेव प्रवृत्तिरित्याद्युदात्तश्चेति सूत्रोक्तपक्षे तत्र टकारस्य टित आत्मनेपदानामिति प्रवर्तनेन चरितार्थतयास्य मन्थरप्रवृत्त्या षष्ठी स्थाने इत्यनेन बाधप्रसङ्गः । तत्र यत्नान्तरकरणे गौरवम् । कुकि ककारस्य ज्ञापनार्थं करणे तु यथान्यासे पदगौरवेपि कल्पितन्यासे धुडादौ टकारोच्चारणसामर्थ्येनोपदेशे टकिनावित्यर्थकल्पनेन ज्ञानगौरवात्साम्यमिति यथान्यासमेवास्त्विति तात्पर्यमिति दिक् । अत्र भट्टाः टकाविति न्यस्यते टकावाद्यन्तयोस्संज्ञेति सूत्रार्थः । धुडादौ धु इति पृथक् पदं, एवं चाद्यवयवो धकारो भवतीत्येवं क्रमेण सूत्राणामर्थः । सगादौ पृथक् पदत्वासंभवस्थले कर्मधारयः । पूर्वनिपातप्रकरणानित्यत्वेन कादेःपरनिपातः । जशादिपदोपस्थितानां तु न संज्ञात्व मनुच्चरितत्वादुच्चारितस्यैव प्रत्यायकत्वात् । ठस्येक इसुसुक्तान्तात्क इत्यादौ यत्रादौ मध्ये च ककारस्तत्र जश्त्वाकरणेन समासाभावोनिर्णीयते । यत्र च शुषःक इत्यादावुच्चारणार्थवर्णसहितस्तत्र विशेष्यानुक्त्याऽसंभवान्न दोष इति प्रश्नाशयः । विशेष्यानुपादानेपि प्रकारतयोपस्थितस्वरूपस्यैव तत्त्वं स्यात् । तथाच टुक्याद्यन्तत्वयौगपद्यासंभवेन टस्यैव पर्यायेण तत्त्वापत्तिस्संज्ञिभेदान्न शब्दपरविप्रतिषेध इत्युत्तराशय इति, तन्न । अनागमकानां सागमका आदेशा इत्यस्य घुसंज्ञासूत्रे आशयस्योक्तत्वेपि तदस्मरणेन तत्कथमिति प्रश्ने तत्पक्षसमर्थनार्थं संज्ञात्वपक्षस्य भाष्योक्तत्वेन तत्पक्षआद्यवयवधकारवानादेश इत्यर्थस्य स्वीकृतत्वेन आद्युदात्त इत्यादौ त्रिपदबहुव्रीह्याश्रयणेन यथाकथं चित्समुदायस्योदात्तत्व-

**मिदचो । अयं बाध्यसामान्यचिन्तया स्यानेयोगत्वप्रत्यय-परत्वयोरपवादः । तृणह इति निर्देशात् । निर्धारणे इति । यस्य समुदायस्य मिद्विहितस्तस्याचां मध्ये इत्यर्थः । सौत्रमेकवचनमिति**

---

वारणेष्याडजादीनामित्यस्य प्रत्याख्यानेपि यासुट्परस्मैपदेष्वित्यादौ समुदायोदात्तत्ववारणाय यासुडुदात्तः परस्मैपदेष्विति न्यासस्य करणीयतयाऽडजादीनामिति न्यस्यतस्सूत्रकृतस्संज्ञात्वपक्षस्यानभिप्रेतत्वेन भाष्योक्ततत्पक्षस्यैकदेश्युक्तिताया-उद्योतउक्तत्वेन संज्ञात्वपक्षाभिप्रायकत्वस्य प्रश्नोत्तरयोर्वक्तुमशक्यत्वात्। नच भाष्योक्तसंज्ञात्वपक्षतोऽन्य एवायं संज्ञात्वपक्ष इति वाच्यम् । अस्य पक्षस्य तत्र तत्र पदद्वयकरणे पदगौरवाक्रान्तत्वेन शङ्काया एवानुत्थितेरित्यलम् ॥

नन्वत्र सामान्यचिन्तायां किं मानं पूर्वसूत्रे विशेषचिन्ताया एव स्वीकृततयात्रापि तस्या एव न्याय्यत्वात् । न च मकारोच्चारणसामर्थ्यम् । श्रवणार्थत्वेनापि-सार्थक्यसंभवादत आह । **निर्देशादिति** । नन्वक्षरसमाम्नाये औकार एवान्त्य इति दोषस्स्यादत आह । **यस्य समुदायस्येति** । औकार एवोच्चारणीये एवं न्यासकरणादन्यसमुदायस्यैव निर्धारणावधितया ग्राह्यतया स्वस्वदेशोपदर्शित-समुदायस्योपस्थितत्वात्तस्यैव ग्रहणं न्याय्यमिति भावः। **सौत्रमिति**। जात्येकवचनमिति कौस्तुभोक्तं तु न युक्तम् । कारके इत्यत्र निर्धारणसप्तम्यन्तत्वे कारकेष्वित्येव वदेदिति भाष्येण निर्धारणविभक्तेर्बहुवचनत्वनिर्णयात् । नच तत्र तत्र सौत्रत्वकल्पनामपेक्ष्य तद्भाष्येण सप्तम्या एव तथात्वकल्पनौचित्याद्युक्तमेव कौस्तुभोक्तमिति वाच्यम् । निर्धारणविभक्तेस्समुदायबोधकादुत्पत्तेस्सिद्धान्तयिष्यमाणतया एकशेषस्यावश्यकतया समाहारद्वन्द्वविषये एकशेषाभावस्य वक्ष्यमाणतया बहुवचनस्यान्याय्यत्वात् । भाष्यस्यापूर्वार्थकत्वकल्पनामपेक्ष्यैवं स्वीकारस्यैव युक्तत्वादिति दिक् । अत्र केचित् । अन्त्यादित्येतत्समानाधिकरणमच इति पञ्चम्यन्तमेव । तत्रान्त्यत्वस्य नित्यसाकाङ्क्षत्वेन स्वान्तसमुदायाक्षेपादजन्तसमुदाया-

भावः । तस्यैवेति । यस्य विहितस्तस्यैवेत्यर्थः । अत एव "समुदाय-भक्तो नोत्सहतेऽवयवस्येगन्ततां विहन्तुम्" इति भाष्यं सङ्गच्छते । अन्तावयव इति । पूर्वसूत्रात्समस्तमप्यन्तपदमेकदेशो स्वरितत्वप्रतिज्ञाबलादनुवर्त्तते इति भावः । मुञ्चतीत्यादिविषये तु

---

न्त्यादचः परः प्रत्यासत्त्या तादृशसमुदायावयवो मिद्भवतीत्यर्थसंभवात्सौत्रत्वकल्पनं विफलमेव । अतएव भाष्ये निर्धारणषष्ठ्यादिचर्चा न कृतेत्याहुः । तन्न । अत्रान्त्यपदेनात्रयव्याकाङ्क्षायां प्रदेशे उपात्तस्यैवोपस्थितत्वाद्ग्रहीतुमुचितत्वेन यत्र प्रदेशेऽजन्तसमुदायोपादानं यथेकोचीत्यादौ, तत्रैवैतत्प्रवृत्त्यापत्त्या यत्र शे मुचादीनामित्यत्र तादृशसमुदायासम्भवस्तत्राप्रवृत्त्यापत्त्या नुमोऽन्तादेशत्वप्रसङ्गात् । स्पष्टं चेदं कौस्तुभे । नच मित्त्वसामर्थ्यम् । इकोचीत्यादौ चारितार्थ्यात् । एतेन तत्र मित्करणवैयर्थ्यमिति कौस्तुभोक्तमपास्तम् । तृणह इमिति निर्देशेन समर्थने तु ततो वरं सौत्रत्वकल्पनमिति विभावयन्तु । ननु तस्मात्परस्तस्यैवेति मूलेनान्त्याजवयवत्वप्रतीत्या सुहिन्स्वित्यत्र नुम इकारभक्तत्वे यदागमन्यायेन विशिष्टस्येण्त्वात् षत्वापत्तिः । नुम्विसर्जनीयेत्यत्र नुम्ग्रहणस्य नियमार्थतया तत्साधने तु क्लेशः । किंच भिनत्तीत्यादौ श्नम इकारभक्तत्वे विशिष्टस्य लघुत्वे गुणापत्तिरित्याद्यनिष्टप्रसङ्गोऽत आह । यस्य विहितस्तस्येत्यर्थ इति । अन्त्याचस्तु न परामर्शः । ततःपरत्वतदवयवत्वयोरेकत्र विरुद्धत्वात् । अन्त्यपदावृत्तिकल्पने गौरवाच्च । मम तु तत्तत्प्रदेशोपात्तोद्देश्यस्यैवान्तावयवेऽन्वय इति न दोष इति भावः । न्यायसिद्धेर्थे प्रमाणमप्याह । अत एवेति । मिदचोन्त्यस्येत्येव सिद्धे परग्रहणमपि समुदायभक्तत्वे मानमिति बोध्यम् । इति भाव इति । अयं भावः, पूर्वपरशब्दाववध्यंशे नित्यसाकाङ्क्षं यद्रूपं तदवच्छिन्नं नियमेन बोधयतः । अत एवावधिवाचकशब्दाप्रयोगेऽपि नियमेन तदध्याहारः । यत्र त्ववयविबोधकपदसमभिव्याहारस्तत्रावयवत्वावच्छिन्नमपि बोधयतः । यथा तस्य परं, पूर्वं नाभेः कायस्ये-

**फलाभावादयोग्यत्वाच्चान्तावयव इत्यंशाप्रवृत्तिः ॥**

**परिभाषाणामनियमे नियमकारिणीत्वादाह । अनिर्धारितेति।**

---

त्यादौ । यत्र तु तदसमभिव्याहारस्तत्र नावयवत्वावच्छिन्नं बोधयतः । अवधि-वाचकपदस्यैवावयववाचकपदस्याध्याहारस्य तन्मात्रप्रयोगेऽदृष्टत्वात् । अत्र त्ववधि-वाचकशब्दप्रयोगादवयविवाचकस्याप्रयोगादवध्यंशे नित्यसाकाङ्क्षारूपावच्छिन्नमा-त्रार्थबोधकत्वेनावयवत्वप्रतीतिरनुवृत्त्यधीनैवेति । एतेनानुवृत्तिप्रदर्शकप्रकृतसूत्र-स्थभाष्यस्यैकदेशयुक्तित्वं वदन्तः परास्ताः । वस्तुतस्तु प्रकृतसूत्रस्थभाष्यादुरण्पर इति सूत्रभाष्याच्च परशब्दावयवत्वेनावयववाची नास्तीत्येव युक्तम् । उरण्परसूत्रे वक्ष्यमाणमवयववाचिनेति तु वस्तुतस्तद्वाचिनेत्यर्थकं षष्ठीसमासप्रदर्शनतात्पर्यकम्। अत एवानुनासिकादिति विहितस्यानवयवत्वप्रतिपादनं संगच्छते । विना विरोधं भाष्ययोरेकदेशयुक्तित्वकल्पनमयुक्तं, पूर्वं नाभेः कायस्येत्यत्र षष्ठ्यर्थोऽवयवावय-विभाव इत्येव मूलाशय उन्नेय इति भट्टाः । वस्तुतः पूर्वोक्तमेव ज्यायः । अनुनासिकादिति विहितस्यानवयवत्वप्रतिपादने मानाभावादिति हेतुस्वारस्येन यदि किंचिन्मानमुपलभ्येत तदावयवत्वं प्रतिपादयितुं शक्यत इत्यर्थस्यैव लाभात् । एवंच यथाश्रुतमेव वक्ष्यमाणं योजयितुं शक्यमिति ग्रन्थतत्त्वविदो विभावयन्तु। ननु समुदायनिरूपितचरमावयवत्वस्यायोग्यत्वेऽप्यवयवत्वमात्रबोधस्तु स्याद-वेत्यत आह । **फलाभावादिति** । तन्मध्यपतितन्यायेन सिद्धेरिति भावः । विशिष्टाभिप्रायेणाह । **अयोग्यत्वादिति** । **इत्यंशाप्रवृत्तिरिति** । न च विनिगमनाविरहादन्त्यादचः परत्वांशस्यैवाप्रवृत्तिरिति वाच्यम् । मिदजन्त्य-स्येत्येव हलन्तेऽप्रवृत्तिसिद्धावेवंन्यासस्यैव गमकत्वादिति भावः ॥

मूले अनिर्धारितेत्यर्थलाभः कथमत आह । **परिभाषाणामित्यादि** । **अनियमे इति** । संदेहे इत्यर्थः । **नियमकारिणीत्वादिति** । निश्चयजन-

तेन "ऊदुपधाया गोहः" इत्यत्र स्थानेयोगत्वं न । उपधापदसन्निधानेनावयवषष्ठीत्वनिर्णयात् । स्थानेयोगेत्यस्य स्थानपदार्थनिरूपित-

---

कत्वादित्यर्थः । यत्तु आचार्याः, इदमयुक्तम् । अलोन्त्यस्य, आदेः परस्येत्येतद्विषये आदेशस्यान्त्यानन्त्याद्यनादिसाधारण्येनाप्राप्तेस्संदेहनिश्चायकत्वाभावात् । न वाऽवयवषष्ठ्यादिषु संदेह इति प्रकृतसूत्रभाष्यं तु सामान्येनार्थोपदेशस्य संशयस्थल एव प्रवृत्तिरित्यभिप्रायकम् । लौकिकोयं दृष्टान्त इत्यादिमार्गदृष्टान्तप्रदर्शकोत्तरभाष्येण तथैव लाभात् । यद्वा पाक्षिकप्राप्तिकबाधेनोपपत्तौ नियतप्राप्तिकबाधो न न्याय्य इत्यभिप्रायकमित्याहुः, तन्न । अलोन्त्यस्येत्यादिविषयेपि संदेहस्य सूपपादत्वात् । तथाहि, निर्दिश्यमानस्यादेशा भवन्तीत्येव सर्वादेशत्वे सिद्धे अनेकाल्शिदित्यस्यानेकालादिरेवादेशस्सर्वस्येति नियमार्थत्वापत्त्या तदितरेषां सर्वादेशत्वाभावेनावयवद्वारकस्यैव स्थानसंबन्धस्य वक्तव्यतया किमवयवद्वारकस्संबन्ध इति वक्तुं शक्यत्वात् । यद्वा तदोस्सस्सावित्यादावयवषष्ठीविषयेपि निर्दिश्यमानपरिभाषाप्रवृत्तये निर्दिश्यमानावयवस्यादेशा इत्यर्थस्य वक्तव्यतया ससहाये व्यपदेशिवद्भावाप्रवृत्त्यालोन्त्यस्येत्यादिसूत्रविषये अवयवेषु विश्रान्ता स्थानिता कस्मिन्नवयवे विश्राम्यतीति संशयस्य वक्तुं शक्यत्वात् । यद्यपीदमपवादभूतादेःपरस्येत्यादिविषये न संभवति, तथापि सामान्यपरिभाषाणामेव तत्त्वं स्वीक्रियत इति मूलस्योपपत्तिसंभवे अयुक्तत्वकथनानौचित्यादिति दिक् । **अनिर्धारितेतीति** । संबन्धबोधकषष्ठ्यास्संबन्धिद्वयांशे नित्यसाकाङ्क्षतया द्वितीयसंबन्धिबोधकपदानुपादाने किंपदार्थनिरूपितस्संबन्धष्षष्ठ्यर्थ इति संशयात् तत्र स्थानपदमध्याहृत्य तन्निरूपितसंबन्ध एव षष्ठ्यर्थत्वेन निर्णय इत्यत्र तात्पर्यमिति भावः । **निर्णयादिति** । द्वितीयसंबन्ध्युपादाने तत्संबन्ध्यन्वययोग्यस्य संबन्धस्य निश्चयादिति भावः । **स्थाननिरूपितेति** । कार्यशब्दवादे निवृत्तेस्स्थानपदार्थतया प्रतियोगिता संबन्धः । नित्यशब्दवादे प्रसक्तेस्तदर्थतया

**सम्बन्धार्थिकेत्यर्थः** । स्थानेन योगो यस्या इति विग्रहे निपातनात्साधुत्वस्य भाष्ये उक्तत्वात् । अस्तेरनन्तरे इत्यादेरप्यनन्तरादिनिरूपितसंबन्धे इत्येवार्थः । षष्ठीमात्रोच्चारणे स्थानपदाद्यध्याहार इत्यन्यत्र विस्तरः । प्रसङ्ग इति । दर्भाणां स्थाने शरैः प्रस्तरितव्यमित्यादौ तथा दर्शनात् । भावे ल्युट् स्थानशब्दे । प्रसङ्गश्च सति

---

विषयविषयिभावस्स इति बोध्यम् । ननु स्थानं योगो यस्या इति विग्रहेण स्थानमेव षष्ठ्यर्थ इति कुतो नेत्यत आह । **उक्तत्वादिति** । तस्य तत्त्वे व्यधिकरणबहुव्रीह्याश्रयणं विफलमेव स्यादिति भावः । एतेनैतद्विग्रहेपि स्थानेन स्थानरूपार्थेन योगो वाच्यवाचकभावसंबन्धो यस्या इत्यर्थेन स्थानमेव षष्ठ्यर्थ इति वक्तुमुचितम् । अध्याहारे गौरवात् । तत्र प्रकृत्यर्थस्य स्वविषयकोच्चारणकर्तृकत्वसंबन्धेन स्वविषयकज्ञानकर्तृकत्वसंबन्धेन वा अन्वयः। प्रत्ययार्थस्य स्वज्ञाप्योच्चारणविषयत्वसंबन्धेन स्वज्ञाप्यज्ञानविषयत्वसंबन्धेन वाऽन्वय इत्यपास्तम् । संबन्धिद्वयवृत्त्यंशद्वयघटितस्यैव षष्ठ्यर्थसंबन्धताया अभेदस्य षष्ठ्यर्थत्ववारणाय मञ्जूषायां व्यवस्थापिततया प्रसङ्गस्य षष्ठ्यर्थत्वायोगाच्च । अतएव स्वत्वस्वामित्वसमूहश्शेषषष्ठ्यर्थ इति कारकप्रकरणे वक्ष्यतीति दिक् । ननु शब्दस्यापि शब्देनानन्तरादयोऽभिसंबन्धा अस्तेर्भूर्भवतीति संदेहःस्थाने अनन्तरे समीपे इति भाष्ये अभिसंबन्धा इत्युक्त्या स्थानादीनां षष्ठ्यर्थत्वमेव प्रतीयत इति कथं स्थाननिरूपितसंबन्धार्थकतेत्यत आह । **अस्तेरनन्तरे इत्यादि** । **इत्येवार्थ इति** । व्यधिकरणबहुव्रीहिपरोपक्रमेणोपसंहारे स्थानेऽनन्तरे इत्यादिसप्तम्यन्तपदप्रयोगेण चैवमेव वक्तुमुचितमिति भावः । **षष्ठीमात्रेति** । द्वितीयसंबन्धिवाचकपदोच्चारणं मात्रपदेन व्यावर्त्यते । **प्रसङ्ग इतीति** । स चाहार्यज्ञानरूपापत्तिः । सर्वत्र स्थाने इति सप्तम्यन्तपदस्याध्याहारः, प्रकृत्यर्थस्य विषयविषयिभावेन स्थानपदार्थेऽन्वयः । इगादिप्रकृतयश्च तद्बुद्धिलाक्षणिकाः । सर्वत्र

बुद्धिविपरिणामस्यैवाभिप्रेतत्वात् । यणादयोपि तथा । स्थाने इति यस्य च भावेनेति सप्तमी । तदर्थस्सत्ताज्ञाप्यसत्ता । एवं चेग्बुद्धिविषयकाहार्यज्ञानसत्ताज्ञाप्यसत्ताश्रया यण्बुद्धिरिति बोधः । जराया जरसित्यादौ जराबुद्धिविषयकाहार्यज्ञानसत्ताज्ञाप्यसत्ताश्रयजरस्बुद्धेरन्यतरस्यामित्यनेन पाक्षिकत्वे बोधिते आहार्यज्ञानस्यापि पाक्षिकत्वलाभेनानाहार्यज्ञानविषयतापि जराशब्दबुद्धौ तिष्ठतीति बोध्यम् ॥

केचित्तु वृत्तिविशेष्यतावच्छेदकतावच्छेदकताकेष्टसाधनत्वप्रकारकभ्रमविषयत्वप्रकारतायां तादृशप्रमाविषयत्वप्रकारतायां ज्ञानीयविशेष्यतावच्छेदकधर्मावच्छिन्नविशेष्यताकेष्टसाधनत्वप्रकारकप्रमाविषयत्वप्रकारकज्ञानीयविशेष्यतावच्छेदकतावच्छेदकतायां च स्थानपदस्य खण्डशक्तिस्स्वीक्रियते । प्रकारतयोर्ज्ञाने निरूपकत्वसंबन्धेनान्वयः । खण्डशक्तिस्वीकारात् नित्यविधावाद्यप्रकारताया एवान्वयः । द्वितीयाया मोषः । विकल्पविधौ द्वितीयाया अन्वयः, प्रथमाया मोषः । तथा चेक्कर्मकमुच्चारणमिष्टसाधनत्वप्रकारकभ्रमविषयतावत् यण्कर्मकमुच्चारणमिष्टसाधनत्वप्रकारकप्रमाविषयतावदिति ज्ञाने आदाय लक्षणसमन्वयः । एवं जराकर्मकमुच्चारणमिष्टसाधनत्वप्रकारकप्रमाविषयतावत् जरस्कर्मकमुच्चारणमिष्टसाधनत्वप्रकारकप्रमाविषयतावदिति ज्ञाने आदाय विकल्पस्थले समन्वयः । वृत्तित्वं द्वितीयावच्छेदकतायां विशेषणम् । वृत्तित्वान्वयि निरूपितत्वं षष्ठ्यर्थः । स्थानपदार्थस्याश्रयत्वसंबन्धेन विधेयेऽन्वय इत्याहुः ॥

अन्ये त्वभावः स्थानपदार्थः । प्रतियोगितयाऽभावेऽन्वयिप्रयोज्यत्वं षष्ठ्यर्थः । अभावस्य स्यादितिलिङर्थेष्टसाधनत्वेऽन्वयः, तथा चेको यणचीत्यादाविक्प्रयोज्यत्वाभाववदिष्टसाधनत्ववान् यणिति बोधः । विकल्पस्थलेऽभावस्य विकल्पपदार्थेऽभावेऽन्वयः, जरापदप्रयोज्यत्वाभावाभाववदिष्टसाधनत्ववान् जर-

सम्भवेऽर्थवत एव। अर्थप्रत्यायनार्थं शब्दप्रयोगात्। "इको यण्" इत्यादेरचपरेकारघटितशब्दस्यार्थबोधनाय प्रसङ्गे तत्परयकारघटितः प्रयोक्तव्य इत्यर्थः। "एचः" इत्यादेश्च तेस्तुरिति। अतो न शब्दनित्यताहानिः। किं चेकारबुद्धिप्रसङ्गे यकारबुद्धिरित्यप्यर्थः। अत एवाचः

---

सित्यादिको बोधः, अभावाभावस्य प्रतियोगिरूपतया जराप्रयोज्येष्टसाधनत्ववान् जरसिति पर्यवसानात् स्थानिनोपि साधुत्वासिद्धिरित्याहुः। अत्र कल्पद्वयेपि स्थाने इति सप्तम्यन्तपदाध्याहारस्य पूर्वमुक्तत्वेनेकः स्थाने यण् स्यादिति वाक्ये सप्तम्या अनन्वयप्रसङ्गः। दर्भाणां स्थाने शरैः प्रस्तरितव्यमित्यादौ सप्तम्यन्तस्यानन्वयप्रसङ्गः। खण्डशक्तिस्थले विशेष्यविशेषणभावव्यत्यासेनान्वयाङ्गीकारेप्येकांशमोषेणान्यांशबोधस्यादृष्टचरत्वेनाद्यकल्पासंभवः। द्वितीयकल्पेपि विकल्पपदार्थाभावे विधेयस्यैव प्रतियोगितयान्वयस्य क्लृप्ततया स्थानपदार्थाभावस्य तथान्वयोऽनुचित एव। किंच षष्ठ्यर्थसंबन्धस्य द्विनिष्ठताया अन्यत्रोपपादिततया प्रकृते प्रयोज्यत्वस्य षष्ठ्यर्थत्वानुपपत्तिरित्यादि विभावयन्तु॥

सति संभवे इति। तेनारेत्यादावनर्थकस्याप्यभ्यासस्य प्रयोगे अत्वं हलादिशेषश्च सिद्ध्यतीति सूचितम्। अत एवाचः परस्मिन्नित्यादिविषयेप्यनर्थकप्रसङ्गोपि गृह्यत इति बोध्यम्। तत्र हेतुमाह। अर्थप्रत्यायनार्थमिति। प्रेक्षावत्प्रवृत्तेर्नियतप्रयोजनकत्वेन शब्दप्रयोगस्यार्थप्रत्यायनान्यप्रयोजनकताया अभावेनावयवानां नान्तरीयकतया प्रयोगेप्यर्थप्रत्यायनतात्पर्येण समुदायप्रयोगे तात्पर्यावधारणादिति भावः। निरुक्तरीत्यार्थस्वीकारे यत्फलितं तदाह। तेस्तुरिति। स्थानेन्तरतमपरिभाषासहकारेणेदृशार्थः फलतीति भावः। इदमुपलक्षणं, पचतीत्यस्य पचात्वित्यस्य। तस्यैव लोकेऽर्थवत्त्वात्। तेस्तुरित्युपन्यसनं तु प्रक्रियानिर्वाहाय, तत्रापि कल्पितार्थवत्त्वसूचनायेति बोध्यम्। अत इति।

श्रौतस्थान्यादेशभावं विहाय लक्षणया समुदायस्थान्यादेशभावस्वीकारादित्यर्थः । **न शब्दनित्यताहानिरिति**। अन्यथा लोपागमवर्णविकारसत्त्वान्नित्यत्वं व्याहन्येतेति भावः । नन्वचः परस्मिन्नित्याद्यनुरोधात् श्रौतस्थान्यादेशभावस्यावश्यमभ्युपेयतया तमादाय नित्यत्वहानिस्तदवस्थैवेत्यत आह । **किंचेत्यादि । बुद्धिप्रेति** । स्थान्यादेशबोधकस्य बुद्धिघटिते लक्षणया बुद्धेरेव विपरिणामान्न नित्यत्वभङ्ग इति भावः। एतेनास्मिन्पक्षे शब्दानित्यत्वं रेखागवयन्यायेन समाधेयमित्याचार्योक्तं प्रत्युक्तम् । शब्दनित्यत्वसाधनायैव भाष्ये बुद्धिविपरिणामाश्रयणात् । **इत्यप्यर्थ इति** । अपिना पूर्वोक्तार्थस्समुच्चीयते । किंचेति चेन शब्दनित्यत्वाहानौ हेतुरयं समुच्चीयत इति बोध्यम् । एतेनापिना लक्ष्यार्थबोधात्पूर्वभाविन इकारस्योकार इत्यादेश्शक्यस्य संग्रहः । अतो न किंचेति चेन पौनरुक्त्यमिति भट्टोक्तमपास्तम् । तथासति शब्दनित्यत्वस्य व्याघातात् । शब्दनित्यत्वस्योपपिपादयिषिततया तत्र शक्यार्थस्य कथमप्यनुपयोगाच्च । फलान्तरस्य वक्तुमशक्यत्वाच्चेति दिक् । नन्वेवमर्थस्वीकारेऽप्यनेन पचत्वित्यादेः पदत्वानुपपत्त्या तदर्थं तद्घटितलक्षणाया आवश्यकतया तत एव नित्यत्वोपपत्तौ बुद्धिघटितलक्षणयाऽर्थान्तरवर्णनं विफलं दुर्लभं च, सकृदुच्चारितन्यायात्। आवृत्त्या तद्वर्णनं तु न सम्यक्, आवृत्तौ मानाभावादत आह। **अत एवेति**। बुद्धिलक्षकत्वस्याङ्गीकारादेवेत्यर्थः । यत्तु शक्यार्थस्य चाङ्गीकारादेवेति, तन्न । तदनङ्गीकारस्योक्तत्वात् । तदङ्गीकारेण वाक्यान्तरकल्पने मानाभावात् फलाभावाच्च । यदपि पचत्वित्यादौ पदत्वार्थमावश्यकतदीयघटितलक्षणयैव नित्यत्वोपपत्तौ प्रक्रियानिर्वाहकशक्यार्थमादायाचःपरस्मिन्नित्यादिसंगतौ च बुद्धिलक्षकत्वं निष्फलमेवेति, तदपि न । अचः परस्मिन्नित्यादिसंगतये स्वीकृतशक्यार्थबोधमादाय शब्दनित्यत्वव्याघातस्य तावताप्यनिवारणात् । नन्वचः परस्मिन्नित्यस्य निगाल्यत इत्यादावर्थवत् स्थान्यादेशभावविषये चारितार्थ्यात् कथमावृत्तौ मान-

**परस्मिन्नित्यादि सङ्गच्छते। स्पष्टं चेदं दाधाध्वितिसूत्रस्थानिवत्सूत्रयोर्भाष्ये ॥**

**स्थानेऽन्त । षष्ठीत्यनुवृत्त्या यत्र स्थानषष्ठी तत्रेदमुपतिष्ठत इति विध्येकवाक्यतयैवास्य नियामकत्वं, न तु विहितानां नियमः। भुक्तवन्तमितिन्यायविरोधात्। फलितमाह। प्रसङ्गे इति। सदृशतम इति। अर्थात्प्राप्यमाणानां मध्ये एव। अत एव गङ्गोदकमित्यादौ त्रिमात्रो न। तमप् किम्। वाग्घरिरित्यादौ महाप्राणत्व-**

---

तेत्यत आह। आदीति। तेन न पदान्तसूत्रस्थवरेयलोपादिसंग्रहः संगच्छत इति। एवं च तत्प्रामाण्यादावृत्त्या द्वितीयार्थस्वीकारे गणयतीत्यादिसिद्धिः फलमित्यत्र तात्पर्यम्। **भाष्ये इति।** आद्ये सर्वे सर्वपदादेशा इत्युक्तम्। इदं प्रथमार्थे मानम्। अन्त्ये कार्याविपरिणामाद्वा सिद्धं कार्या बुद्धिरित्युक्तम्। इदं द्वितीयार्थे मानमिति विवेकः ॥

**न्यायविरोधादिति।** वाक्यैकवाक्यतया नियामकत्वे तत्तदादेशानुरोधेन तत्तल्लक्ष्याणां कल्पनं नियमेनान्यादेशनिवृत्तौ तदनुरोधकल्पितलक्ष्याणां निवृत्तिकल्पनमिति गौरवाच्चेत्यपि बोध्यम्। एवंच सति संभवे सर्वत्र विध्येकवाक्यतयैव नियामकतोचितेति तस्मिन्नित्यादेरपि तथैवेति सूचितम्। **अर्थादिति।** पदैकवाक्यतया विधायकत्वे तथैव फलितत्वादिति भावः। पदैकवाक्यतयान्वयाङ्गीकारे न केवलं न्यायविरोधादि, अपितु लक्ष्यासिद्धिरपीत्याह। **अत एवेति। त्रिमात्रो नेति।** स्वातन्त्र्येणास्य वाक्यार्थस्वीकारे अपूर्वविधायकत्वापत्त्या सूत्रान्तरैरविहितानामपि प्रसङ्ग इति भावः। एतेन गुणसंज्ञाविधौ तपरकरणात्कथं त्रिमात्र इति कस्यचिच्छङ्का परास्ता। यत्तु अन्तरतमपरिभाषाया विधिना सह पदैकवाक्यतायां सत्यामन्तरतमो गुणो भवतीत्यर्थे

साम्येन जायमानः पूर्वसवर्णो वर्गद्वितीयो मा भूत्। किं तु

---

योऽन्तरतमस्त्रिमात्रः स न गुणः यो गुणो द्विमात्रः स नान्तरतम इति विरोधात्। उपेन्द्रादौ चरितार्थस्यास्य शास्त्रस्याप्रवृत्तिरेव भविष्यतीति स्थानिरूपस्त्रिमात्रश्शक्येतेत्याशयवर्णनेन तत्समाधानं, तदपि न। शाब्दबोधीयगुणपदप्रयोज्यविषयतया संकुचितताया एव विषयताया अन्तरतमपदेन समर्पणात्तत्पदप्रयोज्यविषयतायास्त्रिमात्रे पर्यवसानाभावेन विरोधस्य दुर्वचतया गङ्गोदकमित्यादौ सूत्राप्रवृत्तौ मानाभावात्, गुणस्सिद्ध इत्येव वक्तव्ये त्रिमात्रो नेत्युक्तेरस्वारसिकत्वापाताच्च। **तमप्किमिति।** स्थानत आन्तर्यस्यैव सिद्धत्वे अन्तर इत्युक्तावपि स्थानत आन्तर्यलाभे अतिरिक्तं स्थानग्रहणं प्रकर्षलाभार्थं भवतीति व्यर्थमेव तमब्ग्रहणमिति प्रश्नः। तमब्ग्रहणं व्यर्थीभूयानेकविधान्तर्यसत्तां गमयति। तथाच इतरान्तर्यस्य व्यावर्तनार्थं स्थानग्रहणमिति न तेन प्रकर्षलाभ इति तदर्थं कृतं तमब्ग्रहणं स्वज्ञापितेतरविधान्तर्याणां कार्यप्रवृत्तिनियामकं प्रसङ्गे सदृशतम इति वाक्यान्तरं कल्पयतीति वाग्घरिरित्यादौ गुणानामप्यादेशव्यवस्थापकता सिद्धेत्युत्तराशयः। ध्वनितं चेदं वाक्यभेदस्य तमब्ग्रहणमेव लिङ्गमिति वदता प्रदीपकृता, वाक्यभेदे तु सादृश्यान्तरमादाय तत्र व्यवस्थेति वदता, उद्योतकृता च। **माभूदिति।** इदमुपलक्षणं हरिद्वसतीत्यादौ सर्वे पूर्वसवर्णा माभूवन्नित्यस्यापि। यत्तु येन केन चित्सादृश्यस्य केवलान्वयित्वादन्तरग्रहणसामर्थ्यात् प्रकर्षलाभे सिद्धे तद्व्यर्थमिति प्रश्नाशयः, यथा ज्ञापिते चारितार्थ्याभावेऽपि अणुदित्सूत्रीयाप्रत्ययपदस्य भाव्यमानपरिभाषाज्ञापकत्वं, तथा तमपोपि अनेकविधान्तर्यसत्ताबोधकत्वमित्युत्तराशय इति तन्न। अत्र सूत्रे स्थानग्रहणस्यतात्वादिस्थानपरतया येन केनचित्सादृश्यस्य ग्रहीतुमशक्यतयाऽन्तरग्रहणसामर्थ्यस्य वक्तुमशक्यत्वेन प्रश्नस्य निरालम्बनत्वापत्तेः। यत्रान्यथासिद्धार्थस्य ज्ञापनं तत्र स्वांशे चारितार्थ्यानपेक्षणेप्यत्र चारितार्थ्यस्य विपरीतार्थकल्पना-

नादवान् महाप्राणश्चतुर्थो घ एव यथा स्यादिति। स्थानेऽन्तरतम इति सप्तम्यन्तपाठस्तु दीर्घेषु यणसिद्ध्या दुष्ट इति भाष्ये स्पष्टम्। यत्रानेकेति। स्थानेग्रहणे एकदेशानुवृत्त्याऽनुवर्तमाने पुनः स्थानेग्रहणं तृतीयया विपरिणामेन वाक्यभेदमाश्रित्य प्रसङ्गे सति संभवे स्थानत एवान्तरतम इत्यर्थकमिति भावः। स्थानत इति। स्थानेनेत्यर्थः। तत्र स्थानतः "इको यणचि" इति। अर्थतः तृज्वत्क्रोष्टुः" इति। इह क्रोष्टुशब्दस्थाने पक्तृशब्दो नादेशः। गुणतस्तु वाग्घरिरित्यादौ। प्रमाणतः "अदसोऽसेः" इत्यादौ॥

---

वारणायावश्यापेक्षणाच्च। नादवानिति। समनियतत्वेनान्यतमग्रहणे बाधकाभावादितरयोस्त्यागे न न्यूनता, उपलक्षणतया व्याख्याय न्यूनतापरिहारस्तु हल्सन्धिप्रकरणस्थशेखराननुगुणत्वादुपेक्ष्य इति बोध्यम्। ननु स्थानेऽन्तरम इति सप्तम्यन्तपाठेऽस्य विसदृशस्थानिव्यावर्तकतया कृतेऽपि तमब्ग्रहणेऽत्र द्वितीयो दुर्वार एवेत्यत आह। सप्तम्यन्तपाठस्त्विति। एकदेशानुवृत्त्येति। एकदेशस्यानुवृत्तिर्ययेति विग्रहेणैकदेशानुवृत्तिप्रयोजकैकदेशस्वरितत्वप्रतिज्ञये - त्यर्थः। तेनानुवर्तमान इत्यनेन नानन्वितत्वमिति बोध्यम्। इति भाव इति। इदं वाक्यभेदादिकथनं भाष्योक्तलोकन्यायानभिज्ञमन्दमध्यमबुद्ध्यनुरोधेनेति स्पष्टमुद्योते। स्थानेनेत्यर्थ इति। ताल्वादिस्थानेनेत्यर्थ इत्यर्थः। तृज्वत्क्रोष्टुरिति। रूपातिदेशे स्थान्यादेशभाव एव पर्यवस्यतीति भावः। यद्वा सूत्रे क्रोष्टुरिति षष्ठ्यन्तं तृज्वदिति मतुबन्तं तेनादेशविधायकमिदमिति भावः। अस्य प्रयोगनियमार्थत्वे स्त्रियाः पुंवदित्यादीन्यानुमानिकादेशे इको यणचीत्यादीन्युदाहर्तव्यानि। अदसोसेरित्यादाविति। अत्र मात्राधिककालशून्यत्वं द्विमात्रान्यूनकालत्वं वा आन्तर्यप्रयोजकं बोध्यम्॥

**तस्मिन्निति** । अत्र तस्मिन्निति उत्तरत्र तस्मादिति च सप्तम्यन्तपदपञ्चम्यन्तपदार्थकः स्वतन्त्रस्य सर्वनाम्नो निर्देशो व्याख्यानात् । बहुलक्ष्यसंस्कारानुरोधाच्च । न तु तत्तत्पदपरम् । अन्यथा "तस्मिन्नणि च" "तस्मान्नुडचि" "तस्माच्छसो नः" इत्यत्रैव प्रवर्त्तेयाताम् । सप्तमी तु सप्तम्यन्तानामेव तच्छब्दार्थत्वमिति बोधनाय तद्बोध्यार्थस्य निर्दिष्टे इत्यनेन सामानाधिकरण्याय च ।

---

पदार्थक इति । इतिशब्दमपर्यालोच्येदम् । स्वतन्त्रस्येति । इति शब्दानपेक्षणादस्य तत्त्वम् । सप्तम्यन्तानामनुकरणमिति तु शब्दपदार्थकत्वेनानुकरणसादृश्यात्तथा व्यवहारः । एतेन तस्या अयुक्तत्वं वदन्तः परास्ताः । व्याख्यानादिति । तस्मिन्नणि चेत्यत्र तच्छब्देन खञः परामर्शे तदाद्यंशोपस्थित्या सिद्धे सामान्यतः परिभाषाकरणमिह व्याख्यानम् । एवं तस्माच्छस इत्यत्र तदाद्यंशोपस्थित्या तस्मान्नुडचीत्यत्रोत्तरपदाधिकारेण प्रत्यासत्त्या नञ्रूपपूर्वपदनिरूपितोत्तरपदस्यैव तेन नुड्विधानान्न दोषः । तस्मान्नुड्द्विहल इत्यत्रापि अङ्गाधिकारेण लिण्निमित्ताङ्गसम्बन्धिदीर्घात्पूर्वस्य प्रत्यासत्त्या तदङ्गसम्बन्धिनोऽसम्भवेनानियमाभावान्नास्योपयोग इति परिभाषाकरणं छन्दसि परेपि व्यवहिताश्चेति सूत्रकरणं चोत्तरत्रेति बोध्यम् । संस्कारानुरोधाच्चेति । चो हेतौ, यतः तत्र तत्र पूर्वोक्तरीत्या निर्वाहे सामन्यसूत्रकरणं बहुलक्ष्यसंस्कारार्थमतो हेतोरित्यर्थः । इत्यत्रैवेति । यत्तु इदमुपलक्षणं तस्मान्नुड् द्विहल इत्यस्यापीति, तन्न । तत्र फलाभावस्य कौस्तुभोद्योतयोः स्पष्टत्वात् । बोधनायेति । तत्सत्त्वे उपस्थितत्वात्तस्यैव प्रकृत्यर्थत्वनिश्चय इति भावः । ननु तच्छब्दात्सप्तम्युच्चारणमात्रेण तच्छब्देन सप्तम्यन्तानामेव परामर्श इति कथं लभ्यत इत्यत आह । तद्बोध्येति । सामानाधिकरण्यायेति । इदं फलं न पदोपस्थापकत्वे, किं तु आद्यमेवेति बोध्यम् । ननु तच्छब्देन सप्तम्यन्तपरामर्शः इतिशब्दे तदर्थे-

इतिशब्दः पुनस्तस्य तदर्थपरत्वं बोधयति। निःशब्दो नैरन्तर्ये, दिशि-रुच्चारणे। एवञ्च सप्तम्यन्तार्थेऽव्यवहितोच्चारिते उपश्लिष्टस्य पूर्वस्य

---

परत्वकल्पनामपेक्ष्य तच्छब्दस्यैव सप्तम्यन्तार्थ परमर्शकत्वमस्तु, मास्त्वितिग्रहण-मित्यत आह। इतिशब्द इति। बोधयतीति। इतिशब्दाभावे शब्दशास्त्रे शब्दस्य प्राधान्यात्सप्तम्या उपस्थिततरत्वाच्च सप्तम्यन्तात्मकशब्दपरामर्शकतैव स्यात्। पदार्थविपर्यासतात्पर्यग्राहकेतिशब्दसत्त्वे तु न्यायप्राप्तशब्दपरामर्शमपनुद्य सप्तम्यन्तार्थपरामर्शस्सिध्यतीति भावः। एतेनेदमयुक्तं स्वसमभिव्याहृतपदे पदार्थव्यत्यासकत्वमितेः स्वभावो न तु तद्बोध्यस्य शब्दस्यार्थपरत्वव्यवस्था-पनं तस्मादिति शब्दः कार्यिकार्योभयोपस्थापको निपातानामनेकार्थत्वात्। तच्छब्दस्सप्तम्यन्तार्थपरामर्शकः। तथाच सप्तम्यन्तार्थोपश्लिष्टस्य कार्यिणो यत्कार्यं सप्तम्यन्तार्थे अव्यवहितोच्चारिते पूर्वस्येति तस्मिन्नितीत्यस्यार्थः। निर्दिष्टे इत्यादेरव्यवहितोच्चारिते पूर्वस्य बोध्यमित्यर्थः। एवं तस्मादित्यस्या-प्यर्थो बोध्यः। यद्वेतिशब्दः प्रकारे, एवं प्रकारेण वर्तमानं कार्यमित्याचार्योक्त-मपास्तम्। निर्दिष्ट इत्येतावन्मात्रे सप्तम्यन्तार्थे अव्यवहितोच्चारिते इत्यर्थस्य वाच्यवृत्त्यालाभात्। एवमन्वयस्वीकारे विधिना वाक्यैकवाक्यतापत्त्या गौरवाच्च। दिशिरुच्चारणेति। अत एव जनपदे लुबित्यादौ न दोषः। न ह्यर्थ उच्चरितो नापि शब्दस्य निरन्तर इति भावः। अवसानकार्येषु अवसानस्यो-च्चारणासम्भवाद्बाधेनैतदंशविकला प्रवर्तते। वस्तुतस्तु तदंशस्यासन्नियोगशिष्टत्वे फलाभावः। अवसानकार्येष्वस्याः प्रवृत्तिस्तु निर्दिष्टपदप्रत्याख्यातृभाष्यरीत्येति बोध्यम्। यत्तूच्चारणार्थकत्वे फलाभावात्समानार्थकत्वेऽपि न क्षतिरिति, तन्न। प्रसिद्धमुच्चारणार्थं विहायाप्रसिद्धनैरन्तर्यार्थस्वीकारे मानाभावात्। फलाभावाच्च। एतद्बोधितांशानामसन्नियोगशिष्टत्वस्याङ्गीकृततया अवसानकार्ये फलस्य वक्तु-मशक्यत्वाच्च। उपश्लिष्टस्येति। इदमध्याहारलब्धम्। वाच्योऽर्थ इति।

एवं च विधिना सह सामान्यविशेषभावेन सप्तम्यन्तार्थेऽचि अव्यवहिते उपश्लिष्टस्य पूर्वस्येको यण्रूपं कार्यमिति बोधलाभेन सामान्यतो विध्यबोधिताव्यवहितत्वपूर्वत्वांशयोरेतद्विधेयतापर्यवसानं लोहितोष्णीषा इत्यादावनूद्यमानेष्वपि लौहित्यादिषु विधेयतापर्यवसानदर्शनादिति भावः । अव्यवहितोच्चारितसप्तम्यन्तार्थोपश्लिष्टस्य प्रसक्तं यत्कार्यं तत्पूर्वस्य भवतीत्यर्थ इति व्याख्यानं तु न युक्तम् । यत्तच्छब्दाध्याहारं विना मूलाक्षरैस्तादृशार्थालाभात् ॥

यत्तु सप्तम्यन्तार्थे अव्यवहितोच्चारिते इत्यर्थस्तावदनुपपन्नः । अव्यवहितत्वस्योद्देश्यकोटौ निवेशयितुमशक्यत्वात् । पूर्वस्य भवतीत्येतावन्मात्रस्य विधेयत्वे उद्देश्यतावच्छेदकरूपेणोक्तोद्देश्यसिद्धेरपेक्षणेन तस्या अत्राभावात् । सप्तम्यन्तार्थे उच्चारिते उपश्लिष्टस्य यत्कार्यं तदव्यवहितपूर्वस्येत्यर्थोऽपि न युक्तः । एवं सति निर्दिष्ट इत्यस्य विधेयकोटिप्रविष्टत्वेन निर्दिष्ट इत्यनेन सामानाधिकरण्याय चेति ग्रन्थासंगतेः । यदि तूद्देश्यसिद्धेरन्यथानुपपत्त्या सप्तम्यन्तार्थे उपश्लिष्टस्य यत्कार्यं तदव्यवहिते भवतीति वाक्यान्तरं कल्प्येत, तदा, तदेव गौरवं, तस्मात् तस्मिन्निति सप्तम्यन्तानामनुकरणं बोधकं वास्तु । यत्र औपश्लेषिकाधिकरणबोधकं पदं तत्र निर्दिष्टे पूर्वस्येत्युपतिष्ठते इति सूत्रार्थः । एवमुत्तरसूत्रार्थोऽपि वर्णनीयः । यद्वा इति पदमौपश्लेषिकाधिकरणसप्तम्यन्तार्थोपश्लिष्टकार्यपरम् । एवमुत्तरसूत्रेपि दिग्योगपञ्चम्यन्तार्थान्वयिसंबन्धिकार्यपरम् । तस्मिन्निति तस्मादिति च तात्पर्यग्राहकम् । एवं च तादृशं कार्यमव्यवहितपूर्वस्याव्यवहितोत्तरस्येति क्रमेणार्थ इत्याहुस्तन्न । विधिनैकवाक्यतायां तादृशोद्देश्यस्य दधि अत्रेत्यादौ सिद्धतयाऽव्यवहितत्वपूर्वत्वयोर्विधेयतया पर्यवसानस्यैवोक्तत्वेन भवदुक्तातिप्रसङ्गानामनवकाशात् । सामान्यतो बोधस्तु सप्तम्यन्तार्थाव्यवहितपूर्वनिष्ठोद्देश्यतानिरूपितकार्यविधेयताशाल्येव । अत्रोद्देश्यस्य शब्दज्ञानानुपातिनो बौद्धस्य सिद्धिरिति न काप्यनुपपत्तिः । भवदुक्तद्वितीयव्याख्याने

**कार्यमिति वाच्योऽर्थः। एवञ्चैतत्परिभाषाद्वयोपस्थितौ सप्तम्यन्तपदस्य पञ्चम्यन्तपदस्य चार्थौ लिङ्गम्। अत्र सूत्रे उपश्लिष्टपदाध्याहारेण निर्दिष्टे इति औपश्लेषिकेऽधिकरणे सप्तम्येवोचिता "उपपदविभक्तेः" इति न्यायात् न तु सतिसप्तमीति "तत्र च दीयते" इति सूत्रे कैयटे स्पष्टम्। "स्नुक्रमोः" इति सूत्रे च कैयट आह "तस्मिन्निति परिभाषायां सत्यां सत्सप्तम्याश्रयणमशक्यम्" इति। उपश्लेषः समीपवृत्तित्वं तच्च वर्णयोर्बौद्धं द्रष्टव्यम्। एवम् "इको यणचि" इत्यादावपीयमेवेति "संहितायाम्" इति सूत्रे भाष्ये।**

---

विधिना वाक्यैकवाक्यतया एव वक्तव्यतया सप्तम्यन्तार्थाव्यवहितपूर्वत्वपञ्चम्यन्तार्थाव्यवहितपरत्वयोश्शब्दमर्यादयाऽलाभात् प्रत्यासत्तिराश्रयणीयेति गौरवम्। यथा कथं चित्पदार्थैकवाक्यतयाऽन्वयस्वीकारेपि वैधसप्तम्यन्तार्थस्य द्वेधा भाने गौरवमित्याद्यूहनीयम्। प्रथमव्याख्यानस्य पक्षान्तरतया प्रदीपोद्योतयोःस्वीकृततया न तन्निराकरणेऽस्माकं निर्भर इत्यलम् ॥

उचितेति। केचित्तु तस्मिन्नित्यस्याधिकरणसप्तमीत्वं निर्दिष्ट इति सत्सप्तम्येव। एवं चोत्तरसूत्रे विपरिणामस्य नावश्यकता। उपपदविभक्तेरिति न्यायस्य त्वनित्यत्वादप्रवृत्तिरित्याहु स्तन्न। सामानाधिकरण्येनान्वये संभवति पृथगन्वयस्यान्याय्यत्वात्। ज्ञाप्यज्ञापकभावस्याधिकस्य बोधे भाने फलाभावेन गौरवाच्च। सत्यामुपपत्तौ न्यायानित्यत्वेनोपपादनस्यागतिकगतित्वाच्चेति दिक्। बौद्धमिति। अयं भावः। शब्दानां नित्यविभुत्वपक्षे कालिकस्य दैशिकस्य वा सामीप्यस्य पौर्वापर्यस्य चासंभव एव। कार्यत्वपक्षेप्युत्पादविनाशशालिनोर्युगपदवस्थानासंभवेन दैशिकस्य तस्यासंभवः। युगपदनवस्थितयोरपि चैत्रात्पूर्वः फाल्गुन इत्याद्यनुरोधाल्लोके कालिकस्य तस्याङ्गीकारेपि प्रत्ययनिमित्तककार्याणां प्रत्ययोत्पत्तेः पूर्वकालिकपरत्वमादायप्रवृत्त्यापत्त्या बहूपप्लवापत्तेरिति। स्पष्टं चेदं संहि-

तत्रौपश्लेषः पूर्वस्यैव परस्याव्यवहितस्यैव व्यवहितस्य चेति पूर्वस्यैवेति नियमार्थमिदमव्यवहितस्यैवेति च । अत एव लक्ष्यानुसारात् क्वचित्सतीत्यध्याहारात् सत्सप्तम्याश्रयणे नास्याः प्रवृत्तिरिति "श्नान्नलोपः" इत्यत्र भाष्ये उक्तम् । अत एव "कर्तृकर्मणोः कृति" इत्यत्र नास्याः प्रवृत्तिः, कृति सति प्रत्यासत्त्या तत्प्रकृत्यर्थकर्तृकर्मणोः षष्ठीति तदर्थात् । तस्मादिति सूत्रे निर्दिष्टे इति निर्दिष्टादित्यर्थकं विभक्तिविपरिणामात् । सा चोत्तरस्येति दिग्योगलक्षणा इति दिग्योगलक्षणपञ्चम्यामेव तत्प्रवृत्तिः । "उदः स्था" इत्यादौ च उद इति दिग्योगलक्षणा पञ्चमी । तत्रानियतदिक्शब्दा-

---

तासूत्रे भाष्यप्रदीपोद्योतेषु । भाष्ये इति । तत्र हि संहिताधिकारप्रत्याख्यानायास्य तत्त्वमुक्तम् । नियमार्थमिति । विधिना पदार्थैकवाक्यतायामचीत्यनेनानज्व्यावृत्तिरिव परव्यवहितयोरर्थाद्व्यावृत्त्या अयं नियमः फलतीति भावः । अत एवेति । औपश्लेषिकाधिकरणसप्तम्यन्तस्थल एवास्याः प्रवृत्तिस्वीकारादेवेत्यर्थः । कर्तृकर्मणोरिति । एवं प्रत्ययलोप इति सूत्रेऽपि । अत एव व्यवहितस्य ततः परस्य च कार्यसिद्धिरिति बोध्यम् । निर्दिष्टपदमिति । अनुवर्तमानमिति भावः । उत्तरसूत्रे निर्दिष्टादिति कर्तव्यमिति भाव इति तु न सम्यक् । विभक्तिविपरिणामादिहेतोरसंबद्धत्वापत्तेः । सा चेति । निर्दिष्टादितिपञ्चमीत्यर्थः । दिग्योगलक्षणेतीति । अन्येतु इदं चिन्त्यम् । दिग्योगाभावेन पञ्चम्यसंभवात् । उत्तरस्येत्यस्य विधेयकोटिनिविष्टत्वात् । किं तु तस्मादित्येतदेवोद्देश्यम् । तच्चोत्तरस्येत्येतत् प्रत्यासत्त्या दिग्योगलक्षणपञ्चम्यन्तार्थकं निर्दिष्ट इति यथाश्रुतमेवानुवर्तते । तथाच दिग्योगलक्षणपञ्चम्यन्तार्थसम्बन्धिकार्यमव्यवहितोच्चारितनिरूपितोपश्लेषविशिष्टस्योत्तरस्येत्यर्थः । अव्यवहितोच्चारितश्च पञ्चम्यन्तार्थ एवेत्याहु, स्तन्न । निर्दिष्टादित्यस्योत्तरस्येत्यत्र सम्बन्धे

ध्याहारे प्रसक्ते परशब्दस्यैवाध्याहार इति तस्मादित्यनेन नियम्यते। अव्यवहितोच्चारितात्पञ्चम्यन्तात्परस्येति तदर्थः। तत्फलितमाह। सप्तमीनिर्देशेनेत्यादि। यदि त्वर्धमात्राधिककालेन वर्णान्तरेण वा व्यवधाने उपश्लेष एव नेत्युच्यते तदा निर्दिष्टपदं संहिताधिकारश्च विफल इति "संहितायाम्" इति सूत्रे भाष्ये स्पष्टम्। अवग्रहे च संप्रदाय एव शरणमिति आनङादिविषये आदेशोत्तरमेवावग्रहोऽन्यत्र ततः प्राक्। अकृतव्यूहपरिभाषा त्वनित्या, नास्त्येव वा। "न लक्षणेन पदकारा अनुवर्त्याः, पदकारैर्नाम लक्षणमनुवर्त्यम्" इति भाष्येण तदनुरोधेन शास्त्रासङ्कोचस्य शास्त्रकरणाभावस्य च स्पष्टमुक्तत्वाच्च। एतेन संहिताधिकारस्तद्बहिर्भूतानामर्धमात्राधिककालव्यवाये प्रवृत्तिज्ञापनार्थम्। तेनाग्नाविष्णू इत्यादाववग्रहे आनङादिसिद्धिरित्यपास्तम्। "प्रत्ययः" "परश्च"

---

बाधकाभावस्य पूर्वमुक्तत्वात्। भवदुक्तव्याख्याने गौरवस्योपदर्शितत्वाच्च। अध्याहार इतीति। अनेन पदोपस्थापकत्वपक्षोऽप्यस्तीति सूचितम्। संहिताधिकारश्चेति। भट्टास्तु तदधिकारसामान्यस्य संज्ञासूत्रस्य चाकर्तव्यतायामपि तात्पर्यमुद्भावयन्ति। अत्रत्यं तत्त्वमुपपादितं प्राक्। ननु कालव्यवहितस्याप्यनेन कार्यव्यावृत्तावग्नाविष्णूइत्यादाववग्रह उत्तरपदनिमित्तकाऽनङादेरप्रवृत्त्यापत्तिरत आह। अवग्रहे चेति। संप्रदाय एवेति। पदकाराणामिति भावः। नन्वादेशोत्तरमेवेत्यनुपपन्नमुत्तरपदपरत्वस्य विनाशोन्मुखत्वेन पूर्वमादेशाप्रवृत्तेरत आह। अकृतेति। एतेनेति। प्रत्याख्यानभाष्येण न लक्षणेनेति भाष्येण चाधिकारबहिर्भूतानामधिककालव्यवाये प्रवृत्तेरनिष्टत्वानुमानेनेत्यर्थः। अपास्तमिति। पदादित्यधिकारविहितानामसंहितायामापत्तेः। तत्रेष्टापत्तौ माना-

इत्यादौ तूत्तरांशविकला तस्मादिति परिभाषा प्रवर्त्तते। तेन न प्रत्यया व्यवहिताः। अत एव "छन्दसि परेऽपि व्यवहिताश्च" इति सूत्रं सार्थकम्। आगमविधावपि "आने मुक्" इत्यादौ तस्मिन्निति परिभाषया पूर्वसंबन्धित्वनिर्णयः। अत एवात्र पूर्वस्ये-त्यादि न स्थानषष्ठी। तत्तद्विधिभिरेव संबन्धस्य निर्णीतत्वेन "षष्ठी स्थाने" इत्यस्याप्रवृत्तेः। "गाङ्कुटादिभ्यः" इत्यादावपि षष्ठ्यंश-

---

भावादित्यपि बोध्यम्। **उत्तरांशविकलेति**। परिभाषाविधेयांशानां सन्नियोग-शिष्टत्वानङ्गीकारादिति भावः। तदनङ्गीकारे मानं दर्शयति। **अत एवेति**। **सार्थकमिति**। अन्यथा ते प्राग्धातोरित्यत्र प्राग्ग्रहणात्परत्वांशस्य ते इति प्रथमान्तसामानाधिकरण्यानुरोधात् षष्ठ्यंशस्य च बाधे अव्यवहितत्वांशस्याप्यप्र-वृत्तौ व्यवहितप्रयोगस्य सिद्धतया तद्वैयर्थ्यं स्पष्टमेवेति भावः। नन्वेतत्परिभाषयोः पूर्वस्योत्तरस्येति षष्ठीभ्यां षष्ठीस्थान इत्यस्योपस्थितावादेशविधिष्वेवानयोरुप-स्थितिरित्यागमविधावनयोर्नियामकता न स्यादत आह। **आगमविधावि-त्यादि**। **आने मुगित्यादाविति**। आदिना ङमो ह्रस्वादित्यादि संग्रहः। **तस्मिन्निति**। तस्मादित्यस्याप्युपलक्षणम्। **पूर्वसम्बन्धित्वेति**। परसम्बन्धि-त्वस्याप्युपलक्षणम्। ननु षष्ठीस्थान इति परिभाषाबाधे किं मानमत आह। **तत्तद्विधिभिरिति**। षष्ठ्यंश इदम्। तत्र विहितविशेषणानादरेणेति बोध्यम्। ननु षष्ठ्यंशविकलपरिभाषोपस्थितावनयोर्नियामकता न सम्भवति, तदंशं विनाऽनयोस्स्वातंत्र्येण बोधस्याप्यसम्भवात्। प्रत्ययानां स्वप्रकृत्यर्थान्वितस्वार्थ-बोधकत्वनियमात्। किं चाप्रधानेन प्रधानस्य नियम इत्यप्यनुपपन्नम्। अप्र-धानेन प्रधानसंकोचस्यान्याय्यत्वात्। किं च नियम्यनियामकशास्त्रयोः सामान्यविशेषभावसापेक्षितया प्रकृते न तत्सम्भवः। परिभाषाविधेयकार्यस्य

विकलैतत्परिभाषाप्रवृत्तिर्बोध्या । परिभाषाणां नियमत्वन्तु यदि परिभाषासूत्रं न स्यात्तदा व्यवहितादावपि प्रवृत्तिः स्यादित्येतावतेति दिक् ॥

अलोऽन्त्यस्य । षष्ठी स्थाने इत्यनुवर्त्तते तदाह । षष्ठीत्यादि । स्थाने विधीयमानः स्थानषष्ठीनिर्दिष्टान्त्यस्येत्यर्थः । स्थाने इत्यादि किम् । इट् तृच ऋकारात्पूर्वो मा भूदिति ।

---

विशेषपर्यवसानमन्तरा तद्योगादत आह । परिभाषाणामिति । एवं चार्थिकोऽत्र नियमत्वव्यवहार इति भावः ॥

इत्यर्थ इति । अयं भावः । षष्ठीत्याद्यनुवृत्तं तृतीयया विपरिणम्यते । निर्दिष्टस्येत्यस्याध्याहारः । तत्रावयवषष्ठी । अन्त्यपदसमभिव्याहारात् । एवं च स्थानषष्ठ्या निर्दिष्टस्य योऽन्त्योऽल्तस्येत्यर्थः सम्पद्यत इति । स्थाने विधीयमान इति तु प्रत्यासत्तिलभ्यमिति वक्ष्यति । न चान्त्यपदसमभिव्याहारात् षष्ठीनिर्दिष्टस्यावयवावयविभावेनान्वयलाभे सूत्रे निर्दिष्टस्य स्थानषष्ठीत्वालाभेन स्थानषष्ठीनिर्दिष्टेत्यनुपपन्नमिति वाच्यम् । अस्य वाक्यैकवाक्यतया नियामकत्वेनैतत्प्रयोज्यनियमात्पूर्वं जायमाने विधिवाक्यार्थबोधे षष्ठ्यास्स्थानपदार्थानुयोगिकसम्बन्धिसमर्पकत्वे बाधकाभावात् । अत एव भाष्ये स्थाने प्रसक्तस्यान्त्येऽल्युपसंहार उक्तः । अन्त्यालपर्याप्ताया एव स्थानिताया एतत्परिभाषाबलादुपसंहारे सूत्रोपात्ते स्थानिताऽपर्याप्ता पर्यवस्यतीति फलतीति बोध्यम् । स्थाने इत्यादिकिमिति । सम्पूर्णसूत्रानुवृत्तिः किमर्था स्थानेविधीयमानष्षष्ठीनिर्दिष्टान्त्यस्येत्युक्तावप्यागमविधावेतदनुपस्थितेरिति प्रश्नः । स्थानेयोगेत्यस्याननुवृत्तौ षष्ठीनिर्दिष्टान्त्यस्य प्रत्यासत्त्या षष्ठीनिर्देशेन विधीयमानमित्यर्थापत्त्याऽऽगमविधौ दोषो दुर्वार इत्याशयेनोत्तरयति । इट्तृच इति । नन्वत्राल इति प्रथमान्तमस्तु । अलात्मक आदेशस्स्थानषष्ठीनिर्दिष्टान्त्यस्येति

अन्त्यस्येति साहचर्यादल इति षष्ठयन्तम्, अन्त्यस्याल इत्यर्थः। अल इति किम्। पदस्येति विधीयमानं "वसुस्रंसु" इति दत्वं स्वनडुद्भ्यामित्यादावन्त्यस्य पदस्य मा भूत्। स्थाने विधीयमान इति प्रत्यासत्ति-

---

सूत्रार्थः। आदेः परस्येत्यत्र मण्डूकप्लुत्याऽलित्यनुवर्तते। एवं च सूत्रद्वयस्याप्यनेकाल्यप्रवृत्त्यानेकाल्शिदित्यत्रानेकाल्ग्रहणं न कर्तव्यमित्यपरं लाघवम्। न च लोपस्य सर्वादेशत्वप्रसङ्ग इति वाच्यम्। घोर्लोपो लेटि वेत्यतो लोप इत्यनुवर्तमाने लुग्वा दुहेत्यत्र लुग्ग्रहणेनात्राल्ग्रहणमनेकालतिरिक्तलक्षकमिति स्वीकारेणादोषादित्यत आह। अन्त्यस्येति। साहचर्यादिति। सहचरितपरिभाषाबाधा, मण्डूकानुवृत्तिर्लुग्ग्रहणज्ञापकता लक्षणा चेति ज्ञानगौरवमत्र पक्षेऽपीतिभावः। नन्वनेकालितिकरणापेक्षयेदं लघ्वेव। अत एव महान्तं प्रयत्नमाश्रित्येनातोरिकारदीर्घप्रत्याख्यानं भगवतस्संगच्छत इत्याशङ्क्य मात्रालाघवमपि तव नास्ति। अल इति षष्ठ्यन्तस्यात्रावश्यकत्वादित्याशयेन तदावश्यकतां वक्तुं पृच्छति। अल इति किमिति। अन्त्यस्य पदस्येति। अनडुह् इत्यस्येत्यर्थः। यदि तु निर्दिश्यमानस्येत्यस्यात्रोपस्थित्यानडुच्छब्दान्तपदावयवनिर्दिश्यमानस्यादेशो भवन्नन्त्यस्येत्यर्थे प्रत्यासत्त्या निर्दिश्यमानान्त्यस्यादेशलाभान्न विशिष्टस्य प्राप्नोतीत्युच्यते। तदान्त्यस्योहित्यस्य पदस्यार्थवद्वर्णसमुदायस्येत्यर्थो बोध्यः। न चैवमनडुद्भ्यामिति केवलेऽपि दोषसम्भवेन विशिष्टोपादानं व्यर्थमिति वाच्यम्। उभयोस्समावेशस्फोरणार्थं तदुपादानात्। केवलोपादाने त्वनिर्दिश्यमानस्याभावान्निर्दिश्यमानपरिभाषाऽप्रवृत्त्या समावेशस्फूर्तिर्न भवतीति स्पष्टमन्यत्। माभूदिति। एवं त्वन्मतेऽल इत्यधिकस्य कर्तव्यतया न मात्रालाघवमपीति भावः। प्रत्यासत्तिलब्धमिति। यत्तु वस्तुतस्तु नास्योपयोगः। न चोद्देश्यासिद्धिः। स्थानषष्ठ्या एवोद्देश्यत्वात्। स्थानपदार्थानुयोगिकसम्बन्धार्था षष्ठी स्वप्रकृत्यर्थनिरूपितान्त्याल्प्रतियोगिक-

लब्धम् । एवञ्चाल एवेति, अन्त्यस्यैवेति नियमद्वयमत्र । अल्समुदायोत्तरं स्थानषष्ठी अस्या लिङ्गम् । अत एव 'इतोऽत्' इत्यादौ नास्याः प्रवृत्तिः । पथ्यादीनामित्यस्यावयवषष्ठीत्वादित इत्यस्याल्समुदायोत्तरत्वाभावाच्च ॥

ङिच्च । अनेकालर्थमिदम् । आदेरिति । आदेरल इत्यर्थः ।

---

सम्बन्धार्थिका भवतीत्यर्थेन सामञ्जस्यादिति बोध्यमिति, तन्न । एवंविधार्थस्य शब्दमर्यादयाऽलाभात् । षष्ठीति प्रथमान्तस्यानुवृत्तावन्त्यस्याल इत्यनेनानन्वयप्रसङ्गः । यथा कथञ्चिदेवमर्थस्वीकारेऽप्यस्य पदैकवाक्यतया नियामकत्वापत्तौ परेणानेनेको गुणेत्यस्य बाधापत्तौ महदनिष्टं प्रसज्येतेत्यलम् । नियमद्वयमत्रेति । फलतीति शेषः । एतेनेदमयुक्तं, सिद्धे सत्यारम्भाभावात् । अन्ये त्वनेकालादेशानां सर्वादेशत्वेऽनेकालित्यस्यारम्भसामर्थ्यादेकालादेशस्य स्थानषष्ठीनिर्दिष्टावयवस्थानिकत्वं कल्पयित्वा नियामकत्वं वर्णयन्ति । तन्न युक्तम् । इतः पूर्वं नियमेनानेकालित्यस्य बोधकल्पने तद्वैयर्थ्यमूलकोक्तार्थकल्पने गौरवेण लघुभूतविधित्वस्यैवौचित्यात् । परिभाषाणामनियमे नियमकारकत्वमिति प्रवादस्तु प्रायिकमित्याचार्योक्तमपास्तम् । परिभाषाणामेकवाक्यतयैव लक्ष्यसंस्कारकत्वस्यान्यत्र स्पष्टतया स्वतन्त्रनियमवैलक्षण्येन तदुक्तार्थस्यानवकाशात् । किं चादेशविधायकमादेशं स्थानिनो निवृत्तिं च बोधयति । इयं चान्त्यमलं निवर्तयति । तन्निवृत्तिस्समुदायनिवृत्तावर्थसिद्धेति कथमेतद्विधेयाया अन्त्याऽलो निवृत्तेः पूर्वमसिद्धतेति संतोष्टव्यम् । परिभाषाणां फलविशेष एव प्रवृत्तिरिति सूचयन्नाह । अल्समुदायोत्तरमिति । अल्समुदायबोधकप्रातिपदिकोत्तरमित्यर्थः । तेनेत इत्यत्र षष्ठ्या इदितिसमुदायोत्तरत्वेपि नोत्तरग्रन्थविरोधः ॥

अलोन्त्यस्येत्यनेन गतार्थताशङ्कानिरासायाह । अनेकालर्थमिति ।

**तेन द्वीपमित्यादौ पान्तसमुदायस्य नेत्त्वम् । अत्र परस्येत्यावर्त्तते तेन परबोधकशब्देन यत्र परस्य स्थाने विधानं तत्रैवेदम् । तेन "नित्यं ङितः" इत्यादौ न दोषः । तत्र विकरणव्यवधाने प्रवृत्तये धातोरित्यस्य विहितविशेषणत्वात् ॥**

---

यत्त्वेकाल्ष्वलोन्त्यस्येत्यनेनैव सिद्धेरिति भाव इति, तन्न । ङितामेकालादेशानामदृष्टत्वात् ॥

**अल इत्यर्थ इति** । अल इति षष्ठ्यन्तमनुवर्तत इति भावः । अनुवृत्तिफलमाह । **तेनेति** । **पान्तेति** । अकारान्ते तु नादित्वं, ससहायत्वात् । किं चादेशस्य सति सम्भवेऽर्थवत्येव प्रवृत्तेर्न्याय्यतयाऽपेत्यस्यानर्थक्येन न तत्रादेशप्रसक्तिरिति पान्तेत्युक्तम् । अत एवालोन्त्यस्याविशेषणे पदस्याप्यन्त्यस्य प्रसज्येतेति भाष्यं स्वारस्यमधिरोहति । प्रकाशकारास्तु अलोन्त्यस्याऽपरस्येति वाच्ये आदेःपरस्येत्यस्यारम्भेणाऽनतिदिष्टादित्व एवैतत्प्रवृत्तिस्वीकारेण पान्तं परित्यज्याकारान्तपर्यन्तानुधावने बीजभावेन पान्तेत्युक्तमित्याहुः । **आवर्ततइति** । पञ्चम्यन्तघटितशास्त्रेषु क्वचिदुत्तरस्येत्यध्याहारस्य सुवचतया लक्षणप्रतिपदोक्तपरिभाषया निर्वाहस्य वक्तुमशक्यत्वात् । विहितविशेषणस्थलेऽपि पञ्चम्युपपत्तये परशब्दाध्याहारस्याङ्गसंज्ञासूत्र उद्योत उक्ततया प्रतिपदोक्तपरिभाषया वारणासम्भवाच्चावृत्तिरावश्यकीति भावः । तद्ध्वनयन्नाह । **परबोधकशब्देन यत्र परस्य स्थाने विधानमिति** । परत्वविशिष्टस्य स्थान इत्यर्थः । विहितविशेषणस्थले तु परो विहित इत्यर्थात्परत्वमुपलक्षणमिति भावः । तद्ध्वनयन्नाह । **नित्यं ङित इति** । एतेनाचार्योक्तमावृत्तेरयुक्तत्वमपास्तम् । ननु नित्यं ङित इत्यादावेतत्प्रवृत्तावपि निर्दिश्यमानपरिभाषया न दोष इति चेन्न । तत्रोत्तमस्यापि निर्दिष्टत्वेन दोषध्रौव्यात् । अत एवेयङुवङोर्ङित्त्वं धात्वादीनामपि निर्दिष्टत्वादन्त्यादेशत्वायेति सङ्गच्छते ॥

**अनेकाल् शित् । शित उदाहरणम् इदम इश् । ननु शकारोच्चारणसामर्थ्याद् भूतपूर्वानेकाल्त्वमादाय सर्वादेशत्वे सिद्धे शिदिति व्यर्थम् । किं च सानुबन्धकनिर्देशे यथा नालः स्थानित्वं 'भोभगो' इति सूत्रे भाष्ये उक्तम्, तथाऽऽदेशत्वमपि सूत्रोपात्तस्यैवेति तद्व्यर्थम् । विधौ निर्दिष्टो योऽनेकाल्स सर्वस्येति सूत्रार्थः । उद्देश्यत्व-**

---

प्राचीननये जश्शसो शिशिरित्यादावनेकाल्त्वादेव सर्वादेशत्वाभ्युपगमादमो मशित्यत्र मद्वयात्मकमादेशमास्थाय शकारप्रत्याख्यानादिदंकिमोरीशित्यत्रापि इ ई इति च्छेदेनापि निर्वाहस्य सुवचत्वादसाधारणं सर्वमतसाधारणमुदाहरणं दर्शयति । **इदम इशिति** । **भूतपूर्वानेकाल्त्वमिति** । अनुबन्धघटितबोधकवृत्तिधर्माणां बोध्य आरोपात् । अनेकालादेशस्सर्वस्येत्यर्थेऽपि विना शिद्ग्रहणं सर्वादेशत्वं सिध्यतीति भावः । वस्तुतस्त्वारोपं विनापि सिध्यतीत्याह । **किं चेति** । **नालः स्थानित्वमिति** । सूत्रे स्थानषष्ठ्या निर्दिष्टस्यैव स्थानिपदवाच्यत्वस्वीकारादिति भावः । नन्विको यणचीत्यादावपीकपदस्यैव स्थानषष्ठीनिर्दिष्टत्वात्तस्यानल्त्वाद्भिन्दन्तीत्यादावनल्विधाविति निषेधो न स्यादिति वाच्यम् । तस्य स्वरूपबोधकस्यैव स्थानिपदवाच्यत्वस्वीकारेणादोषात् । एतत्स्फोरणायैवोक्तं सानुबन्धकनिर्देश इति प्रत्याहारेषु त्वनुबन्धसदृशत्वमेव नत्वनुबन्धत्वमिति स्पष्टमन्यत्र । **सूत्रोपात्तस्यैवेति** । सूत्रे विधेयताप्रत्यायकप्रथमाप्रकृतित्वेनोपात्तस्य स्वरूपबोधकस्यैवेत्यर्थः । एवं स्थिते सूत्रार्थमाह । **विधाविति** । इदं निरुक्तादेशस्यैव सर्वादेशताप्रयोजकत्वस्फोरणाय, न तु वाक्यार्थघटकत्वमस्य । अनेकालादेशस्सर्वस्येत्येव वाच्योऽर्थः । नन्वेवं सूत्रोपात्तस्यैवादेशत्वस्वीकारेऽणुदित्सूत्रे आदेशप्रतिषेध इत्यस्येदम इशित्युदाहरणं भाष्यकृतोऽसम्बद्धमेव स्यात् । इशित्यस्यानण्त्वेन सवर्णग्रहणानापत्तेरित्याशङ्कां परिहरति । **उद्देश्यत्वेति** । **विषयतयेति** । अभेदे तृतीया ।

विधेयत्वाख्यविषयतया बोधविषयता त्वनुबन्धविनिर्मुक्तस्येति नाणुदित्सूत्रभाष्यविरोधः, ध्वसोरिति लोपस्य "लोपो यि" इति प्रकृते पुनर्लोपग्रहणसामर्थ्यात्सर्वादेशत्वसिद्धिः। अनुबन्धानामेकान्तत्वमेव न्याय्यमित्युक्तमिति चेन्न । 'नानुबन्धकृतमनेकाल्त्वम्' इति ज्ञापनेन चारितार्थ्यात् । तेन "दिव औत्" इत्यादीनां न

---

अनुबन्धविनिर्मुक्तस्यैवेति । एवञ्च तत्रादेशत्वं निवर्तकत्वसम्बन्धावच्छिन्नविधेयताश्रयत्वमभिप्रेतमिति भावः । यद्वा लक्ष्यार्थपूर्वभावि शक्यार्थोपस्थितेरनुबन्धविशिष्ट एवाङ्गीकारेण शक्यवृत्त्यनेकाल्त्वमादाय सर्वादेशत्वं निर्वाह्यम् । पदार्थोपस्थितिबोधयोस्समानाकारकत्वनियमोऽपि लक्षणास्थले लक्ष्यार्थोपस्थितिविषयक एवेत्याशयेनाह । उद्देश्यत्वेत्यादि ॥

यत्त्वनुबन्धघटितवृत्तिधर्मस्यैवोद्देश्यतावच्छेदकत्वं विधेयतावच्छेदकत्वं चाभ्युपेत्याल इति । अनुबन्धाघटिताल्वृत्त्यलत्वव्याप्यधर्मस्येत्यर्थः । स्थानित्वमिति । स्थानितावच्छेदकत्वमित्यर्थः । आदेशत्वमपीति । आदेशतावच्छेदकत्वमपीत्यर्थः । सूत्रोपात्तस्येति । सूत्रोपात्तवृत्तिधर्मस्येत्यर्थः । यथाश्रुतेऽणुदित्सूत्रस्थभाष्यविरोधात् । निर्दिष्ट इति । निर्दिष्टवृत्तिरित्यर्थः । अनेकालिति । अनेकाल्वृत्तिधर्म इत्यर्थः । स इति । तद्धर्मावच्छिन्नविधेयताश्रय इत्यर्थः । अनुबन्धघटितवृत्तिधर्मस्य स्थानितादेशतावच्छेदकत्वेऽपि स्थानित्वादेशत्वेऽनुबन्धविनिर्मुक्तस्यैवेत्याशयेनाह । उद्देश्यत्वेतीति व्याचख्युः । तत्तु निष्ठासंज्ञासूत्रस्थभाष्यविरोधादिनाऽनुबन्धविशिष्टवृत्तिधर्मस्यावच्छेदकत्वस्य बहुधा पूर्वं दूषिततयोपेक्ष्यम् ॥

शिद्ग्रहणस्य फलान्तरमाशङ्क्य निराकरोति । ध्वसोरितीति । नन्वनुबन्धानामनेकान्तत्वे सूत्रोपात्तस्यादेशत्वाङ्गीकारेऽपीकारस्यैवादेशत्वेन तत्र सर्वादेशत्वार्थं शिद्ग्रहणमावश्यकमत आह । अनुबन्धानामिति । चारिता-

**सर्वादेशत्वम्। अस्य च यथेत्सञ्ज्ञा तथा वक्ष्यते। नानेकाल् शिदिति तु नोक्तम्। "अनन्तरस्य" इति न्यायेन "आदेःपरस्य" इत्यस्यैव निषेधापत्तेः। परत्वादिति। आदेः परस्येत्यस्यावकाशः द्व्यन्तरुपसर्गे-**

---

भ्य्योदिति। नच शकारोच्चारणसामर्थ्याद्बोधकवृत्त्यनेकाल्त्वस्य बोध्य आरोपेण सिद्धे पुनश्शिद्ग्रहणं व्यर्थमिति वाच्यम्। इत्संज्ञायोग्यत्वमनुबन्धत्व-मित्यर्थस्यापि ज्ञापनेनाऽनया परिभाषया बोधकेऽप्यनेकाल्त्वस्य दुर्वचतया आरोपासम्भवात्। न च शकारोच्चारणसामर्थ्यात्सर्वादेशत्वं कल्प्यते, नत्वने-काल्त्वमारोप्यत इति वाच्यम्। विपरीतकल्पनापत्तेरित्यन्यत्र विस्तरः। **न सर्वादेशत्वमिति**। तकारोच्चारणं तु विशेषणार्थतया चरितार्थम्। ननु दिव औदित्यत्र तकारस्योच्चारणार्थतया तस्य स्वत एव निवृत्त्या फलाभावादित्संज्ञाया अप्रवृत्त्या कथमेतदुदाहरणत्वमत आह। **अस्य चेति**। **वक्ष्यत इति**। दिव औत्सूत्र इति शेषः। **निषेधापत्तेरिति**। न च ङिच्चेत्यारभान्न्यायबाधः कल्प्यत इति वाच्यम्। तथा सति निर्दिश्यमानेत्यस्यापि बाधापत्त्या निर्जरसावित्यादौ समुदायादेशापत्तेः। न च सिद्धान्तेऽपि परत्वादनेन तस्य बाधः किं न स्यादिति वाच्यम्। तदानीमुभयोरेकविषयतया विरोधाभावेन विप्रतिषेध-सूत्राप्रवृत्तेः। न चान्त्यस्यादेरित्युभयमनुवर्त्यान्त्यस्यादेश्च नेति कौस्तुभोक्त-रीत्या निर्वाह इति वाच्यम्। आद्यन्ताभ्यां मुक्तस्यावशिष्टस्यापत्तेः। अन्त्यस्ये-त्यस्य मण्डूकानुवृत्तौ गौरवाच्च। न चैकस्यैव बाधकत्वे आदेः परस्याने-काल्शिदिति, अलोन्त्यस्यानेकाल्शिदिति वा न्यासेन सिद्धे पृथक्सूत्रकरणेनो-भयोर्बाधकत्वं कल्प्यत इति वाच्यम्। ज्ञानगौरवापत्तेः। यत्तु ङिदलोन्त्यस्य तत अशिदनेकाल्, अलोन्त्यस्येत्यनुवर्तते, तत आदेः परस्य अशिदनेकालिति अल इति च वर्तते। एवञ्च न कोपि दोष इति तन्न। अशिदनेकालित्यस्या-

भ्योद्दीपम् । शित्सर्वस्येदम इश् । एवम् "अतो भिस" इत्यादि-
विषये "अनेकाल्" इत्यनेनादेः परस्येति परत्वाद् बाध्यते । एतेन
"ङिच्च" इत्यत्र ङिदेवानेकालन्त्यस्येति नियमेन सिद्धेऽनेकाल्ग्रहणं
व्यर्थम्" इत्यपास्तम् ॥

स्वरितेन । इत्थंभूतलक्षणे तृतीया । स्वरितत्वज्ञाप्योऽधिकारो
विनियोग इत्यर्थः । स्वरितत्वञ्चेदं दोषविशेषरूपमज्झल्साधारणं
स्वररूपमधिक्रियमाणपदघटकाज्निष्ठं वा । तच्चानुनासिक्यवत्प्रति-
ज्ञागम्यम् । विनियोगश्च प्रायेणोत्तरत्रोपस्थितिः, क्वचित्पूर्वत्रापि ।

---

पूर्वस्वरितत्वकल्पनागौरवस्य तवापि सत्त्वेन साम्यादिति दिक् । शित्सर्वस्ये-
दम इशिति । इदमुपलक्षणं, जराया जरसित्यादेरपि । अष्टाभ्य औशित्या-
दाविति मूलस्थादिपदग्राह्यं दर्शयति । एवमिति । अन्ये तु नन्वष्टाभ्य
इत्यत्रौशश्शित्त्वसामर्थ्यात्सर्वादेशो भविष्यतीत्यत आहेत्यवतारयन्ति । एतेनेति।
अनेकालित्यंशस्याप्यादेः परस्येत्येतद्बाधकत्वस्येष्टत्वेनेत्यर्थः । ङिदेवानेका-
लिति । अल्रूपे ङिदित्यस्य फलाभावादनेकालिति लब्धमिति भावः । स्पष्टं
चेदमुद्योते ॥

त्रैस्वर्येणाष्टाध्यायीपाठ इति पक्षे स्वररूपं न सम्यग्व्यवस्थापकं स्यात् ।
शास्त्रीयस्यापि तत्त्वापत्तेरत आह । दोषविशेषेति । अज्झल्साधारणमिति ।
अधिक्रियमाणपदादिवर्णमात्रे तादृशदोषकल्पनेनेष्टसिद्धौ सर्ववर्णेषु तत्कल्पने
फलाभावेन यत्राधिक्रियमाणमजादि तदाज्निष्ठत्वस्य, यत्र हलादि तदा हल्निष्ठ-
त्वस्य चावश्यकत्वादिति भावः । एकश्रुत्या पाठ इति पक्षे दोषविशेषकल्पनं
निष्फलमित्याशयेनाह । स्वररूपमिति । पदघटकाजिति । पदघटकाद्यजि-
त्यर्थः । सर्वत्र कल्पने फलाभावात् । अत एवैकदेशे स्वरितत्वेन समासैकदेशस्याधि-

कियद् दूरमधिकार इत्यत्रासति गमके व्याख्यानमेव शरणम्। किं च स्वरितेनाधिकारगतिः। तेन "गोस्त्रियोः" इत्यादौ स्त्र्यधिकारस्थ-प्रत्ययग्रहणमित्याद्याकरादवसेयम्। एतेन "व्याख्यानादेव निवृत्तिवदनुवृत्तिरपि भविष्यति,आकाङ्क्षायान्तु सत्यामश्रुतकल्पनाया अन्याय्यत्वाच्छ्रुतापेक्षणस्य न्याय्यत्वाच्च किं सूत्रेण" इत्यपास्तम्। स्पष्टं चेदं भाष्ये। परानित्येति। परं विप्रतिषेधसूत्राद् बलवत्। नित्यं कृताकृतप्रसङ्गि, तद्विपरीतमनित्यम्। तत्राक्लृप्ताभावकस्याभाव-

---

कारस्सङ्गच्छते। व्याख्यानमेव शरणमिति। न च स्वरिते दृष्टेऽधिकारो न प्रवर्तत इत्यर्थान्तरेण तत्सिद्धिरिति वाच्यम्। एवं सति यतः पूर्वं निवृत्तिरिष्टा तत्र स्वरितत्वप्रतिज्ञायां तेन स्वरितत्वेन तस्यानुवृत्तिप्रसङ्गे बहूपप्लवात्। सहाधिकृतयोरेकस्य निवृत्त्यर्थं कृतेन स्वरितेनान्यस्यापि निवृत्तिप्रसङ्गाच्च। कस्य निवृत्त्यर्थता कस्यानुवृत्त्यर्थता कस्योभयार्थता कस्य किं निवृत्त्यर्थतेति व्यवस्थार्थं व्याख्यानस्यावश्यकत्वेन ततो वरं निवृत्तौ व्याख्यानस्य शरणीकरणमित्याशयात्। ननु निवृत्तौ व्याख्यानस्यावश्यमाश्रयणीयत्वेऽनुवृत्तावपि तदेवास्तु, किं सूत्रेण, कृतेऽपि सूत्रे स्वरितत्वज्ञानाय व्याख्यानस्यावश्यकत्वादतः फलान्तरमाह। किञ्चेति। इत्यादीत्यादिना स्वरितेनाधिकः कारः कृतिरित्यर्थेन पूर्वस्य परबाधकत्वं बोध्यते, तेन सर्वे पूर्वविप्रतिषेधास्संगृहीता इत्यस्य संग्रहः। तदेतदाह। आकारादवसेयमिति। परनित्येतीति। पूर्वात्परस्य बलवत्त्वे वृक्षेभ्य इति प्रयोजनम्। पराम्नित्यस्य बलवत्त्वे तुदतीति। परादन्तरङ्गस्य बलवत्त्वेऽयजे इन्द्रमिति। नित्यादन्तरङ्गस्य बलवत्त्वे कश्च अश्च ईशश्च केशा इति। एवं ग्रामणिनी इति। पूर्वादपवादस्य बलवत्त्वे दुग्धामिति, पराद्बलवत्त्वे पचन्तीति नित्याद्बलवत्त्वे रमायामिति, अन्तरङ्गाद्बलवत्त्वे वासः क्षौमं प्रतिपदोक्तस्य बलवत्त्वमन्तरङ्गत्वमूलकमेवेत्यन्यत्र विस्तरः। अल्पापेक्षमन्तरङ्गमित्यादिप्राची-

कल्पनापेक्षया क्लृप्ताभावकस्यैव तत्कल्पनं युक्तमिति तस्य बलवत्त्वे बीजम् । अन्तर्मध्ये बहिरङ्गशास्त्रीयनिमित्तसमुदायमध्येऽन्तर्भूता-न्यङ्गानि निमित्तानि यस्य तदन्तरङ्गम् । तदीयनिमित्तसमुदाया-द्बहिर्भूताङ्गकं बहिरङ्गम् । तस्य बलवत्त्वे बीजमाह । असिद्धमिति । इयञ्च 'वाह ऊठ्' इति सूत्रेण ज्ञापिता । यद्यपि 'प्रत्यङ्गवर्त्ती लोको दृश्यते मनुष्योऽयं प्रातरुत्थाय प्रथमं शरीरकार्याणि करोति, ततः सुहृदां, ततः संबन्धिनाम्' इतिन्यायमूलकत्वमस्या 'अचः परस्मिन्' इति भाष्ये उक्तं, तथापि तेन न्यायेन युगपत्प्राप्तिविषयतैव स्यात् । ज्ञापकेन तु सर्वविषयता बोद्ध्यत इति 'वाह ऊठ्' इति सूत्रे कैयटे स्पष्टम् । अन्यथा वाहः संप्रसारणे पूर्वरूपे च कृते ण्याश्रये गुणे 'वृद्धिरेचि' इति वृद्धौ प्रष्ठौह इत्यादि सिद्धावूठ्विधानं व्यर्थं स्यात् । नाजानन्तर्यपरिभाषा तु नास्त्येवेति न अयजे इन्द्रमित्यादौ दोष इति परिभाषेन्दुशेखरे विस्तरः । अपवादस्तु वचनप्रामाण्याद्

---

नोक्तमयुक्तमिति सूचयन्नाह । अन्तर्मध्य इति । अन्तरङ्गं बहिरङ्गाद्बलीय इति परिभाषान्तरमिति प्राचीनोक्तमयुक्तमिति सूचयन्नाह । तस्य बलवत्त्वे बीजमाहेति । न्यायसिद्धेऽर्थे ज्ञापकोपन्यासोऽनावश्यक इत्याशङ्क्य परिहरति । यद्यपीत्यादिना । सर्वविषयतापीति । अन्तरङ्गे जातं तत्कालप्राप्तं चा-सिद्धमित्यर्थादिति भावः । ज्ञापकस्यावश्यकतां प्रदर्श्य ज्ञापकतामुपपादयति । अन्यथेति । अत्रत्यविस्तरः परिभाषेन्दुटिप्पणीतोऽवसेयः । नन्वन्तरङ्गं बहि-रङ्गाद्बलीय इत्यस्याप्यनेनैव क्रोडीकारे एतन्निषेधकनाजानन्तर्यपरिभाषया तदंशस्यापि निषेधेऽयजे इन्द्रमित्यादौ दोषस्स्यादतः पार्थक्यमेव युक्तमत आह । नाजानन्तर्येति । दोष इति । तत्सत्त्वेपि ज्ञापकसाजात्यात्तदर्थे जातस्य बहिरङ्गस्येत्युक्त्यापि न दोष इत्यपि बोध्यम् । तद्ध्वनयन्नाह । परिभाषे-

बलवान्। अकृतेति। न कृतो विशिष्ट ऊहस्तर्को निमित्तविनाशेऽपि कार्यस्थितिरूपः, यथा दण्डविनाशेऽपि घटस्थितिः, स यैस्ते इत्यर्थस्तदाह। निमित्तमित्यादि। तत्प्रयुक्तं कार्यं जातमपि न कुर्वन्ति नोच्चारयन्तीत्यर्थ इति कैयटादयः। अन्ये तु व्यूहोऽन्तरङ्गशास्त्रं बहिरङ्गापोहनरूपत्वात्। तत् निमित्तविनाशं दृष्ट्वा पूर्वमपि न कुर्वन्तीत्यर्थं इत्याहुः। इयं परिभाषा निष्फला निर्मूलेति परिभाषेन्दुशेखरे निरूपितम्॥

॥ इति परिभाषाप्रकरणम्॥



---

न्द्विति। प्रक्षालनाद्धीति न्यायमवलम्ब्याह। अन्ये त्विति। ननु व्यूहशब्दोन्तरङ्गशास्त्रेऽदृष्टचर इत्यत आह। बहिरङ्गापोहनरूपत्वादिति। बहिरङ्गस्यापोहनं दूरीकरणं तदेव रूपं यस्य तत्त्वादिति भावः। यथा सेनासन्निवेशविशेषरूपो व्यूहः परबलं दूरीकर्तुमीष्टे तथान्तरङ्ग शास्त्रमपि बहिरङ्गं दूरीकर्तुं प्रभवतीति सादृश्यमूलकोऽत्र व्यूहशब्दप्रयोग इति भावः। इति परिभाषेति। प्रथमाध्यायस्थानां सन्धिकार्योपयोगिनीनां परिभाषाणां प्रकरणं समाप्तमित्यर्थः। उरण्रपर इति तु न परिभाषा, तस्य आगमविधित्वात्। यथासंख्यमित्यस्योपन्यासौचित्यमुक्तमेव। इको गुणवृद्धी इत्यस्योपन्यासस्त्वचश्चेति परिभाषासाहचर्यनिबन्धनः प्रासङ्गिकः। एवञ्च तत्र प्रायेणेति पूरणं विफलमेवेति भाति॥

॥ इति परिभाषाप्रकरणम्॥



## ॥ स्वरसन्धिः ॥

स्यादिति। कार्यशब्दवादे इदम्। संहितायां विषये इति। कार्यिनिमित्तयोः संहितायां विषयभूतायामित्यर्थः। स्थानत इति। इदं यथासंख्यसूत्रे भाष्ये स्पष्टम्। जातिपक्षे यथासंख्येनापि निर्वाह इति स्थानेऽन्तरतमसूत्रे भाष्ये स्पष्टम्। अनुनासिकस्थानेऽपि निरनुनासिक एव। विधीयमानत्वेन सवर्णाग्राहकत्वात्। गुणाभेदकत्व-

---

नन्विकस्स्थाने यण् स्यादित्युक्ते इको निवृत्तिर्यण उत्पत्तिश्चेति लभ्यते, नित्येषु शब्देषु तन्नोपपद्यत इत्यत आह। कार्येति। ननु पूर्वेणापि संहिताया उक्तत्वेन दधि आनयेत्यसंहितयोच्चारणेऽप्येकपदे संहिताया नित्यत्वेनेकारस्य धकारेण संहितायास्सत्त्वेन यण्दुर्वारोऽत आह। कार्यिनिमित्तयोरिति। इदं यत्र भावरूपस्य निमित्तत्वेनोपादानं तद्विषयकं, तेनावसानकार्येषु तदभावेपि न क्षतिरिति बोध्यम्। विवेचितं चेदं पूर्वमेव। विषयभूतायामिति। इदं संहितायामित्यर्थविवरणं, नत्वध्याहारलभ्यं, अतो वैषयिकाधारबोधकसप्तम्या न पौनरुक्त्यमिति ध्येयम्। जातिपक्ष इति। तेन व्यक्तिपक्ष इगादिशब्देन षट्षष्ठ्यादीनामुपस्थितिर्न यथासंख्यप्रतिबन्धक इति भावः। नन्वत्र यथासंख्यसूत्रप्रवृत्त्यङ्गीकारेऽपि स्यौजसित्यादावननुनासिकवकारव्यवस्थायाः स्थानेन्तरतमसूत्रेणैव कर्तव्यतयाऽऽवश्यकेन तेनैव सिद्धे यथासंख्येन निर्वाहकथनमनुचितमेवेत्यत आह। अनुनासिकेति। निरनुनासिक एवेति। प्राप्यमाणानां मध्ये सदृशतमस्यैव तेनाऽभ्यनुज्ञानात्। एवञ्च यथासंख्येन निर्वाहे न स्थानेन्तरतमसूत्रापेक्षा प्रकृत इति भावः। नन्वनुनासिकोऽपि तज्जात्याश्रयत्वात्प्राप्यमाण एवेत्यत आह। विधीयमानेति। न विधेयाण्विषय इति। अप्रत्यय इत्यस्य योगविभागेन तत्पक्षप्राप्तस्यापि निषेधकत्वादिति भावः। पक्षयोरत्राऽवैलक्षण्यान्मूलोक्तमेवाद्रि-

**पक्षोऽपि न विधेयाणिवषये। दीर्घादीनामिगादिपदैरुपस्थितये प्रत्याहारेषु जातिपक्ष एवेत्यणुदित्सूत्रे भाष्ये स्पष्टम्। अत एव सवतकारादीनां झल्त्वादिसिद्धिः। "ल्वादय" इत्यादिनिर्देशादयश्च जात्याश्रयणे मानमिति दिक्। व्याकरणस्य साध्वनुशासनत्वन्तु शब्दनित्यतापक्षे, शब्दानां सिद्धत्वेन शास्त्रवैयर्थ्यापत्त्या मृजिप्रसङ्गे मार्जिः साधुर्भवतीत्यादिवृद्धिसञ्ज्ञासूत्रस्थभाष्यप्रामाण्येन यदिह परिनिष्ठितत्वेन ज्ञाप्यं तत्साध्वित्यर्थापत्तिकल्प्यवाक्येन बोध्यम्।**

---

यतामित्यत आह। **दीर्घादीनामित्यादि**। ननु मनोरमायां लक्षणया दीर्घादीनामुपस्थितेरुक्ततया जातिपक्ष एवेति कोऽयं निर्बन्ध इत्यत आह। **अत एवेति**। **सिद्धिरिति**। तत्र लक्षणया निर्वाहस्य कर्तुमशक्यतयाऽर्धजरतीयत्वस्याऽनौचित्यात्। अत्राऽपि जातिपक्षाश्रयणमेवोचितमिति भावः। तकरादौ जातिपक्षाश्रयणमन्तरा यथा निर्वाहस्तथा निरूपितमणुदित्सूत्रे। ननु ल्वादिभ्य इत्यादिनिर्देशप्रमिताया लक्षणायाः कथं त्याग इत्यत आह। **ल्वादिभ्य इतीति**। **दिगिति**। दिगर्थस्त्वणुदित्सूत्रस्थग्रन्थतोऽवसेयः। नन्विको यणचीत्यादीनां यणादिविधायकत्वेन साध्वनुशासनं व्याकरणमित्यनुपपन्नमत आह। **व्याकरणस्येति**। करणव्युत्पत्त्या सूत्रमत्र व्याकरणं। न च शास्त्रारम्भ एवैतद्व्यावस्थापनं युक्तमिति वाच्यम्। विधिशास्त्राणामेव साक्षात्साधुत्वबोधकत्वेन तेषामत्रैवोपक्रमात्। न चैवं सति अ अ इत्यत्रोपन्यासः कार्य इति वाच्यम्। तदुपन्यासस्य प्रासङ्गिकतया प्राधान्येनोपन्यासस्यात्रैव प्रक्रान्तत्वात्। **शास्त्रवैयर्थ्यापत्त्येति**। असाधूनामिव साधूनामपि ज्ञानस्य लोकतः प्रत्यक्षेणैव सिद्ध्या न तदर्थमपि शास्त्रं सार्थकमिति भावः। **इह परिनिष्ठितेनेति**। एतच्छास्त्रप्रवृत्तौ सति यत्परिनिष्ठितं तेनेत्यर्थः। **ज्ञाप्यमिति**। रेखागवयन्यायेनेति भावः। यत्त्विह लक्ष्ये प्रवृत्तियोग्यसकलशास्त्रविषये परिनिष्ठितेन परिनिष्ठितत्वप्रयोजकचरम-

कार्यशब्दवादे तु पूर्वभाष्योन्नीतानादितात्पर्यवशात्तत्कल्पनं बोद्धयम्।

---

कालिकप्रवृत्तिमता शास्त्रेणेत्यर्थ इति तन्न। एवं व्याख्याने चरमप्रवृत्तिक-शास्त्रस्य यथा कथञ्चित्साधुत्वबोधकत्वलाभेऽपि तादृशचरमप्रवृत्तिशून्यानां फगादिप्रत्ययविधायकानां साधुत्वबोधनापत्तेरिति दिक्। तत् साध्विति। इदं साधुत्वं पुण्यजननोपयोगि पारमार्थिकं पदे वाक्ये वा बोध्यम्। साध्वनुशासनं व्याकरणमिति पारमार्थिकसाधुत्वाभिप्रायेणैवेति बोध्यम्। अन्यदपि प्रक्रिया-निर्वाहकं प्रकृतिप्रत्ययादिनिष्ठमपारमार्थिकं शास्त्रकृत्कल्पितं तदपि प्रतिशास्त्रं बोध्यते। स्पष्टं चेदं पस्पशाह्निकशेषे भाष्ये। यत्तु वस्तुतस्तु साधुत्वं द्विविधं शास्त्रान्तरप्रवृत्त्युपयोगि, प्रयोगार्हत्वात्मकं च। तत्र पूर्वप्रवृत्तिमता शास्त्रेणाऽऽद्यं बोध्यते। अन्त्यन्तु चरमप्रवृत्तिकशास्त्रेणेति बोध्यमित्युक्तं तन्न। एवं सति प्रक्रियानिर्वाहकसाधुत्वस्य प्रक्रियाया इवापारमार्थिकत्वेन प्रतिशास्त्रं पारमार्थिक-साधुत्वबोधकतानापत्तेः। मुख्ये सम्भवति गौणपरिग्रहस्यान्याय्यत्वाच्चेति दिक्। कार्यशब्दवादे त्विति। तत्पक्षे शब्दानां पूर्वमसत्त्वेन ताल्वादिस्थानैरुत्पाद-नीयतया कार्यमात्रंप्रति ज्ञानस्य कारणतया तत्पुरुषोत्पाद्यमानशब्देषु तत्पुरुषीय-ज्ञानस्य पूर्वमावश्यकतया तज्ज्ञानजननेन शास्त्रं सार्थकमिति नार्थापत्तिमूलक-वाक्यकल्पनासम्भव इति भावः। एतेन वस्तुतस्तु कार्यशब्दवादेऽपि वर्णोत्पत्तेः कण्ठाद्यवच्छिन्नवाय्वाघातादेरेव सम्भवेन साधूनामसाधूनां च सिद्धत्वात् सूत्रादुत्पत्तेरसम्भवाच्च तत्तच्छास्त्रवैयर्थ्यस्य दुर्वारत्वेन नित्यशब्दवादवत्साधुत्व-पर्यन्तं सूत्रतात्पर्यस्य पर्यवसेयत्वेन पक्षयोर्भेदोक्तिरयुक्तैव। न च शब्दोच्चारणानु-कूलप्रमाजननद्वारा तेषां शब्दोत्पादकत्वसम्भवेन कार्यवादेन वैयर्थ्यमिति वाच्यम्। नित्यवादेऽप्यभिव्यक्त्यनुकूलप्रमाजननद्वारा चारितार्थ्येन वैयर्थ्योपपादनस्याऽ-शक्यत्वाच्छब्दानां नित्यत्वेऽपि तदभिव्यक्तेरनित्यत्वध्रौव्यादिति बोध्यमित्यपा-स्तम्। कार्योत्पत्तौ प्रमात्वेन कारणत्वे मानाभावात्। ज्ञानत्वेन कारणत्वस्य

**एतेन स्थानप्रमाणोभयान्तरतमे ह्रस्वेकारे चरितार्थो यण् दीर्घे कथं स्यादित्यपास्तम्। स्थानत आन्तर्यस्य सर्वतो बलवत्त्वात् "स्थानेऽन्तरतमे" इति सप्तम्यन्तपाठस्य चैतद्दूषणेनैव भाष्ये दूषितत्वादिति भावः॥**

**चो विध्यर्थः। ध्वनितश्चेदमेओङ्सूत्रे भाष्ये, तदाह। द्वे वास्त**

---

सर्वसम्मतत्वाच्चेति दिक्। एवं सूत्रार्थं सप्रपञ्चमुपवर्ण्य जातिपक्षे निर्वाहस्यौचित्यं कस्य चिच्छङ्कानिरसनव्याजेन दर्शयति। **एतेनेति।** मुख्ये जातिपक्षे यथासंख्यसूत्रेण परत्वाद्बाधात् स्थानेऽन्तरतमसूत्रस्याप्रवर्तनेनेत्यर्थः। यथासंख्येन निर्वाहस्यौचित्यमेव न त्वपूर्वं प्रयोजनमिति सूचयन्स्थानेन्तरतमसूत्रेणापि सर्वत्र निर्वाहं दर्शयति। **स्थानत इति।** अन्यानपेक्षस्वप्रयुक्तकार्यप्रवर्तकतयेतरबाधकत्वेनैव हि तस्य बलवत्त्वं वाच्यम्। तथा सति तत्त्वं भज्येतेति भावः। ननु यत्रानेकविधमान्तर्यं विभिन्नादेशप्रवर्तकं तदेव तद्विषयमित्यत आह। **सप्तम्यन्तेति॥**

**चो विध्यर्थ इति।** विधेरपि शाब्दत्वसूचक इत्यर्थः। अन्यथाऽचः परस्य यरोऽचि परे द्वित्वं नेत्यर्थे निषेधस्य विध्यपेक्षितत्वेनैतत्सामर्थ्याद्यरो द्विर्वचनमिति सामान्यतोऽनुमाने यत्र कुत्रापि स्थितस्य स्यान्न त्वचः परस्यैव स्यादिति श्रीधरादयः। वस्तुतस्तु विधेश्शाब्दत्वाभावे निषेधस्य विध्याकाङ्क्षायामचो रहाभ्यामितिविहितस्य निषेधस्स्यात्तथा च हर्यनुभव इत्यत्र द्वित्वं न स्यात्। हर्य्यं ब्राह्मणमित्यत्रैव स्यादिति नागेशाशय उन्नेयः। न च हर्यनुभव इत्यत्र यकारस्याचः परत्वाभावान्निषेधाप्रवृत्तिरिति वाच्यम्। एतत्सामर्थ्येन विध्यन्तरकल्पनापेक्षयाऽत्राच इत्यस्याननुवृत्तिकल्पनस्यैव ज्यायस्त्वात् श्रीधराद्युक्तं तु न सम्यक्। सामान्यतो यरो द्वित्वानुमानेऽचो रहाभ्यामित्यस्याऽचः

इति । सूत्रकृता शाकल्यमते सर्वत्र द्वित्वाभावोक्तेरिति भावः ।

---

परत्वाभाववतो यदि द्वित्वमचःपरेरेफहकाराभ्यां परस्यैवेति नियमेनापि तदुक्त-दोषवारणसम्भवात् । अच इत्यस्याऽननुवृत्त्या उपस्थितनिषेधसम्भवे विध्यन्तर-कल्पने मानाभावाच्च । एओङ्सूत्र इति । तत्रहि सन्ध्यक्षरेषु तपरोपदेश-पक्षे प्लुतादिष्वज्विधिरिति वार्तिके गो ३ त्रात नौ ३ त्रात अनचिच । अच उत्तरस्य यरो द्वे भवत इति द्विर्वचनं न प्राप्नोतीत्युक्तम् । क्वचिदेओङ्सूत्रादाविति पाठः । तदा आदिना हयवरट्सूत्रसंग्रहः । तत्रायोगवाहानामविशेषेण पाठपक्षे उरः क इत्यत्राऽनचि च, अचः परस्य यरो द्वे भवत इति द्वित्वं सिद्धं भवतीत्युक्तम् । मिश्रास्त्वेओङ् सूत्रं यस्मिन्नाह्निक इति बहुव्रीहिं व्याख्याय हयवरट्सूत्रसंग्रह माहुः । एओङ्सूत्र इत्यपपाठ इति तु न सम्यक् । इति भाव इति । यरो-ऽनुनासिक इत्यतो वाग्रहणानुवृत्तिप्रयोजकस्य स्वरितत्वस्य कल्पने मानाभाव इति भावः । न च वाग्रहणानुवृत्तौ सर्वत्रेत्यादिप्रकरणस्याकर्तव्यताप्रयुक्तं लाघवमिति वाच्यम् । मतभेदप्राप्तद्वित्वाभावप्रदर्शनार्थं तस्यावश्यकत्वात् । अत एव सर्वत्रे-त्यतः पृथक् दीर्घादाचार्याणामित्याद्युपन्यसनं संगच्छते । किंच सर्वत्रेतिसूत्रेण वाग्रहणे स्वरितत्वाभाव एव सूत्रतात्पर्यावगमात् वाग्रहणानुवृत्तिः कैयटस्य चिन्त्या । अत एव मनोरमायामितिकैयट इत्यरुचिबोधकपदोपादानं संगच्छते । अत एव कैयटे वेत्यधिकाराच्चेति प्रतीकमुपादाय सर्वत्र शाकल्यस्येति वा विकल्प इति बोध्यमित्युक्तम् । अत एव भाष्यवृत्त्यादिषु विकल्पो न व्याख्यात इति दिक् ॥

एतेन ननु शाकल्यद्वित्वनिषेधाद्रूपद्वयसिद्धौ वापदानुवृत्तिर्व्यर्थेत्यत आह । शाकल्येति । तस्य निषेधप्रकरणपाठादाह । द्वित्वाभावेति । एवंच तन्मते अभावघटितस्य साधुत्वेप्यन्यमते तन्न स्यादतोनुवृत्तिरिति भाव इति वदन्तः परास्ताः ॥

अवसाने द्वित्वसिद्धयेऽनचीति प्रसज्यप्रतिषेधस्तदाह । न त्वचीति। इदं द्वित्वं षाष्ठद्वित्ववद् द्विः प्रयोग एव। यर इत्यादेरध्याहृतोच्चारण-क्रियानिरूपितकर्मषष्ठीत्वस्यौचित्यात् । इति घस्येति । न तु द्वित्वे पूर्वघस्थाने जश्त्वनिष्पन्नदस्यापि । "लक्ष्ये लक्षणम्" इति न्यायात्। विकारान्यत्वेन न लक्ष्यभेद इत्यन्यत्र प्रपञ्चितम् ॥

स्थान्यादेशयोर्भेदात्, स्वं रूपमित्युक्तेश्च "तत्स्थानापन्नस्तद्धर्मं

---

ननु मूले न त्वचीत्यनुपपन्नमसमर्थसमासाश्रयणप्रसङ्गेन पर्युदासस्यौ-चित्यादत आह । **अवसाने द्वित्वेति** । एवंच गौरवं न दोषाय, फलानुरोधि-त्वादिति भावः । न चासमर्थसमासाश्रयणे मानाभाव इति वाच्यम् । हलीति वक्तव्ये एवं न्यासस्यैव मानत्वात् । इदं प्रसज्यप्रतिषेधाश्रयणं प्रकृतसूत्रभाष्यानु-रोधात् । अचःपरस्मिन्निति सूत्रभाष्ये तु पर्युदासपक्षोऽपि ध्वनितः । तत्र हि अना-श्रितस्थानिकमपि कार्यं स्थानिवद्भावेन प्राप्यत इति पक्षे द्विर्वचनादीनां निषेधस्य कर्तव्यतोक्ता, यद्यचि नेत्यर्थस्तदा द्वित्वनिषेधस्याच्कार्यत्वेनाश्रितस्था-निककार्यमेव स्थानिवद्भावेन प्राप्यत इति पक्षेऽपि द्विर्वचनादीनां कर्तव्यतया तदसंगतिः स्पष्टैव । वागित्यादौ दोषस्तु अज्भिन्नो वर्णाभाव एवेति स्वीकारेण वारयितुं शक्य इति तद्भावः । स्पष्टं चेदमुद्योते इति दिक् । **औचित्यादिति** । उपपदविभक्तेरितिन्यायपरिपालनमेवात्रौचित्यं, नतु फलाभिनिवेशः कार्यः, स्थाने द्विर्वचनेऽपि दधिस्यतीत्यादौ द्वित्वस्यासिद्धत्वेनादेशाभावेन षत्वाप्राप्तेः । पूर्वत्रासिद्धीयमद्विर्वचन इत्यस्य तु नायं विषय इति भावः । **न लक्ष्यभेद इति** । तेनोदवोढामिति सिद्धम् ॥

**भेदादिति** । स्वरूपतो भेदादित्यर्थः । **अस्य**, स्थानिकार्यमादेशे न स्या-दित्यनेनान्वयः । लोकन्यायेन सिद्धिमाशङ्क्याह । **स्वं रूपमित्युक्तेश्चेत्यादि** ।

**लभते, यथा गुरोः स्थाने शिष्यो याज्यकुलानि गत्वाऽग्रासनादीनि लभते" इति लोकन्यायेन स्थानिकार्यमादेशो न स्यादतः स्थानिवत्सूत्रम् । न तु स्थान्यलेति । प्रत्यासत्तिन्यायलब्धमिदम् ॥**

---

चो हेतुत्वानुवादकः । लोकन्यायस्यापि पुरुषारम्भस्य निवर्तकतया प्रकृते स्वंरूपमिति पुरुषारम्भस्य सत्त्वेन न लोकन्यायेन सिद्धिरिति भावः । यत्तु लोकन्यायेन न स्वरूपाश्रयं कार्यं प्राप्नोति, प्रकृते तु स्वंरूपमित्युक्ते स्वरूपाश्रयमेव । अतो नायं लोकन्यायस्य विषय इत्याशयमुद्भावयन्ति । तत्तु "यद्यपि लोक एष दृष्टान्तः दृष्टान्तस्यापि पुरुषारम्भो निवर्तको भवति, अस्ति चेह कश्चित् पुरुषारम्भः । अस्तीत्याह कः ? स्वरूपविधिर्नामेति" भाष्याक्षराननुगुणत्वाच्चिन्त्यम् । **स्थानिवत्सूत्रमिति** । यद्यपि भाष्ये युष्मदस्मदोरनादेश इति सूत्रेऽनादेशग्रहणाज्ज्ञापकादत्र विध्यंशस्य अदो जग्धिरित्यत्र ल्यब्ग्रहणान्निषेधांशस्य च सिद्धिमाश्रित्य सूत्रं प्रत्याख्यातम् । न च युष्मदस्मदोरित्यत्र विभक्तिविषये स्वरूपविधेर्लोकन्यायबाधकस्याप्राप्त्या लोकन्यायेन प्राप्तद्धर्मलाभप्रयुक्तकार्यवारणायानादेशग्रहणं चरितार्थमिति वाच्यम् । स्वादिसूत्रे स्वंरूपमित्यस्य प्रवृत्त्या तत्स्वरूपाणामेव सुबादिसंज्ञकत्वेन तत्र लोकन्यायाप्रवृत्तेः । स्पष्टं चेदमुद्योते । एवं च सूत्रावश्यकताकथनमसङ्गतम्, तथापि उत्तरार्थं विध्यंशस्यावश्यकतया तस्यैव योगविभागेनोक्तार्थसिद्धौ ज्ञापकानुपयोगः । अत एवारभ्यमाणेऽप्येतस्मिन् योग इत्युक्तं भाष्ये । एवं विधिग्रहणमप्युत्तरार्थमावश्यकं, तद्धि वाक्यभेदेन पूर्वस्यैव विधावित्यर्थं, तेन पूर्वपरविधौ नेत्युक्तमचःपरस्मिन्निति सूत्रे कौस्तुभे । किं तर्हि पूर्वपरविधिरिति भाष्यप्रतीकमुपादाय विधिग्रहणसामर्थ्यात् पूर्वपरविधौ स्थानिवत्त्वाभाव इत्यर्थलाभ इति वदन्नुद्योतकारोऽप्यमुमेवार्थमभिप्रैत् । एवं च ज्ञापकादिपरिक्लेशाभावाय सूत्रं कर्तव्यमिति बोध्यम् । **प्रत्यासत्तीति** । यद्यप्यादेशः प्रत्यासन्नस्तथापि पाठक्रमादर्थक्रमस्य बलवत्त्वेन स्थानिन एव प्रत्यासत्ति-

आदेशस्य स्थानिभूतो योऽल्

रिति भावः। तेन रामायेत्यादौ दीर्घादेरादेशालाश्रयत्वेऽपि निषेधाप्रवृत्तिरिति बोध्यम्। ननु न तु स्थान्यलाश्रयविधाविति मूलादतिदिश्यमानधर्मस्याल्वृत्तिधर्मत्व एव निषेध इत्यर्थलाभेन धिन्वन्तीत्यादावार्धधातुकत्वस्यातथात्वेनातिदेशे स्वतो वलादित्वेनेडापत्तिरत आह। आदेशस्य स्थानिभूतेति। न च स्थानिशब्दस्य ससम्बन्ध्यर्थकतया आदेशस्येत्यर्थलाभे पुनरादेशस्येति व्यर्थमिति वाच्यम्। आदेशविधावुपात्तस्थानिनोऽल्त्व एव प्रकृतनिषेधप्रवृत्तिर्न तु वस्तुगत्या स्थानिनोऽल्त्व इत्यर्थस्फोरणाय तदुपादानात्। अत एव रामाय रमायामित्यादौ सुप्त्वङिद्वचनत्वादिकमतिदेशेन सिध्यति। अन्यथा यादेशाऽऽम्स्थानिनो वस्तुतोऽल्रूपत्वेन निषेधप्रवृत्तिस्स्पष्टैव। नचात्र यथाकथंचिदेवं सार्थक्यसम्भवेऽपि तत्स्थानिसम्बन्धीत्यत्रादेशबोधकतत्पदोपादानवैयर्थ्यमिति वाच्यम्। तदुपादाने नागेशस्यादराभावात्। अत एवोद्योते तत्पदरहित एव पाठस्संगच्छते। यद्वा यदागमपरिभाषायाः स्थानिवत्सूत्रेण गतार्थतां वदतां मते तादृशस्थानिनोऽत्राग्रहणमिति सूचनाय तदुपादानम्। अन्यथा अरित्यादेर्गुणत्वाद्यतिदेशो न स्यात्। यत्त्वादेशस्येति विधावित्यनेनान्वेतीति प्रकाशकृतोक्तं तन्न। विधावित्यस्य क्वचित् पुस्तकेष्वदर्शनात्। आदेशविधावित्यर्थे तदुद्देश्यविधिकर्तव्यतायामेव निषेधप्रवृत्त्यापत्त्या सर्वविभक्त्यन्तावयवकसमासप्रदर्शनपरभाष्यविरोधलक्ष्यासिद्ध्योर्दुष्परिहरत्वात्। उत्तरत्र तत्पदवैयर्थ्यस्य तावताप्यपरिहारात्। उद्योते आदेशस्थानिभूत इति समस्तपाठदर्शनेन तत्र तथा वक्तुमशक्यत्वाच्चेति दिक्॥

अल्त्वव्याप्यधर्मावच्छिन्नस्थानितानिरूपितादेशताश्रये अतिदिदिक्षितो यो धर्मस्तदाश्रये विधौ न स्थानिवदिति वाक्यार्थः। स्थानितावच्छेदकं चात्र सूत्रोपात्तरूपमेव ग्राह्यमित्युद्योते स्पष्टम्। एवंच प्रद्योऽलिटीति दीर्घस्थानिताया वस्तुत इकारवृत्तित्वेऽपि सूत्रोपात्तेद्त्वस्यैव स्थानितावच्छेदकतया प्रकृतनिषेधागोचरत्वे-

नेट्त्वातिदेशेऽग्रहीदित्यत्र सलोपसिद्धिः। तदुक्तं भाष्ये 'विशिष्टं ह्येषोऽनलमाश्रयते इटं नामे'ति। नच तत्राचश्चेति परिभाषोपस्थितावच्त्वावच्छिन्नैव स्थानितेति वाच्यम्। परिभाषाणामनियमे नियमकारिणीत्वेन प्रकृतेऽप्रवृत्तेः। सूत्रे स्थानषष्ठ्यन्तपदोपस्थितस्थानितावच्छेदकस्यालमात्रवृत्तित्व एव निषेधप्रवृत्त्यङ्गीकारेणेट इत्यस्यैव स्थानषष्ठ्यन्ततया तदुपात्तेट्त्वस्यातथात्वेनादोषाच्च। इड्रूपस्याच इत्यर्थे इट्त्वस्यैव स्थानितावच्छेदकत्वलाभेनादोषाच्च। नचैवमप्यगुरित्यत्र अगा उसिति स्थिते गादेशस्थानितायाः इण्त्वेनावच्छिन्नतया प्रकृतनिषेधाप्रवृत्तौ इणो यणिति यणापत्तिरिति वाच्यम्। आयन्नित्यत्र वृद्ध्युत्तरं यण्वारणार्थमेरनेकाच इत्यत एरित्यनुवृत्तेराकरसम्मततया इत्वस्यालमात्रवृत्तेरनतिदेशात्। एवंच हल्ङ्याब्भ्य इति सूत्रे सुतिसिरूपस्यैव हलो लोपविधानेन सुत्वादेरेवावच्छेदकतालाभेन तत्रातिदेशेन सार्वधातुकत्वादेस्सुलभतया अतृणेडित्यत्रेमागमसिद्ध्या प्रत्ययलक्षणसूत्रस्य नियामकत्वोपपादकभाष्यविरोधो न। एवं वेरपृक्तस्येत्यत्राप्यूह्यम्। आद्ये हल्पदस्य स्थानषष्ठ्यन्तत्वाभावेनापि तद्विरोधो न। अन्त्ये वेरित्यस्यैव स्थानषष्ठ्यन्ततया वित्वस्य समुदायवृत्तित्वेनापृक्तपदस्य प्रत्ययत्वेनैव बोधकतया तस्य च समुदायवृत्तित्वेन च न दोषः। एवं गोस्त्रियोरिति सूत्रे प्रातिपदिकस्यैव स्थानषष्ठ्यन्ततया ह्रस्वस्य तादृशादेशत्वाभावेन दीर्घग्रहणं कुर्वता सूत्रकृता ङ्याब्ग्रहणेऽदीर्घ इति वदतावार्त्तिककृता प्रश्लेषं वदता भाष्यकृता च न विरोधः। निर्दिश्यमानपरिभाषोपस्थितावपि स्त्रीप्रत्ययस्यैव तत्त्वेनादोषः। नन्वेवमपि तत्र अचश्चेति परिभाषोपस्थितौ तत्र स्थानितायाः अच्त्वावच्छिन्नत्वेन पूर्वोक्तविरोधो दुर्वारः। न च फलाभावात्तदनुपस्थितिरिति वाच्यम्। तिप्रत्ययविषये फलस्य सत्त्वात्। अन्यथा समुदायस्य ह्रस्वप्रसङ्गात्। न चालोन्त्यपरिभाषया निर्वाह इति वाच्यम्। वाक्यैकवाक्यतया नियामकतदपेक्षयान्तरङ्गत्वेनाचश्चेतिपरिभाषया निर्वाहस्य न्याय्यत्वेन तदुपस्थिते र्दुर्निवार-

स्यादिति चेन्न। अचश्चेत्यस्योपस्थितावपि अजन्तस्य निर्दिश्यमानस्येत्यर्थस्य सामानाधिकरण्यान्वयानुरोधेन स्वीकर्तव्यतयाऽलोन्त्यपरिभाषाप्रवृत्तेरावश्यकतया तत एव निर्वाहे फलाभावेनाचश्चेति परिभाषाया अनुपस्थितेरङ्गीकारेणादोषात्। उपस्थितौ वा तस्य निरुक्तरीत्या विशेषणतया स्थानषष्ठ्यन्तत्वाभावेन तदुपस्थाप्याच्त्वस्य स्थानितावच्छेदकत्वाभावेनादोषाच्च। तिप्रत्ययविषयकतयोपप्लुतवाक्ये फलबलेन तदुपस्थितावप्यन्यत्र तदुपस्थितौ मानाभावाच्च। गोस्त्रियोरुपसर्जनस्येति सूत्रे स्वरितत्वबलेन तिप्रत्ययस्य स्वत एव ह्रस्वान्ततया तत्र फलाभावेन तद्धिताधिकारप्राग्वर्तिस्त्रीप्रत्ययानां ग्रहणेन तत्र फलाभावेन तदनुपस्थितेश्च। न च युवतिशब्दस्येशब्देन समासे तेनात्यादिसमासे अतियुवतीत्यत्र पूर्वान्तवद्भावेन स्त्रीप्रत्ययतया ह्रस्वार्थं तद्ग्रहणमावश्यकमिति वाच्यम्। पूर्वान्तत्वेन स्त्रीप्रत्ययान्तत्वमादाय ह्रस्वभाविनामनभिधानस्य गोस्त्रियोरितिसूत्रस्थाकरसम्मततया निरुक्तरूपस्यैव दुर्लभत्वात्। तत्रहि गोटाङ्ग्रहणं कृन्निवृत्त्यर्थमिति वार्तिकं स्त्रियामित्यधिकृत्य विहितप्रत्ययग्रहणमङ्गीकृत्य प्रत्याख्यातम्। क्तिन्नादीनां ह्रस्वभाविनामभावादग्रहणमिति तदाशयः। स्पष्टं चेदं कैयटे। पूर्वान्तत्वेन स्त्रीप्रत्ययान्तत्वमादाय ह्रस्वे तु क्तिन्नन्तेऽपि पूर्वोक्तरीत्या ह्रस्वभाविनस्संभवेन तदसङ्गतिस्स्पष्टैव। अतिखट्वार्थमित्यत्र ह्रस्वव्यावृत्तये एकादेशे ह्रस्वप्रतिषेध इत्यर्थकवार्तिकस्य बहिरङ्गपरिभाषया प्रत्याख्यानपरमपि भाष्यमात्रार्थेऽनुकूलम्। न च तत्रैकादेशस्थानिताया अल्त्वव्याप्यधर्मावच्छिन्नत्वेन स्थानिवत्त्वाप्रवृत्तौ तद्वार्तिकानुत्थितिरिति वाच्यम्। पूर्वान्तवत्त्वेन प्राप्तह्रस्वनिषेधाय तदुत्थितेरिति दिक्॥

नन्वेवमपि कृन्मेजन्त इति सूत्रस्थभाष्यविरोधः। तत्रहि कुम्भकारेभ्यः आधये इत्यादावव्ययसंज्ञायां लुकमाशङ्क्य सन्निपातपरिभाषया समाहितम्। एकारादिस्थानिताया अत्वाद्यवच्छिन्नतया प्रकृतनिषेधेनैव सिद्धेस्तदसङ्गतिः स्पष्टैव। न च स्वंरूपमिति सूत्राविषये लोकन्यायेन सिद्धिरिति भट्टाद्युक्तरीत्या

निर्वाह इति वाच्यम् । तथासति धिन्वन्तीत्यादावार्धधातुकत्वादेरपि लोकन्यायेनानेतुं शक्यतयैतन्निषेधोदाहरणस्यैव दौर्लभ्यापत्तेस्तत्रेडादेर्दुर्वारत्वाच्चेति चेन्न। लुकःस्थानिभूतादचःपूर्वस्मात् परत्वेन दृष्टस्य कार्यत्वेनाचःपरस्मिन्निति स्थानिबुद्धावव्ययसंज्ञायास्सुलभत्वेन विरोधाभावात् । बहुवचने झल्येदिति सूत्रे नात इति स्थानषष्ठी, किं त्वङ्गस्येत्येवेति न तत्राप्यल्त्वव्याप्यधर्मावच्छिन्ना स्थानितेति कुम्भकारेभ्य इत्यादौ कृत्त्वातिदेशस्य सुलभतयाऽविरोधाच्च । निर्दिश्यमानस्येत्यस्योपस्थितावप्यत्वस्य क्वचित्समुदायवृत्तितया नाल्त्वव्याप्यत्वम् । यद्वा अदिदित्यादौ तकारविरहितस्यैव बोधकतायास्सिद्धान्तितत्वेनाच्छब्दस्य संज्ञात्वाभावेनेक्छब्दाद्वैलक्षण्यस्य सूपपादतया संज्ञाभिन्ननिर्देशे सूत्रोपात्तरूपस्य स्थानितावच्छेदकत्वस्यैवैतन्निषेधोपयोगितयाङ्गीकारेण प्रकृते निषेधाप्रवृत्त्या निर्दिश्यमानत्वस्य तत्र तत्र भेदेऽपि न क्षतिः । इगित्यादावाद्यवर्णानामेव वाचकत्वमिति मतं तु निराकृतमेव। एतेनात्वेक्त्वयोःको विशेष इति वदन्तः परास्ताः। एवं चैधै इत्यत्र तिङ्त्वातिदेशोपि सुलभ इति दिक्। न च घेर्ङितीत्यत्रालोन्त्यस्येत्यस्योपस्थितेरावश्यकत्वेन तत्र स्थानिताऽल्त्वावच्छिन्नेति वाच्यम् । सूत्रे स्थानषष्ठीत्वनिर्णयमन्तरा तत्परिभाषानुपस्थित्या सूत्रोपात्तस्थानषष्ठ्यन्तत्वस्याल इत्यस्याभावेनादोषात् । एतेनालोन्त्यस्येत्यत्रान्त्यस्येत्यस्य विशेष्यतां स्वीकृत्य अल्त्वव्याप्यधर्मेण साक्षादवच्छिन्नत्वं स्थानितायां निवेश्य क्लिश्यन्तः परास्ताः । नप्येवमप्यौङित्यौकारविभक्तेस्संज्ञात्वेनेगित्यादितोऽविशेषान्नपुंसकाच्चेति स्थानिताया अल्त्वव्याप्यधर्मावच्छिन्नत्वेन शीभावे स्वादित्वानतिदेशे पूर्वस्य भत्वानापत्तौ लोम्नीत्यत्राल्लोपानापत्तिः, श्यां प्रतिषेध इति वार्तिकासंगतिश्चेति वाच्यम्। भसंज्ञाविषये यथोद्देशस्यैव सत्त्वेन पूर्वप्रवृत्तसंज्ञामादाय निर्वाहात्। औटोऽपि संज्ञितया तत्र स्थानिताया औट्त्वेनाप्यवच्छिन्नत्वेनादोषाच्च । औङ्पदशक्यतावच्छेदकं प्रथमा-

द्वितीयाद्विवचनत्वमिति स्वीकारेण तस्यौट्यपि सत्त्वेनादोषाच्च। औङित्यस्य संज्ञात्वमनङ्गीकृत्य साम आकामित्यत्र सकारोच्चारणेन साम्त्वस्य स्थानितावच्छेदकत्ववदत्र ङकारोच्चारणेनौङ्त्वस्यैव स्थानितावच्छेदकत्वस्वीकारेण निर्वाहाच्च। एतेन तत्र प्रगृह्यत्वार्थमतिदिदिक्षितधर्मेण साक्षादवच्छिन्नोद्देश्यककार्य एव निषेधप्रवृत्तिः। प्रगृह्यसंज्ञायामीदाद्यन्तं यद्द्विवचनं तदन्तामित्यर्थेन तत्रोद्देश्यतायां न द्विवचनत्वेन साक्षादवच्छिन्नत्वमित्यादि क्लिश्यन्तः परास्ताः। अग्निः करोतीत्यत्र विसर्गे स्थानिवत्त्वेन न प्रत्ययत्वमनल्विधाविति निषेधादितीदुदुपधस्येति सूत्रस्थशब्दरत्नविरोधेनोद्देश्यतायां साक्षादवच्छिन्नत्वनिवेशस्यानभिप्रेतत्वाच्च। अत एव रामावित्यस्य परादिवद्भावोदाहरणत्वं ग्रन्थकृतस्संगच्छते। निरूपयिष्यते चेदमुपरिष्टात्। नचैवमपि चक्रे इत्यादौ कित्त्वं न स्यात्, लिट्त्वस्याल्त्वव्याप्यलत्वावच्छिन्नस्थानिताकादेशे अतिदेष्टुमशक्यत्वादिति वाच्यम्। लस्येत्यत्रोच्चारणार्थाकारेण निर्देशात्तद्घटितवृत्तितया लत्वस्याल्त्वव्याप्यत्वाभावात्। अत एव कितिलिटि एत्वाभ्यासलोपविधायकं सार्थकम्। एतेन लत्वस्याखण्डस्य स्थानितावच्छेदकत्वे लिडादौ तस्य दुर्लभतया तिबाद्यादेशानापत्तिरिति परास्तम्। अत एव च माथितिके यस्येति लोपसिद्धिः। नचेकादेशस्य निरुक्तदिशा स्थानिवत्त्वे कादेशापत्त्यापश्चमीसमासप्रयोजनत्वनिराकरणपरभाष्यविरोध इति वाच्यम्। ठस्येक इत्यत्र वर्णमात्रस्य विवक्षितत्वेन ठत्वस्याल्मात्रवृत्तितया स्थानिवत्त्वनिषेधात्। रुत्वं तु न तथा। तत्रानुबन्धस्येतरव्यावर्त्तकतया निर्देशेनेद्त्वादीवेशषात्। नचैवमपि सर्व इत्यादौ विसर्गादौ सुप्त्वानतिदेशे सर्वस्य सुपीत्यादि न स्यादिति वाच्यम्। रुत्वादीनामासिद्धत्वेन पूर्वमेव स्वरप्रवृत्तेः। न च तत्र विसर्गो दुर्लभ इति वाच्यम्। पदसंज्ञादृष्ट्या रुत्वस्यासिद्धत्वेन स्थानिबुद्ध्या रान्ते पदत्वप्रवृत्तेः। नच सापादिकसंज्ञादृष्ट्या त्रिपाद्या नासिद्धत्वं, अत एवावसानकार्याणां त्रिपाद्यां पाठ उपपद्यत इति वाच्यम्।

संस्कारकदृष्ट्या संस्कार्यस्यासिद्धत्वाभावेऽप्यन्यदृष्ट्या तस्यासिद्धत्वे बाधकाभावात् । अत एव संज्ञादृष्ट्या नलोपासिद्धत्ववचनस्य नियामकता संगच्छते। किं च तत्रानुमानिकस्थानिवद्भावेनापि पदत्वं सुलभमिति बोध्यम्। न च वैयाकरण इत्यत्र यकारे पदान्तत्वानतिदेशापत्तिरिति वाच्यम्। आनुमानिकस्थानिवद्भावेन यान्ते पदत्वे यकारे पदान्तत्वस्यार्थसमाजग्रस्तत्वात्। यत्त्वत्र पञ्चमीसमासपक्षे स्थानिवत्त्वेन पदान्तत्वमिति तन्न । तेनैव स्थानिवत्त्वेनेकारबुद्धौ पदान्तयकारस्य दौर्लभ्यात् ॥

अत्र पक्षचतुष्टयं प्रकाशकृतोपन्यस्तम् । अल्त्वव्याप्यधर्मावच्छिन्नस्थानितानिरूपितादेशताश्रयधर्मिकारोपप्रकारीभूतधर्मेण साक्षादवच्छिन्नोद्देश्यताकविधौ नेत्यर्थ इत्येकः, उद्देश्यतायां साक्षादवच्छिन्नत्वमनिवेश्य अल्त्वव्याप्यधर्मेण साक्षादवच्छिन्नस्थानिताक आदेशो न स्थानिवदित्येवार्थ इति द्वितीयः, अल्पदप्रयोज्यस्थानितानिरूपितादेशताश्रयो न स्थानिवदित्यर्थः । प्रत्याहारेष्वाद्यवर्णानामेव वाचकतया इकोयणचीति शास्त्रीयस्थानिताया अल्पदप्रयोज्यत्वाक्षतेः । न च हल इति शास्त्रीयस्थानिताया स्संप्रसारणपदप्रयोज्यतया प्रकृतनिषेधाप्रवृत्तौ समानाङ्गग्रहणप्रत्याख्याने सुध्युपास्य इत्यत्र पूर्वरूपापत्तिरिति वाच्यम् । तत्राचश्चेत्यस्योपस्थित्या दोषाभाव इति तृतीयः । अल्पर्याप्तस्थानितानिरूपितेत्यादिरर्थ इति चतुर्थः । तत्र नाद्यः, इदुदुपधस्येति सूत्रस्थशब्दरत्नविरोधात् । रामावित्यस्य परादिवद्भावोदाहरणपरग्रन्थस्वारस्यभङ्गापत्तेश्च। न वा द्वितीयः, पूर्वोक्तरीत्या सकलनिर्वाहे साक्षादवच्छिन्नत्वनिवेशवैयर्थ्यात् । एतन्मते तत्र तत्र विशेषणविशेष्यभावव्यत्यासमाश्रित्य दोषवारणेन स्वारसिकविशेषणविशेष्यभावत्यागस्यायुक्तत्वात् । अलोन्त्यस्येत्यत्राल्शब्दस्य संज्ञाशब्दत्वेन तस्य विशेषणताया अनौचित्याच्च। तदङ्गीकारेऽपि अल्रूपान्त्यस्येत्युक्तौ हलङ्याभ्य इत्यादाविवाल्त्वस्यैवावच्छेदकतालाभेन दोषध्रौव्याच्च । न

तृतीयः, प्रत्याहारेष्वाद्यवर्णानां वाचकताया नागेशानभिमतत्वेन पूर्वं निर्णीतत्वेन तत्पक्षस्य युक्तिसंभवाभावात्। नापि चतुर्थः हल्ङ्यादि सूत्रस्थानिताया अल्पर्या प्तत्वेन प्रत्ययलक्षणसूत्रभाष्यविरोधात्। प्रथमपक्षरीत्या अतिदिदिक्षितधर्मेण साक्षादवच्छिन्नोद्देश्यताकविधावेवैतन्निषेधस्वीकारे तु पूर्वोक्तशब्दरत्नविरोधादि दोषाः स्वयमूहनीयाः॥

ग्रन्थतत्त्वविदस्तु भाष्ये आदेशिन्यल्याश्रीयमाणे प्रतिषेध इत्युक्तं तत्रादेशिनीति स्थानिनीत्यर्थकमादेशोऽस्यास्तीतिव्युत्पत्तेः। अत्रादेशिनीत्यस्यालीत्यत्र समानाधिकरणविशेषणत्वे स्थानिभूतालाश्रय इत्यर्थ लाभः। व्यधिकरणविशेषणत्वे तु स्थानिनि विद्यमानो योल्तदाश्रय इत्यर्थ लाभः। अत्र संबन्धिनोऽधिकरणत्वेन विवक्षया प्रयोगात्। स्थानिसंबन्ध्यलाश्रय इति फलति भाष्यं तन्त्रेणोभयार्थबोधकम्। उद्योते तु आदेशिनीति व्यधिकरणविशेषणमेव स्थानिसंबन्ध्यलाश्रय-इत्येवार्थः। अत एव स्थानित्वे तु स्थानिसंबन्धित्वं व्यपदेशिवद्भावेन बोध्यमित्युक्तम्। एवं च भाष्ये तन्त्रमन्तराप्यभीष्टार्थसिद्धिरिति तद्भावः। एतदुद्योतैकवाक्यतया प्रकृते स्थानिभूतो योऽलित्यादिव्यपदेशिवद्भावलभ्यार्थकथनमेव। स्थानिसंबन्धी योऽलित्याद्येव विवक्षितोऽर्थ इत्युचितम्। भिन्नार्थकतया वर्णने मानाभावात्। न च प्रथमे अतिदिदिक्षितधर्मे अल्मात्रवृत्तित्वं न निवेशनीयं द्वितीये तु निवेशनीय मतो भेदेनार्थवर्णनमावश्यकमिति वाच्यम्। यत्र शास्त्रे विशेषणतया विशेष्यतया वा आदेशस्थानिभूतो योऽल् तत् स्थानिसंबन्धी वा योल्तन्मात्रवृत्तिधर्माश्रयणं तादृशे विधौ हि निषेध इत्युद्योतग्रन्थेनोभयत्रापि तन्मात्रवृत्तित्वनिवेशलाभेनैकत्र तन्निवेशोन्यत्र नास्तीति वक्तुमशक्यत्वात्। अत एवोत्तरत्र वक्ष्यति "तस्य धर्मस्य स्थान्यलसाधारणधर्मत्व एव निषेधप्रवृत्तेरिति"। स्थानिसम्बन्धी योऽल्तन्मात्रवृत्तिर्यो धर्मस्तद्धटितधर्माश्रयविधौ न स्थानिवदित्येक एवार्थः। अर्थभेदव्यवहारस्तु व्यपदेशिवद्भावलभ्यार्थं पृथक्

कृत्येति बोध्यम् । तन्मात्रवृत्तिरित्यस्य तद्वृत्तिस्तदितरावृत्तिरित्यर्थः । तदितरश्च तद्घटितप्रकृतस्थान्येव विवक्षितः । स्थानिसम्बन्धित्वं व्यपदेशिवद्भावातिदिष्टमपि गृह्यते । तद्घटितप्रकृतस्थानीत्यत्र तद्घटितत्वं व्यपदेशिवद्भावानतिदिष्टमेव गृह्यते । एवं च प्रदीव्येत्यत्र स्थानी क्त्वाप्रत्ययः । तत् सम्बन्धी चाल् तकारः तद्वृत्तिस्तदितरस्थानिभूतक्त्वाप्रत्ययावृत्तिर्यो धर्मः वल्त्वं तद्घटितधर्मो बलादित्वं तदाश्रयत्वादिड्विधेस्तत्र न स्थानिवत्त्वम् । एवं धिन्वन्तीत्यत्र स्थानिसम्बन्धी योऽल्व्यपदेशिवद्भावेनोकारः तद्वृत्तिधर्मः आर्धधातुकत्वरूपः स च स्थान्यलुकारेतरतद्घटितस्थानिनोऽभावात्तन्निरूपितवृत्तित्वस्य सुतरामभावात् स्थान्यलितरतद्घटितप्रकृतस्थानिनिरूपितवृत्तित्वाभाववान् जातः । तद्घटितो धर्मः व्यपदेशिवद्भावेन तदेवार्धधातुकत्वं तदाश्रयत्वादिटो न स्थानिवत्त्वमितीष्टं सिद्धम् । न च धिन्वन्तीत्यादौ स्थान्यलितरतद्घटितस्थानिनोऽसम्भवात्तन्निरूपितवृत्तित्वस्य सुतरामसंभवात्तदभावोऽप्रसिद्ध एव । अप्रसिद्धप्रतियोगिकाभावानङ्गीकारादिति वाच्यम् । नैयायिकमते तथा स्वीकारेऽपि वैयाकरणनये स्वमानुरोधेन बौद्धपदार्थाङ्गीकारेण बौद्धस्य तादृशवृत्तित्वस्य प्रसिद्धतया तदभावस्यार्धधातुकत्वे प्रकृते सत्त्वेनादोषात् । रामायेत्यादौ स्थानिसम्बन्ध्येकारवृत्तिसुप्त्वस्य तद्घटितस्थानिभूतङेवृत्तित्वात्तादितरावृत्ति न भवतीति न निषेधप्रसक्तिः । न च यादेशप्रवृत्तिकाले ङकाराभावेनैकारस्यैव स्थानितया तद्घटितप्रकृतस्थानिनोऽभावात्सुप्त्वं धिन्वन्तीत्यत्रार्धधातुकत्वसमकक्षमिति वाच्यम् । विशिष्टं ह्येषोऽनलमाश्रयते इटं नामेति भाष्यप्रामाण्यात् सूत्रोपात्तङे इत्यस्यैव स्थानित्वस्वीकारात् । स्पष्टं चेदमनेकाल्शिदिति सूत्रे प्रकृतसूत्रे चोद्योते । एवं नपुंसकाच्चेत्यत्रौङ एव स्थानितया निर्देशाद्विवचनत्वस्यौङ्यपि सत्त्वेन साम्नीत्यादौ द्विवचनत्वातिदेशे नायं निषेधः । नन्वेवमपि युवामित्यत्र प्रथमाद्विवचने विभक्तित्वातिदेशो न स्यात् । तत्रौप्रत्ययस्थानिकाम्यातिदिश्यमानविभक्तित्वस्य धिन्वन्ती

**तत्स्थानिसबन्धी च योऽल् तद्वृत्तिधर्माश्रये नेत्यर्थः। अत एव रेफस्थानिकविसर्गस्य रुशब्दत्वं न स्थानिवत्त्वेनेति "भोभगो"**

---

त्यादावतिदिश्यमानार्धधातुकत्वाविशेषादितिचेन्न । तदितरतद्घटितप्रकृतस्थान्यवृत्तिरित्यनेन तदितरस्तद्घटितः प्रकृतस्थानितावच्छेदकाक्रान्तो यस्तदवृत्तिरिति विवक्षणेनादोषात् । अम्विधौ प्रथमात्वस्य स्थानितावच्छेदकतया तदाक्रान्तत्वस्यौट्यपि सत्त्वेन तस्य स्थानिसम्बन्ध्यल्भूतौकारघटितत्वेन तदितरत्वेन च विभक्तित्वस्य तत्रापि वृत्तितया तत्र तदभावाभावेन तस्य स्थानिसम्बन्ध्यल्मात्रवृत्तित्वाभावः स्पष्ट एव । एवमेवान्यदोषाभासनिरसनं पूर्वसरणिमनुसृत्य स्वयमूहनीयमिति दिगित्याहुः ॥

प्रपठ्येत्यादौ निषेधप्रवृत्तये आह। **स्थानिसम्बन्धीति** । स्थानिसम्बन्ध्यल्वृत्तिधर्मघटितधर्माश्रये विधावित्यर्थः । न चैवमर्थस्वीकारे नपदान्तसूत्रस्थशब्दरत्नविरोधः । तत्र हि शिण्ढीत्यत्रानुस्वारे स्थानिभूतादचः पूर्वत्वं न स्थानिवत्त्वेन विशेषणतयाऽलाश्रयणादित्युक्तम् । अत्राश्रीयमाणस्याचोऽनुस्वारस्थानिसम्बन्धित्वाभावात्तदसङ्गतिरिति वाच्यम्। अल्वृत्तिधर्मघटितधर्मेऽतिदिदिक्षितत्वलाभार्थं स्थानिसम्बन्धीत्युपादानात् । अत एव वक्ष्यति न हि तत्र वलादित्वं स्थानितोलब्धम् । किन्तु स्वाश्रयमेवेति । एवं चाल्त्वव्याप्यधर्मघटितः अतिदिदिक्षितो यो धर्मस्तदाश्रये विधाविति फलति । तत्राद्यमर्थं प्रमाणयति। **अत एवेति। न स्थानिवत्त्वेनेति।** अन्यथा रुत्वस्य समुदायवृत्तितया द्वितीयनिषेधाप्रवृत्त्या तदसङ्गतिस्स्पष्टैव। नच भोभगो इत्यत्रापि र इत्यवृत्त्यभिप्रायकतया तद्भाष्यं योजनीयमिति वाच्यम्। एवं सति सर्वत्र निषेधप्रवृत्तिसाम्येन सुपरेऽन्यत्र च विशेषप्रदर्शनस्यासाङ्गत्यापत्तेः । नचास्य भाष्यस्यातो लोप इति सूत्रभाष्यविरोधेनैकदेश्युक्तित्वान्नार्थसाधकत्वम् । तत्र हि णिलोपांशे उदाहरणानि प्रदर्श्य सन्त्वेते विषयः, तेषु कृतेषु स्थानिवत्त्वेन णित्वाल्लोपो

**इत्यत्र भाष्ये स्पष्टम् । ऋधातोर्द्वित्वेऽभ्यासस्योरदत्वेऽरित्यस्य हलादिः शेषस्तु अरित्यस्य पुनः "पूर्वोऽभ्यासः" इत्यनेनाभ्यासत्वात् । तस्यापि द्विरुक्तधातुपूर्वभागत्वात् । प्रक्रियाज्ञानवतां तथा ज्ञानस्य सुलभत्वात् ॥**

---

भविष्यतीत्युक्तम् । अत्रेयङादिस्थानिताया अल्त्वव्याप्यधर्मावच्छिन्नत्वेन रुत्वणित्त्वयोरविशेषात्तत्तत् स्थानिवत्त्वकथनमसङ्गतमेव स्यादिति वाच्यम् । अततक्षदित्यत्रेयङि णित्त्वबुद्धावप्यलोऽन्त्यस्येति यकारमात्रस्यैव लोपप्रसक्त्या रूपसिद्ध्यभावेन तद्भाष्यस्यैकदेश्युक्तितया तद्बलेन प्रकृतभाष्यस्यैकदेश्युक्तित्वकल्पनाया अनौचित्यादिति बोध्यम् । आद्यार्थस्वीकारे लक्ष्यासिद्धिं परिहरति । **ऋधातोरित्यादिना** । **पुनः पूर्व इति** । लक्ष्ये लक्षणस्येति तु नात्र । आगच्छतमग्नी इत्यत्र पुनः प्रगृह्यसंज्ञाकरणपरभाष्येण संज्ञाविषये तदप्रवृत्तिबोधनादिति भावः । **द्विरुक्तधातुपूर्वभागत्वादिति** । अर्ऋ इत्यस्यैकदेशविकृतन्यायेन द्वित्वोद्देश्यविधेयमात्रारब्धसमुदायत्वे उत्तरखण्डे धातुत्वज्ञाने अवशिष्टे तन्निरूपितपूर्वत्वसमुदायघटकत्वे आर्थसमाजग्रस्ते इति भावः । नचार्थविकारसत्त्वेन तन्न्यायाप्रवृत्तिरिति वाच्यम् । जातिव्यञ्जकावयवसत्त्वे तत्प्रवृत्तेर्निराबाधात् । अत एव काविेत्यत्र कार्यकाले पदत्वसिद्धिः । तादृशसमुदायघटकस्यैव संज्ञाविधानेन देवदत्तयज्ञदत्तौ देभतुः ऊर्णुनावेत्यादौ नातिप्रसङ्गः । आनुमानिकस्थानिवत्त्वेन तु न तत्समुदायत्वम् । विशिष्टस्यानर्थक्यादिति बोध्यम् । अरित्यस्य द्विरुक्त धातुपूर्वभागत्वं तत्स्थानापन्न इति लोकन्यायेनेति श्रीधरोक्तिस्तु प्रक्रियाज्ञानवतामित्यक्षराननुगुणत्वाच्चिन्त्या । यत्तु तादृशसमभिव्याहृतवर्णाघटितत्वे सति द्विर्वचनीयविधेयपूर्वत्वमभ्यासत्वे प्रयोक्तमिति । तन्न । पदसंस्कारे देवदत्तयज्ञदत्तौ देभतुरित्यादौ देवदत्तादिपदघटकवर्णानां तदसमभिव्याहृतत्वेन दोषात् । तादृशस्थले सर्वत्र वाक्यसंस्कार एवाश्रयणीय इति वा तदाशयो वर्णनीय इति दिक् । तदेतदभिसन्धायाह । **प्रक्रियाज्ञानवता-**

अत एव धिन्वन्तीत्यादाविण् न। उकारवृत्त्यार्धधातुकत्वस्य

---

मिति। एकदेशविकृतन्यायेन समुदाये द्वित्वोद्देश्यविधेयोभयमात्रारब्धसमुदायत्वबुद्धौ ऋ इत्यस्य द्वित्वविधेयत्वबुद्धिः प्रक्रियाज्ञानाधीनेति भावः। आद्यमर्थं सफलयति। अत एवेति। इण्नेति। नचेटोऽपरनिमित्तकत्वेन यणो बहिरङ्गासिद्धत्वं शङ्क्यम्। नाजानन्तर्य इति निषेधात्। नचेटोऽजानन्तर्यं नेति वाच्यम्। अजानन्तर्यनिमित्तककार्यप्रवृत्त्युत्तरकालप्रवृत्तिकान्तरङ्गकर्तव्यतायामप्यसिद्धत्वाभावस्य तया बोधनात्। अत एवाक्षद्यूरित्यत्र यलोपो न। अजानन्तर्यनिमित्तककार्यमन्तरङ्गमेवेति निवेशे तु न मानम्। किंचापरनिमित्तकमन्तरङ्गमिति स्वीकारे नुटस्तथात्वेन तद्दृष्ट्या दीर्घस्यासिद्धत्वेन रामाणामित्यस्य कृते दीर्घे न नुड्भवेदिति भाष्यविरोधापत्त्या तत्परिहारायापूर्वनिमित्तकत्वे सतीति विशेषणस्यावश्यकतया प्रकृतेप्यङ्गात्परस्य वलादेरित्यर्थेऽन्तरङ्गत्वं वक्तुमशक्यम्। प्राचीननयेऽङ्गसंज्ञाद्यपेक्षणेनेडेव बहिरङ्गमिति सुवचम्। किञ्चापरनिमित्तकमन्तरङ्गमिति युगपत्प्राप्तौ पूर्वप्रवृत्तिनियामकमेव। ज्ञापकसाजात्यात्। नुड्विधायकसूत्रस्थं भाष्यमप्यत्रानुकूलम्। एवं चात्रासिद्धत्वस्य प्रसक्तिरेव न। किंच भविष्यतीत्यादिसिद्धये इड्विषयेऽसिद्धपरिभाषा न प्रवर्तत इत्यन्यत्र स्पष्टतया न तयात्र निर्वाहाशा कार्या। नचैव्यापि तस्य परयणोऽसिद्धत्वाद्यणि यलोपे बहिरङ्गपरिभाषाया अप्रवृत्त्या यलोपे इष्टसिद्धिरिति वाच्यम्। नाजानन्तर्यनिषेधेन परयणोऽसिद्धत्वाभावेन यण एव दौर्लभ्यात्। तदसत्त्वेऽपि यलोपे बहिरङ्गपरिभाषाप्रवृत्तेरन्यत्र सिद्धान्तितत्वेन यलोपानापत्तेश्च। नचैवमप्यचः परस्मिन्निति सूत्रे भाष्ये भावसाधनविधिशब्दमाश्रित्य पूर्वः स्यादिति स्थानिवद्भाव इत्यर्थेनैतत्सिद्धिरुक्तेति वाच्यम्। तद्वारणस्यैकदेशयुक्तित्वेनासाधकत्वात्। तथा हि भावसाधनत्वेऽपि पूर्वस्य स्थितिं प्रत्येव स्थानिवद्भावो नत्वपूर्वस्य पूर्वस्य विधौ तस्यानादिष्टादचः पूर्वत्वस्य वक्तुम-

वकारेऽनतिदेशात् । यत्तु अत्रेण्निवृत्तये स्वविधावपि स्थानिवत्त्वम-

---

शक्यत्वेन तस्य तत्त्वमावश्यकम् । किंचैतीति यन् न यन्नयन्नित्यत्रेणो यणः स्थानिवत्त्वेन आयन्नित्यत्राट इव तस्मान्नुडचीत्यस्यापत्तिरिति दिक् । आद्यार्थस्वीकारादेव इश्वाजश्च यजं तस्यापत्यमित्यर्थे याजिरित्यत्र नय्वाभ्यामित्यस्याप्रवृत्तिः यकारे पदान्तत्वस्य प्रकृतनिषेधेनानतिदेशात् । न च तत्रैयजिरित्येवेष्टम् । अत एव नय्वाभ्यामिति सूत्रे ऐचोरवयवत्वे इश्वाजश्वयजं ततस्तत्र भव इत्यणन्ताच्छप्रत्ययासिद्धिः फलम् । अन्यथा तत्रैकारस्य प्रातिपदिकावयवत्वाभावेन तद्विशिष्टस्य वृद्धत्वाभावाच्छो न स्यादिति वक्ष्यमाणं सङ्गच्छत इति वाच्यम् । तत्र हरदत्त इत्यरुचिबोधकपदोपादानेन नागेशस्यानादरावगमात् । अत एवानुनासिकात् पर इति सूत्रेऽयमागमोऽनवयव एवावयवत्वे मानाभावादिति वक्ष्यमाणतया तद्रीत्या ऐचोरप्यनवयवत्वप्रसक्त्याऽवयवत्वसाधकयुक्त्यप्रदर्शनं संगच्छते । न चैवमपि तत्रावयवत्वाङ्गीकार एवारुचिर्नागेशस्य न तु तत्रायज्विषय इति वाच्यम् । अनुस्वारागमस्यावयवत्वाभावव्यवस्थापनवदैचोरपि तत्त्वाव्यवस्थापनेन तयोरवयवत्वानवयवत्वयोः फलाभेद इत्यर्थस्य स्वरसतो लाभेन निरुक्तोदाहरणे ऐजभावबोधनात् । ऐयजीयमित्युदाहृत्य यद्येवंविधमभिधानमस्तीति यदिगर्भंवदता हरदत्तेन तस्यानभिधानबोधनाच्च । यद्यभिधानमस्तीत्येव वाच्ये एवं विधमिति वचनादन्यादृशस्य याजिरित्यादेरभिधानं सूचितमिति दिक् । एवमिधातोरेरचि अय इति जाते तेन सुशब्दस्य समासे स्वयिकेत्यत्र सुनयिकेत्यादाविव धात्वन्तयकोरिति नेत्यप्याद्यार्थस्वीकारे फलम् । भोभगो इति सूत्रभाष्येण तत्र वैकल्पिकेत्वप्रवृत्तेरिष्टत्वानुमानादित्यादि स्वयमूहनीयम् । नन्वाद्यार्थस्वीकारे तेनैव धिन्वन्तीत्यत्रेड्व्यावृत्तौ तदर्थं स्वविधावपि स्थानिवत्त्वमपरविधाविति न्यासेन भाष्यकृत्साधितमसंबद्धमेव स्या दत आह । यत्त्वि-

परविधाविति न्यासेन साधितं भाष्ये सा त्वेकदेश्युक्तिः। असिद्धवत्सूत्रेण सिद्धस्य।यन्नासन्नित्यादेस्तत्फतत्वेनोपन्यासात्। अस्यापि "अचः पूर्वत्वविज्ञानात्" इति वार्त्तिके पञ्चमीसमासेन सिद्धेः कैयटेनोक्तत्वाच्च। प्रदीऽय्येत्यादौ च वलादिलक्षण इण्न। स्थान्यलि-

---

त्यादि। असिद्धवत्सूत्रेणेति। संयोगान्तलोपे यणःप्रतिषेधः द्विर्वचनेचीत्यनयोरप्युपलक्षणमिदम्। इत्यादेरित्यादिना दध्यश्वो मध्वश्वः चक्रतु श्चक्रुरित्येतत्संग्रहः। नन्वायन्नासन्नित्यादे स्सिद्धावपि धिन्वन्तीत्यस्य सिद्ध्यर्थमेव स्वविधावपि स्थानिवद्भावः स्वीकार्यः। यस्य कस्य चिदन्यथासिद्धस्योदाहरणस्य दानमात्रेण तस्यैकदेश्युक्तत्वकल्पनं न न्याय्यमित्यत आह। अस्यापीत्यादि। कैयटेनोक्तत्वादिति। अयं भावः। आयन्नित्यादिसिद्धिः पूर्वमुपपादितैव। धिन्वन्तीति परमवशिष्यते। यद्येतदर्थमेव वार्त्तिकं स्यात्तदा व्यर्थ एवायं प्रयासः। भवदिष्टस्य स्वविधावपि स्थानिवत्त्वस्य पञ्चमीसमासेनापि सुसाधत्वात् एवं च वार्त्तिकफलानां सर्वेषामप्यन्यथासिद्धतया सर्वथा तद्भाष्यमेकदेश्युक्तमेवेति। वस्तुतस्तु स्वविधौ स्थानिवद्भावोऽनिष्ट एव। बेभीदीति लक्ष्यासिद्धेः। न च पञ्चमीसमासे स्वविधावपिस्थानिवद्भाव इष्ट एव बेभिदीत्यत्राजन्तस्त नुम्विधानेन न पञ्चमीसमासावकाश इति वाच्यम्। यन्निति शत्रन्तेन नञ्समासे पूर्वस्मान्निमित्तत्वेनाश्रितादित्यर्थेऽपि पञ्चमीसमासेन नुडापत्तेः। तदेतत्कैयटेनेति वदता सूचितमिति दिक्। एतेनैतेन धिन्वन्तीति प्रयोजनं शिथिलमिति सूचितमित्याचार्याः, इदं ग्रन्थकृत स्स्वाश्रित शाखाच्छेदन मनुकरोतीति वदन्तोऽन्ये च परास्ताः। द्वितीयमर्थं सफलयति। प्रदीऽय्येति। अन्यथा नत्यपीति लिङ्गादशास्त्रीयस्य क्त्वस्येव वलादित्वस्याप्यतिदेशापत्तिरिति भावः। अलि स्थानिसम्बन्धीति विशेषणेन लब्धमर्थं स्पष्टयितुमाह। स्थान्यलित्यादि। ननु वलादित्वस्य

त्युक्तेर्बभूविवेत्यादौ वलादिलक्षणेट्सिद्धिः। न हि तत्र वलादित्वं स्थानितो लभ्यं किं तु स्वाश्रयमेव ॥

यन्निमित्तवैकल्यप्रयुक्तोपदेशाप्रवृत्तावतिदेशो मृग्यते तस्य निमित्तस्य स्थान्यलसाधारणधर्मत्व एव निषेधप्रवृत्तेः। प्रकृते चार्द्धधातुकत्ववैकल्पप्रयुक्ताऽप्राप्तिर्न तत्स्थान्यलसाधारणं, यच्च तादृशावल्त्वघटितं वलादित्वं न तद्वैकल्यप्रयुक्ताऽप्राप्तिरिति बोध्यम्। प्रत्या-

---

स्वाश्रयत्वेऽपि स्थान्यल्वृत्तिधर्मत्वस्यानपायान्निषेधो दुर्वार इत्यत आह। यन्निमित्तेत्यादि। एवं च स्थानिसम्बन्धीति अल्त्वव्याप्यधर्मघटितधर्मे स्थानिवद्भावप्रयोज्यत्वमवगमयतीति भावः। स्थान्यलसाधारणधर्मत्व इति। स्थान्यलसाधारणो धर्मो यस्मिन् तत्त्वे, स्थान्यल्मात्रवृत्तिधर्मघटितधर्मत्व इत्यर्थः। स्थान्यल्मात्रवृत्तित्व इति व्याख्यानं तु यच्च तादृशं वल्त्वघटितं वलादित्वमित्युत्तरग्रन्थाननुगुणत्वादुपेक्ष्यम्। एतेन तत्र समस्तः पाठः। तादृशेत्यस्य वल्त्वेऽन्वय इति क्लिश्यन्तः परस्ताः। उकारवृत्त्यार्धधातुकत्वस्याल्मात्रवृत्तिधर्मत्वेऽपि तद्घटितत्वं व्यपदेशिवद्भावेन बोध्यम्। यत्तु स्थान्यल्वृत्तित्वे सत्यल्मात्रवृत्तित्व इत्यर्थ इति प्रकाशकृत् तन्न। स्थान्यल्मात्रवृत्तीत्यादेरेव शब्दतो लाभात्। धिन्वन्तीत्यत्रार्धधातुकत्वस्य क्वचित् समुदायवृत्तित्वेनाल्मात्रवृत्तित्वाभावेन निषेधाप्रवृत्त्या पूर्वग्रन्थविरोधात्। न चैतद्द्वितीयार्थतात्पर्येणैव प्रवृत्तमिति न विरोध इति वाच्यम्। आद्यार्थेऽप्यतिदिश्यमानधर्मे स्थान्यल्मात्रवृत्तित्वस्योद्योततो लाभादिति दिक्। नन्वेवं युवोरनाकावित्यत्राकादेशे कृत्वातिदेशसिद्धये वु इति समुदायस्यैव स्थानिताया अवश्यं स्वीकर्तव्यतया प्रकृतनिषेधाप्रवृत्त्या वुत्वातिदेशे तद्विरुद्धाल्त्वाश्रयायादिर्न स्यादत आह। प्रत्यासत्त्येति। अनल्विधावित्यत्र विधिग्रहणाच्छास्त्रीयकार्य एव निषेधप्रवृत्त्या तत्प्रत्यासत्त्या विधिकोटेरपि शास्त्रीयकार्य एव प्रवृत्तिरिति भावः। शास्त्री-

**सत्त्या च शास्त्रीयकार्ये एव स्थानिवत्त्वं, तेन नायकसिद्धिः ॥**

**प्राधान्यात्कार्यातिदेशोऽयम् । शास्त्रातिदेशस्तु कार्यातिदेशा-**

---

**येति**। शास्त्रेण साक्षाद्बोधितेत्यर्थः। तेनानाचि आयभावस्य शास्त्रतात्पर्यविषयत्वेऽपि न क्षतिः। **नायकसिद्धिरिति** । ननु यो ह्यादेशो नासावाश्रीयते यश्चाश्रीयते नासावादेश इत्यचः परस्मिन्निति सूत्रभाष्योक्तरीत्याऽवयवाश्रयादेशे तत्सिद्धिः। न च तुल्ययुक्त्या इयायेत्यत्रापीयङ् प्रवृत्तौ स्थानिवत्त्वेनेयङ् न स्यादिति परिभाषेन्दुशेखरासङ्गतिरिति वाच्यम् । तत्र फलबलेनासवर्ण इति प्रसज्यप्रतिषेधाङ्गीकारेण विशिष्टे सवर्णत्वाच्त्वयोरतिदेशे निषेधापत्तिरित्याशयेनादोषात्। अत एवेयेषेत्यस्य सिद्धिः । अन्यथेयायेत्यत्र सूत्रसार्थक्येन स्थानिवत्त्वनिषेधज्ञापनायोगात्तदसिद्धिः । विस्तरस्तु परिभाषेन्दुटिप्पणीतोऽवसेयः । न च स्थानी न निवृत्तः आदेशो न जात इति संभावनायां यद्भवति तद्भवति यन्न तन्नेति प्रकाशकृदुक्तरीत्या निर्वाह इति वाच्यम् । एवं सति रामायेत्यादौ दीर्घानापत्तेः । न च स्थानिन्यादेशवृत्तिधर्मसंभावनायां यद्भवति तद्भवति यन्न तन्नेत्यर्थान्तरस्यापि कल्पनेनादोष इति तेनैव समाहितमिति वाच्यम् । एवमपि निषेधाश्च बलीयांस इति न्यायेन पूर्ववाक्येन दीर्घाप्रवृत्तेः तदवस्थत्वात् । वाक्यद्वयकल्पने गौरवाच्च । यो ह्याश्रीयत इति भाष्यविरोधेन स्थानी न निवृत्त इत्याद्यर्थस्यैवमपि वक्तुमशक्यत्वाच्चेति चेन्न । एवमपि चक्रे इत्याद्यसिद्धेः, नायक इत्युपन्यासस्तु परस्मिन्निति किम्, युवजानिरित्युपन्यास इतिवत् प्रकृते स्थानिवत्त्वस्य वस्तुतोऽविषयत्वमिति बोधयितुमिति बोध्यम् । **प्राधान्यादिति** । शास्त्रजन्यबोधीयमुख्यविशेष्यताश्रयत्वादित्यर्थः । **कार्यातिदेश इति** । प्रधानाप्रधानसाधारण्येन शास्त्रविधेयकार्यमात्रातिदेश इत्यर्थः । ननु आङ्गशास्त्रातिदेशात् सिद्धमिति वार्त्तिकेन शास्त्रातिदेशत्वलाभेन कथं कार्यातिदेशत्वव्यवस्थापनमित्यत आह । **शास्त्रातिदेशस्त्वित्यादि** । **अभिन्न-**

दभिन्नरूपः । तस्यापि कार्यफलकत्वादिति तृज्वत्सूत्रे कैयटः । भाष्येऽपि "तत्राङ्गशास्त्रातिदेशात्सिद्धमाङ्गं यत्कार्यं तदतिदिश्यते" इत्युक्त्या तयोरभिन्नरूपत्वं सूचितम् । तत्रानपेक्षितार्थसन्निधानस्तत्तन्निमित्तरूपकार्यव्यवहार एवानेन ।

---

रूप इति । शास्त्रस्य कार्यसमर्पकत्वातिरिक्तव्यापाराभावात्तयोरभेद इति भावः । तदाह । तस्यापीति । ननु कार्यातिदेशशास्त्रातिदेशयोर्भेदेन व्यवहारादभेदोक्तिरप्रामाणिकीत्यत आह । भाष्येऽपीत्यादि । अभिन्नरूपत्वं सूचितमिति । यत्तु वस्तुतस्तु कार्यातिदेशादभिन्नरूप इति चिन्त्यमेव। कार्यफलकत्वस्य सर्वेष्वतिदेशेषु सत्त्वेन सर्वेषामेवैवमभिन्नरूपतापत्तेः । भाष्यन्तु प्रथमं वार्त्तिकं शास्त्रातिदेशमभिप्रेत्योक्त्वापि प्राधान्यात् कार्यातिदेशस्यौचित्येन आङ्गं यत्कार्यमिति वक्तव्यमित्यभिप्रायकं वार्त्तिके शास्त्रपदस्योपलक्षणत्वाभिप्रायकं वेति प्रकाशकृत्तन्न । तृज्वत्सूत्र एव भाष्ये रूपातिदेशकार्यातिदेशयोः फलभेदस्य दर्शितत्वात् । वार्त्तिकस्योपलक्षणतया नयने तात्पर्यस्य वक्तुमशक्यत्वाच्च । अत एवोत्तरभाष्येपि शास्त्रातिदेशमाश्रित्य विचारः कृत इति दिक् । नन्वत्र प्राधान्यं कार्यातिदेशस्वीकारेऽसाधारणो हेतुः । तच्च विधिशास्त्रविधेयस्यैव न तु गुणशास्त्रविधेयस्य तस्यापि विध्यङ्गतया अप्रधानत्वात् । तथा चास्यैव दीर्घादिविधायकत्वे रामायेत्यादाविव रामस्येत्यादावपि दीर्घः स्यादित्यत आह । तत्रेति । यत्र प्रधानाप्रधानकार्ययोरतिदेशप्रसक्तिस्तत्रेत्यर्थः । अनपेक्षितार्थसन्निधान इति । अनपेक्षितं अर्थस्य विषयस्य स्वादिसूत्रघटकत्वादेस्सन्निधानं साहित्यं यस्मिन्निति विग्रहः । निमित्तरूपकार्येति । दीर्घादिविधौ निमित्तभूतसुबादिसंज्ञारूपकार्येत्यर्थः । व्यवहार एवेति । अतिदेश एवेत्यर्थः । एवकारः विधिशास्त्रविधेयकार्यव्यवच्छेदार्थः । वधेरात्मनेपदविषयेऽपि स्वरूपमिति शास्त्रविधेयसंज्ञाया एवातिदेशो नत्वात्मनेपदस्य । अर्धजरतीयस्यानौचित्यात् ।

कार्यं तु स्वशास्त्रेणैवेति। अत एव रामायेत्यादौ "स्थानिवत्त्वेन सुप्त्वात् सुपि चेति दीर्घः" इति सङ्गच्छते। परिवीरित्यादौ परत्वाद्दीर्घ इति च सङ्गच्छते। यद्वा किं चिन्निमित्तवैकल्येऽपि दीर्घादिकार्यमनेन क्रियते। तच्च कार्यं किमित्याकाङ्क्षायां तत्स्वरूपनिर्णयस्य विधिशास्त्रमूलकत्वेन तद्देशेनैव परशास्त्रविहितत्वरूपं परत्वं तेषां बोध्यम्। एतदेवाभिप्रेत्यातिदिश्यमानकार्याणामुपदेशदेश एव देश इत्यभियुक्ताः॥

अत्राऽऽद्यपक्ष एव भाष्यसंमतः। अत एव "स्थान्यल्विधिप्रतिषेधे कुरुवधापिबां प्रतिषेधो वक्तव्य" इत्येतदुपपादनावसरे

---

एतेन यत्र प्रधानकार्यस्यैवातिदेशसंभवः, यथा वधेरात्मनेपदं तत्र तस्यैवातिदेशः। यत्र तूभयोः संभवः यथा रामायेत्यादौ दीर्घस्सुप्संज्ञा च तत्राप्रधानस्यैवातिदेश इति प्रकाशकृदुक्तिः परास्ता। एवकारस्वारस्यभङ्गापत्तेश्च। कार्यन्त्विति। प्रधानकार्यन्त्वित्यर्थः। स्वशास्त्रेणैवेति। अस्य बोध्यमिति शेषः, वक्ष्यमाणेन बोध्यमित्यनेनान्वयो वा। उक्तमर्थं प्रमाणयति। अत एवेति। सुप्त्वादिति। सुप्संज्ञकत्वादित्यर्थः। संगच्छत इति। अन्यथा स्थानिवत्त्वेन दीर्घ इत्येव वक्तव्यतया एवमुक्तेरसांगत्यं स्पष्टमेवेति भावः। परत्वाद्दीर्घ इति संगच्छत इति। अन्यथोभयोरनेनैव विधानेन परत्वोक्तिर्व्याहन्येतेति भावः। नन्वप्रधानकार्यातिदेशेऽपि प्रधानकार्यस्य तत्तच्छास्त्रप्रवृत्त्यपेक्षिततया शास्त्रद्वयव्यापार आवश्यकः। प्रधानकार्यातिदेशे तु एकस्यैवेति लाघवमित्याह। यद्वेति। ननु परत्वादीर्घ इति भाष्यविरोधोऽत आह। तच्चेति। अत्र लाघवेऽपि पूर्वपक्षस्यैवौचित्यं भाष्यसंमत्या द्रढयति। अत्राद्यपक्ष एवेति। अप्रधानकार्यातिदेशपक्ष एवेत्यर्थः। अत एवेति। अत्रैवेति पाठः, भाष्योक्तेरिति पञ्चम्यन्तानुरोधात्। प्रकृतसूत्र एवेत्यर्थः। अत एवेति पाठेतु भाष्योक्तिरिति तत्र प्रथमान्तपाठ इति बोध्यम्।

"स्थानिवद्भावादङ्गसंज्ञा स्वाश्रयं च लघूपधत्वादि, तत्र लघूपधगुणादिः प्राप्नोति" इत्यादिभाष्योक्तेरिति बोध्यम्। एवं यन्निमित्तवैकल्यप्रयुक्तोपदेशाप्रवृत्तिस्तन्निमित्तातिरिक्तसर्वनिमित्तकत्वमतिदे -

---

अङ्गसंज्ञेति। एवं चाप्रधानकार्यातिदेशस्य कण्ठतो लाभेन फलबलेन चाद्यपक्षस्यैव ज्यायस्त्वमिति भावः। द्वितीयपक्षे त्वदुक्तलाघवावकाशोऽपि नेति सूचयन् तत्पक्षे रामस्येत्यादौ दीर्घादिवारणायाह। एवमिति। यन्निमित्तेति। अतिदेशयोग्ययन्निमित्तेत्यर्थः। एवंच रामस्येत्यत्रातिदेशयोग्यसुप्त्वरूपनिमित्तवैकल्येनोपदेशाप्रवृत्तौ तदतिरिक्तयञादित्वमतिदेशस्यापि निमित्तमिति तदभावान्न दीर्घ इति भावः। यत्तु अत्र निमित्तपदेन सादृश्यप्रतियोगितावच्छेदकव्यापकधर्मस्यैव ग्रहणम्। णिरिष्ठवदिति वाक्ये सादृश्यप्रतियोगितावच्छेदकेष्ठत्वव्यापकत्वं नाजादित्वस्य। इष्ठत्वस्य यिड्विशिष्टेपि सत्त्वादतोऽजादित्वस्य यन्निमित्तेत्यनेनन धर्तुमशक्यत्वेन स्वादित्वस्यैव धर्तव्यतया तदतिरिक्ताजादित्वमतिदेशेपि निमित्तम्। यद्वा सादृश्यानुयोगितावच्छेदकव्यापकीभूताभावप्रतियोगिभूतधर्मस्यैव ग्रहणम्। एवं चाजादित्वस्यातथात्वान्न दोष इति तन्न। ऐस् भिस्वादित्यत्र झलादित्वस्य सादृश्यप्रतियोगितावच्छेदकभिस्त्वव्यापकत्वेन सादृश्यानुयोगितावच्छेदकैस्त्वव्यापकाभावप्रतियोगित्वेन च यन्निमित्तेत्यनेनेन धर्तुं शक्यत्वेन तदतिरिक्तत्वस्य वक्तुमशक्यत्वेन तस्यातिदेशेऽनिमित्तत्वे रामैरित्यत्र बहुवचने झल्येदित्यस्यापत्तेः। न च तत्रैसोऽपवादत्वेन तत्प्रवृत्त्युत्तरं नैतत्प्रवृत्तिरिति वाच्यम्। माठरकौण्डिन्यन्यायविषयत्वेनोत्सर्गप्रवृत्तौ बाधकाभावात्। एतेनातिदेशारंभप्रयोजकीभूताभावप्रतियोगिनो निमित्तस्य ग्रहणमिति वदन्तः परास्ताः। उक्तस्थले झलादित्वस्य तादृशत्वेन पूर्वोक्तरीत्या दोषात्। यत्तु एतन्मतखण्डनाय पटुशब्दाण्णिचि क्विपिभ्यामि पड्भ्यामित्यादौ णाविष्ठवदित्यतिदेशारंभप्रयोजकीभूताभावप्रतियोगित्वस्याजादित्वे सत्त्वेनेष्ठवदित्यतिदिष्टभत्वस्य वर्णाश्रयत्वमिति व्यवहा-

**शस्यापि। अत एवेष्ठवद्भावेनातिदिष्टभत्वस्य वर्णाश्रयत्वमित्यादि-व्यवहारः। सर्वातिदेशेष्विदं तुल्यम्। यन्निमित्तवैकल्यप्रयुक्तोपदेशाप्रवृत्तिस्तन्निमित्तं शास्त्रीयमेव, प्रत्यासत्तेः॥**

---

रसाङ्गत्वं हेतुतयोपन्यस्तम्। तदतिस्थवीयः। प्रत्ययलक्षणरूपातिदेशस्याजादित्वाद्यभावप्रयुक्तत्वेऽपि इष्ठवदित्यतिदेशस्यातथात्वात्। **अतिदेशस्यापीति**। एतेन प्रधानकार्यातिदेशे प्रत्युतैतदर्थस्वीकाररूपं गौरवमिति सूचितम्। उक्तार्थे मानं दर्शयति। **अत एवेति**। **वर्णाश्रयत्वमिति**। अत एव पड्भ्यामित्यत्र भत्वस्य प्रत्ययलक्षणेनानातिदेशे पदत्वेन जश्त्वसिद्धिरिति बोध्यम्। नन्वनेनेष्ठवदित्यतिदेशस्यातिरिक्तसर्वानिमित्तकत्वलाभेऽपि प्रकृतस्य कथं तत्त्वलाभ इत्यत आह। **सर्वातिदेशेष्विति**। **इदम्**। **यन्निमित्तेत्यादि**। **तुल्यमिति**। कार्यातिदेशे कार्यस्वरूपनिर्णयस्य विधिशास्त्राधीनतया तदुपस्थितौ तत्रोपात्तनिमित्तेषु कस्य चिदभावेनातिदेशारम्भ इति जानतः तदतिरिक्तानिमित्तसत्त्वज्ञानं तस्य नान्तरीयकमिति युक्तेः साम्यादिति भावः। **शास्त्रीयमेवेति**। तत्त्वं च शास्त्रस्थपदप्रयोज्यविषयतावच्छेदकत्वम्। वलादित्वमपि वलादेरिति पदप्रयोज्यविषयतावच्छेदकतया शास्त्रीयमेव। तासौ नित्यानिट्त्वावच्छिन्नविषयताप्रयोजकं पदं न शास्त्रस्थमिति न तस्य तत्त्वम्। अत एव जघसिथेत्यादौ तदनतिदेशेन नेड्विकल्पः। अनादिष्टादचः पूर्वत्वमप्यशास्त्रीयमेव। अतः ब्राह्मणकण्डूतिरित्युदाहरणस्य वक्ष्यमाणज्ञापकतासङ्गतिरिति बोध्यम्। एतेन वस्तुतस्तु अशास्त्रीयस्याप्यनेनातिदेशः। कथमन्यथा वलादित्वातिदेशप्रसक्तिः। न चैवं तासौ नित्यानिट्त्वातिदेशापत्तिरिति वाच्यम्। वस्तुतस्तासि सत इत्यर्थाश्रयणेनातिदेशेप्यदोषात्। अनादिष्टादचः पूर्वत्वं तु नातिदेशेन। विशेषणतयाऽलाश्रयणादित्याचार्योक्तमपास्तम्। नागेशमतेऽनादिष्टादचः पूर्वत्वघटकाच्त्वस्य स्थान्यवयवालधर्मत्वाभावेन निषेधाविषयत्वाच्च। शब्दरत्न-

स्थानिवदित्युक्तेः संबन्धिशब्दमहिम्नैवादेशलाभे आदेश-ग्रहणं श्रौतस्थान्यादेशभावस्यैव ग्रहणमिति शङ्कावारणद्वारा 'एरुः' इत्यादौ शब्दानित्यत्ववारणाय "सर्वे सर्वपदादेशाः" इति न्यायेन कल्प्यमानस्य तेस्तुरित्यानुमानिकादेशस्यापि संग्रहार्थम्। तेन पचत्वित्यादेः पदत्वसिद्धिरिति भाष्ये स्पष्टम्॥

ननु तोऽस्तित्वमपि छिन्नपुच्छे शुनि श्वत्वव्यवहारवल्लोकन्या-येनैव सिद्धम्। तदुक्तं "प्राग्दीव्यतोऽण्" इति सूत्रे भाष्ये "दीव्यतिशब्दैकदेशादीव्यच्छब्दानुकरणमिदम्" इत्युक्त्वा "किमर्थं विकृतनिर्देश, एतदेव ज्ञापयत्याचार्यो भवत्येषा परिभाषा एकदेश-विकृतमनन्यवत्" इति। अत एवात्र विकारोऽशास्त्रीयोऽपि।

---

ग्रन्थस्तु प्राचीनानुसारेणेति बोध्यम्। सम्बन्धिशब्दत्वेनेति। तत्त्वं च निरूपकांशे नित्यसाकाङ्क्षं यद्रूपं तद्रूपावच्छिन्नबोधकत्वं। स्थानिता चादेशतांशे नित्यसाकाङ्क्षमिति बोध्यम्। आदेशलाभ इति। पितृवदधीत इत्यादौ पुत्रादेरिवेति भावः। श्रौतस्थान्यादेशभावस्यैवेति। प्रत्यक्षत्वेन शीघ्रो-पस्थितिकत्वादिति भावः। शब्दानित्यत्ववारणायेति। न च एःप्रसङ्गे उरि-त्यर्थेन नानित्यत्वप्रसक्तिरिति वाच्यम्। तस्यानर्थक्येनार्थबोधनाय प्रसङ्गस्य वक्तु-मशक्यत्वात्। अवयवत्वेन प्रसङ्गे तु अवयवान्तरप्रादुर्भावपूर्वावयवोपगमादनित्य-त्वमिति बोध्यम्। पदादेशा इत्यत्र पदपदमर्थवदुपलक्षणम्, तत् सूचयन्नाह। तेस्तु रिति। पदत्वसिद्धिरिति। तौतिबुद्ध्या तिङ्त्वे विशिष्टे पदत्वमार्थसमाजग्रस्त-मिति भावः। यत्तु तेस्तुरित्युपलक्षणम्, पचतीत्यस्य पचत्वित्यादेश इत्यस्यापीति। तन्न। अर्थस्यान्यथात्वेनेत्यादिवक्ष्यमाणग्रन्थासाङ्गत्यापत्तेः। अत एवेति। प्राग्दीव्यत इत्यत्राशास्त्रीयविकारस्याप्याश्रयणादेवेत्यर्थः। अशास्त्रीयोपीति। अत एव रामावित्यत्र मान्ते यस्माद्विहितस्तदादित्वमनेन साधितमिति बोध्यम्।

अत एव आयसशब्दादणन्ताद् द्विवचने आयसावित्यत्र वृद्धौ कृतायां सान्तस्योगित्त्वेनानेन न्यायेनाङ्गतया प्राप्तो नुम् पूर्वसंबन्धिविधित्वेनाचः परस्मिन्निति स्थानिवत्त्वेन वारितोऽचः परस्मिन्निति सूत्रे भाष्ये। एतन्न्यायानाश्रयणे त्वङ्गत्वमेव दुर्लभम्। अन्तादिवत्सूत्रे भाष्यकैयटयोरपि गुडोदकमित्यादावेकादेशे कृते दकशब्दस्यानेन न्यायेनोदकशब्दत्वमाश्रित्य "उदके केवले" इति पूर्वपदान्तोदात्तत्वमुक्तम्। शब्दानित्यत्वं तु रेखागवयन्यायेन समाधेयम्। अनन्यवदित्यस्यान्यवन्नेत्यर्थः। तत्रान्यसादृश्यनिषेधेऽन्यत्वाभावः

---

अत एवेति। अशास्त्रीयविकारेऽप्यतिदेशप्रवृत्तेरिष्टत्वादेवेत्यर्थः। दुर्लभमिति। न चाण्यसाद्विहितस्तत्त्वं सान्ते सुलभमिति वाच्यम्। प्रत्यासत्त्या नुम्निमित्तनिमित्तकाङ्गत्वस्यैव तत्रापेक्षणात्। न चैकादेशे सर्वनामस्थानत्वाण्त्वयोस्सत्त्वेनाण्विधानावधौ पुनः प्रवृत्ताङ्गसंज्ञायास्सर्वनामस्थाननिमित्तकतापीति वाच्यम्। एवमप्यकारघटिते तत्त्वस्य न्यायाधीनत्वात्। न चानुमानिकस्थानिवद्भावेन तत्सिद्धिरिति वाच्यम्। औ इत्यस्याप्यर्थवत्त्वेन तस्य स्थानिधर्मत्वाभावादिति भट्टाः। वस्तुतस्तु वीवधे विवधत्वसिद्धयेऽर्थवत्समुदायेऽप्यानुमानिकस्थानितया अभ्युपगन्तव्यतया तादृशमङ्गत्वं सुलभमेव। परन्तु औबुद्ध्या सर्वनामस्थानसंज्ञाप्रवृत्त्या तद्बुद्ध्या यस्याङ्गसंज्ञा तत्स्थाया एव सर्वनामस्थाननिमित्तकत्वमिति प्रकृते आयस्वृत्त्यङ्गत्वस्य दौर्लभ्यमित्येव नागेशाभिप्रायः। अत एवास्याशास्त्रीयविकारेऽपि प्रवृत्तौ प्रमाणतयोपन्यासस्संगच्छते। न च न्यायाश्रयणे प्रमाणतया तथोपन्यास इति वाच्यम्। सन्दर्भस्वारस्यभङ्गापत्तेः। एतन्न्यायानाश्रयणे इति तु अशास्त्रीयविकारे एतदनाश्रयण इत्यर्थमिति न तत्स्वारस्यभङ्ग इति बोध्यम्। उक्तमिति। पूर्वोत्तरपदनिमित्तककार्यादित्यनाश्रित्यैतद्भाष्यं प्रवृत्तम्। नन्वेतन्न्यायेन शब्दानां विकारित्वावगमान्नित्यताहानिरित्यत आह। शब्देति। अन्यवन्नेत्यर्थ इति।

सुतरामिति चेन्न । अर्द्धस्यान्यत्वे जातिव्यञ्जकभूयोऽवयवदर्शनाभावेन तौ तित्त्वप्रतीतेर्न्यायेनानुपपादनात् । किं च तिङ्सञ्ज्ञायास्तिबादिसूत्रोपात्तपरिच्छिन्नपरिमाणनिष्ठतया परिच्छिन्नपरिमाणार्थवाचकशब्दानां न्यूनेऽधिके वा शास्त्रव्यापारं विनाऽप्रवृत्तेर्येन विधिरिति सूत्रेऽङ्गसंज्ञासूत्रे च भाष्ये उक्ततया तदभावात् । न्यूनाधिकत्वञ्च वैरूप्यस्योपलक्षणम् ।

---

वत्यन्तेन नञ्समास इति भावः । **जातिव्यञ्जकेति** । अनेन यत्रार्थविकारेपि जात्यभिव्यक्तिः तत्र भूयोऽवयवदर्शनाभावेऽपि न्यायप्रवृत्तिरिति सूचितम् । तेनारेत्यादौ पुनरभ्याससंज्ञासिद्धिरिति दिक् । **अनुपपादनादिति** । तेनाशब्दादमि अमित्यत्र पूर्वान्तवत्त्वेनाकारेऽङ्गत्वमनेन मकारे सुप्त्वं चाश्रित्य सुपि चेति न दीर्घ इति बोध्यम् । ननु तिङ्त्वजातेरभिव्यञ्जकं तत्र तकार एव, अत एव अपचादित्यत्र तादृशार्थबोध इति कैयटोक्तरीत्या न्यायेन सिद्धिस्सूपपादेत्यरुचेराह । **किंचेति** । **परिच्छिन्नपरिमाणनिष्ठतयेति** । परिच्छिन्नं प्रातिस्विकरूपेण गृहीतं परिमाणमानुपूर्वी यस्य तादृशतिशब्दादिनिष्ठतयेत्यर्थः । यद्यपि लोके द्रोणाढकादावेवैवं व्यवहारस्तथापि परिच्छित्तिसाधनत्वाविशेषाच्छास्त्रे वर्णानुपूर्वीविशेषेऽपि तथाव्यवहार इति बोध्यम् । **परिच्छिन्नपरिमाणार्थवाचकेति** । तादृशानुपूर्वीविशेषवदर्थवाचकेत्यर्थः । **न्यूने इति** । अत एव भयशब्दे नोभयशब्दत्वातिदेश इति भावः । यत्तु एतदसाधारणोदाहरणं सजुषमाचष्टे सगित्यत्र रुत्वाभावः । आनुमानिकस्तु न सजुषोप्यर्थवत्त्वेन सजुष्ट्वस्य स्थानिधर्मत्वाभावादिति । तन्न । सत्यभिधाने वीवधे विवधत्ववदानुमानिकेन तत्त्वस्यातिदेशे रुत्वस्य दुर्वारत्वात् । **अधिके वेति** । अत एव वानरशब्दे न नरशब्दत्वातिदेश इति भावः । **शास्त्रव्यापारं विनेति** । तत्सत्त्वेतु भवत्येव सर्वके सर्वशब्दत्ववदिति भावः । **भष्ये इति** । तत्र हि संज्ञाशब्दाः परिमाण

शब्दाश्चैकेनाप्यपाये न भवन्तीत्युपपाद्य, अङ्गसंज्ञा ह्यक्तपरिमाणानां क्रियते सा केनाधिके स्यादित्याशंक्य तन्मध्यपतितन्यायज्ञापनाद्भवतीति समाहितम्। नेदमदसोरकोरित्यत्राकोरित्यस्याधिके प्रवृत्तिं विना चारितार्थ्यभावेन तावत्पर्यन्तं तस्य व्यापार इति तदाशयः। नचैवं दीव्यच्छब्दे दीव्यतिशब्दातिदेशः कथमिति वाच्यम्। तत्रार्थस्यैवावधित्वेनाभिप्रेतत्वेन दीव्यतिशब्दवृत्त्यर्थबोधकत्वस्यैवारोपेण तस्य तत्त्वाभावात्। ननु तेस्तौ न कश्चिदवयवोऽधिको नापि न्यूनः। किन्तु कश्चिदवयवो विकृतः तत्कथं न्यायप्रवृत्तिरित्यत आह। न्यूनाधिकत्वं चेति। न्यायतौल्यादिति भावः॥

केचित्तु तिङ्त्वमतिदेशेन सुलभम्। तस्याक्तपरिमाणनिष्ठत्वेऽप्यक्तपरिमाणत्वाभावात्। अक्तपरिमाणसामानाधिकरण्यं तु न न्यायप्रतिबन्धकम्। न्यायस्य निर्विषयत्वापातात्। ज्ञापनपरभाष्यविरोधाच्च। किंचाङ्गसंज्ञाया अक्तपरिमाणनिष्ठतायाः पूर्वोदाहृतभाष्यतो लाभेन श्रायसावित्यत्रानेन न्यायेनाङ्गसंज्ञोपपादकभाष्यविरोधः। एवं गुडोदकमित्यत्र दकशब्दत्वानयनासङ्गतिश्च। किं च प्राग्दीव्यतोऽणिति सूत्रे उक्तपरिभाषां ज्ञापयित्वा तेनैव पचत्वित्यादौ पदत्वे सिद्धे स्थानिवत्सूत्रे एकदेशविकृतस्योपसंख्यानं चोदितम्, तन्न वक्तव्यं भवतीति भाष्यकैयटविरोधश्च। तस्मादक्तपरिमाणग्रहणे यत्रातिप्रसङ्गस्तत्र न्यायानित्यत्वेनैव परिहारो युक्ततर इत्याहुः। तन्न। तिङ्पदस्य निपातपदवत् तिप्त्वादिनैव बोधकतया तिङ्पदबोध्यतारूपस्य तिङ्त्वस्याक्तपरिमाणावच्छिन्नतयाक्तपरिमाणावच्छिन्नधर्मस्याप्यनतिदेश इत्यङ्गीकारेण तिङ्त्वस्यातिदेशेन दुर्लभत्वात्। अङ्गशब्दस्य प्रातिपदिकपदवत् तत्तद्रूपेणार्थोपस्थापकत्वाभावेनाङ्गत्वं न्यायेन सुलभमिति श्रायसावित्येतद्विरोधाभावात्। अङ्गसंज्ञासूत्रस्थभाष्यमप्येकदेश्युक्तिरेवोक्तभाष्यविरोधात्। दकशब्दस्योदकशब्दत्वातिदेशोऽप्येकदेशिन एव। पूर्वोत्तरपदनिमित्तककार्यादित्यस्याज्ञानेन प्रवृ-

**न च तण्डुलानित्यादौ स्थानिवद्भावेन प्रत्ययान्तत्वेऽपि स्वतः प्रत्ययान्तभिन्नत्वात्प्रातिपदिकत्वापत्तिरिति वाच्यम् । अतिदेशस्व-**

---

त्तत्वात् । प्राग्दीव्यत इति सूत्रस्थं भाष्यमप्येकदेशयुक्तिरेव । प्रकृतसूत्रे भाष्ये एकदेशविकृतन्यायेनोपसंख्यानाकर्तव्यतामुपपाद्यानित्यत्वविज्ञानं तु भवतीत्यादिना प्रत्याख्यानस्य दूषितत्वात् । अतिप्रसङ्गस्यानित्यत्वेन वारणमपि न सम्यक्, अननुगतानित्यत्वस्य नागेशानभिप्रेतत्वात् । परिभाषेन्दुशेखरे तदुपन्यासस्तु प्राचीनानुसारेणैव इण्धातुस्थशेखरतस्तथैव लाभादिति दिक् ॥

नन्वत्र सूत्रे स्थानिनि यन्न तन्नेत्यर्थानङ्गीकाराद्ग्रामानित्यादौ प्रातिपदिकत्वापत्तिः । न च स्थानिनि भवतो निषेधस्यादेशे भवनमिति वाच्यम् । निषेधस्याशास्त्रीयकार्यत्वेनातिदेशाप्रवृत्तेरित्याशयेन शङ्कते । **न चेति** । **तण्डुलानिति** । आदिना अचिनवमित्यस्य संग्रहः । **स्थानिवत्त्वेनेति** । एकादेशे सान्ते परादिवत्त्वेन प्रत्ययत्वेन स्थानिवत्त्वेन नान्ते तदतिदेशस्सुलभः प्रत्ययान्तत्वमार्थसमाजग्रस्तम् । प्रत्ययान्तत्वं न स्थानिवत्त्वेनाशास्त्रीयत्वादिति भट्टप्रकाशकारौ । वस्तुतस्तु प्रत्ययान्तत्वस्यापि पूर्वोक्तरीत्या शास्त्रीयत्वेन विशिष्टातिदेश एव नागेशाभिप्रेतः । अत एव स्वतः प्रत्ययान्तभिन्नत्वादिति स्वरसत उपपद्यते । प्रत्ययान्तभिन्नत्वस्यातिदिश्यमानप्रत्ययत्वाविरुद्धत्वेन वक्ष्यमाणसमाधानासङ्गत्या तदुक्तव्याख्यानमलग्नकमेव । वलादित्वस्य शास्त्रीयत्वं ब्रुवतोरनयोः किमपराद्धं प्रत्ययान्तत्वेनेति बोध्यम् । **प्रत्ययान्तभिन्नत्वेनेति** । न च स्थानिवत्त्वेन प्रत्यायान्तत्वज्ञाने प्रत्ययान्तभिन्नत्वज्ञानमेव न सम्भवति, पूर्वज्ञानस्यैतत्प्रतिबन्धकत्वादिति वाच्यम् । तज्ज्ञानस्यातिदेशिकत्वेनाहार्यतया प्रतिबन्धकत्वाभावात् । **प्रातिपदिकत्वापत्तिरिति** । तत्त्वे नलोपापत्तिरिति भावः । इदमुपलक्षणम् । अचिनवमित्यत्र स्वतोऽपित्त्वेन ङित्त्वे गुणानापत्तेरपि । न च नकारविधानसामर्थ्यात्तदभाव इति वाच्यम् । तेनापि वक्ष्य-

भावेनातिदिश्यमानधर्मविरुद्धस्वाश्रयकार्याभावात् । अत एव जही-त्यादौ जादेशस्यासिद्धत्वे स्वाश्रयो ह्रल्डेत्र । सिद्धत्वासिद्धत्वयोर्वि-रोधात् । असिद्धवत्सूत्रं तु शाधीत्यादौ स्थानिप्रयुक्तधिभावसंपाद-नेन चरितार्थम् । न चाप्रत्यय इत्यस्य पर्युदासत्वे शास्त्रीयकार्या-भावात्स्थानिवत्त्वं दुर्लभमिति वाच्यम् । "वेः स्कन्देरनिष्ठायाम्" इति षत्वविधायके तिङन्तेषु षत्वाभावायावश्यकेन न्याय्येन चानिष्ठायामिति पर्युदासेन वृत्त्यादिसम्मतेन पर्युदासलभ्याशास्त्रीये-ऽपि शास्त्रतात्पर्यविषये शास्त्रीयवदतिदेशबोधनात् । विस्कन्न इत्यादौ हि निष्ठानत्वस्य नित्यतया स्थानिवत्त्वेनैव निष्ठात्वस्य वक्त-

---

माणार्थबोधनौचित्यात् । सर्वस्मिन्शय इत्यादौ नलोपेपि गुरुसंज्ञासम्पादनेन चकारोच्चारणचारितार्थ्यात् । तण्डुलानित्यादावित्यादिशब्देन सर्वस्मिन्निति ग्राह्यमिति तु न युक्तम् । नलोपस्सुबितिसूत्रे घिसंज्ञान्यसंज्ञाग्रहणस्यानिष्टत्वा-दिति दिक् । धर्मविरुद्धेति । तन्निश्चयप्रतिबध्यज्ञानविषयत्वमेवात्र विरुद्धत्वम् । तेन वधिषीष्टेत्यत्र हन्त्वातिदेशेपि स्वाश्रयादन्तत्वप्रयुक्तलोपसिद्धिः । प्रतिबन्ध-कज्ञानविषयत्वस्य तत्त्वे तु हन्त्वाभावव्याप्यादन्तत्वस्यापि तत्त्वेनातो लोपाना-पत्तिरिति दिक् । नन्वेवं विवक्षायां किं मानम् । न च तज्ज्ञाने एतज्ज्ञानासंभव इति युक्तिसिद्धोयमर्थ इति वाच्यम् । तज्ज्ञानस्याहार्यतयाऽप्रतिबन्धकत्वात् । नचातिदेशवैयर्थ्यम् । स्थानिप्रयुक्तकार्यस्य तत्र तत्र सम्पादकतया चारि-तार्थ्यादित्यत आह । अत एवेति । ह्रल्ङेति । एवं चैवं प्रतिपादनपरं भाष्यमेव मानम् । अस्माद्भाष्यादाहार्यज्ञानस्यापि प्रतिबन्धकता प्रक्रियामा-त्रोपयोगिनी स्वीक्रियत इति भावः । नन्वत्र प्रत्ययान्तत्वमतिदेशेन दुर्लभम् । तत्प्रयोज्यस्य प्रातिपदिकत्वाभावस्य शास्त्राविधेयत्वादित्याशयेन शङ्कते । न चेति । अतिदेशबोधनादिति । एवं चैतदुपयोगिशास्त्रीयत्वं च शास्त्र-

व्यत्वात्। तस्य प्रसज्यप्रतिषेधत्वे तु लक्ष्यानुसारिव्याख्यानादेवो-क्तार्थसिद्धिरिति बोद्धयम् ॥

केचित्तु भाष्ये "तत्स्थानापन्ने तद्धर्मलाभस्य तत्कार्यस्य च लोकन्यायेनैव सिद्धेरयमतिदेशः स्वं रूपमित्येतच्छास्त्रसत्त्वाद्धन्तेः कार्यं वधौ न स्यादिति" इत्युक्तम्। एवञ्च स्वंरूपमितिशास्त्राविषये तेन सिद्धिरिति सूचितम्। एवञ्चाशास्त्रीयस्यापि धर्मस्यातिदेशो भवत्येव। अतिप्रसङ्गस्तु लक्ष्यानुसारेण क्वचिल्लोकन्यायानाश्रयणेन

---

स्थपदगम्यशास्त्रतात्पर्यविषयत्वमेव, न तु शास्त्रविधेयत्वमिति भावः। अनि-ष्ठायामित्यस्य पर्युदासत्वे भाष्यानुग्रहाभावस्याख्यातशेखरे वक्ष्यमाणत्वादाह। तस्येत्यादि। व्याख्यानादेवेति। न चेदुदुपधस्येति सूत्रेऽप्रत्यय इत्यस्यो-क्त्योक्तार्थसम्भव इति वाच्यम्। स्वमते प्रत्ययसम्बन्धित्वस्य स्थानिद्वारकस्य ग्रहणेनातिदेशानपेक्षणात्। कथमन्यथा अग्निरित्यादावनल्विधाविति निषेधेन प्रत्ययसम्बन्धित्वेन निषेधसिद्धिरिति दिक्। ननु न धातुलोपसूत्रप्रत्याख्याने लोलुव इत्यादावुवङि लघूपधगुणवारणाय यङोऽल्लोपस्य स्थानिवत्त्वार्थं लोक-न्यायेन स्वंरूपमिति सूत्राविषये सिद्धेरङ्गीकर्तव्यतया तेनैवाशास्त्रीयकार्येऽपि सिद्धिरिति नोक्तप्रयाससाफल्यमित्याशयेनाह। केचित्त्विति। यत्तु लक्ष्या-नुसारो लक्षणैकचक्षुष्काणामयुक्त इत्यत आहेत्यवतारयन्ति। तन्न। अत्र मतेपि लक्ष्यानुसरणस्याश्रितत्वेनोक्ताशयकत्वायोगात्। लक्ष्यानुसारिव्याख्यानस्या-तथात्वाच्च। अशास्त्रीयस्यापि धर्मस्येति। तेन लोलुव इत्यदावुवङोऽना-दिष्टादचःपूर्वत्वं, यौष्माकीण इत्यत्र यस्माद्विहितस्तादादित्वमतिदेशेनैव सिद्धमिति भावः। इदमुपलक्षणमशास्त्रीयस्यापि कार्यस्येत्यस्यापि। नन्वेव-मुवयिथेत्यत्र तासौ नित्यानिट्त्वस्याप्यतिदेशापत्तिरत आह। अतिप्रसङ्ग-

**परिहरणीयो यदि प्राप्नोति। एवञ्च न कश्चिद्दोषः। "न पदान्त" इति सूत्रे ब्राह्मणकण्डूतिरित्युदाहरणाच्च क्वचित्तदनाश्रयणम्। तत्र हि कण्डूयतेः क्तिचि तत्राल्लोपे तस्य स्थानिवत्त्वादुवङि यणि वाऽनादिष्टादचः पूर्वत्वे स्थानिद्वारके गृह्यमाणे ऊठ् न स्यादित्याहुः॥**

---

**स्त्विति। एवं चेति।** अशास्त्रीयेप्यतिदेशप्रवृत्तावतिप्रसङ्गस्य क्वचिन्न्यायानाश्रयणेन वारणे चेत्यर्थः। **न कश्चिद्दोष इति।** न चेत्यादिना तण्डुलानित्यादौ शङ्कित उवयिथेत्यादाविड्विकल्परूपश्च दोषो नेत्यर्थः। ननु लक्ष्यानुसरणं न लक्षणैकचक्षुष्काणां युक्तमत आह। **न पदान्तेति। उवङीति।** धातुत्वे इति भावः। **यणि वेति।** प्रातिपदिकत्वे इति भावः। **स्थानिद्वारके इति।** अनल्विधाविति निषेधस्तु शास्त्रीयस्थानिवद्भावस्येति भावः। स्पष्टं चेदमुद्योते। एतेनेदं चिन्त्यमनल्विधाविति निषेधादिति वदन्तः परास्ताः। **आहुरिति।** अत्रारुचिबीजं तु लोलुव इत्यत्र पञ्चमीसमासे स्थानिभूतादचः पूर्वत्वेन दृष्टो यो लान्तस्तस्मात् परत्वेन दृष्टस्य विधित्वेन गुणस्य न तत्राशास्त्रीयधर्मातिदेशावसरः, पूर्वस्मान्निमित्तत्वेनाश्रितादित्यर्थे तु न मानमिति वक्ष्यति। स्पष्टं चेदं न धातुलोप इत्यत्रोद्योते। ब्राह्मणकण्डूतिरिति तु पञ्चमीसमासानित्यत्वेन निर्वोढव्यम्। एवं च फलाभावादशास्त्रीयधर्मस्यानतिदेशः। किं च न पदान्तसूत्रशब्दरत्नोक्तरीत्या तद्घटितसन्निवेशोपक्षस्य ततःपूर्वत्वस्य लोकन्यायेनातिदेशासंभवान्न भवदभिमतार्थसिद्धिः। किं च पुरुषारम्भस्य लोकन्यायनिवर्तकतया स्वंरूपमिति पुरुषारम्भो लोकन्यायं सुतरां निवर्तयतीत्येव युक्तम्। किंचानादिष्टादचःपूर्वत्वमच्त्वघटितमिति न स्थानिवद्भावलभ्यम्। न च तत्राच् न स्थान्यवयव इति वाच्यम्। तथापि स्थानिसम्बन्धित्वानपायात्। लोकन्यायस्याल्विधौ प्रवृत्तौ तु प्रपठ्येत्यादौ वलादित्वस्य स्वंरूपमिति सूत्राविषयतयातिदेशापत्तौ तत्रानल्विधाविति निषेधप्रतिपादनपरसकलग्रन्थो-

अत एवार्थवत्सूत्रशेषेऽप्रत्यय इत्यस्य पर्युदासत्वमेवोक्तं भाष्ये । तत्र पक्षे च काण्डे इत्यत्र पूर्वान्तवद्भावेन प्रत्ययान्तभिन्नत्वाद्दोषः शङ्कितो न तु स्वाश्रयाप्रत्ययान्तत्वेन । "क्षियो दीर्घात्" इति सूत्रे भाष्येऽपि अतिदिश्यमानधर्मविरुद्धस्वाश्रयकार्याभाव इति स्फुटम् । तत्र हि क्षिय इत्यत्रेयङर्थं प्रकृतिवदतिदेशो स्वाद्यनुत्पत्तिमाशङ्क्य एवं तर्हि आतिदेशिकानां स्वाश्रयाणि न निवर्त्तन्ते इति समाधायातिदिश्यमानधर्मविरुद्धस्वाश्रायनिवृत्तेरावश्यकत्वाभिप्रायेणाथाप्येतन्नेत्याशङ्क्य निर्देशसामर्थ्याद्विभक्तिरित्युक्तम् । असिद्धवत्सूत्रे च कैयटे स्फुटमेतत् । यत्तु गाङ्कुटादिसूत्रे भाष्ये 'सृजिदृशोः' इत्यत्राकितीति पर्युदासात्सिसृक्षतीत्यत्र 'हलन्ताच्च' इति कित्त्वातिदेशेऽपि अमागममाशङ्क्य प्रसज्यप्रतिषेधाश्रयणेन समाहितं, तत्तु वार्त्तिककृदुक्तमुपायान्तरं बोद्धव्यम् । अनल्विधाविति विधिग्रहणादलाश्रये विधावित्यर्थात् यत्र विधौ शब्दतः स्थानिस्थान्यवयवान्यतराल्वृत्तिधर्मवतस्तेन तस्मात्तस्य तस्मिंस्तदादेरित्यादिप्रकारेण विशेष्यतया विशेषणतया वा अलाश्रयणं तत्र निषेधः । व्यूढोरस्केन, द्यौः, द्युभ्यां, क इष्टः, प्रपच्येत्युदाहरणानि । शब्दत इत्युक्तेरग्रहीदित्यादौ 'इट ईटि' इति सिद्ध्यति । दीर्घविधावत्र च इट इति समुदायाश्रयणात् । अन्यथा टस्यानुबन्धत्वादिकारस्यैवोभय-

---

च्छेदप्रसङ्गः, तत्रेडापत्तिश्चेत्यादि स्वयमूहनीयम् । अत एवेति । पर्युदासलभ्याशास्त्रीयेऽपि शास्त्रीयवदतिदेशबोधनादेवेत्यर्थः । विधिग्रहणादिति । तद्बलान्मध्यमपदलोपिसमासाश्रयणादिति भावः । यत्र विधाविति । अस्याश्रयणमित्यनेनान्वयः । ननु दीर्घविधौ स्थानितयोपात्तेडवयवेकारस्यैवाश्रयणादेतन्निषेधापत्तिरत आह । शब्दत इति । तत्र शब्दत इडेवाश्रितः, स च नाल्रूप

**त्राश्रयणमित्यल्विधित्वं स्यात् । अत्र सूत्रे विशेषातिदेशोऽपि । अन्यथा इडादेरपि क्त्वः सत्त्वात् वलादित्वस्य तद्विशेषधर्मत्वादुपस्थितधर्मैस्तद्व्यापकधर्मैश्च विध्याकाङ्क्षापूरणे सति तदतिरिक्तविशेषग्रहणे मानाभाव इत्येतन्न्यायमूलकेन सामान्यातिदेशे विशेषानतिदेशेन सिद्धौ विशेषणतयाऽलाश्रयणे निषेध इत्येतत्प्रतिपादकस्यानल इत्येव सिद्धे कृतस्य विधिग्रहणस्य वैयर्थ्यं स्यात् । हलादिक्किङ्न्निमित्तकेत्वप्रतिषेधकान्न ल्यपीति लिङ्गाच्च ।**

---

इति भावः । ननु वलादित्वस्य क्त्वात्वाव्यापकत्वात् कथमतिदेशप्रसक्तिः, येन निषेधोदाहरणता स्यादित्यत आह । **अत्रेति** । **विशेषातिदेशोऽपीति** । उपस्थितधर्मतद्व्यापकधर्मेतरधर्मातिदेशोपीत्यर्थः । एवं च विशेषातिदेशे प्रदीव्येत्यादौ कित्त्वाद्यतिदेशस्सिद्ध्यति । अन्यथा न क्त्वा सेडिति विषयेऽकितोऽपि क्त्वस्सत्त्वेन कित्त्वस्य क्त्वात्वाव्यापकधर्मतयाऽतिदेशो न स्यादिति बोध्यम् । **अनल इत्येव सिद्धे इति** । प्रातिपदिकनिर्देशेन सर्वविभक्त्यन्तावयवकसमासफलस्य सिद्धत्वादिति भावः । ननु विधिग्रहणस्य न सामर्थ्यम् । युष्मदित्यादौ झलादित्वस्योपस्थितभ्यस्त्वव्यापकतया प्राप्ततदतिदेशवारणाय विशेषणतयाऽलाश्रयणे निषेध इत्यर्थसम्पत्तये तस्यावश्यकत्वादित्यत आह । **हलादिकिदित्यादि** । **लिङ्गाच्चेति** । तद्धि स्थानिवत्त्वेन कित्त्वे ईत्वनिषेधार्थम् । पूर्वोक्तदिशा कित्त्वस्य विशेषधर्मत्वेनानतिदेशे तद्वैयर्थ्यं स्पष्टमेवेति भावः । यत्त्वत्र विशेषातिदेशाभावेपि न क्षतिः । आदेशपदस्य सम्बन्धिशब्दत्वात्तदादेशे तत्स्थानित्वव्यापकधर्मस्यैवातिदेशः स्यादिति ल्यप्स्थानिभूतक्त्वात्वव्यापकत्वस्य कित्त्वे वलादित्वे च सत्त्वेन स्थानिवत्त्वस्य सौलभ्यात् । अन्यथा सादृश्यप्रतियोगितावच्छेदकक्त्वाशब्दत्वादेरेवातिदेशापत्तेः । अत एव जजागरतुरित्यत्र गुणस्सिध्यति । अन्यथा आहतुरित्यादौ अतुस्स्थानिनस्तसो ङित्तोपि सत्त्वेन

**अनुबन्धकार्ये त्वनल्विधाविति निषेधो न, अनुबन्धानामने-कान्तत्वात् । एकान्तत्वेऽपि शिद्ग्रहणेन तेषामल्व्यवहाराभावज्ञाप-**

---

त्वन्मते अतुस्तस्वद्भवतीत्यतिदेशवाक्यकल्पनया विशेषधर्मातिदेशस्वीकारेण च पर्युदासलभ्याशास्त्रीयेऽपि शास्त्रीयवदतिदेशादविचिण्णल्डित्स्वित्युक्तेर्गुणाना -पत्तेः । अत एव च शब्दरत्ने ज्ञापकमनुपन्यस्योक्तार्थो द्युकाम इत्यत्र साधितस्सङ्गच्छते । शब्दरत्नकृतोपप्लवोऽपि सम्बन्धिशब्दत्वमूलक एवेति बोध्य इत्याहुः तन्न । प्रकृतसूत्रस्थभाष्यविरोधात् । अत्रहि विशेषानतिदेशे अग्रहीदित्यत्र सिचो लोपो न प्राप्नोतीत्याशङ्क्यानल्विधाविति ज्ञापकात् समाहितम् । तस्यायं भावः । ग्रहोऽलिटीत्यत्राच्परिभाषोपस्थित्याऽच एव स्थानित्वमिति इट्त्वं तद्विशेषधर्म इति । स्पष्टं चेदं कैयटे। भवदुक्तरीत्या तदादेशस्थानित्वव्यापकत्वस्येट्त्वेऽक्षतत्वेन तत्र दोषोद्भावनमसम्बद्धमेव स्यादिति तद्विरोधस्स्पष्ट एव । सूत्रोपात्तस्थान्यादेशौ विहायातिदेशस्य तद्व्यक्तिमात्रपर्यवसाने मानाभावाच्च । आदेशपदस्य सम्बन्धिशब्दत्वात्तन्महिम्ना न तथा पर्यवसानमिति तु न सम्यक् । आदेशपदस्यान्यार्थताया भाष्ये उक्तत्वेन तद्विरोधात् । भवदुक्तार्थसम्पत्तये आदेशग्रहणस्यावश्यकत्वेन तद्विरोधस्स्पष्ट एव । विशेषातिदेशेऽपि विशेषस्य तत्स्थानिवृत्तिधर्मस्यैवातिदेश इति जजागरतुरित्यादौ न दोषः । शब्दरत्नग्रन्थस्य स्वत एव न्यायाप्रवृत्त्युपायसम्भवे ज्ञापकसिद्धतदप्रवृत्तिपर्यन्तानुधावनमयुक्तमित्याशयकतया न तद्विरोध इति दिक् । ननु क्त्विवस्याल्वृत्तिकत्वघटिततयाऽनल्विधाविति निषेधेन स्वांशे चारितार्थ्ये दुर्निरूपमत आह । **अनुबन्धकार्ये इति । अनेकान्तत्वादिति ।** एवं च क्त्वादेः स्थान्यवयवाल्वृत्तित्वाभावेन न निषेधविषयतेति भावः । न ल्यपीतिलिङ्गाच्चेत्यपि मध्येमणिन्यायेनात्रापि हेतुतया योजयितुं शक्यम् । **अल्व्यवहाराभावज्ञापनादिति ।** ततश्चानल्विधाविति निषेधो नेति भावः । अल्व्यवहाराभावस्य

नात् । "नानुबन्धकृतमनेकाल्त्वम्" इति ज्ञापयतीति भाष्ये-ऽल्त्वव्यवहाराभावबोधनद्वारेति शेषः । ध्वनितश्चेदं "क्ङिति च" "गाङ् लिटि" "हलः श्न" इति सूत्रेषु भाष्ये । तत्राऽऽद्ये यासुटो ङिद्वचनात् ङिदादेशा ङितो नेति ज्ञाप्यते इत्युक्तम् । द्वितीये गाङो ङित्त्वस्य सानुबन्धकादेशे इत्कार्याभावज्ञापकतोक्ता, तिबाद्यादेशेषु पित्त्वासिद्ध्या दूषितं च ज्ञापकम् । अन्त्ये शानचः शित्त्वस्य सार्वधातुकादेशे अनुबन्धास्थानिवत्त्वज्ञापकत्वमुक्तम्, उक्तदूषणैरेव दूषितञ्च । अन्यथाऽनल्विधाविति निषेधेन तत्त्वा-

---

ज्ञापकसिद्धत्वेन क्वाचित्कतया नदट्टकारमादाय हल्ङ्यादिलोपो न । अत एव तत्र ङ्याब्ग्रहणं चरितार्थम् । अन्यथा तत्रानुबन्धं हलमादाय लोपप्रवृत्तौ तद्वैयर्थ्यं स्पष्टमेव । अत एव शितीत्यत्रेत्संज्ञकशकारादावित्यर्थलाभः । अत एवौङ आप इत्यत्र भाष्ये ङितीत्यत्र यस्मिन्विधिरिति परिभाषासंचारः कृतः । न च क्वचित्तद्व्यवहारस्याप्यङ्गीकारे गौरवमिति वाच्यम् । क्वचिदनुबन्धकार्ये-प्यनल्विधाविति निषेध इत्यर्थस्य प्राचीनैरङ्गीकारेण समत्वात् । नानुबन्धकृत-मनेकाल्त्वमिति पृथगनावश्यकमिति लाघवं परं नागेशस्येति दिक् । भाष्यविरोधं शेषपूरणेन परिहरति । इति शेष इति । ननु शेषपूरणे किं मानमत आह । ध्वनितमिति । अन्यथाऽदेशे तत्कार्यप्रापकमुपायमनुक्त्वा तत्परिहारप्रयत्न-विचारोऽसङ्गतस्स्यात् । मम त्वनेकाल्सूत्रे तदुपायस्य दर्शितत्वान्नासङ्गतिरिति भावः । सानुबन्धकादेशे इति । सानुबन्धकस्यादेश इत्यर्थः । सानुबन्धके आदेशे इति श्रीधरोक्तं तु न युक्तम् । ज्ञापनोत्तरं स्वांशे चारितार्थ्यालाभात् । इत्कार्याभावेति । स्थानिवृत्तीद्घटितधर्मनिमित्तककार्येत्यर्थः। अनुबन्धास्था-निवत्त्वज्ञापकत्वमिति । अनुबन्धघटितधर्मस्य स्थानिवत्त्वेनानाश्रयण-

प्राप्त्या ज्ञापकत्वासङ्गतिः, तिबाद्यादेशेषु पित्त्वाद्यसिद्धिश्चेति बोद्धव्यम् ॥

अचः पर । आदेशग्रहणमनुवर्त्तते, तदनुरोधादच इति स्थानषष्ठी, परस्मिन्नित्यादेशविशेषणं, तदाह । परनिमित्त इत्यादि । अच

---

ज्ञापकत्वमित्यर्थः । अल्व्यवहाराभावानाश्रयणे लक्ष्यासिद्धिमाह । तिबाद्यादेशेष्विति । तथा चावेदित्यत्र गुणानापत्तिरिति भावः ॥

ननु स्थानिवदिति सम्बन्धिशब्दमहिम्नाऽऽदेशलाभे तदनुवृत्तिः किमर्थेत्यत आह । तदनुरोधादिति । अन्यथा पूर्वत्वेऽन्वयस्यावश्यकतया तदनुरोधाद्दिग्योगलक्षणपञ्चमीत्वमेव संभाव्येतेति भावः । षष्ठी स्थानेयोगेत्यस्य तु नात्र विषयः । अनुवादत्वात् । आदेशपदसमभिव्याहारेण स्थानसम्बन्धनिर्णयाच्च । आदेशविशेषणमिति । प्रधानान्वयौचित्यादुत्तरसूत्रे वरेयलोपादिग्रहणाच्चेति भावः । परनिमित्त इतीति । अलीत्येव सिद्धे परस्मिन्नित्युक्त्या सति सप्तम्याश्रयणे सिद्धसाध्यसमभिव्याहारन्यायेन निमित्तार्थलाभः । औपश्लेषिकाधिकरणसप्तमी तु नात्र । परस्य निमित्तभूतस्यैव ग्राह्यतयोत्तरसूत्रे चरग्रहणवैयर्थ्यापातात् । तेनाव्यवहितत्वांशमात्रबाधने तु आदेश इति प्रथमान्तानुरोधात् षष्ठ्यंशबाधे परग्रहणादेव पूर्वत्वांशलाभे नैष्फल्या न्निर्दिष्टपरिभाषाया अप्रवृत्तिरेव फलितेति बोध्यम् । अच एवादेश इति । असति बाधके सर्वं वाक्यं सावधारणमिति न्यायादिति भावः । नाग्लोपीत्यत्र तु प्रत्याहारग्रहणं बाधकमिति बोध्यम् । एकादेशस्थले तु वर्णग्रहणे जातिग्रहणमिति परिभाषया स्थानिवत्त्वसिद्धिः । यद्वा पूर्वपरयोरित्यनेन प्रत्येकं स्थानिताबोधनेनाज्मात्रनिष्ठस्थानितानिरूपितादेशताश्रयत्वेनैकादेशस्यानेन स्थानिवत्त्वम् । तेन श्रायसान्नित्यत्रानेन नुम्वारणं सङ्गच्छते । यत्तु हलादेशस्याज्झलादेशस्य वा स्था

एवादेश इत्यर्थः। तेन मरुतमाचष्टे मारयतीत्यादौ वृद्धिः। अत्र सूत्रे प्रयोगे योऽचस्थानिक इत्यर्थः, न तु सूत्रे स्थानित्वेनोपात्ताचस्थानिक इत्यर्थस्तेन णिलोपादेरनेन स्थानिवत्त्वं सिद्ध्यति। अत एव चङ्परनिर्ह्रासे ण्यन्तात् णिचि अवीवददित्यादिसिद्ध्यर्थो निषेधः

---

निवत्वाभावं ज्ञापकेन संसाध्याज्ग्रहणसामर्थ्यादच एवेत्यर्थलाभमाहुः। तन्मन्दम्। ज्ञापकेन सिद्धवचनवैयर्थ्यशङ्कायाः कर्तुमनौचित्यात्। अतो नात्र हलादेशस्याज्झलादेशस्य वा स्थानिवत्त्वाभावे ज्ञापकत्वविचारोऽस्माभिरुपेक्षित इति बोध्यम्। **मारयतीति**। इदुदुपधेभ्यो णिचोऽनभिधानं लुब्मात्रविषकमिति भावः। स्पष्टं चेदं णौ चङीत्यत्रोद्योते। सामान्यतोऽनभिधानाङ्गीकारे तु भवन्तमाचष्टे भावयतीत्युदाहार्यम्। अत्रापि यदि परत्वाद्वृद्धौ सत्यां टिलोपे लक्ष्ये लक्षणस्येतिन्यायेन न पुनर्वृद्धिरित्युच्यते, तदा वाचिक इत्युदाहार्यम्। तत्राशीर्दत्तशब्दलोपस्य स्थानिवत्त्वे चान्ते भत्वाभावेन पदत्वात् कुत्वापत्तिः। न पादान्तेति निषेधस्य तु नात्र विषयः। पदे परतश्चरमावयवकर्तव्यतायामेव तत्प्रवृत्तेरिति दिक्। नन्वेवं णिलोपादेरनेन स्थानिवत्त्वं न स्यात्। सूत्रोपात्तरूपस्यैव स्थानित्वाङ्गीकारेण णेरनिटीति सूत्रोपात्तस्थानिताया अज्मात्रवृत्तित्वाभावादत आह। **अत्र सूत्रे इति**। अत्र मानं दर्शयति। **अत एवेति**। **निषेधस्सार्थक इति**। स हि वदधातोर्ण्यन्ताण्णिचि अवीवददित्यत्र पूर्वणिलोपस्य स्थानिवत्त्वेनोपधाह्रस्वो न स्यादित्यारब्धः। अन्यथा स्थानिवत्त्वस्यैवाप्रसक्त्या तद्वैयर्थ्यं स्पष्टमेवेति भावः। नन्वेवं जुहुत इत्यत्र श्लोःस्थानिवत्त्वेन गुणस्तु न, परनिमित्तकत्वाभावेन शप्त्वेन स्थानितयाऽजादेशत्वाभावेन च स्थानिवत्त्वाभावादिति तिङन्तशेखरोक्तिविरोध इति चेन्न, प्रथमहेतोरेव नागेशाभिप्रेतत्वात्। अत एव न पदान्तसूत्रे उद्योते तस्यैवोपन्यासः। द्वितीयस्तु अच इत्युपादानात् साक्षादेव यस्याच् स्थानित्वेनोपात्तस्तस्यैव स्थानिवद्भाव इति प्रकृत-

सार्थकः । अच इति किम् । आगत्य । मलोपस्य स्थानिवत्त्वात् "ह्रस्वस्य" इति तुग्न स्यात् । परस्मिन्निति किम् । युवजानिः । निङः स्थानिवत्त्वेन यलोपो न स्यादिति । पूर्वविधाविति किम् । नैधेयः । निपूर्वाद्धाञः किप्रत्यये आतो लोपे तस्य स्थानिवद्भावाद् ञ्यच्त्वव्यपदेशाविरोधात्स्वाश्रयद्व्यच्त्वनिवृत्तौ ढगनापत्तेरिति दिक् ।

---

सूत्रस्थप्रदीपानुरोधीति तद्विरोधस्याकिंचित्करत्वाच्च । प्रकृतप्रदीपस्यानौचित्यमत्रैवोद्योते स्फुटम् । अत एवेत्यादिसार्थक इत्यन्तग्रन्थस्य अच इति किमित्यादिग्रन्थानन्तरं पाठस्तु सन्दर्भविरुद्धः । उदयङ्करस्तु पटयतीत्यादित उत्तरभस्य पाठः, बृहति तथैव दर्शनादित्याह । न पदान्तसूत्रस्थोद्योतस्त्वत्रैव पाठं द्रढयतीति ध्येयम् । अच इति किम्, आगत्येति । अभावातिदेशस्येदमुदाहरणम् । न च स्थानिनिमित्तकं भवत्यादेशनिमित्तकं नेत्यर्थस्य वक्ष्यमाणतयाऽत्र तुक आदेशनिमित्तकत्वाभावात् कथं तस्याप्रवृत्तिरिति वाच्यम् । लोपस्य ह्रस्वस्य पित्कृतपरत्वसम्पादनद्वारा तुङ्निमित्तत्वात् । स्पष्टं चेदमुद्योते । न च सूत्रे अच इत्यस्याभावे स्थानिनोऽसन्निहितत्वादादेशस्यैव पूर्वत्रेऽवधितयाऽन्वयादत्रादेशस्य लोपरूपतया ततःपूर्वत्वस्य वक्तुमशक्यतया नात्र स्थानिवत्त्वप्रसक्तिरिति वाच्यम् । अभावस्यापि बौद्धपौर्वापर्याङ्गीकारात् । यलोपो न स्यादिति । यलोपे न स्थानिवदिति लोपाजादेशस्यैवेति भावः । यदि तु यश्चाश्रीयते नासावादेशः यश्चादेशो नासावाश्रीयते इत्युच्यते, तदा वैयाघ्रपद्ये दोषः । तत्र पादस्य लोपोऽहस्त्यादिभ्य इति लोपस्य स्थानिवद्भावे पाच्छब्दान्ते भत्वाभावाल्लोपो न स्यात् । तत्र न्यासान्तरैर्ज्ञापकैश्च फलानामन्यथासिद्धिकरणापेक्षया परस्मिन्निति करणमेव लघ्विति दिक् । विरोधादिति । संख्याकृतव्यवहारस्य परस्परपरिहारेणैव दृष्टत्वादिति भावः । नन्वागत्येत्यादिप्रत्युदाहरणानि न भवन्ति । पूर्वसूत्रवदत्रापि स्थानिप्रयुक्तकार्यमात्रातिदेशे प्रकृते

अत्र स्थानिनि सति यद्भवति तदादेशेऽपि भवति, स्थानिनि यन्न भवति तदादेशेऽपि नेति भावाभावयोरुभयोरप्यतिदेशः। तत्र भावोदाहरणं निगाल्यते इति, अन्त्योदाहरणं पटयतीत्यादि। स्थानिनिमित्तकं भवत्यादेशनिमित्तकं नेति च तदर्थः।

---

तादृशस्य कस्याप्यभावेनैवातिदेशाप्रवृत्तेरित्यत आह। अत्र स्थानिनीत्यादि। ननु स्थानिनि यन्न तदादेशेऽपि नेत्यर्थे युवजानिरित्यादौ यश्चाश्रीयते इत्यादिना वारणं न संघटते, यलोपादेस्स्थानिन्यभावेनादेशेऽप्यभावातिदेशसंभवात्। किंच देवयतेः क्विपि दयूरित्यत्रायादेशो न स्यात्। स्थानिनि णावूठोऽभावेनाभवतोऽयादेशस्यादेशे लोपेप्यभावातिदेशापत्तेरित्यत आह। स्थानिनिमित्तकमित्यादि। तदर्थ इति। स्थानिनि यद्भवतीत्यादेरर्थ इति भावः। एवं च युवजानिरित्यत्र यलोपस्यादेशघटकनिमित्तकत्वेऽप्यादेशानिमित्तकत्वान्न दोष इति भाष्यसङ्गतिः। दयूरित्यत्रायादेशस्योट् निमित्तकत्वेन णिलोपानिमित्तकत्वान्न दोषः। न चैवमेषो गमयतीति न स्यात्, गम्यादेशस्य स्थानिवत्त्वेऽप्यवयवगकारमदाय सुलोपापत्तिरिति वाच्यम्। यश्चाश्रीयत इति भाष्यप्रामाण्येन एष गमयतीत्यस्यैवेष्टत्वात्। एतेन स्थानी न निवृत्तः आदेशो न जात इति सम्भावनायां यद्भवति तद् भवति यन्न तन्नेत्यर्थे तात्पर्यमिति वदन्तः परास्ताः। विना विरोधं भाष्यस्यैकदेशयुक्तित्वकल्पनाया अनौचित्याच्च। नचैवमपि न सम्प्रसारण इति सूत्रस्थभाष्यविरोधः। तत्र हि अस्मादेव ज्ञापकात् परस्य पूर्वं सम्प्रसारणमित्युक्त्वा यद्वा सम्प्रसारणाश्रयस्य प्रतिषेध इत्युक्तम्। एष यूनः पश्येत्यत्र वाक्यसंस्कारपक्षे प्रथमकल्पे सुलोपप्रवृत्त्या द्वितीये यणः स्थानिवत्त्वेन तदप्रवृत्त्या फलभेदात् कल्पान्तरमसङ्गतमेवेति वाच्यम्। तद्विषये वाक्यसंस्कारानङ्गीकारेण विरोधाभावात्। न चैवमपीयायेत्यादौ स्थानिवत्त्वेनेयङ् न स्यादिति परिभाषेन्दुशेखरासङ्गतिरिति वाच्यम्। अभ्यासस्यासवर्णे इत्यत्रासवर्ण इति प्रसज्य-

अदुपधत्वसम्पादनद्वारा लोपनिमित्तिका वृद्धिरित्याहुः ॥

स्थानिभूतादच इति । सूत्रे श्रवणाद्व्याख्यानाच्च तस्यैव पूर्वत्वेऽवधित्वमिति भावः । पूर्वविधावित्यस्य पूर्वसम्बन्धिन्येव शास्त्रविधेये कर्त्तव्ये इत्यर्थस्तेन पूर्वपरयोर्विधौ न । तेनाऽऽरतुरि-

---

प्रतिषेधाङ्गीकारेणाविरोधस्य पूर्वमेवोपपादितत्वात् । एतेनादेशे स्थानिवृत्तिधर्मसम्भावनायां यद्भवति तद्भवति यन्न तन्नेत्यर्थमुक्त्वा परिभाषेन्दुशेखरस्य विपरीतलेखनत्वं वदन्तः परास्ताः । नागेशग्रन्थानुसारेणैव नागेशतात्पर्यस्य निर्णेयत्वादिति दिक् । अदुपधत्वसम्पादनेति । क्वचिल्लघूपधत्वसम्पादनेति पाठो दृश्यते । तत्र लघुपदमदुपलक्षणमिति बोध्यम् । अदुपधेत्येव साम्प्रदायिकः पाठः । श्रवणादिति । प्रथमत इति भावः । ननु सन्निहितत्वात् परस्य प्राधान्यादादेशस्य वावधित्वं स्यादत आह । व्याख्यानाचेति । अचः पूर्वत्वविज्ञानादैचोस्सिद्धमिति वार्तिकरूपादित्यर्थः । अत एव स्वविधौ स्थानिवद्भावार्थं न्यासान्तरानुधावनं सङ्गच्छते । पूर्वसम्बन्धिन्येवेति । अत एव विधिग्रहणं सार्थकम् । तद्धि अवधारणगर्भसमासलाभार्थम् । न च समासद्वयलाभार्थं तत् । प्रातिपदिकनिर्देशादेव तदर्थलाभात् । न च विधाविति योगविभागेन स्थानिवदेवेति नियमेनाभावातिदेशलाभार्थं तत् । स्पष्टं चेदं प्रदीपोद्योतयोरिति वाच्यम् । पूर्वसूत्राद्विधिग्रहणमनुवर्त्य वाक्यभेदेनोक्तार्थस्य सुसाधत्वात् । एवं चातिरिच्यमानं विधिग्रहणमवधारणमवगमयति । स्पष्टं चेदं कौस्तुभे । विधिग्रहणसामर्थ्याच्चैतदर्थलाभ इत्याहुरिति वदतोद्योतकारेणाप्ययमर्थः स्फुटीकृत इति बोध्यम् । आरतुरितीति । न च ऋच्छत्यृतामित्यत्र ऋकारो न प्रश्लिष्यते । ऋ ऋ अतुसिति स्थिते उरदत्वहलादिश्शेषयोर्दीर्घाद्गुणयोःप्राप्तयोस्तक्रन्यायेन दीर्घे पश्चाद्गुणस्याप्राप्त्या यणि रूपसिद्धेः । एवं च पूर्वसम्बन्धिन्येवेति व्यर्थमिति वाच्यम् । ऋधातोः क्सौ आ ऋ वस् इति स्थिते

पूर्वोक्तरीत्या तक्रान्यायेनाङ्गुणाप्रवृत्त्या कृतद्विर्वचनैकाचोऽभावेनेटोऽप्राप्त्या यणोऽप्राप्त्या आरिवानित्येतत्सिद्धये प्रश्लेषस्यावश्यकत्वात् । न चाभ्यासकार्ये इति निषेधश्शङ्क्यः । तस्याभ्यासमात्रोद्देश्यककार्यविषयत्वात् । न च दीर्घविधित्वान्निषेधः । लोपाजादेशस्यैव तद्विषयत्वात् । यदि त्वभ्यासकार्य इत्यत्र मात्रपदनिवेशो विफलः स्वरदीर्घेति नियमे दीर्घग्रहणं विफलमेव । विव्यतुरित्यादौ धात्वनवयवत्वादेव दीर्घवारणसम्भवात् । अत एव दीर्घविधौ स्थानिवत्त्वेनाप्यारतीत्यादिसिद्धिरुक्ता । एवं चाभ्यासकार्येष्विति दीर्घविधौ न स्थानिवदिति वा निषेधेन सिद्धिरित्युच्यते, तदा श्लेष्मघ्ने संयोगसंज्ञायामुपधालोपस्य स्थानिवत्त्वाभावः फलमुक्तव्याख्याने बोध्यम् । यदि त्वत्र स्थानिवद्भावस्य परम्परया पूर्वत्रासिद्धीयप्लुतप्रतिबन्धकतया पूर्वत्रासिद्धीये न स्थानिवदिति निषेधेन सिद्धिरित्युच्यते, तदा आर्च्छीदित्यत्र लावस्थायामडिति सिद्धान्ते ऋच्छादेशस्य स्थानिवत्त्वेनाच्त्वबुद्ध्या नहि रजतत्वभ्रमप्रयुक्ताप्रवृत्तिश्शुक्तिं न गोचरयतीति न्यायेन विशिष्टस्य वृद्धौ छश्रवणानपत्तिरतदनाश्रयणे दोषः । यदि तु तत्र स्थानिवद्भावाद्विशिष्टनिमित्तिकायाः स्वाश्रयघटकानिमित्तिकायाश्च वृद्धेः प्राप्तावन्तरङ्गत्वाद्घटकनिमित्तकवृद्ध्या इष्टसिद्धिरित्युच्यते, तदा हयशब्दादाचारक्विबन्तात् कर्तरि क्विपि अल्लोपयलोपयोस्तत औप्रत्यये अल्लोपस्य स्थानिवत्त्वेन वृद्ध्यनापत्तिः । यदितु तत्र स्थानिवत्त्वेपि तेन पररूपे ततो वृद्ध्या इष्टसिद्धिः । पररूपे यलोपस्य न बहिरङ्गासिद्धत्वं, घटकानिमित्तकत्वाभावात् । पूर्वोपस्थितनिमित्तकत्वरूपान्तरङ्गत्वं तु न जातासिद्धत्वे प्रयोजकमित्युच्यते, तदा पटुशब्दस्यान्शब्देन समासे पट्वन्शब्दाच्छसि संयोगसंज्ञायां स्थानिवत्त्वेन न संयोगादिति निषेधाप्रवृत्तावल्लोपापत्तिः । यदि तु तत्र न हलो यमादिति न्यासेनेष्टसिद्धिरित्युच्यते, तदा पिपठिषामीत्यत्र शबकारस्य पूर्वं दीर्घे तस्य

त्यादौ 'ऋच्छत्यॄताम्' इति गुणस्य सवर्णदीर्घे न स्थानिवत्त्वम्। वस्तुतोऽत्र पूर्वविधिशब्दे तन्त्रम्। एकस्योक्तोऽर्थः। द्वितीये भावे किः। संबन्धसामान्यषष्ठ्यन्तपूर्वशब्देन समासः। विधिर्भावः, पूर्वसंबन्धिभावे तत्स्थितौ स्थानिवदित्यर्थः। अत एवैनेय इत्यादौ "यस्येति च" इति लोपे तस्य स्थानिवत्त्वात्सन्नियोगशिष्टन्यायप्राप्तनिवृ-

---

स्थानिवत्त्वेनातो गुण इति पररूपापत्तिर्दोषः। यदि तु तत्र पररूपेपि वस्तुतस्तत्र परस्य दीर्घत्वेन तस्यैवैकादेशेन विधानान्नोक्तदोष इत्युच्यते, तदा तितउशब्दात् सम्बुद्धौ तित ओ इति स्थिते गुणस्य स्थानिवत्त्वेनातो गुण इति पररूपानापत्तिः। न च तत्र ड उ इत्युच्चारणसमर्थ्यात् सन्धिकार्याभाव इष्ट एवेति वाच्यम्। तेन गुणबाधकल्पनेपि पररूपबाधकल्पने मानाभावादिति दिक्। तदेतदभिसन्धायाह। आदाविति। ननु पूर्वस्यैवेत्यवधारणार्थं न विधिग्रहणम्। अवधारणस्य स्वारसिकतया यत्नानपेक्षत्वात्। अत एवोद्योते आहुरित्यरुचिबोधकपदोपादानम्। अभावातिदेशस्तु पूर्वसूत्राद्विधिग्रहणानुवृत्त्या सिद्ध इत्याशङ्क्य विधिग्रहणप्रयोजनं प्रदर्शयति। वस्तुत इति। तन्त्रमिति। वक्ष्यमाणार्थस्य विधिग्रहणमन्तराऽलाभेन विधिग्रहणबलात्तन्त्रमाश्रीयत इति भावः। सम्बन्धसामान्यषष्ठ्यन्तेति। अत्र विधिशब्दस्य सत्तार्थकतयाऽकर्मकतया कर्मषष्ठ्यन्तत्वाभावात्। षष्ठीस्थाने इत्यस्य तु नात्र विषयः। षष्ठ्या अश्रुतत्वादेकार्थीभावाच्च। एतेन स्वमतेऽनुवादेऽपि परिभाषाप्रवृत्त्या षष्ठीस्थाने इति दुर्वारेत्युदयङ्करोक्तिरपास्ता। पूर्वस्य स्थिताविति। पूर्वस्य स्थितस्य पालनार्थमिति भावः। तन्त्रफलं दर्शयति। अत एवैनेय इति। न्यायप्राप्तेति। न चास्य न्यायस्य लुङ्मात्रविषयत्वमावश्यकम्। अत एव कौह्लिः खेयं तार्तीयीकमित्यादिसिद्धिः। अन्यथा उत्वेत्वसम्प्रसारणानां गुणवृद्धिभ्यां निवृत्तौ तत्सन्नियोगशिष्टलत्वादीनां निवृत्तिप्रसङ्गात्।

**त्तिप्रतिबन्धेन नकारस्थितिः। अत एव न पदान्तसूत्रे पञ्चेन्द्राण्यो देवता अस्य पञ्चेन्द्र इति लुकि न स्थानिवदित्यस्योदाहरणं दत्तं भाष्ये। अन्यथा तत्र पूर्वत्वेन दृष्टस्य संबन्धिनः कस्य चिद्विधेय-**

---

अत एव च धिनुत इत्यादावकारलोपे उप्रत्ययश्रवणं च सिद्ध्यतीति वाच्यम्। न्यायस्य प्रत्ययलोपमात्रविषयकत्वेनोक्तदोषवारणेन लुङ्मात्रविषयकताया अनौचित्यात्। अत एव व्रातकिशब्दादपत्येऽणि टिलोपे कुको निवृत्तौ व्रात इति सिध्यति। किं चास्य प्रधानकार्यापाये उभयोरप्यपाय इत्येवार्थः। प्राधान्यं च प्रत्ययप्रकरणात् खेयं तार्तीयीकं धिनुत इत्यादौ प्रत्ययस्यैव। फौह्लिरित्यादौ निष्ठादेशप्रकरणाल्लत्वस्य क्वचित् प्रथमविधेयस्यापीत्याद्यन्यत्र विस्तरः। एवं च कार्यमात्रविषयत्वे न किंचिद्बाधकम्। अत एव चिण्वद्भावसन्नियोगशिष्ट इट् तदभावे न प्रवर्तते। न च तत्रैकयोगनिर्दिष्टानां सहवा प्रवृत्तिस्सहवा निवृत्तिरिति न्यायेन सिद्धिरिति वाच्यम्। अस्या अनुवृत्तिमात्रविषयकत्वात्। एवं च लुङ्मात्रविषय इति सङ्कोचोऽनुचित एवेति दिक्। **नकारस्थितिरिति।** ननु सन्नियोगशिष्टन्यायबोधितनकारनिवृत्तौ कर्तव्यायां स्थानिवत्त्वस्य वक्तुं शक्यतया न प्रकृतार्थस्यावश्यकता। न च परिभाषाविधेयस्य नातिदेशविषयत्वमिति वाच्यम्। वेतस्वानित्यत्रैकदेशविकृतन्यायप्राप्तरुत्वाभावायातिदेशावश्यकत्वादिति चेन्न। सन्नियोगशिष्टन्यायेनोभयोर्निवृत्तिबोधनेन पूर्वमात्रविधित्वाभावात्। न चाकृतव्यूहपरिभाषया पूर्वमात्रस्य नकारस्य निवृत्तौ स्थानिवद्भावप्रवृत्तिस्सुलभेति वाच्यम्। तस्या असत्त्वात्। एतेनेदं फलं चिन्त्यमिति वदन्तः परास्ताः॥

केचित्तु प्राचीनरीत्या सूत्रं व्याख्याय पूर्वसूत्राद्वैलक्षण्येनालाभान्नातिदेशस्य नातीवोपयोग इत्याशयेनाह। **वस्तुत इति। पूर्वस्य स्थिताविति।** एवं च पटयतीत्यादौ पूर्वस्य ह्रस्वाकारस्य स्थितिं प्रति स्थानिवद्भावादभावा-

स्याभावात्स्थानिवत्त्वाप्राप्तिरेवेति तदसङ्गतिः स्पष्टैव । प्रकृतसूत्रेऽपि भाष्ये "कर्मसाधनस्य विधिशब्दस्योपादाने न सर्वमिष्टं संगृहीतमिति भावसाधनो विज्ञास्यते पूर्वस्य विधानं प्रति पूर्वस्य भावं प्रति स्थानिवत्" इत्युक्तम् । तत्र भावसाधन इत्यस्य

---

तिदेशे नोपयोग इति भावः । नन्वभावातिदेश एवास्तु, किं तन्त्रेणेत्यत आह । **अत एवैनेय इति** । एतदर्थमस्यार्थस्यावश्यकतया व्यापकत्वादयमेवार्थः स्वीकार्यो, न त्वाभावातिदेश इति भावः । **नकारस्थितिरिति** । सन्नियोगशिष्टन्यायबोधितनकारनिवृत्तौ न तत्र स्थानिवत्त्वं, तेन न्यायेनोभयोर्निवृत्तिबोधनेन पूर्वमात्रविधित्वाभावात् । एतेन वस्तुत इत्यादिग्रन्थस्यैवमाशयकत्वेऽभावातिदेशव्यवस्थापनोत्तरमेव लेखनमुचितम् । व्यवधानेन लेखनान्नोक्ताशयकल्पना युक्तेति शङ्का निरस्ता । पूर्वमात्रस्य विधावित्यर्थनिर्णयात् पूर्वमस्यार्थस्यासाधारणफलस्य वक्तुमशक्यत्वादिति व्याचख्युः ॥

भाष्यस्वरसस्तु पूर्वव्याख्यान इति प्रतिभाति । **विधेयस्याभावादिति** न च यस्येति लोपस्तथा, स्पष्टं चेदं प्रदीपोद्योतयोरिति वाच्यम् । वार्तिकमते कर्तीत्यादौ स्थानिवत्त्वेन प्राप्तगुणादिवारणाय न लुमतेत्यत्र बाध्यसामान्यचिन्तावश्यंभावेनाचः परस्मिन्नित्यस्यापि निषेधात् । आनुकि तु न सः, प्रत्यये परतः पूर्वस्य कार्याभावात् । वार्तिकोदाहरणस्य वार्तिकरीत्यैव दातव्यत्वात् । नियमत्वमिति भाष्यमतेऽपि निषेधमुखेन प्रवृत्तिरिति पक्षे तस्या आवश्यकत्वाच्च, विधिमुखेन प्रवृत्तावपि श्रविष्ठादिपरित्यागेनानुक्पर्यन्तमनुधावतो भगवत आनुक एव तात्पर्यविषयत्वाच्च । एवं स्थिते चिन्त्यमिति ब्रुवन्तो मान्या इति भट्टाः । अन्ये तु स्थानिवत्त्वेन यस्येति लोपो नापादयितुं शक्यः । तेनैव स्थानिवत्त्वेन ङीषोऽपायाभावेनानुकोऽपि निवृत्त्यभावेनाकारान्ते भत्वस्य दुर्लभत्वादित्याहुः ॥

अस्यार्थस्य भाष्यानुक्तत्वशङ्कां परिहरति । **प्रकृतसूत्रेपीति** । इत्युक्त-

मिति। न च भाष्ये पूर्वस्य भावं प्रतीत्युत्तरं पूर्वः स्यादित्युक्त्वा पूर्वस्यापूर्वतया प्रवृत्तावेव स्थानिवदित्यर्थलाभात्कथं प्रकृतार्थलाभ इति वाच्यम्। पूर्वः स्थितस्स्यादित्यर्थकतया प्रकृतार्थसिद्धेः। स्पष्टं चेदं न पदान्तसूत्रे उद्योते। न चैतद्भाष्यस्यान्यथासिद्धायान्नित्यादिसाधनाय प्रवृत्ततया एकदेश्युक्तित्वेन नोक्तार्थसाधकतेति वाच्यम्। अन्यथासिद्धेरेव कर्तव्यायामेवमुपपादनेनैतत्सिद्धान्तव्यवस्थापन एव तात्पर्यावधारणादस्य सिद्धान्त्युक्तित्वाक्षतेः। स्पष्टं चेदमुद्योते। सिद्धान्तिनापि भावसाधनविधिशब्दस्याप्युपादानमत्रेति सिद्धान्तं बोधयितुमन्यथासिद्धिर्नोक्तेति ग्रन्थेनेति दिक्। नन्वत्र मास्तु तन्त्रम्। विधिशब्दो भावसाधन एव। विधिर्भावः। स च सत्तारूपः। सत्ता च द्विविधा। शास्त्रीयकार्यप्रवृत्तिरूपा अनिवृत्तिरूपा च। एवं च पूर्वसम्बन्धिशास्त्रीयकार्यप्रवृत्तौ पूर्वस्य स्थितौ च स्थानिवद्भाव इति पर्यवस्यति। आद्योदाहरणं निगाल्यत इति। अन्त्योदाहरणमैनेयः पटयतीत्यादि। एवं च तन्त्राश्रयणं विफलमेव। अत एव कैयटे भावसाधन एव विधिशब्दो व्यापकत्वादाश्रीयत इत्युक्तम्। उद्योतेऽपि प्रकृतसूत्रे उभयोरपि ग्रहणं बोध्यम्, कैयटे भावसाधन एवेत्येवशब्दोप्यर्थ इति केचिदित्यत्र केचिदित्यरुचिबोधकपदोपादानमित्यत आह। सोऽपीत्यर्थ इति। अयं भावः। पूर्वस्य प्रवृत्तौ स्थानिवदित्युक्तौ वैयाकरण इत्यत्र यणादेशस्थानिवत्त्वेनैज्न स्यात्। ज्ञापकेन तत्साधनं तु तन्त्राद्विशिष्टम्। अतोऽत्र भावशब्दः स्वरूपेणावस्थानरूपस्थित्यपरपर्यायः। एवं च निगाल्यत इत्यादिसिद्धये कर्मसाधनोऽप्यावश्यकः। धिन्वन्तीत्यत्रेट् च नेति तदुत्तरभाष्यमेकदेश्युक्तमेव। वैयाकरण इत्यत्रैचोऽसाधनात्। ऐनेय इत्यादिसिद्धये भावसाधनोऽपि। एवं च तन्त्रस्यावश्यकतया भाष्येऽपिशब्दः पूरणीय इति। उद्योते केचिदित्युक्तिस्तु कैयटस्थैवशब्दस्याप्यर्थकत्व एवारुचिं बोधयति। व्यापकत्वादाश्रीयत इत्युत्तरग्रन्थानानुगुण्यात्, न तु तन्त्रांश इति दिक्।

सोऽपीत्यर्थः । पूर्वत्वञ्च व्यवहिताव्यवहितसाधारणम्, अव्यवहितग्रहणे मानाभावात्, स्वरे निषेधाच्च । तेन पटयतीति सिद्धम् । प्रकृते च द्वित्वनिषेधे स्थानिवत्त्वप्राप्तिः ॥

न पदान्त । अत्र द्विर्वचनसवर्णादिग्रहणं वतिघटितान्यातिदेशानां त्रिपाद्यामपि प्रवृत्तिबोधनार्थम् । तेन राम इत्यादौ

---

ननु पूर्वत्वेऽवध्याकाङ्क्षायामच इत्यस्य तन्त्रेणान्वयादनुवादेऽपि परिभाषाप्रवृत्त्या तस्मादित्यनेनाव्यवहितत्वं लभ्यत इत्यत आह । स्वरे निषेधाच्चेति ॥

वतिघटितेति । तेन बहिरङ्गपरिभाषायाः त्रिपाद्यां न प्रवृत्तिरिति भावः । नन्वेवं प्रत्ययलक्षणसूत्रस्य त्रिपाद्यामप्रवृत्त्यापत्त्या दीर्घाहो निदाघेत्यादौ रोऽसुपीत्यादि स्यात् । न च वतिघटितेति मास्तु, बहिरङ्गपरिभाषाव्युदासायातिदेशसूत्राणामित्येव ज्ञाप्यताम् । व्यपदेशिवद्भावस्य त्रिपाद्यामप्रवृत्तावपि प्रत्ययावयवेऽपि प्रत्ययत्वव्यवहारस्यान्यत्र ज्ञापितत्वेनाचैर्षादित्यत्र षत्वसिद्धेरिति वाच्यम् । यज्ञस्येत्यत्रोदात्तादनुदात्तस्य स्वरित इत्यस्य व्यवधानेऽपि प्रवृत्तये स्वरविधौ व्यञ्जनमविद्यमानवदित्यस्य त्रिपाद्यामप्रवृत्त्यापत्तेः । तत्प्रत्याख्याने हल्स्वरप्राप्ताविव्यस्य प्रवृत्तेरावश्यकत्वाच्च । प्रातिपदिकग्रहणे इत्यस्यास्त्रिपाद्यामप्रवृत्तावयस्कुम्भीत्यत्र सत्वानापत्तेश्च । न च वतिघटितेति निवेशेऽपि तत्र दोष एवेति वाच्यम् । तत्र फलबलेन प्रातिपदिकग्रहणे लिङ्गविशिष्टस्य ग्रहणं यथाभवति तथा कर्तव्यमित्यर्थेन प्रातिपदिकवल्लिङ्गविशिष्टमिति परिभाषास्वरूपस्वीकारेणादोषादिति चेन्न । नियामकत्वमिति भाष्यमते अस्यापि स्थानिवत्त्वबोधकतया वतिघटितत्वात् । विधिमुखेन प्रवृत्तावपि तत्र स्थानिवदित्यनुवृत्त्याऽदोषाच्च । अन्येति । फलितार्थकथनम् । ज्ञाप्यकोटिप्रवेशे तु स्वांशे चारितार्थ्यं दुर्निरूपं स्यात् । एवं चास्यापि निषेधाविषये प्रवृत्तिरिष्टैव । तेन मद्धिष्मानित्यत्र जश्त्वं नेति दिक् । राम इत्यादाविति । आदिना

विसर्गादिसिद्धिः। अत्र विधिशब्दो भावसाधनः। पदान्तेत्यत्रान्त-शब्दश्चरमावयववाची। कर्मषष्ठ्या समासः। तेन एषो यन् हस-

---

अदमुयङ्, क्षीरपेण, अयस्कुम्भीत्यादि सङ्ग्रहः। विसर्गादिसिद्धिरिति। अन्यथा आनुमानिकस्थानिवद्भावाप्रवृत्त्या सुबन्तत्वाभावात्तदसिद्धिः। इदं कार्यकाले। यथोद्देशे तु पदसंज्ञाशास्त्रदृष्ट्या रुत्वस्यासिद्धत्वेन रान्ते सान्त-बुद्ध्या पदत्वप्रवृत्तौ बाधकाभावेनेष्टसिद्धेः। आदिना अदमुयङित्यत्र स्थानिवत्त्वे-नादश्शब्दत्वान्मुत्वं क्षीरपेणेत्यत्र णत्वमयस्कुम्भीत्यत्र सत्वमित्यादि संगृह्यत इति दिक्। भावसाधन इति। यत्तु कर्मसाधनत्वाङ्गीकारेऽपि कर्मधारय-समासेनेष्टसिद्धिरित्याहुः, तत्तु पदेऽन्तः पदान्तः पदान्तस्य विधिः पदान्त-विधिरिति भाष्याक्षराननुगुणत्वादुपेक्ष्यम्। कर्मधारये विधिशब्दस्य क्रियाशब्दत्वेन पूर्वनिपातापत्तेश्च। कर्मषष्ठ्या समास इति। न तु पूर्वसूत्रवत् सम्बन्ध-सामान्यषष्ठ्या समासः। तथा सति पदान्तकर्मकस्य पदान्तसम्बन्धित्ववत्पदा-न्तोद्देश्यकस्यापि पदान्तसम्बन्धित्वं स्यादिति भावः। एतेन पदान्तस्य स्थाने इत्यर्थश्शङ्कितुमशक्यः, पदान्तस्य स्थाने विधौ द्विर्वचनादेश्च विधावित्यर्थाश्रयणे वैरूप्यापत्तेरित्याचार्योक्तमपास्तम्। एषो यन् हसतीति। उदाहरणप्रसिद्धि-बोधनोपायतया क्वचिदयं दृश्यते प्रयोग इति सूचयितुं हसतीत्यस्य प्रयोगः। यत्तु एषो यन्नित्यसाधुः, परत्वान्नित्यत्वाच्च सलोपस्य न्याय्यत्वात्। न च तत्र स्थानिवद्भावः। पादस्य लोप इति लोपस्येव सुलोपस्यापि पदचरमावयवत्वात्। लक्ष्यानुसारेण पदसंस्कारस्यैवाश्रयणाच्च। अत एव य एवासि स सन्यजेति श्रौतप्रयोगः एष यन्निति छान्दोग्यप्रयोगश्च संगच्छते। लोकेऽपि स सन्नित्येव प्रयुज्यते न तु सः सन्नितीत्याहुः, तन्न। अस्यापि क्वाचित्कस्य प्रयोगस्येहोदा-हरणत्वस्योपपादितत्वेन छान्दोग्यप्रयोगानुरोधेन पदसंस्कारवदेतदनुरोधेनात्र वाक्यसंस्कारस्य स्वीकारात्। लोपस्यानवयवत्वेन स्थानिवत्त्वस्य दुर्वारत्वाच्च।

तीत्यादौ "एतत्तदोः" इति सुलोपो न। इणः शतरि यन्निति रूपम् । तत्र यणः स्थानिवत्त्वात् । उत्वे च न स्थानिवत्, अनेन निषेधात् । स्पष्टश्चेदं भाष्ये इति भाष्यप्रदीपोद्योते निरूपितम् ॥

---

अत एव पादस्येति लोपस्य स्थानिद्वारा समासान्तत्वं स्वीकृतं वृत्तिकृता, दीक्षितोऽप्येवम् । अभावस्य कथं समासान्तत्वमत आहेत्यवतारितं नागेशेन । समासान्तेषु पाठसामर्थ्यादारोपितं समासान्तत्वमस्येति तेषामाशयः । एवं च न तद्दृष्टान्तो लोपसामान्यस्यावयवत्वं समर्थयितुमीष्टे । अपरितुष्यन् खल्वपि भवान् लक्ष्यानुसारेणेत्याद्यवोचत् । किंच परत्वान्नित्यत्वादिति भवदुक्तमसम्बद्ध-मेव, सुलोपप्रवृत्तिदशायामुत्वस्य प्राप्त्यभावात् । न च रुत्वे कृते तयोर्युगपत् प्राप्तिरिति वाच्यम् । रुत्वस्यासिद्धतया पूर्वमेव सुलोपप्राप्तेरित्यलम् । ननु भावसाधनत्वे भाष्योक्तं षडिक इति फलं परित्यज्य एतत् पर्यन्तानुधावनं किमर्थमिति चेन्न । कर्मषष्ठ्या समासफलस्यापि प्रदर्शनार्थत्वादिति दिक् । उत्वे चेति । न च रोरनादिष्टादचः पूर्वत्वाभावेनातिदेशप्रसक्तिरेव नेति वाच्यम् । स्थानिद्वारकस्य तस्य सत्त्वेनातिदेशप्रवृत्तेः । हशि चेत्येतद्दृष्ट्या रुत्वस्य सिद्धत्वेऽप्यतिदेशदृष्ट्या तस्यासिद्धतया पूर्वत्वेन दृष्ट एव कार्यप्रवृत्तिबुद्ध्या अतिदेशप्रवृत्तेश्चेति दिक् । स्पष्टं चेदमितीदमा भावसाधनत्वमात्रं परामृश्यते, न तु फलमपि, तस्य भाष्ये अदर्शनात् । नन्वेवं वेतस्वानित्यत्र रुत्वं प्राप्नोति । न चाल्लोपस्य स्थानिवत्त्वमनेन निषेधात् । न च तसौ मत्वर्थे इति भसंज्ञया पदत्वबाध इति वाच्यम् । तत्र स्थानिवत्त्वेन सान्ते भत्वस्य दुर्निरूपत्वात् । न च भसंज्ञाप्रतिबन्धकस्थानिवत्त्वस्य सान्ते पदत्वसम्पादनद्वारा परम्परया रुत्व-साधकतेति तस्याप्यनेन निषेध इति वाच्यम् । अत्र पदत्वमात्रद्वारिकाया एव स्वीकार्यत्वात् । अन्यथा षडिकासिद्धेः, स्पष्टं चेदमुद्योत इत्यत आह । अत्र

अत्र पदेऽन्त इति सप्तमीसमासो भाष्ये उक्तस्तेन प्रत्यासत्त्या पदे परतः चरमावयवे कार्ये कर्तव्ये परपदस्थाजादेशस्यैवानेन स्थानिवत्त्वनिषेध इति वेतस्वानित्यादौ न दोषः। न चैवमपि "पूर्वत्रासिद्धीये न स्थानिवत्" इति निषेधोऽत्र दुर्वारः। पदेऽन्त इत्यर्थेन तत्र स्थानिवत्त्वनिषेधव्यावृत्तिपरभाष्यप्रामाण्येन पूर्वत्रासिद्धे इत्यत्र पदचरमावयवविधायकातिरिक्तस्यैव त्रैपादिकस्य ग्रहणात्। अत एव महिष्मानित्यत्र जश्त्वं न। सूत्रे जश्पदेन "झलां जश्

---

पदेऽन्त इत्यादि। प्रत्यासत्त्येति। पदे इत्यनेन परपदस्योपस्थितत्वेन तत्स्थ एवाजादेशो गृह्यते इति भावः। अत एवैत्संन्नित्यत्र स्थानिवत्त्वेनैव जुस्वारणाद्यत्रोभे श्रूयेते इत्यर्थस्यानावश्यकत्वमित्युक्तमभ्यस्तसंज्ञासूत्रे भाष्ये। अन्यथा ऐत्संन्नत्रेत्यत्रानेन स्थानिवत्त्वनिषेधादुक्तार्थस्यावश्यकतया तदसङ्गतिस्स्पष्टैव। षष्ठीसमासे प्रत्यासत्तिफलन्तु उपदेशे नान्तात् ध्रनधातोर्ण्यन्तात् क्विपि ह् ध्रानित्यस्याश्वशब्देन योगे ध्राणश्व इत्यत्र णिलोपस्थानिवद्भावस्य रषाभ्यामित्यत्रापदान्तस्य मूर्धन्य इत्यनुवर्त्य पदान्तस्येति प्रत्याख्यातृभाष्यकृन्मये पदचरमावयवणत्वसाधकतया प्रसक्तस्य निषेधस्याभावाण्णत्वसिद्धिः। पूर्वत्रासिद्धीये इति तु न। तस्य दोष इति प्रतिप्रसवात्। यत्तु, एवं निगाल् देवदत्त इत्यत्र लत्वसिद्धिरपि फलमिति, तन्न। तस्यानभिधानस्योत्तरत्र वक्ष्यमाणत्वादिति दिक्। पदचरमावयवविधायकातिरिक्तस्यैवेति ॥

नन्वेवमपि पिपठीरित्यत्र पूर्वत्रासिद्धे न स्थानिवदिति निषेधसंचारपरोत्तरग्रन्थासङ्गतिः। न च स्वादिष्विति पदत्ववच्चरमावयवेत्यादि सङ्कोचे विरोधाभाव इति वाच्यम्। पिपठीर्भ्यामित्यादौ दोषात्। न च तद्धितनिमित्तकपदत्ववदित्यादिसंकोचेनादोष इति वाच्यम्। एवमपि पिपठीः कल्पमित्यादौ दोषात्। न च तत्र क्वौ लुप्तमित्यनेन निर्वाह इति वाच्यम्। तस्य परिगणित-

मात्रविषयकत्वात् । न च धात्वनवयवो यः पदचरमावयवस्तद्विधायकातिरिक्तत्वेन सङ्कोच इति भट्टोक्तरीत्या निर्वाह इति वाच्यम् । एवमपि तिरश्चेत्यत्र श्चुत्वे पूर्वत्रासिद्धीये न स्थानिवदिति संचारपरोत्तरग्रन्थासङ्गतेः । एतेन प्रत्ययघटकसस्थानिकरुभिन्नपदचरमावयवेत्यादिसङ्कोचः परास्तः । नासाशब्दाण्ण्यन्तात् क्विपि ना इत्यत्र रुत्वे कर्तव्ये निषेधानुपपत्तेश्च । न च यस्य स्थानिवद्भावः प्रतिषिध्यते तादृशादेशहेतुभूतप्रत्ययनिमित्तकपदसंज्ञावद्गृह्यत इति भट्टोक्तदिशा ड्मतुब्निमित्तकपदसंज्ञावद्गृह्यत इत्याचार्योक्तदिशा वा निस्तार इति वाच्यम् । षडिके पूर्वत्रासिद्धे नेति निषेधमाशङ्क्य न पदान्तसूत्रोक्तरीत्या तस्य पदान्तजश्त्वेऽप्राप्तेश्चेत्युक्तस्य तद्धितशेखरग्रन्थस्यासाङ्गत्यापत्तेः । षाडिके दोषापत्तेश्च । द्वितीयादच उत्तरस्य लोपविधायकवचनप्रामाण्याद्धत्वे स्थानिवत्त्वमिति स्वीकारे तु गौरवम् । एतेन टिलोपप्रयोजकप्रत्ययप्रयोज्यपदत्ववदित्यादिसङ्कोचः स्वप्रयोज्यकार्यप्रयोज्यत्वोभयसम्बन्धेन प्रत्ययविशिष्टपदत्ववदित्यादिसङ्कोचः स्वप्रयोज्यपदसंज्ञावदुद्देश्यकत्व स्वप्रयोज्यकार्यप्रयोज्यत्वोभयसंबन्धेन प्रत्ययविशिष्टो यः पदचरमावयव इत्यादिसङ्कोचश्च परास्ताः । षडिक इत्यत्र पदसंज्ञाया इकप्रत्ययप्रयोज्यत्वाभावात् । द्वितीयतृतीययोस्सुप्प्रत्ययमादायाद्यसम्बन्धसम्पादनेऽपि द्वितीयस्य दुर्लभत्वात् । न च ठस्य परम्परया पदसंज्ञाप्रयोजकत्वमस्ति ठचि ङ्कुलिदत्तशब्दलोपे यस्येतिलोपेऽल्लोपस्य स्थानिवत्त्वादकारान्ते भत्वप्रवर्तनेन षान्ते अप्रतिबन्धेन पदत्वप्रवर्तकत्वादिति वाच्यम् । अल्लोपे सत्यसति वा षान्ते पदत्वस्य निर्बाधत्वेनाल्लोपस्य पदसंज्ञाप्रयोजकत्वाभावेन तन्निमित्तभूतठचः प्रयोजकत्वस्य दूरापास्तत्वात् । एवं च सुपमादायापि न निर्वाहः । न च तद्धितनिमित्तकलोपपरकपदचरमावयवेत्यादिश्रीधरोक्तसङ्कोचेन सर्वनिर्वाह इति वाच्यम् । एवमपि पटितीत्यत्रैकादेशस्य स्थानिवद्भावस्य पूर्वत्रासिद्धे नेति निषेधेन टान्तस्यैकदेशविकृतन्यायेन पदत्वा-

जश्त्वापत्तेः। न च तत्राज्झलादेशत्वात् स्थानिवत्त्वाभावश्शङ्क्यः। उत्तर-स्थानिनमादायाज्मात्रस्थानिताकादेशत्वात्। न च न पदान्तेति निषेधश्शङ्क्यः। तस्य निषेधस्य परमात्रस्थाजादेश एव प्रवृत्तेः। न चैकदेशविकृतन्यायानित्य-त्वेन तत्सिद्धिरिति वाच्यम्। तदनित्यत्वस्य नागेशानभिप्रेतत्वात्। क्वचित्तु लक्ष्यानुसारान्न्यायानाश्रयणं, तेनाभीयादित्यादिसिद्धिरिति परिभाषेन्दुशेखर-ग्रन्थस्तु प्राचीनानुसारेणैव। स्वमते उपसर्गत्वस्याक्तपरिमाणनिष्ठतया स्वरसत एव न्यायाप्रवृत्तेः। न च तत्र जश्त्वाभावार्थं न्यायानाश्रयणमित्युक्तमिति भ्रमितव्यम्। इण्धातुस्थशेखरतो ह्रस्वविषयकताया एव लाभात्। तत्र हि अभीयादित्यत्र भान्तस्यैकदेशविकृतन्यायेनोपसर्गत्वादिकारस्य परादिवत्त्वेने-ण्त्वाद्ध्रस्वस्यादित्याशङ्क्योपसर्गसंज्ञायाः परिच्छिन्नपरिमाणप्रादिनिष्ठत्वादिति समाधाय लक्ष्यानुसारात् क्वचिन्न्यायानाश्रयणमिति न दोष इत्यन्ये इत्युक्तम्। अत्र चान्ये इत्युक्त्या पूर्वोक्तसमाधान एवादरस्सूचितः। किं च तत्रैव परेत्वित्यादिनाऽभीयादित्यस्यानभिधानोक्त्या तस्येहोदाहरणत्वेन दानात् स्वा-नभिप्रेतत्वं सूचितम्। अत एव तत्रोपष्टम्भकतया कैयटमेव प्रादर्शयत्। सोऽपि कैयटः मध्येऽपवादविषये प्रवृत्तः न्यायसाम्यादत्राप्युपयुज्यत इति यथाकथंचिदु-पष्टम्भकं भवतीत्युक्तमित्यन्यत्र विस्तरः। एवं चायं सङ्कोचो दुष्कर एव। यद्यपि यस्यादेशस्य स्थानिवद्भावश्चिकीर्षितस्तदादेशप्रवृत्त्यव्यवहितोत्तरकालप्रवृत्तिक-पदत्ववच्चरमावयवातिरिक्तत्वेन सङ्कोचः, अस्ति च वेतस्तानित्यत्र लोप-प्रवृत्त्यव्यवहितोत्तरकालमेवैकदेशविकृतन्यायेन स्वादिष्विति वा पदत्वम्। षडिक इत्यत्राप्यादेशप्रवृत्तेः पूर्वमेव पदत्वसत्त्वेऽपि कार्यकाले आदेशप्रवृत्त्युत्तरकालं प्रवृत्तिरावश्यकी। पटितीत्यादावप्येकदेशविकृतन्यायेन तत्त्वमिति वक्तुं शक्यते तथापि वनेश इत्यत्र लोपस्यानवयवत्वेन पूर्वत्रासिद्धीय इत्यस्य प्रवृत्तौ न-लोपापत्तिर्दुर्वारा। न च सुब्विध्याद्यतिरिक्ते नलोपस्य सिद्धतया न्यायसिद्ध-

स्यास्य तत्राप्रवृत्तिरिति वाच्यम् । एवमपि तत्र ङमुटो दुर्वारत्वात् । न च ङमन्तपदावयवस्य ह्रस्वात् परस्य ङमो ङमुडजादौ पदे इति व्याख्यानेन यदागमन्यायेन पदान्तभक्तस्य पदान्तत्वबोधनेन ङमुटः पदचरमावयवत्वमेवेति वाच्यम् । एवमपि वृद्धेश इत्यादौ संयोगान्तलोपापत्तेः । बुधेश इत्यादौ भष्भावापत्तेश्च । एवं तिरश्चेत्यत्रत्योत्तरग्रन्थासङ्गतिरिति चेदत्र ग्रन्थतत्त्वविदः । पदसंज्ञाप्रयोज्यपदचरमावयववर्णनिमित्तककार्यविधायकातिरिक्ताविषयकतया सङ्कोचः कार्यः । पदसंज्ञाप्रयोज्यत्वविशेषणदानात्तिरश्चेत्यत्र पूर्वत्रासिद्धीये न स्थानिवदित्यस्य प्रवृत्तिपरोत्तरग्रन्थविरोधो न । यदि तु स ग्रन्थः प्राचीनरीत्यैव । स्वमते न पदान्तेत्यनेनैव सिद्धिरित्युच्यते, तदा तद्विशेषणमनुपादेयमेव। पदचरमावयववर्णनिमित्तकत्वनिवेशात् वृद्धेश इत्यत्रैकदेशविकृतन्यायेनैकादेशात्पूर्वसमुदायवृत्तिपदत्वमादाय संयोगान्तलोपादि न। अत्र लोपस्य चरमावयवत्वाभावेऽपि अलोन्त्यस्येति प्रवृत्त्या उद्देश्यस्यापि निमित्तत्वाङ्गीकारेण चरमावयववर्णनिमित्तकत्वाक्षतेः । वर्णेतिनिवेशात्तस्य दोषस्संयोगादिलोपेत्यस्य काक्यर्थमित्युदाहरणपरभाष्यविरोधो न । अन्यथा संयोगादिलोपस्य पदचरमावयवसंयोगनिमित्तकत्वात्तत्र पूर्वत्रासिद्धे इत्यस्याप्रवृत्तौ तदसङ्गतिः स्पष्टैव । न च झलन्तसंयोगादिलोपस्यैवेष्टत्वमितीदमुदाहरणमेकदेशिन एवेति वाच्यम् । संयोगान्तलोपो झलो लोप इति भाष्यस्वरसात् संयोगादिलोपे झल इत्यस्यासम्बन्ध एवेति भाष्याशयात् । स्पष्टं चेदमुद्योते। प्रतिप्रसवस्यैव वैयर्थ्यमिति तु न। झलि परे लोपविषये चारितार्थ्यात्। न च लोपस्याप्यवयवत्वं स्वीकृत्य चरमावयवविधायकातिरिक्तत्वेनैव सङ्कोचः क्रियतामिति वाच्यम्। एवमपि बुधेश इत्यादौ भष्भावापत्तेः । मम तु पदचरमावयवस्य झषो भष्भावे निमित्तत्वेन न दोषः। न चैवं पिपठीरित्यत्र पूर्वत्रासिद्धीय इत्यस्य प्रवृत्तिपरोत्तरग्रन्थविरोध इति वाच्यम् । तत्र केचिदित्युक्त्या नागेशस्यारुचिसूचनात्। अत एव तदुत्तरं क्वौ लुप्तं नेति तु

तत्त्वमित्युक्तं नागेशेन। यद्यप्ययं पाठः क्वचित्पुस्तकेषु न दृश्यते, तथापि क्वचिद्दृश्यत एव। अभिप्रेतश्चायमर्थो नागेशस्य। अत एव पिपठीरित्येतत् क्वौ लुप्तमित्येतस्यासाधारणोदाहरणमित्युक्तमुद्योते। न चैवं स्कन्दयतेः स्कन् लेहयतेः लेट् दोहयतेः धोगिति पूर्वत्रासिद्धीय इत्यस्योदाहरणदानं कैयटस्य विरुध्येतेति वाच्यम्। सम्भवमात्रेण तदुदाहरणात्। क्वौ लुप्तमित्यनेनान्यथासिद्धेः। अत एव भाष्ये पूर्वत्रासिद्धे चेत्युपक्रम्य पदान्तविधौ न किमप्युदाहृतम्। अत एव संयोगान्तलोपादिष्वित्युपक्रम्य संयोगान्तलोपे उदाहरणदानं च संगच्छते। कैयटोदाहृतानां क्वौ लुप्तमित्येव सिद्धिरिति तदाशयः। न चैवं विचि दोषश्शङ्क्यः। एतद् भाष्यप्रामाण्येनासार्वत्रिकस्य विच ईदृशे विषयेऽभावबोधनात्। न चैवं पटुमाचष्टे पटयति, ततः क्विपि पट् पड्भ्यामित्यादौ टिलोपस्य स्थानिवत्त्वात् जश्त्वाद्यनापत्तिरिति वाच्यम्। एतद्भाष्यप्रामाण्येनेदृशानामनभिधानस्य तत्रैवोद्योते उक्तत्वेनादोषात्। न चैवं गर्दभयतेरप्रत्यये गर्धबितीति भाष्यविरोधः। अत एवोद्योतेऽनभिधानं क्वचिदित्यादिनोक्तं, न तु परेत्वित्यादिनेति वाच्यम्। पूर्वोक्तभाष्यस्वारस्येन तद्भाष्यस्य गर्दभमत्तीत्यर्थकगर्दभाच्छब्दाण्णिजन्तात् क्विबित्येवंपरतया योजनीयत्वेनादोषात्। उद्योते क्वचिदित्युक्तिस्तु क्वौ लुप्तमित्येतत् सिद्धोदाहरणानामनभिधानमप्रामाणिकमिति द्योतनायैव। यद्वा यस्यादेशस्य स्थानिवद्भावश्चिकीर्षितस्तादृशादेशप्रवृत्त्यव्यवहितोत्तरकालप्रवृत्तिकपदसंज्ञावद्विषयक एवायं सङ्कोचः। पूर्वोक्तपड्भ्यां गर्धबित्यादौ टिलोपाव्यवहितोत्तरं न पदसंज्ञाप्रवृत्तिर्णिचा व्यवधानात्, णिलोपोत्तरकालिका तु व्यवहिता। तथा च तत्र पूर्वत्रासिद्धे नेत्यस्य प्रवृत्तौ न किमपि बाधकम्। पटितीत्यादौ जश्त्वादिवारणमेकदेशविकृतन्यायस्य क्वचिदनाश्रयणं विनापि सिद्धमित्यादि सुधियो विभावयन्त्वित्याहुः ॥

झशि" इत्यस्यैव ग्रहणं, चरसन्निहितस्यैव ग्रहणौचित्यात् । कार्य-कालपक्षेऽपि त्रिपाद्यामन्तरङ्गपरिभाषा न प्रवर्त्तत इति वक्ष्यत इति न तयाऽस्य सिद्धिः । गोचेत्यादौ "गतिकारकोपपदानाम्" इत्यस्या-नित्यत्वेन सुबुत्पत्त्यनन्तरमेव समासः । "उत्तरपदत्वे च" इति

---

ग्रहणौचित्यादिति । अत एव पदान्तविधिं प्रति न स्थानिवदित्युपक्रम्य ब्रह्मबन्ध्वेत्यत्र जश्त्वं प्राप्नोतीति भाष्ये उक्तम् । अन्यथा जश्पदेन निषेधस्य दुर्वारत्वात्तदसङ्गतिस्स्पष्टैव । अत एव वेतस्वानित्यत्र न जश्त्वम् । अन्यथा पदेऽन्त इति व्याख्यानेन रुत्ववारणेऽपि जशि स्थानिवत्त्वनिषेधात्सान्ते पदत्वेन जश्त्वं दुर्वारम् । न च तत्र तसौ मत्वर्थे इति भत्वेन पदत्वबाध इति वाच्यम् । रुत्वशङ्कापरभाष्यप्रामाण्येन भत्वे स्थानिवत्त्वप्रवृत्तेः । एवं पटितीत्यादौ जश्त्वाभावोऽपि फलं बोध्यम् । एतेनेदं चिन्त्यम्, गर्धब्वानित्यत्र जश्त्वानापत्ते-रित्याचार्योक्तमपास्तम् । पूर्वोक्तरीत्या पूर्वत्रासिद्धे नेत्यनेन तत्सिद्धेश्च । अत एव पूर्वत्रासिद्धे नेत्यवष्टभ्य तत्प्रत्याख्यानमपि संगच्छते । ननु पदेऽन्त इत्यनु-चितम् । गतिकारकोपपदानां कृदन्तेन समासे उत्तरस्य पदत्वाभावाद्गोचेत्यादा-वनेन निषेधाभावेऽवादेशापत्तेरत आह । गोचेति । अत्र केचित् । कुशब्दस्य सच्छब्देन समासेऽल्लोपस्य स्थानिवत्त्वेन कदादेशस्येष्टतया पदचरमावयवस्य वर्णस्यैव ग्रहणमिति स्वीकारे तु गोरग्वचनपक्षाश्रयणान्न दोष इत्याहुः तन्न । तथा सत्यवङ्न्यासस्यैव सिद्धान्तिततया सिद्धान्तेऽवङापत्तेः । नावमञ्चतीति विग्रहे शसि नौच इत्यत्रावादेशापत्तेः । पदान्ते न स्थानिवदित्यस्य कौ स्त इत्युदाहरणपरसकलग्रन्थोच्छेदापत्तेश्च । यदपि कत्सादित्यत्र कदादेशसिद्धयेऽत्र व्यपदेशिवद्भावानतिदिष्टचरमावयवस्य ग्रहणमिति तदपि न । एस्सत्ता इसत्तेत्यत्र यणापत्तेः, तस्मात्तत्र कदादेशोऽनिष्ट इत्येव स्वीकरणीयमिति बोध्यम् । अनि-

**प्रत्ययलक्षणप्रतिषेधश्च प्रत्यासत्त्योत्तरपदस्य कार्यित्व एवेति न दोषः। पदे इति पदत्वयोग्योपलक्षणं वा। अत्रेदं भाष्यमपि मानम्॥**

**अत्र पदचरमावयवादिसाधकः प्रतिबन्धकश्च स्थानिवद्भावो**

---

त्यत्वेनेति। अत एव धनक्रीतासिद्धिरिति भावः। **कार्यित्व एवेति।** एतच्च ङमुट्सूत्रे विस्तरेण निरूपयिष्यते। गतिकारकेत्यस्यानित्यत्वे न मानं, धनक्रीतेति त्वजादिपाठात् सिद्धमिति स्वसिद्धान्ते गतिमाह। **पदे इतीति।** यत्तु कार्यित्वनिवेशस्य सविवादतया लक्षणया सिद्धिमाहेत्यवतारयन्ति। तन्न शोभनम्। नागेशस्य कार्यित्वनिवेशांशे सन्देहाभावात्। अस्मदादिसन्देहस्य तत्रारोपेण तद्ग्रन्थावतरणप्रदर्शनस्यायुक्तत्वाच्च। **अत्रेति।** पदत्वयोग्योपलक्षणत्व इत्यर्थः। गतिकारकेत्यस्यानित्यत्व इत्यर्थस्तु तदनित्यत्वे न मानमिति परिभाषेन्दुशेखरविरोधादुपेक्ष्यः। **इदं भाष्यमपीति।** पदेऽन्त इति विग्रहप्रदर्शनपरं भाष्यमित्यर्थः। अपिना न लुमताङ्गस्येत्यादिभाष्यसंग्रहः। **साधकः प्रतिबन्धकश्चेति।** साक्षात् परम्परया वेति भावः। अत्र परम्परा उपस्थितपदत्वद्वारिका तत्प्रतिबन्धकतयोपस्थितभत्वद्वारिका वा ग्राह्या। प्रापके तु द्वितीयादच ऊर्ध्वस्य लोपविधायकवचनप्रामाण्यात् भत्वद्वारिका न गृह्यते। अन्यथा षडिक इत्यत्राल्लोपस्य स्थानिवत्त्वस्याकारान्ते भत्वसम्पादनेन षान्ते पदत्वाप्रतिबन्धेन जश्त्वप्रापकतया तस्यापि निषेधे षान्तस्य भत्वेन जश्त्वानापत्तेः। एवं च परम्परया प्रापकस्य निषेधे फलं मृग्यम्। तत्र साक्षात् प्रापकनिषेधोदाहरणं गोचेति। यत्तु प्रतीचो यदिति निर्देशादच इत्यल्लोपो न स्थानिवदिति कल्प्यत इति। तन्न। तत्राल्लोपे चाविति दीर्घे तस्यानादिष्टादचः पूर्वत्वाभावेन स्थानिवत्त्वाप्रसक्तेः। एवं गोसत्त्वेति, अत्राल्लोपस्य स्थानिवद्भावः पदचरमावयवावङ्साधकः। प्रकाशकारस्तु दध्युपपदकेण्धातोर्मूलविभुजादित्वात्

के इणो यणिति यणि तस्य स्थानिवत्त्वस्येको यणचीति यणस्साक्षात् साधकस्य निषेधः फलमित्याहुः । प्रतिबन्धकनिषेधोदाहरणमेषो यन् हसतीति । अत्र वाक्यसंस्कारपक्षावश्यकता पूर्वमुपपादिता । तत्र पदसंस्कार एवेत्याग्रहे तु हरिशब्दस्य यशब्देन समासे तत आचारक्विबन्तात् कर्तरि क्विपि अल्लोपयलोपयोर्हरिरिदित्यत्राल्लोपस्य स्थानिवत्त्वस्य साक्षात् तुक् प्रतिबन्धकतया तन्निषेधः फलम् । एवं तेजश्शब्दपूर्वकादिण्धातोर्मूलविभुजादित्वात् के तेजोय इत्यत्र यणः स्थानिवद्भावस्साक्षादुत्वप्रतिबन्धक इति तन्निषेधःफलम् । यत्तु देवदत्तनशब्दादाचारक्विबन्तात्कर्तरि क्विपि विचि वाऽल्लोपे तत औप्रत्यये देवदत्तनावित्यत्र दीर्घाभावः फलमिति तन्न । दीर्घविधौ तन्निषेधेनोपपत्तेः । यदपि पयश्शब्दस्य ऋशब्देन समासे तत आचारक्विबन्तादप्रत्ययादित्यप्रत्यये गुणे तस्य स्थानिवद्भावस्य रोरुत्वप्रतिबन्धकतया तन्निषेधः फलमिति तन्न । गुणस्य स्थानिवत्त्वेपि यश्चाश्रीयते, नासावादेश इति रीत्याऽवयवाकारमादायोत्वप्रवृत्तेस्सुवचत्वात् । परम्परया पदचरमावयवप्रतिबन्धकस्थानिवत्त्वनिषेधोदाहरणं दध्यार इति । अत्र वृद्धेः स्थानिवद्भावः ऋत्यक इति प्रकृतिभावप्रवर्तनद्वारा यण् प्रतिबन्धकः । यदि तु तत्र वृद्धिघटकाकारनिमित्तको यण् भवत्येव । न च प्रकृतिभावोऽपवाद इति शङ्क्यम् । अपवादो यद्यन्यत्रेति न्यायेन पूर्वं यणः प्रवृत्तेः । प्रकृतिभावस्य विशिष्टनिमित्तकत्वात् । किं च ऋत्यक इत्यनेन ह्रस्व एव विधेय इति भाष्यमते तस्य पदचरमावयवस्य सक्षात्प्रापकः स्थानिवद्भाव इति तन्निषेधेनैवात्र सिद्धिः । एतेन रलावित्युदाहरणमपि प्रत्युक्तमित्युच्यते, तदा सर्पिश्शब्दात्तस्येदमित्यणि तस्याशब्देन समासे तत आचारक्विबन्तात् कर्तरि क्विपि नपुंसकह्रस्वत्वे तत आचारक्विबन्तात् कर्तरि क्विपि अल्लोपे ततो भ्यामि सार्पिर्भ्यामित्यत्राल्लोपस्य स्थानिवद्भावः भसंज्ञाप्रवर्तनद्वारा रूत्वप्रतिबन्धक इति तन्निषेधः फलं बोध्यम् । यदि तु तत्र प्रथमसङ्कोचे पूर्वत्रासिद्धे न स्थानिवदि-

निषिद्ध्यते विनिगमनाविरहात् । एतत्सूत्रभाष्यकर्मणिङित्यादि-सूत्रभाष्यैः "पूर्वत्रासिद्धे न स्थानिवत्" इत्यवष्टभ्य वरेयलोपस्वर-दीर्घग्रहणवर्जं द्विर्वचनादि प्रत्याख्यातमिति लभ्यते । निषेध इति । द्विर्वचनग्रहणात्पूर्वत्रासिद्धे इति निषेधाद्वेति भावः ॥

दकार इति । स्थानत आन्तर्यादिति भावः ॥

---

त्यनेन सिद्धिः, द्वितीयेऽपि क्वौ लुप्तमित्यनेन सिद्धिरित्युच्यते, तदा व्याघ्र-पाच्छब्दस्याशब्देन समासे ततष्टायामिनादेशे गुणे व्याघ्रपादेनेति स्थिते एकादेशस्य परादिवत्त्वेन स्वादित्वात्पूर्वस्य भत्वे पादः पदिति पदादेशे व्याघ्र-पदेनेत्यत्रैकादेशस्य स्थानिवद्भावः पाच्छब्दान्ते भत्वप्रतिबन्धद्वारा पदादेश-प्रतिबन्धक इति तन्निषेधः फलं बोध्यम् । यदि तत्र परपदमात्रस्थाजादेशत्वा-भावान्न प्रकृतनिषेधः प्रवर्तत इत्युच्यते, तदा व्याघ्रपाच्छब्दस्याशब्देन समासे तत आचारक्विबन्तात् क्विपि ततश्शसि व्याघ्रपद इत्यत्राल्लोपस्य स्थानिव-द्भावः पाच्छब्दान्ते भत्वप्रतिबन्धद्वारा पदादेशप्रतिबन्धक इति तन्निषेधः फलं बोध्यम् । यदि तु तत्र यदा स्थानिवद्भावस्तदा न पदादेशप्राप्तिः । यदा पदादेशस्तदा न पदचरमावयवत्वमिति सर्वथा पदादेशो न पदचरमावयव इत्युच्यते, तदा फलं मृग्यम् । एतत्सूत्रभाष्ये दीर्घस्य वर्ज्यकोटावदर्शना-दाह । कर्मणिङित्यादीति । आदिना चिण्णमुलोरित्यस्य संग्रहः । एवं चैतत् प्रामाण्यात् प्रकृतसूत्रस्थं भाष्यमुपलक्षणमिति भावः । दीर्घग्रहणवर्ज-मिति । दीर्घग्रहणस्य वर्ज्यकोटावावश्यकता चिण्णमुलोरिति सूत्रस्थशेखरतो-ऽवसेया । स्पष्टं चेदं कर्मणिङ् चिण्णमुलोरित्यत्रोद्योते । नन्वत्र सूत्रे दीर्घोप-लक्षणत्वस्यान्येत्वित्यादिना कथनात् कर्मणिङित्यत्र केचिदित्युक्त्याऽत्र नागे-शस्य नाभिनिवेश इति चेन्न । चिण्णमुलोरित्यत्र कौमुदीव्याख्यानावसरे कौमुदीकारेऽभिमानप्रदर्शनेनात्रैव तात्पर्यात् । न चैवं हंसौ जनावित्यादावेका-

**अदर्शनम्** । स्थाने इति वर्त्तते, प्रसङ्गे सतीति तदर्थस्तदाह प्रसक्तस्येति । शास्त्रतोऽर्थतो वेति भावः । अत्र दृशिर्ज्ञानसामान्ये । तत्र ज्ञानस्यावर्जनीयत्वेन तत्सामग्र्यन्तर्गता उच्चारणकृता सत्ता निषिद्ध्यते । तत्र प्रत्ययलोपे शास्त्रतोऽर्थतश्च प्रसक्तोच्चारणस्य लोपविधानेन तस्य तस्मिन् विषयेऽनुत्पत्तेरेवान्वाख्यानं प्रत्ययलक्षणार्थमिति बोद्धयम् । अर्थस्यैषा सञ्ज्ञा व्याख्यानात् । यत्तु "प्रसक्तस्येति किं, ग्रामे तिष्ठतीत्यादौ "ल्यब्लोपे" इति पञ्चम्यापत्तेः । अस्ति चात्र ल्यपोऽदर्शनम् । शास्त्रतोऽर्थतश्च न तत्प्रसक्तिरिति न दोष" इति, तन्न । तेन प्रत्यासत्त्या ल्यबन्तार्थकर्माधिकरणयोरेव

---

देशस्य परादिवद्भावेन सर्वनामस्थानत्वादुपधादीर्घापत्तिरिति वाच्यम् । लोपाजादेशस्यैव निषेधविषयत्वात् । न चैवमारतीत्यत्र दीर्घविधौ न स्थानिवदिति निषेधपरपरिभाषेन्दुशेखरविरोधः, पूर्वस्यैव विधावित्यस्यारतुरित्युदाहरणपरशेखरोद्योतविरोधश्चेति वाच्यम् । स्वरदीर्घयलोपेष्वित्यस्य प्रतिदीव्नेत्युदाहरणस्वारस्येनोपधादीर्घस्यैव ग्रहणमिति तात्पर्येणाविरोधात् । एतेन वर्ज्यकोटौ दीर्घग्रहणे जनावित्याद्यसिद्धिरिति वदन्तः परास्ता इति दिक् ॥

**अनुवर्तत इति** । अत एव सूत्रं सार्थकम् । अन्यथा प्रदेशेष्वेव लौकिकार्थावगत्या सूत्रवैयर्थ्यं स्यात् । तदनुवृत्तौ त्वेतादृशविशेषलाभायैव सूत्रं सार्थकमिति बोध्यम् । प्रासादात् प्रेक्षत इत्यत्र ल्यब्लोप इत्यस्य प्रवृत्तये आह । **अर्थत इति** । शब्दस्य चाक्षुषज्ञानाविषयत्वेन सर्वत्रादर्शनस्य सत्त्वेन सर्वत्र लोपसंज्ञाप्रसक्तिरित्यत आह । **ज्ञानसामान्य इति** । **व्याख्यानादिति** । स्वं रूपमिति सूत्रसत्त्वे न वेत्यत इतिशब्दानुकर्षणमत्र व्याख्यानम् । तत्प्रत्याख्याने अर्थे कार्यस्याबाधादेवार्थोपस्थितिर्महासंज्ञाकरणाद्वा तदुपस्थितिरिति बोध्यम् । प्रसक्तस्येत्यस्य कौस्तुभोक्तं फलमनूद्य निराकरोति । यत्त्वि-

पञ्चमीविधानेन तस्यात्राप्राप्तेः। तत्त्वे तु अस्त्येवार्थतो ल्यबन्तस्य प्रसक्तिः। तस्मात् त्रपु इत्यत्र क्विपोऽदर्शनसत्त्वेन प्रत्ययलक्षणेन तुगापत्तिर्दोषः। कृत्प्रत्ययेन प्रकृत्याक्षेपस्तु न। अत्रैव प्रकृतिं विनाऽतिदेशतः प्रत्ययज्ञानसत्त्वेन व्यभिचारात्तदाक्षेपासंभावात्॥

---

त्यादिना। तुगापत्तिरिति। ननु प्रत्ययग्रहणपरिभाषया तदादेरित्युपस्थित्या प्रकृते न दोषः। न चानियमाभावात् सा नोपतिष्ठत इति वाच्यम्। अस्यामवस्थायां सर्वत्र क्विपस्सत्त्वेन तदाद्यतदाद्योरपि तुक्प्राप्त्या अनियमसत्त्वात्। न च प्रसक्तस्येत्यस्याभावे त्रपु इत्यत्राऽणोऽदर्शनेन प्रत्ययलक्षणेन वृद्धिमाशङ्क्यानङ्गत्वात् समाधाय तुगापादनपरभाष्यप्रामाण्येन सप्तम्यन्तप्रत्ययग्रहणे तदाद्यंशस्यानुपस्थितिबोधनेन प्रकृते दोषः। अनियमप्रसक्त्यभावेन अनियमे नियमफलायास्तस्या अनुपस्थितिरित्युद्योतग्रन्थोऽप्यन्यत्र सप्तम्यन्तप्रत्ययग्रहणे अनियमाभावेन तदनुपस्थित्या सामान्यतस्सप्तम्यन्तप्रत्ययग्रहणे तदनुपस्थितिरित्येवंपरतया योजनीय इति वाच्यम्। अङ्गस्येति सूत्रे भाष्ये तदधिकारप्रत्याख्यानाय प्रत्यय इति न्यासं कृत्वा तदाद्यंशोपस्थितिप्रदर्शनस्यासाङ्गत्यापत्तेरिति चेन्न। सोमसुत् त्रपु इत्यत्र सुधातोर्विहितक्विपस्त्रपुशब्दाददर्शने प्रत्ययलक्षणेन क्विप्परत्वस्य, सोमसुत् त्रपु इत्यस्य तदादित्वस्य च सत्त्वेन तुग्वारणाय प्रसक्तस्येत्यस्यावश्यकतया अनियमाभावेन परिभाषानुपस्थितेस्सिद्धान्तसिद्धतया तदानीं त्रपु इत्यपि फलं भवतीति तात्पर्यात्। ननु प्रत्ययलक्षणसूत्रस्य नियामकत्वमिति भाष्यमते स्थानिवत्सूत्रेणैवातिदेशस्य वक्तव्यतया अपवादे उत्सर्गकृतवारणाय स्थानिवत्त्वस्य षष्ठीनिर्देशविषयकतया प्रकृते न दोष इति चेन्न। अस्यामवस्थायां प्रत्ययलक्षणसूत्रस्यात्रैव विधायकत्वापत्त्या नियामकत्वायोगात्। एतेन भाष्यरीत्या नेदं फलमिति कौस्तुभोक्तमपास्तमिति दिक्। यदि तु कृदतिङिति सूत्रे भाष्ये ह्रस्वस्येत्यत्र धातुग्रहणानु-

इति पक्षे इति । विनिगमनाविरहादिति भावः । द्वित्वस्य त्रैपादिकत्वात्तत्र न यणो बहिरङ्गासिद्धत्वम् । अत एव दद्ध्यत्रेति भाष्ये उदाहृतम् । धकारयकारयोरिति । तेन विसर्गादिद्वित्वेनाऽऽधिक्येऽपि न क्षतिः । द्विधमिति । द्विधत्वं प्रक्रियायां बोद्धयम् । "एकस्या आकृतेश्चरितः प्रयोगो न द्वितीयस्या भविष्यती" इति कृञ्चानुप्रयुज्यते इति सूत्रभाष्योक्तन्यायेनैकस्य द्वित्वे परस्य तदभावोऽनुचित इति न वाच्यम् । सार्थकानेकविषये तन्न्यायाङ्गीकारात् । यत्रान्याकृतिकरणे भिन्नार्थत्वसंभावना तद्विषयत्वाच्च । "हलो यमाम्" इति लोपे द्वित्वाभावे चैतदेव रूपम् ॥

---

वृत्तेरुक्तत्वेन नेदं फलमित्युच्यते, तदा औपगवं त्रपु इत्युदाहरणम् । तत्र पूर्वत्राणः परत्रादर्शनेन प्रत्ययलक्षणेन वृद्ध्यापत्तिर्बोध्या ॥

विनिगमनाविरहादिति । कस्य षष्ठ्यन्तता कस्य पञ्चम्यन्ततेत्यत्र नियामकाभावेन शास्त्रस्य निश्चयात्मकबोधजनकत्वानापत्त्या आनर्थक्यापत्त्या तस्य च वृद्धिसूत्रे भाष्ये निराकरणात् शास्त्रारम्भसामर्थ्यादुभयथा तात्पर्यस्यावगन्तुं शक्यत्वादुभयथाऽपि बोधोऽङ्गीक्रियत इति भावः । एतेन विनिगमनाविरहेण तात्पर्यानिर्णये बोधस्यैवानुत्पत्तेरिदं चिन्त्यमिति परास्तमिति दिक् । ननु द्विधमिति मूलमसङ्गतं, जश्त्वेन तदभावादित्यत आह । द्विधत्वमित्यादि । आकृतेः—स्वरूपस्य । चरितः—प्रक्रान्तः । यद्यप्यत्र शब्दाकृतिरेव ग्रहीष्यत इति वक्तुं शक्यते, तथापि पूर्वत्रासिद्धमद्वित्वे इत्यस्य द्रोग्धा द्रोग्धा द्रोढा द्रोढेत्युदाहरणपरभाष्यानुगृहीतं समाधानमाह । सार्थकेति । तद्विषयत्वाच्चेति । चे हेतौ । यतोऽस्या अन्याकृतिकरणे भिन्नार्थत्वसम्भावना यत्र तद्विषयत्वमतस्सार्थकानेकविषयत्वमित्यर्थः ॥

नादिन्या । "यरोऽनुनासिके" इत्यतो यर इति वर्त्तते। पुत्रशब्दस्येत्यवयवषष्ठी । आदिनीशब्दे परे इति च प्राधान्याद् यर एव विशेषणम् । सूत्रे आदिनीति ङ्यन्तानुकरणं लुप्तसप्तमीकम् । अत एव "तत्परे च" इत्यस्याऽऽदिनीशब्दो यस्मात्परस्तत्र परे

---

यर एव विशेषणमिति । पुत्रशब्दविशेषणत्वे तु पुत्र्यादिनीत्यत्रापि लिङ्गविशिष्टपरिभाषया निषेधस्स्यात् । यर्विशेषणत्वे तु येन नाव्यवधानन्यायेनैकवर्णव्यवधाने तत्प्रवृत्तावप्यत्रातिरिक्तव्यवधानान्न । किं चैकादेशे आदिनीशब्दपरपुत्रशब्दो दुर्लभः । व्यपवर्गस्यान्तादिवत्सूत्रेणानतिदेशादिति भावः । न चैवं यणो मय इति रेफस्य प्राप्तद्वित्वस्यैव निषेधस्स्यादिति वाच्यम् । अच इत्यनुवृत्त्या अचः परस्य यर एव निषेधविषयत्वात् । रेफस्य द्वित्वकार्यित्वाभावेन निषेधवैयर्थ्याच्च। ङ्यन्तानुकरणमिति। स्त्रियामेवैतदुदाहरणमिति लाभायेदम् । लुप्तसप्तमीकमिति । सौत्रत्वादिति भावः । अत एव च प्रगृह्यत्वमपि नेति केचित् । अन्ये तु सप्तम्या इयाडियाजीकाराणामुपसंख्यानमितीकारः, ततो यस्येति लोपः । एवं च न प्रगृह्यत्वशङ्काकलङ्कलेशोऽपीत्याहुः। अत्र पक्षे लुप्ता स्वरूपेणादृष्टा सप्तमी यस्येति व्याख्येयम् । ग्रन्थस्वरसस्तु नैवमिति बोध्यम् । ङ्यन्तानुकरणत्वे वृद्धसंमतिमाह । अत एवेति । वस्तुतस्त्वादिनीति न ङ्यन्तानुकरणम् । किन्तु नान्तात् सप्तम्यन्तमेव । पुत्रादिनीत्यत्र ङीप्प्राग्वर्तिसमुदायमादाय निषेधः सिद्धः । पुंलिङ्गे तु न निषेधः । पुंस्वीदृशाक्रोशस्यादर्शनात् । अत एव च वा हतजग्धयोरित्यत्र प्रातिपदिकनिर्देशेऽपि स्त्रियामुदाहरणं भगवतस्सङ्गच्छते । तस्य पूर्वसाहचर्यात् स्त्रियामेव प्रवृत्तिरित्याशयस्तु नोचितः । शास्त्रान्तरसाहचर्यस्यागतिकगतित्वात् । अत एव पुत्रहतीत्युदाहरणविषये तादृशाक्रोशस्य स्त्रीष्वेव दर्शनादित्येव हेतुर्दर्शितो ग्रन्थकृता, न तु साहचर्यम् । एवं चात्र सौत्रत्वाश्रयणमपि नावश्यकमित्यपरमनुकूलम् ।

इत्यर्थं हरदत्तो व्याख्यत् । अद्धातौ माधवोऽप्येवमेव । ईदृशाक्रोशस्य स्त्रीष्वेव दर्शनाच्च । आक्रोशो निन्दा, तदाह । पुत्रादिनीति । तादृशाक्रोशस्य स्त्रीष्वेव दर्शनादाह । पुत्रहतीति । अनचि चेति सिद्धे पुत्रस्य क्तान्ते चेद्धतजग्धयोरेव, आक्रोशे एवेति नियमार्थमिदम् ॥

---

उद्योतस्वरसोऽप्येवमेव । तदेतत्सूचयन्नाह । ईदृशाक्रोशस्येति । पुत्रहतीति पुत्रो हतो ययेति बहुव्रीहिः । अनयोर्गौरादिपाठात् ङीष्, अस्वाङ्गपूर्वपदादिति ङीषिति कैयटोक्तमयुक्तम् । तत्र जातिपूर्वाच्चेत्यस्य संबन्धात् । पुत्रशब्दस्याजातित्वात्, स्पष्टं चेदमुद्योते । एतेन बहुव्रीहेश्चान्तोदात्तात् अस्वाङ्गपूर्वपदाद्वेति ङीषित्याचार्योक्तमपास्तम् । आक्रोश एवेति । न च श्रुतविषयक एव नियमो, न तु प्राकरणिकविषय इति ब्रह्मभ्रूणवृत्रेष्वित्यत्र वक्ष्यमाणतया आक्रोशे इत्यस्य वार्तिके अश्रुतत्वादयं नियमोऽयुक्त एवेति वाच्यम् । तत्सूत्रपठितवार्तिकेऽनुसन्धीयमानानां तत्सूत्रघटकपदानां तत्रापि श्रुतत्वमित्याशयेनादोषात् । न चैवं पुत्रस्यैवेति तृतीयोऽपि नियमः स्यादिति वाच्यम् । येन सिद्धे नियमशास्त्रमारभ्यते, तच्छास्त्रमात्रनिषेधफलकस्यैव नियमाकारस्य वक्तुमुचितत्वेन पुत्रस्यैवेतिनियमे आर्यहतीत्यादावचो रहाभ्यामिति प्राप्तस्यापि नियमप्रसक्त्या तदनौचित्यमित्याशयात् । अनन्तरस्येतिन्यायेन न तस्य नियम इति त्वन्यदेतत् । न चात्राच इत्यनुवृत्त्याचो रहाभ्यामित्येतद्विषये नाऽस्य प्रसक्तिरिति वाच्यम् । नादिनीतिसूत्रेऽच इत्यनुवृत्तेः फलाभावेन तत्सूत्रस्थेऽत्रापि तदननुवृत्तिरित्याशयात् । एतेनेदं चिन्त्यमिति भट्टाद्युक्तमपास्तमिति दिक् । नियमार्थमिति । अयं भावः । इदं वचनं शाकल्यमते न विकल्पविधायकं, तन्मते द्वित्वप्रापकस्याभावेन निषेधविकल्पस्य कथनासम्भवात् । पाणिनिमते च तन्निषेधानुवादेनानचि चेत्यस्य वैकल्पिकत्वमङ्गीकृतमेव ।

**संयुक्तेष्विति।** "त्रिप्रभृतिषु" इति सूत्रे वर्णानां सजातीयानामेव ग्रहणं, परस्परसाहचर्यात्। न च तथाऽचः संभवन्ति। अत एव "अचो रहाभ्याम्" इति सार्थकम्। निर्धारणे सप्तमी,

---

एवं चास्य नियामकत्वमक्षतम्। यद्वा वेत्यनुवृत्त्यानचीत्यस्य वैकल्पिकत्वमिति न नियमार्थत्वक्षतिरिति। एतेन शाकल्यमते तन्मतप्रसक्तनिषेधाभावाय विकल्पविधानं सार्थकमित्यपास्तम् ॥

**सजातीयानामिति।** हल्त्वादिनेति भावः। **परस्परसाहचर्यादिति।** सजातीयानामेव साहचर्यस्यौचित्यादिति भावः। ननु द्वित्वप्रयोजकधर्मवत्त्वेन साजात्यं किं न स्यात्। तथा चाच्त्वस्यापि तथात्वेन संयुक्तेष्विति दुर्लभमत आह। **अत एवेति। सार्थकमिति।** अन्यथा तत्सूत्रविषये द्वित्वप्रयोजकधर्मवतां त्रयाणां सत्त्वस्याव्यभिचरिततया तद्विषयस्य सर्वस्य निषेधविषयाक्रान्तत्वेन तद्वैयर्थ्यं स्पष्टमेवेति भावः। नचाचः परस्य यर इत्यर्थस्य वक्ष्यमाणतया अचो रहाभ्यामित्येतद्विषये नैतत्प्रसक्तिरिति तत्सार्थकमिति वाच्यम्। नादिन्येति पूर्वसूत्रे अच इत्यनुवृत्तेः फलाभावेन विच्छिन्नत्वादत्रापि नानुवर्तत इत्याशयात्। न च शाकटायनग्रहणादस्य विकल्पत्वेनैतदभावे तत्सार्थकमिति वाच्यम्। तस्य पूजार्थत्वमित्याशयात् ॥

केचित्तु अत्र नेति न सम्बध्यते। अत एवात्र सूत्रे प्राप्त्युद्भावनं न कृतं हरदत्तेन। तेनायं विधिविकल्प एव। अत्राच इत्यनुवृत्तानचि चेति सिद्धे नियमार्थं स्यात्। न चानचीति निषेधविषयार्थं स्यादिति वाच्यम्। तथासत्यनचीत्यस्य वैयर्थ्यापत्तेः। अच इत्यस्याननुवृत्तौ इन्द्र इत्यादौ दकारादेः प्रापकतया विधायकं स्यात्। तथा च विधिनियमयोर्विधेर्ज्यायस्त्वेन तदनुरोधादच इति नानुवर्तत एव। अनुवृत्तौ वा न यर्विशेषणम्। किन्तु

अच इत्यनुवर्त्तते, त्रिप्रभृतिसंयुक्तवर्णमध्येऽचः परस्य यरो द्वे वा न स्त इत्यर्थः । तेनेन्द्रः राष्ट्रमित्यत्र नकारषकारयोः प्राप्तद्वित्वस्यैव निषेधविकल्पः । "अनचि च" "सर्वत्र शाकल्यस्य" इत्येव सिद्धे इदं सूत्रद्वयं विकल्पस्य मतभेदप्राप्तव्यवस्थाबोधनार्थमिति बोध्यम् ।

---

त्रिप्रभृतिषु । एतदेवाभिप्रेत्य इन्द्रे नकारदकारयोर्द्विर्वचनाभाव इत्युक्तं हरदत्तेन । इयं च व्यवस्थितविभाषा । तेन नातिप्रसङ्गः । एवं चाचो रहाभ्यामित्येतद्विधेयस्यानेनैव सिद्धे तदर्थं स्यादित्यत्र तात्पर्यम् । न च रेफस्य कार्यित्वाभावबोधनार्थं तदिति वाच्यम् । तावन्मात्रफलकत्वे अचो द्वे अनचि नर इत्येव सिद्धेः । एवं चायं ग्रन्थस्तन्मतानुसारेणेत्याहुः ॥

एतेनेदमसङ्गतमिति वदन्तः परास्ताः । यत्तु नेमौ रहौ कार्यिणौ किं तर्हि निमित्तं द्विर्वचनस्येति भाष्यप्रामाण्येन रेफस्य निमित्तत्वेतरद्विर्वचनीयविषयताश्रयत्वेन त्र्यादिवर्णघटकेषु अचः परस्य यर इति अजव्यवहितोत्तरत्वावच्छिन्नयत्वावच्छिन्नविषयताश्रयत्वेन च ग्रहणे कर्तव्ये अविद्यमानवद्भावस्य कल्पनेनोभयोरेकविषयत्वमिति, तन्न । नेमौ रहावित्युत्तरं तद्यथेत्यादिना तक्रकौण्डिन्यन्यायप्रदर्शनेन कार्यित्वाभावस्य बाध्यबाधकभावमूलकत्वलाभेन निरुक्तार्थकल्पने भाष्यस्य सामर्थ्यायोगेन सामान्यतः कार्यित्वबाधनेऽपि व्यवधायकत्वानपायात् । केचित्तु अयमपपाठ एवेत्याहुः । वस्तुतस्त्वत्र नेति सम्बध्यत एव । सर्वत्रेत्यस्य तदनुवृत्तिं विना उपपत्त्यभावात् । एवं चाच इत्यनुवृत्तौ न बाधकं, तच्च यर एव विशेषणम् । प्रधानान्वयानुरोधात् । नकारदकारयोर्द्विर्वचनाभाव इति हरदत्तग्रन्थस्तु चिन्त्य एव । दकारस्य प्रापकाभावात् । यथा दकारस्य स्वत एव द्वित्वाभाव, एवं नकारस्यापीति नेमौ रहौ कार्यिणावित्यत्रेव दृष्टान्तपरतया वा कथंचिद्योजनीयः । एवं चाचो रहाभ्यामित्येतद्विषये नास्य प्रवृत्तिः । संयुक्तेष्वित्यर्थस्तु अन्यथैवोपपादनीय इत्याशयेनाह । अच

"यरोऽनुनासिके" इत्यतो वेत्यनुवृत्त्याऽनचीत्येव सिद्धे तु सूत्रत्रयमपि तथेति बोद्धव्यम् ॥

अचो र । अच इति श्रुतत्वाद्व्याख्यानाच्च रहाभ्यां संबध्यते । "तस्मादित्युत्तरस्य" इत्येतल्लभ्यमाह । अचः पराभ्यामिति ॥

वा यमीति । "झयो हः" इत्यतोऽन्यतरस्यामित्यनुवृत्तेरिति भावः । "दीर्घादाचार्याणाम्" इत्युत्तरम् "अनुस्वारस्य ययि" "वा पदान्तस्य" "तोर्लि" "उदःस्था" "झयो हो" "शश्छोऽटि" इति षट्सूत्रीपाठोत्तरं "झलां जश् झशि" "अभ्यासे चर्च" "खरि च" "वाऽवसाने" "अणोऽप्रगृह्यस्य" इति पञ्चसूत्र्याः पाठ इति भाष्यसंमताष्टाध्यायीपाठे तु वाऽवसाने इत्यतोऽनुवृत्ति-

---

इत्यनुवर्तत इत्यादि । बोध्यमिति । अत्रत्यं तत्त्वमधस्तान्निरूपितम् ॥

ननु प्रधानान्वयानुरोधाद्यर इत्यनेनोत्तरत्र सम्बन्धस्य क्लृप्तत्वाच्च तत्रैवान्वय इति कुतो नेत्यत आह । व्याख्यानादिति । सम्बध्यत इति । विशेषणतयेति भावः । श्रुतक्रमत्यागे मानाभावादागन्तूनामन्ते निवेशेन चाभीष्टार्थसिद्धिरिति बोध्यम् । अनुवादे परिभाषाऽप्रवृत्तेरत्र परशब्दाध्याहार इति मतमयुक्तमिति सूचयन्नाह । तस्मादिति । अनुवादेऽपि परिभाषाप्रवृत्तिरधस्तान्निरूपिता ॥

अनुवृत्तेरिति । अत एव ग्राहकसूत्रेऽण्ग्रहणं सार्थकम् । तद्धि सय्यँन्तेत्यादौ त्रियकारकत्वाय । लोपस्य नित्यत्वे अजित्येव सिद्धे तद्वैयर्थ्यं स्पष्टमेव । भाष्यसंमतेति । एतच्चाधस्तान्निरूपितम् । मूले आदित्य इत्युपलक्षणम् । वृङं वृञं चाचष्टे वङ्ङवते, वञ्ञवते इत्यनयोरपि । तेन नैकमुदाहरणमिति न्यायो

बोद्धया । स्पष्टश्चास्य वैकल्पिकत्वं लण्सूत्रे भाष्ये । आदित्य इति । आदित्यशब्दाच्छेषार्थण्यन्ताद्देवतार्थे ण्यः । 'यस्येति च' इत्यल्लोपेऽनेन यलोपः । 'आपत्यस्य' इति तु न । आपत्यत्वाभावात् । हल इति किम् । शय्या । यमामिति किम् । आध्नौत् । यमीति किम् । रामाभ्याम् ॥

एचोऽय । 'इचोऽचि यणयवायावः' 'अवावौ यि प्रत्यये' इति सूत्रयितुमुचितमित्याहुः । यथासंख्यसूत्रलब्धमर्थमाह । क्रमादिति । उदात्तादिगुणयुक्तानामन्यगुणकव्यावृत्तिस्तु स्थानेऽन्तरतमपरिभाषया बोद्धया । एतदेवाभिप्रेत्य यथासंख्यसूत्रे भाष्ये

---

नावतरतीत्याहुः । शेषार्थण्यन्तादित्युक्तेः फलमाह । आपत्यस्येति नेति । यमामिति किमिति । अवध्यवधिमतोः स्साजात्याद्धल एव लोपो भविष्यतीति प्रश्नः । प्रसङ्गाद्धलो यरां यरि सवर्णे लोप इति न्यासेऽपि दोषं दर्शयितुं तथाविधं व्यावर्त्यं दर्शयति । आध्नौदिति ॥

इचोचीति । न चात्र न्यासे स्यतासी ललुटोरित्यादाविव यण्त्वेनैवादेशगणने आदेशेषु पञ्चत्वसंख्यायास्सत्त्वेन कथं यथासंख्येन निर्वाह इति वाच्यम् । अन्तरतमपरिभाषया निर्वाहस्य सुवचत्वात् । अवावौयीति । वान्त इति न्यासे तु उकारस्थानिकयणादेशस्यापि व्यपदेशिवद्भावेन वान्ततया वान्तज्ञानाय पूर्वसूत्रपर्यालोचनया लब्धस्थानिता उकारस्यापि भवतीति चिनुयुरित्यादौ वान्तादेशापत्तिरिति भावः । इदन्तु मूलकृद्रीत्या, स्वमते तु ओदौतोरिति वक्तव्यमिति वार्त्तिकेनैव स्थानिविशेषलाभस्य वक्ष्यमाणतया वान्त इति न्यासेपि दोषाभावात् । वकारप्रश्लेषस्तु गोर्यूतावित्यत्र छकारात् पूर्वत्रैवेति वक्ष्यति । आहुरिति । अत्रारुचिबीजन्तु एकारस्य तालव्यत्वमोकारस्यौष्ठ्यत्वमिति मते तयोस्स्थाने यणापत्तिः स्थानत आन्त-

प्रकृतसूत्रे स्थानेऽन्तरतमसूत्रेण व्यवस्थोक्ता 'संवृतावर्णस्य संवृतावर्णो विवृतावर्णस्य विवृतावर्ण' इति । एतद्भाष्यप्रामाण्येन एओइत्यनयोरकारांशे संवृतत्वमितरांशे विवृततरत्वं, तदुपरागाच्च न संवृतत्वस्य पृथग्ग्रहणम् । ऐऔ इत्यनयोस्त्वकारांशेऽपि विवृतत्वमेवेति बोध्यम् ॥

तस्य लो । 'उपदेशेऽज्' इत्यत इदित्यनुवृत्त्या विभक्तिवि-

---

र्यस्य प्राबल्यात् । न च संवृतावर्णत्वसहकृततालुस्थानजन्यत्वेन अयाद्येव भवतीति वाच्यम् । एवं सति मात्राधिककालसहकृततालुस्थानजन्यत्वेन ईकारादिस्थाने अयाद्यापत्तिः । न च तालुमात्रजन्यत्वेन नायादेश इति वाच्यम् । एवमपि उकारांशे ओष्ठमात्रजन्यत्वस्य ग्रहीतुमशक्यतया दीर्घोकारस्यावादेशस्य दुर्वारत्वात् । द्विमात्रान्यूनत्वस्य सहकारित्वे अवादेशापत्तेः । किञ्च ॠति ऌवेत्यादिविधेययोरिक्षु ग्रहणाभावाय ऋलुक् सूत्रानन्तरं पाठ इति वदतां मते तयोर्यणोऽनिष्टत्वेनैतन्न्यासे यथासंख्यस्य सुतरां वक्तुमशक्यत्वेन होतृशब्दस्य ऋकारबोधक ऋशब्देन समासे तस्याकारादिना केनचित् समासे वार्त्तिकविधेयस्य यणापत्तिरित्यादि स्वयमूहनीयम् । **संवृतावर्णस्येति** । ननु स्थानेऽन्तरतम इति सूत्रदृष्ट्या संवृतस्यासिद्धत्वेन कथमेतद्व्यवस्था । न चैतद्भाष्य प्रामाण्यादयादिघटकसंवृतस्यासिद्धता नेति वाच्यम् । प्रत्यय इत्यादौ संवृताकारघटितायादेशे यणनापत्तेरिति चेन्न । भाष्यप्रामाण्येनान्तरमसूत्रदृष्ट्या असिद्धत्वाभावकल्पनेपि अन्यत्र सिद्धत्वे मानाभावात् । अन्तरतमसूत्रस्य लोकन्यायसिद्धार्थानुवादकत्वे तद्दृष्ट्या असिद्धत्वाभावाच्च । संवृतस्यासिद्धत्वेपि संवृतप्रयत्नजन्यत्वस्य सिद्धतया तेनैवान्तरतमपरिभाषाप्रवृत्तेस्सुशकत्वाच्चेति दिक् ॥

**विभक्तिविपरिणामेनेति** । षष्ठीनिर्दिष्टस्य ह्यादेशा उच्यन्त इति भाष्यादादेशविधौ षष्ठ्या एव न्याय्यत्वाल्लोपशब्दस्य भावघञन्तत्वादिति

परिणामेन च सिद्धौ तस्यग्रहणं सर्वलोपार्थम् । तेन ञिटुडूनामन्त्यस्य लोपो न । 'नाऽनर्थके' इति परिभाषा तु भाष्ये प्रत्याख्यातैवेति दिक् । न भवतीति । फलाभावादिति भावः ॥

वान्तो । 'येन विधिः' इत्यस्यापवादभूतया 'तस्मान्नुडचि'

---

भावः । यदि तु हल्ङ्यादिसूत्रस्थमनोरमाशब्दरत्नदिशा कर्मघञन्तत्वं स्वीक्रियते तदा न विपरिणामोपयोगः । न च पूर्वोक्तभाष्यविरोध इति वाच्यम् । नाभि नभंचेत्यादाविव पाश्चात्यबोधे कल्प्यमानषष्ठ्यन्ततामादाय तदुपपत्तेः । न च पाश्चात्यबोधकल्पनाप्रयुक्तं गौरवमत्रेति वाच्यम् । प्रथमतः सामानाधिकरण्यानुरोधेन कर्मघञन्तत्वे निर्धारिते पाश्चात्यगौरवस्य फलमुखत्वेनादूषकत्वादिति दिक् । वस्तुतस्तु हल्ङ्यादिसूत्रे बहुषु पदेषु विपरिणामापेक्षया कर्मसाधनतायां लाघवम् इह तु न तथेति नागेशगूढाशयः । दिगिति । दिगर्थस्तु आदिर्ञिटुडूनामिति न्यासेन व्यञ्जनानामुपदेशेऽजित्यनेनाचश्चेत्त्वे द्वितोऽथुजित्यादावुभयग्रहणेन निर्वाहस्तु न शंक्यः । तथा सत्युदितो वेत्यस्य प्रवृत्त्यापत्तेः । उबुन्दिरित्याद्यनुरोधेन तत्र कर्मधारयस्य दुर्वचत्वात् । यत्तु टित्त्वात् ङीबापत्तिरिति तन्न । टितो योऽकारः तदन्तादित्यर्थे तदापत्तिविरहादित्याद्यनुसंधेयम् । फलाभावादिति । शास्त्रीयसंज्ञायाः शास्त्रीयकार्यार्थतया तत्कार्यस्य सामर्थ्याद्भावे संज्ञापि नेति भावः ॥

तस्मान्नुडचीत्याद्यर्थमिति । न च उत्तरपदघटकस्य लुप्तनकारान्नञः परस्याच इत्यर्थेन निर्वाहान्न प्रकृतपरिभाषोपयोग इति वाच्यम् । अच्युत्तरपद इति समानविभक्तिकपदद्वयश्रुत्या सामानाधिकरण्येनान्वयज्ञानेन सम्भवति सामानाधिकरण्ये इति न्यायावतारेण निरुक्तार्थस्यासंभवेन प्रकृतपरिभाषाभावे अज्रूपोत्तरपदस्येत्यर्थापत्तावन इत्यत्रैव स्यान्नत्वनश्व इत्यादावित्याशयात् । एतेनाऽच्परकलुप्तनकारनञ उत्तरस्योत्तरपदस्येत्यर्थान्न दोष इति परास्तम् । पर-

इत्याद्यर्थमावश्यिकया वाचनिक्या 'यस्मिन्विधिस्तदादावल्ग्रहणे' इति वार्त्तिककृदुक्तपरिभाषया लभ्यमर्थमाह । यकारादाविति । ओदौतोरिति । 'ओदौतोरिति वक्तव्यम्' इतिवार्त्तिकमूलाद्व्याख्यानादिति भावः । 'पूर्वसूत्रे वान्तौ प्रति तयोरेव स्थानित्वनिर्णयात्' इति स्थानेऽन्तरतमसूत्रस्थकैयटोक्तं तु न युक्तम् । वान्तज्ञानाय पूर्वसूत्रपर्यालोचनस्यावश्यकत्वेऽपि तद्वाक्यार्थपर्यालोचने-

---

सप्तम्यन्तार्थस्य दिग्योगलक्षणपञ्चमीप्रकृत्यर्थे अन्वयस्य क्वाप्यदृष्टत्वाच्च। वाचनिक्येति। केचित्तु अत्र न ल्यपीति ज्ञापकं तद्धि प्रधायेत्यत्र घुमास्थेतीत्ववारणार्थं क्रियते । यदीयं न स्यात्तर्हि तत्र हलन्तइत्यर्थे प्रकृते तन्नप्राप्नोतीति तद्वैयर्थ्यं स्पष्टमेव। एवमनेकवचने झल्येदित्येकसूत्रेणैव सिद्धे बहुवचने झल्येत् ओसि चेति सूत्रद्वयकरणं ज्ञापकमित्यास्थाय वाचनिकीत्यस्य भाष्ये वचनरूपेण पठिता न तु ज्ञापकमुपन्यस्तमित्येवाशयो न तु ज्ञापकासम्भव इत्याहुः । वस्तुतस्तु न पूर्वोक्तज्ञापकावकाशः । तथाहि घुमास्थेति सूत्रेण प्रदायच्छत्र मित्यत्रेत्ववारणाय न ल्यपीत्यावश्यकम् । न चेत्वे पदद्वयसंबन्धिवर्णद्वयनि मित्तकस्य तुको बहिरङ्गासिद्धत्वमिति वाच्यम् । नाजानन्तर्ये इति निषेधात् । तदभावेपि बहिरङ्गपरिभाषानित्यत्वेन सार्थक्यसंभवाच्च । तुग्विषये तस्या अप्रवृत्तेरन्यत्रोक्तत्वाच्च । एवमाङि चाप इत्यत्रानुवृत्त्यर्थमोसि चेति पृथक्सूत्रस्यावश्यकतया न द्वितीयज्ञापकसम्भव इत्यन्यत्र विस्तरः । अत्रेदमवधेयम् । यत्किञ्चिद्ज्ञापकसंभवेपि तदपेक्षया वाचनिकत्वे लाघवमित्येव नागेशाशयो वर्णनीयः । न चैवं सर्वेषां वाचनिकत्वमेव कुतो नोक्तमिति वाच्यम् । अन्येषामसार्वत्रिकत्वद्योतनाय ज्ञापकसिद्धत्वस्वीकारात् । ध्वनिता चेयं रीतिर्नागेशेन ज्ञापकसिद्धं न सर्वत्रेति परिभाषाव्याख्यानावसरे । एवञ्चात्र ज्ञापकान्वेषणप्रयासो विफल एवेति । अधिकं परिभाषेन्दुटिप्पणीतोऽवसेयम् । परिभाष-

मानाभावात् । यथासंख्यसूत्रसहकारेण बोधोत्तरं तयोस्तत्त्वनिर्णयात् । अन्तरतमपरिभाषया निर्वाहे तु लक्ष्यपर्यालोचनकाले तन्निर्णयः । अत एव 'पूर्वसूत्रे स्थानिविशेषलाभो यथासंख्यसंबन्धात्, इह तु निमित्ताभावात्तल्लाभाभावः' इति षष्ठे प्रकृतसूत्रे कैयटः । गव्यमिति । भत्वाद्धलोपो न । यीति किम् । गोभ्याम् । प्रत्यये किम् । गोयानम् ॥

ननु गव्यूतिरित्यत्र वस्य 'हलि सर्वेषाम्' इति 'लोपः शा-

---

या लभ्यमिति । ननु यान्तप्रत्ययासम्भवादेव तादृशार्थलाभः । न च गोमयशब्दादाचक्षाणणिचि तत्संभव इति वाच्यम् । स्थानिवद्भावेन तदसंभवात् । न चैवं गोमयमत्तीति गोमयात् तस्मा ण्णिचि टिलोपे अज्झलादेशत्वेन स्थानिवत्त्वाभावात्तत्संभव इति वाच्यम् । अन्तरङ्गपरिभाषया टिलोपस्यासिद्धत्वादिति चेन्न । बहुलक्ष्यसंकारानुरोधेन यकारवति प्रत्यय इत्यर्थापत्तावनिष्टापत्तेरित्यन्यत्र विस्तरः । मानाभावादिति । ननु यथा वान्तइत्यन्यपदार्थाकाङ्क्षायां पूर्वसूत्रपर्यालोचनं तथा स्थान्याकाङ्क्षायां वाक्यार्थपर्यालोचनमावश्यकमिति चेन्न । सूत्रे श्रुतेनैच इत्यनेन तदाकांक्षाया उपशमात् । कैयट इति । सूत्रवार्त्तिकाशयवर्णनपरतया कैयटस्य न पूर्वापरविरोधः । यथोत्तरमिति न्यायेन वार्त्तिककाराशय एव ज्यायानिति बोध्यम् । ननु यि प्रत्यय इत्येव सूत्रमस्तु सूत्रे वान्तग्रहणमोदौतोरिति वार्त्तिकं च मास्तु यान्तादेशो यदि क्षय्यजय्ययोरेवेति नियमान्नातिप्रसङ्गः । न च क्षय्यजय्यौ शक्यार्थ एवेति नियमापत्त्या न प्रकृतार्थसिद्धिरिति वाच्यम् । शक्यार्थ इति योगविभागेन नियमद्वयस्यापि शक्यत्वेनादोष इति चेन्न । योगविभागनियमयो स्स्वीकारे लाघवाभावादिति दिक् । हलि सर्वेषामित्यत्र वकारानुवृत्तेराह । लोपश्शेति । यत्तु तस्याऽसिद्धत्वाच्चेत्यवतरणान्तरं

कल्यस्य' इति वा लोपः स्यादत आह वान्त इत्यत्रेति । न च विशेषविहितेन कार्यित्वेन लोपे वस्य निमित्तत्वबाध इति वाच्यम् । निमित्तत्वानाक्रान्ते विषये कार्यित्वस्य चारितार्थ्यात् । तक्रकौण्डिन्यन्यायश्चानवकाशविषयो विधेयविषयश्चेति स्पष्टं तद्धितेष्वचामिति सूत्रे यङ्विधायके च भाष्ये । अन्त्ये 'उत्तरयोर्विग्रहेण विशेषासंप्रत्ययान्नित्यग्रहणानर्थक्यं क्रियासमभिहारे च नैतेभ्यो यङा भवितव्यम्' इति भाष्ये चेन विशेषासंप्रत्ययादित्यनुकृष्यते । अन्यथा तक्रकौण्डिन्यन्यायेन सिद्धे विशेषासंप्रत्ययादित्यनुकर्षकचकारवैयर्थ्यापत्तिः । निरूपयिष्यते चेदं यङन्ते । तस्य च वार्त्तिके-

---

दत्तं भट्टै स्तन्न । हलि सर्वेषामित्यस्य बाधकताया वक्ष्यमाणत्वेनासिद्धत्वाभावात् । विवेचयिष्यते चेदं तत्रैव । निमित्तत्वानाक्रान्ते इति । यथा प्रकृते पूर्वत्रकारे, न हि तस्य लोपनिमित्तताऽस्ति ततः पूर्वं कार्यिणोऽभावादिति भावः । विधेयविषयश्चेति । अचो रहाभ्यामित्यनेन रेफहकारयोर्निमित्तताऽपूर्वबोध्यैवेति तस्या अपि विधेयत्वमक्षतम् । यत्तु भट्टाः प्रथमसंकोचेनैव सर्वसामञ्जस्येऽयं संकोचो निष्फल इत्याहुः । तत्तु यङ्विधायकसूत्रस्थभाष्यविरोधादुपेक्ष्यम् । यदपि ब्राह्मणस्य मुखे दधि दीयतां कौण्डिन्यस्य हस्ते इत्यत्रेव बाधस्सुवचः । किञ्च शक्तिग्रहं व्याकरणादित्युक्ते रर्थविशिष्टयङ एव विधानादर्थस्यापि विधेयत्वमित्यदोषः । एवञ्च चेन तक्रन्यायादिति नित्यपदादिति वार्थः । अनभिधानमाश्रित्य नित्यपदप्रत्याख्यानानौचित्यादित्याहुः । तदपि न । यङः क्रियासमभिहारादिद्योतकताया वक्ष्यमाणत्वेन तत्र शक्तिग्रहाभावेन कथमप्यर्थस्य विधेयताया दुर्वचत्वेन नागेशरीत्यैव भाष्यस्य योजनीयत्वात् । अत एव गत्यर्थकादर्ते रटतेश्च क्रियासमभिहारे यङुदाहृतो भाष्ये इति यङन्तशेखरे स्पष्टम् । अन्त्ये इति । यङ्विधायक इत्यर्थः । उत्तरयोः

ऽनुवृत्त्या यूतौ श्रूयमाणवकारान्त आदेश इत्यर्थः । सूत्रे तु न फलं, गव्यादौ भत्वेन वान्तस्य पदत्वाभावात्; लव्ये स्वत एव तदभावाल्लोपाप्राप्तेः । गोशब्दादिभ्यः क्यजादावपि 'नः क्ये' इति नियमेन पूर्वस्य पदत्वाभावात् । एवं तर्हि वार्त्तिके एव प्रश्लेष उचित इत्याशयेनाह । छकाराद्वेति । लोपो व्योरिति सूत्रे वकारप्रत्याख्यानं तु लौकिकोदाहरणाभावेन तदर्थतया बोद्धव्यम् । अत एव 'इको गुण' इति सूत्रे 'अतो ल्रान्तस्य' इत्यत्र लुप्तनिर्दिष्टो वकार इत्युक्तं भाष्ये । शास्त्रीयसौत्रप्रयोगार्थं तदिति तदाशयः । न चैवं विष्णवे इत्यादौ तस्य लोप इति दुर्वारं, गव्यूतावुच्चारणस्य चारितार्थ्यादिति वाच्यम् । 'गवि च युक्ते' इत्यादि निर्देशैर्वारणात् ॥

---

नित्यं कौटिल्ये लुपसदेत्यनयोः विग्रहेण यङन्तप्रतिपाद्यकौटिल्यभावगर्हारूपयोर्विशेषयोश्शक्तिस्वभावादप्रतीतेर्न यङ्विशेषणार्थं नित्यग्रहणं कुटिलं व्रजतीत्युक्ते कुटिलं पन्थानं व्रजतीत्येव प्रतीतेः। अर्थविशेषणार्थमपि न। गत्यर्थकात् क्रियासमभिहारे यङ इष्टत्वेन लुबादिभ्यो यङन्तेभ्यः क्रियासमभिहारस्य शक्तिस्वभावेनासंप्रत्ययात्तद्वारणस्य सुकरत्वेन तत्र नित्यविशेषणस्याव्यावर्तकत्वं शेखरे स्पष्टमित्याहुः । नः क्ये इतीति । न च नौशब्दस्य नकारेण समासे ततः क्यचि नलोपस्सुबिति नियमेन वान्तो यीत्येतद्दृष्ट्या सिद्धत्वेनावादेशे लोपाभावार्थं सूत्रेपि फलं सुवचमिति वाच्यम् । अल्विधित्वेन नान्तत्वस्यानतिदेशेन तस्यापि नियमव्यावर्त्यत्वात् एतदेवाभिप्रेत्य नान्तावस्थायामेवेत्यर्थमाहुः । लौकिकोदाहरणेति । छन्दसि आस्रेमाणं जीरदानुरित्याद्युदाहरणसम्भव इति भावः । निर्देशैर्वारणादिति । अनुपसंजातविरोधिन्यायेन इत्संज्ञाप्रयोजकोपदेशकाले वकारस्य चारितार्थ्यासंभवात्तत्सामर्थ्यादित्वव्यावृत्ति रित्यन्ये । अकारप्रश्लेषेण

परे तु सा पूर्वपक्ष्युक्तिरिति न वकारप्रश्लेषो लोपेनोचितः।

---

वारण मित्यपरे। स्वसिद्धान्तमाह। परेत्विति। सेति। लुप्तनिर्दिष्टो वकार इत्युक्तिरित्यर्थः। पूर्वपक्ष्युक्तिरिति। येन नाप्राप्तिन्यायमूलकनसिच्यन्तरङ्ग-मित्यस्यापर्यालोचनया तत्प्रवृत्ते स्तस्या स्तत्त्वमिति भावः। ननु लोपोव्योरिति सूत्रे वकारप्रत्याख्यानमेकदेश्युक्तिः। अत एवेको गुणेति सूत्रस्थं भाष्यं संगच्छते अत एव न पदान्तसूत्रे वृक्षव् इत्यत्र पदान्तस्य स्थाने विधावित्यर्थे दोष आपादितो दीक्षितेन। लण्सूत्रे च वृक्षवित्यत्र क्विपि लोपोव्योरिति लोपप्रसङ्ग इत्युक्तं कैयटेन। लोपश्शाकल्यस्येत्यत्राश्ग्रहणव्यावर्त्यप्रदर्शनावसरे वृक्षव् करोतीत्यत्र विज्निमित्तकलोप आशङ्कित स्तेनैव। अत एव सुधे सुधे वारिवधात्सुराणां सुकारणे लाघवत श्वरामः। विशेषणे द्वे यदि हादिकर्तुर्वेदेदधीती स हि कैयटीये इत्यभियुक्तोक्तिस्संगच्छते। तत्र हि सुधे सुकरिति धिन्विकृण्विभ्यां विचि गुणे रूपं। न च विना विरोधं प्रत्याख्यानभाष्यस्यैकदेश्युक्तित्वकल्पनमनुचितम्। इकोगुणेतिसूत्रस्थभाष्यस्यैकदेश्युक्तत्वं तूक्तमेव। वृक्षवादे रनभिधानस्यैव-सिद्धान्तयिष्यमाणत्वेन तल्लक्ष्यविषयकदीक्षितादिविरोधश्च न प्रकृतार्थसाधकः। लोपश्शाकल्यस्येत्यत्र शङ्काग्रन्थश्च कैयटाशयवर्णनपरतया न तद्विरोधोपि। अभियुक्तप्रयोगोपि स हि कैयटीये इति वाक्यशेषात्कैयटानुरोधितया न प्रमितपदवीमधिगन्तुमीष्टे इति वाच्यम्। एवमपि च्छ्वोरिति सूत्रस्थभाष्य-विरोधेन प्रत्याख्यानस्यैकदेश्युक्तित्वस्य कल्पयितुं शक्यत्वात्। तत्र हि ऊडादिः कस्मान्न भवति अस्त्वादिः लोपोव्योरिति लोपो भविष्यति इत्युक्त्वा उत्तरत्र आदेशत्वफलं दर्शितम्। वकारप्रत्याख्याने पूर्वत्रैव फलसंभवादुत्तरसूत्रपर्यन्तानु-धावनं भगवतो निर्बीजं स्यादिति चेन्न। वग्रहणं कुर्वतस्सूत्रकृतोपि मते तस्यादेशत्वफलप्रदर्शनायोत्तरसूत्रपर्यन्तानुधावनमिति वक्तुं शक्यत्वेन तावता प्रत्याख्नस्यैकदेश्युक्तित्वकल्पनाया अनौचित्यात्। यकारवकारान्तानांऽच्छ्वोरिति

किञ्च छन्दसि सर्वविधीनां व्यवस्थितत्वान्न वलोपप्रसक्तिस्तत्रत्ये गव्यूतौ। अध्वपरिमाणेऽपि सञ्ज्ञाशब्दोऽयम्, तत्र सञ्ज्ञात्वभङ्गापत्तेर्न वलोपः। यथा रघुनाथेति सञ्ज्ञाशब्दे नित्यस्यापि णत्वस्याभावः, सर्वनामशब्दे णत्वाऽऽशङ्का तु तस्य सञ्ज्ञिविशेषे आधुनिक विनियोगात् शास्त्रानुसारिशब्दस्यैव विनियोग उचित इत्यभिप्रायेण। निरूपितश्चैतत्सर्वादिसूत्रे भाष्यप्रदीपोद्द्योते इत्याहुः। निरूपयिष्यते चेदं 'पूर्वपदात्सञ्ज्ञायाम्' इति सूत्रे॥

---

उद्भाविनां यङ्लुङ्नास्तीति कैयटेन स्पष्टमुक्ततया देदेतीति फलस्याप्यसंभवाच्च। ननु प्रश्लेषाभावे कथं गव्यूतिसिद्धिरत आह। किंचेति। न च छान्दसत्वात्तदुपपादनमगतिकगतिरिति वाच्यम्। अन्यार्थमावश्यक्या सर्वे विधयश्छन्दसि विकल्प्यन्त' इति परिभाषया सिद्धे अपूर्ववकारप्रश्लेषस्य सामर्थ्याश्रयणस्य चानौचित्यात्। संज्ञात्वभङ्गापत्तेरिति। गोर्यूतौ वान्तादेशो भवति तद्घटितेन चेदध्वपरिमाणं गम्यत इति वार्त्तिकार्थाल्लुप्तवकारेण तदप्रतीतेरेतद्विहिताव्घटकवकारो न लोपस्य विषयो भवतीति भावः। एतेन पूर्वपदादित्यत्रेव लोपश्शाकल्येत्यत्र संज्ञादिपदाभावाद्दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यमित्याशङ्क्याध्वपरिमाणबोधकत्वमुपजीव्यप्रवृत्तावादेशस्य तद्बोधकत्वविघटकलोपं प्रत्यनिमित्तत्वेन सन्निपातपरिभाषया लोपो वारणीय इत्याशयं नागेशस्योद्भाव्य त्रिपाद्यां तत्परिभाषाऽप्रवृत्त्या एतदर्थं प्रश्लेषस्यावश्यकत्वं वदन्तः परास्ताः। णत्वस्याभाव इति। यत्तु पूर्वपदादित्यत्रापि सणत्वेन संज्ञायां गम्यमानायामित्यर्थो न युक्तः। अग इत्यस्य वैयर्थ्यापत्तेः रघुनाथादौ क्षुभ्नादित्वान्न णत्वमिति तन्न। भृञोऽसंज्ञायामिति सूत्रभाष्ये य एते संज्ञायां विधीयन्ते तेषु नैव ज्ञायते संज्ञायामभिधेयायामिति किं तर्हि प्रत्ययान्तेन चेत्संज्ञा गम्यत इत्युक्त्वा अस्यार्थस्य स्पष्टमुक्तत्वेनायुक्तत्वकथनस्य साहसमात्रत्वात्। अणृगयनादिभ्य इति निपातनादप्यग

**धातोस्त । धातोरित्यस्याभावे प्रातिपदिकमात्रविषयो नियमः स्यात्तथा च गव्यमित्यत्र न स्यात्, ओयते इत्यत्र च स्यात् । तदभावे सामान्यतो नियमापादनन्तु योगविभागैवकारवैयर्थ्यापत्तेरयुक्तम् । तन्निमित्तस्य चेद्धातोरेवेति नियमे बाभ्रव्यासिद्धेस्तद्वारणायैवकारः । लव्यमित्यादि । अत्र गुणवृद्ध्योर्यण्णयन्निमित्तकत्वेनैचो**

---

इत्यस्य प्रत्याख्यानमप्यनेन निर्देशेन पूर्वोक्तार्थवर्णनद्वारा णत्वं वारयितुं शक्यमित्याशयकमिति न तद्विरोधः । अस्मिन्नर्थे भाष्यात् स्थिरीकृते सूत्रविरोधस्याकिञ्चित्करत्वाच्च । उक्तार्थे तात्पर्यग्राहकं वाऽग इति न दोषलेशोपि तदेतद्ध्वनयन्नाह । निरूपयिष्यते चेति । एवञ्चात्राहुरिति प्रतीकमुपादायाचार्यैः परेस्त्वित्यादिना शेखरखण्डनमभिमानमूलकमेवेति सुधीभिराकलनीयम् ॥

**धातोरित्यस्याभावे इति** । न च तदभावे धातोःकार्यमुच्यमानमिति परिभाषाऽप्रवृत्त्या भूधातोः क्विपि उगवादिभ्य इति यत्योर्गुणे अवादेशापत्तिरिति वाच्यम् । तत्परिभाषायाः प्रकृतेऽप्रवृत्तेर्वक्ष्यमाणत्वेनावादेशस्येष्टत्वात् । **प्रातिपदिकमात्रविषय इति** । यादिप्रत्ययपूर्वत्वविशिष्टप्रातिपदिकावयवैच्त्वस्य नियामकशास्त्रीयोद्देश्यतावच्छेदकभूतयादिप्रत्ययनिमित्तकैच्त्वव्यापकत्वेन तदतिरिक्तत्वेन सामान्यशास्त्रे संकोचरूपो नियमस्स्यात् । वान्तोयीति तु ओयत इत्याद्यर्थंस्यात् । यादिप्रत्ययाव्यवहितपूर्वत्वविशिष्टधात्ववयवैच्त्वं तु न यादिप्रत्ययनिमित्तकैच्त्वव्यापकं बाभ्रव्यादौ व्यभिचारादिति भावः । न च धातोरेच इति मूलाद्यादिप्रत्ययपूर्वत्वविशिष्टधात्ववयवैच्त्वातिरिक्तत्वेन संकोच इति लभ्यते तथा च गव्यतीत्यत्र वान्तादेशानापत्तिरिति वाच्यम् । यादिप्रत्ययपूर्ववृत्त्येजन्त धात्ववयवैच्त्वातिरिक्तत्वेन संकोचेनादोषात् । **एवकार इति** । न च धातोः कार्यमिति परिभाषया धातुसंशब्दनेन विहितयादिप्रत्यये परे धातो रेचो यदि वान्तदेश इत्याद्येव नियमः न तु धातुसंशब्दनेन विहितयादिप्रत्यये तन्निमित्तस्य

यादिप्रत्ययनिमित्तकता । तन्निमित्तस्येति किमिति । सूत्रमेव किमर्थमिति प्रश्नः । ओयत इति । वेञः कर्मणि लटि यकि यजादित्वात्संप्रसारणेऽकृत्सार्वेति दीर्घे आङा सहाऽद्गुणः । न धातुलोपसूत्रभाष्यरीत्या बहिर्भूतधातूपसर्गकार्यस्य बहिरङ्गत्वाद्वान्तादेशो

---

चेद्धातोरित्येवं रीत्या विपरीतनियमः तादृशयादिप्रत्ययनिमित्तकस्याधातोरेचोऽसंभवेन नियमव्यावर्त्याभावादिति वाच्यम् । तस्या धातुत्वेतरधातुत्वव्याप्यधर्मावच्छिन्नोद्देश्यककार्यमात्रविषयत्वादनित्यत्वाद्वा प्रकृतेऽप्रवृत्तेः । अत एव किरश्च पञ्चभ्यः न भूसुधियोरित्यादि निर्देशास्संगच्छन्ते । अत्र चेदमपि ज्ञापकं बोध्यम् । अत एवाचिश्नु इत्यादेरधातुप्रत्ययेऽपि प्रवृत्तिरित्यन्यत्र स्पष्टम् । न चैवं सति न यकीत्येव कुतो न सूत्रितमिति वाच्यम् । जनानवतीत्यर्थनिष्पन्नजनौशब्दात्तत्र साधुरिति यति निष्पन्नजनौयशब्दे वान्तादेशापत्तेः । न च जनौरित्यादेरनभिधानं शब्दरत्ने उक्तमिति भ्रमितव्यम् । अनभिधानस्याऽङ्घटितोदाहरणविषयकत्वात् । तस्य तु एकः पूर्वपरयोरिति भाष्योक्तयो रूडादेशद्वयमितिपक्षतदितरपक्षयोः फलाभेदायानभिधानमावश्यकम् । अन्यथा आदेशद्वयकल्पे अन्तरङ्गत्वादाङ्प्रथमोठोर्वृद्धौ द्वितीयोठि आवादेशे जनावूरिति एकस्मिन्नूठि जनौरिति च फल भेदः स्पष्ट एव । वस्तुतस्तस्याप्यनभिधाने न मानमित्येत्येधतीत्यत्र निरूपयिष्यते । यत्तु उश्शम्भुस्तमैच्छत् औयदित्यत्र न यकीति न्यासपक्षे वान्तादेशापत्तिर्यथाश्रुतन्यासे तु अत्रत्यौकारस्य धातुसंबन्धित्वेनातन्निमित्तकत्वेन च न वान्तादेश इति समादधुः । तन्न । गव्यतीत्याद्यसिद्ध्या धात्ववयवैचो वान्तदेश इत्यर्थस्यावक्तव्यतायाः पूर्वमुक्तत्वात् । केचित्तु भूधातो र्विचि निष्पन्नभोशब्दाद्यति भोयमित्यादौ वान्तादेशापत्तिर्न यकीति न्यासे इत्याहुः । विचोऽसार्वत्रिकत्वेन तद्दोषवारणे तु पूर्वोक्तं जनौयमित्येवासाधारणं दूषणं बोध्यमिति दिक् । सूत्रमेव किमर्थमिति

**गुणोऽसिद्ध इत्यरुचेराह । औयतेति । तस्मादेव कर्मणि लङि अडागमे वृद्धिः शेषं पूर्ववत् ॥**

---

**प्रश्न इति** । न च तावद्विषयक एव प्रश्नोऽस्तु । धातोरेचो यदि स्याद्यादिप्रत्यय एवेति नियमः स्यात्, तथा च ओयते इत्यादौ वान्तादेशापत्तिरित्युत्तराशयो वर्णयितुं शक्यः । नियमव्यावर्त्यन्तु पावकादिस्यात् योगविभागसामर्थ्याद् व्यवहितस्यापि नियमस्स्यादिति वाच्यम् । तादृशाशयकत्वे नियमव्यावर्त्यस्यानिष्टस्य चैकस्य भवतीत्यस्यैव सम्भवेन व्यावर्त्यतयोपस्थितस्य तस्यैव प्रदर्शनमुचितमिति तदुपेक्षयां बीजाभावात् । एवं च सूत्रविषयक एव प्रश्न उचित इति दिक् । यत्तु तन्निमित्तस्येत्यस्याभावे प्रत्ययस्य प्रकृत्यंशे उत्थिताकाङ्क्षतया यादिप्रत्ययपरको यो धातुः तद्घटकस्यैचो वान्तादेश इत्यर्थे ढौक्यत इत्यादावपूर्वविधायकं स्यादिति तन्न । एजन्तधातावेव प्रत्ययस्य विशेषणत्वलाभान्निरुक्तदोषानवकाशात् । कथमन्यथा गव्यतीत्यत्र वान्तादेश इष्टस्सिध्येत् । न च तथा व्याख्याने सर्वादेशापत्तिरिति वाच्यम् । निर्दिश्यमानपरिभाषया वारणादिति दिक् । **अरुचेराहेति** । यत्तु नाजानन्तर्य इति निषेधादियमरुचिरसंगतेति तन्न, यत्रान्तरङ्गे बहिरङ्गे वा अचोरानन्तर्यं तत्रेयमिति हरदत्तमते अज्निष्ठान्यानन्तर्यनिमित्तककार्ये इयमिति नागेशमते च तद्विषयत्वेऽपि अज्निरूपितानन्तर्यनिमितककार्ये इयमिति दीक्षितमते तदविषयत्वात् । दीक्षितग्रन्थस्य तद्रीत्यैवावतरणस्य दातुमुचितत्वाच्च । स्वमते तस्यासत्त्वाच्चेति दिक् । **औयतेतीति** । नन्वत्रापि सार्वधातुकनिमित्तकयगपेक्षया पूर्वोपस्थितनिमित्तकत्वेन वान्तादेशस्यान्तरंगतया यकोऽसिद्धत्वेन तद्वारणं सुकरमिति चेन्न । तादृशान्तरंगत्वस्य जातासिद्धतानियामकत्वानभ्युपगमात् । मनुष्योऽयमित्यादिदृष्टान्तेन समकालप्राप्तिविषयकताया एव लाभात् । अत एव भवत इत्यत्र गुणसिद्धिः । अत एव धियतीत्यादावन्तरंगत्वादियङादि-

क्षय्यज । क्षि क्षये, जि जये, इत्यनयोरेव ग्रहणं न तु क्षीष् हिंसायाम्, क्षै जै क्षये, इत्यनयोर्व्याख्यानात् । अत एव 'क्षिज्योरेवैचः' इति भाष्ये उक्तम् ॥

तस्मै प्रेति । क्रयार्थे वस्तुनि क्रय्य इति निपात्यत इत्यर्थो, व्याख्यानात् गुणभूतस्यापि तदा परामर्शः । क्रयार्थत्वञ्च फलोपधानरूपम्, तदर्थ इति विशेषणात्तदाह । क्रेतार इति । योग्यतामात्रग्रहणे

---

साधनपरं वार्त्तिकं संगच्छते । अत एव पिबतीत्यादौ शबेकादेशस्य स्थानिवत्त्वात्पिबादेशः पूर्वान्तवत्त्वस्य फलमुक्तमन्तादिवत्सूत्रे भाष्ये । अन्यथा शपोऽसिद्धत्वात् पिबादेशाप्रवृत्तौ तदसंगतिः स्पष्टैव । असिद्धवत्सूत्रे च पपुष इत्यत्राल्लोपे संप्रसारणस्यासिद्धत्वमाशङ्क्य निमित्तमेव संप्रसारणमल्लोपस्येति नासिद्धत्वमित्युक्तं संगच्छते । नाजानन्तर्यपरिभाषया वारणं तु न सम्यक् । दीक्षितमते अज्निरूपितानन्तर्याभावान्नागेशमते तदसत्त्वात् । यत्तु यिप्रत्यय इत्यस्य धातुविशेषणत्वान्नाजानन्तर्यपरिभाषाप्रवृत्तिरिति तन्न । सूत्राभाववादिनं प्रति तथावक्तुमशक्यत्वादिति बोध्यम् ॥

हिंसायामित्यस्याग्रे इत्यस्येति शेषः । तेन नानयोरिति द्विवचनासंगतिः । क्षय्येत्यत्र प्रकृतिभूतयोरेककोटिकतया वा योजनीयम् । निरनुबन्धकपरिभाषया वारणेत्याह । क्षै इति । सूत्रे प्रतिपदोक्तानुपूर्व्यश्रुतेः न लक्षणप्रतिपदोक्तयोरित्यस्य विषयः । व्याख्यानादिति । भाष्ये क्षिज्योरिति ग्रहणरूपादित्यर्थः । न चेदं ग्रहणं क्षै जै इत्यनयोरिका निर्देशे साधारणमिति वाच्यम् । तयोरुपदेशे आत्वे एचोऽसम्भवात् । तद्धनयन्नेच इत्यन्तं प्रमाणतयोपन्यस्तम् ॥

व्याख्यानादित्युत्तरान्वयि । तदर्थग्रहणसामर्थ्यमूलकात् तदित्यनेन किं प्रति निर्दिश्यते, स एव क्रीणात्यर्थ इति भाष्यादित्यर्थः । तथा हि । प्रधानपरामर्शे सोऽर्थस्तदर्थ इति तत्पुरुषे स्वस्मिन्नर्थे शब्दो वर्तत एवेति विशेषणं व्यर्थम् ।

**त्वव्यावर्त्तकं तत्स्यादिति भावः । केचित्तु स्वीयं धान्यादि दत्त्वा यत्र तन्मूल्यग्रहणं तत्र धान्यं क्रय्यम् । यत्र तु स्वयं द्रव्यं दत्त्वा परकीयधान्यादिग्रहणं तत्र धान्यं क्रेयम् । द्रव्ये तु न क्रय्यत्वं नापि क्रेयत्वं किं तु धान्यादेरेव, शब्दशक्तिस्वभावात् । भाष्यस्वरसोऽप्येवमेवेत्याहुः ॥**

---

सोऽर्थो यस्येति बहुव्रीहौ तदर्थशब्दस्य शब्दपरत्वाच्छब्दे शब्दस्य वृत्त्यसंभवात् व्यर्थं तस्मै इदमिति विग्रहे क्रय्योपकारक मित्यर्थलाभान्न स क्रय्यशब्दार्थ इति सर्वथा तदनर्थक मतो गुणभूत परामर्श इति भाष्याशय इति स्पष्टं प्रदीपोद्योतयोः । इति भाव इति । अत्र मते क्रयः क्रीणात्यर्थः स च क्रेतृव्यापारः द्रव्यदानपूर्वकधान्याद्यादानरूपः । एवं च क्रेतृक्रियाश्रयीभूतं धान्यमिति क्रेतॄणां क्रय्यं धान्यमिति व्यवहारस्सिध्यति । मतान्तरे विक्रयः क्रीणात्यर्थः स च लाभेच्छया मूल्यादानपूर्वकधान्यादिदानरूपो विक्रेतृव्यापारः । एवं च विक्रेतॄणां क्रय्यमिति क्रेतॄणां क्रेयमिति व्यवस्थित एव व्यवहार इति बोध्यम् । ननु विनिमयाश्रयत्वाविशेषात् द्रव्येऽपि प्रयोगद्वयं स्यादत आह । द्रव्ये त्विति । मूल्ये इत्यर्थः । मतद्वयेपीदं बोध्यं तद्ध्वनयन्नाह । **शब्दशक्तिस्वभावादिति** । यदा तु आपणे पणाः तद्दानेन लाभेच्छया प्रसारितास्तदा तेषां न मूल्यत्वम् । एतेन वस्तुतस्तु द्रव्येपि क्रय्यत्वं क्रेयत्वं चास्त्येव । अत एव लोके आपणे स्थापिताः पणाः विक्रेतुः क्रय्याः क्रेतुः क्रेया इति व्यवहारो दृश्यते । एवं रजतसुवर्णादेरपि । अत एव केचिदित्युक्तमिति परास्तम् । तदानीं तेषां मूल्यत्वाभावेन व्यवहारस्याबाधात् । अस्य मतद्वयसाधारण्येन केषाञ्चिन्मते एवं रीत्या अरुचेर्वक्तुमशक्यत्वाच्च । **भाष्यस्वरस इति** । क्रेयं नो धान्यं न चास्ति क्रय्यमिति प्रत्युदाहरणभाष्ये असच्छब्दप्रयोगेण प्रयोगव्यवस्थिते र्लाभादिति भावः । आहुरिति । नः धान्यं मूल्येनोपादातव्यं न तु क्रयायापणे

लोपः शा । भोभगो अघो अपूर्वस्येत्यशीति चानुवर्तते, तत्रौकारान्तेष्वोतो गार्ग्यस्येति बाधकमित्याशयेनाह । अवर्णपूर्वयोरिति । व्योरित्यनुवृत्तावपि वर्णसमाम्नाये यकारस्य प्राक्पाठात्तत्क्रमेणाह । यवयोरिति । 'स तस्मा आचष्ट' इत्यादि भाष्यप्रयोगादत्र रोरित्यस्यासंबन्धः । इदं सूत्रं लघुप्रयत्ने न।

---

प्रसारितमिति भाष्यं पूर्वमतेपि सुयोजं व्यवहारव्यवस्थात्वदृष्टचरीत्यरुचिः ॥

भो भगो इति । ननु अवर्णपूर्वस्यैव तदुदाहरणत्वसंभवात्तन्मात्रमेवानुवर्तनीमिति चेन्न । तथा सति ओतो गार्ग्यस्येति सूत्रे "किमर्थमिदमुच्यते न लोपश्शाकल्यस्येत्येव सिद्धम् । ओकाराल्लोपवचनं नित्यार्थ"मिति भाष्येण विरोधापत्तेः । ओत इत्यत्र मण्डूकानुवृत्त्यापत्तेश्च । न च तत्रापि निवृत्तिरेवास्तु स्मृतोवादेरनभिधानेनादोषादिति वाच्यम् । एरर्थः यर्थः शंभो यर्थ इत्यादौ लोपापत्तेः । न चेष्टापत्तिः । पूर्वोक्तभाष्यविरोधात् । अत एव भाष्यानुसारिणस्त्वित्यादिना तत्र तदनुवृत्तिर्दर्शयिष्यते इति बोध्यम् । बाधकमिति । तत्र गार्ग्यग्रहणस्य पूजार्थतायास्सिद्धान्तयिष्यमाणत्वादिति भावः । ननु भो भगो इति सूत्रे अश्ग्रहणमनर्थकम् अन्यत्राभावात् । नह्यन्यत्र रुरस्तीति भाष्येण अत्रापि रोरित्यस्य संबन्धो लभ्यते तथा च दीक्षितोक्तं हर एहीत्याद्येतदुदाहरणमसंबद्धमेवेत्यत आह । स तस्मा इत्यादि । असंबन्ध इति । एवञ्चैतदनुरोधेन भाष्ये रुपदमश्निमित्तककार्यकार्यिपरमित्युपलक्षणतया नेयमिति भावः । यद्वा वृक्षवादि व्यावृत्तये हलि सर्वेषामित्यत्र रुपदसंबन्ध इति भो भगो इति सूत्रस्थोद्योतोक्तपक्षान्तरे अत्रापि संबन्धस्स्यादत आह । स तस्मा इत्यादि । असम्बन्ध इति । एवं चात्र निवृत्तौ तत्र मण्डूकानुवृत्तिराश्रयणीयेति स पक्षोऽनुचित इत्याशय स्सूचितः । तत्क्रमेणेति । ननु सूत्रे स क्रमः किमित्युपेक्षित इति चेच्छृणु । तथा सति लोपोव्योरिति यलोपापत्तेः ।

**शाकटायनमते तयोर्विधानेन शाकल्यमते तदभावात्। अवर्णेति किम्। गौर्यत्र। पदान्तयोः किम्। हरये॥**

**अशि किम्। वृक्षं वेतीति वृक्षवीः क्विप् तमाचष्टे इति ण्यन्ताद्‌क्विप्। वृक्षव् करोति। क्विपि लुट् स्यात्। विञ्निमित्तको लोपो व्योरिलि लोपस्तु न। णिलोपटिलोपयोः स्थानिवत्त्वात्। प्रातिपदिकाण्णिजुत्पत्त्यः पदत्वाभावेन परपदस्थाजादेशाभावेन च लोपस्य पदचरमावयवत्वाभावेन च 'न पदान्त' इतिनिषेधाप्रवृत्तेः। एतेन वनिमित्तको वलोपोऽत्र दुर्वार इत्यपास्तम्। किं च स्थानि-**

---

तदनुच्चारणे असंदेहाय व्याख्यानस्याश्रयणापत्तेः। अत एवाचिश्न्वित्यत्र सौत्रत्वाल्लोपाभाव एवाश्रितः। न च तत्रापि क्रमव्यत्यासोवक्तुं शक्यः। यथासंख्यस्येष्टस्यासिद्ध्यापत्तेरिति दिक्। **शाकटायनमते इति।** ऋषिविशेषघटितशास्त्रविधेयस्य तदतिरिक्तऋषिघटितशास्त्रप्रवृत्तावप्रयोजकत्वम्। साधुष्वेव शास्त्रप्रवृत्त्या तद्बोधितसाधुत्वस्य तदतिरिक्तऋषिणाऽज्ञातत्वेन तत्र तदप्रवृत्तेः। पाणिनिस्तु सर्वमपि जानाति। अत एव स्फोटायनमतसिद्धावङि सवर्णदीर्घसिद्धिः। अत एव च पाणिना तत्तदनुवादः कृतः पाणिनिबोधितं साधुत्वं सर्वोपि जानाति। अत एवावाद्यादेशघटकवादेश्शाकललोपस्सिध्यतीति भावः। **अवर्णेति किमिति।** रोस्संबन्धमभिप्रेत्य प्रश्नः। तदसंबन्ध इत्युत्तरम्। एवमुत्तरत्रापि। **अशि किमिति।** वृक्षवादेरनभिधानमिति प्रश्नः। वृक्षव् करोतीत्यस्य भाष्ये दृष्टत्वादनभिधानं न युक्तमित्युत्तरम्। **क्विपित्विति।** वीधातुप्रकृतिकं तमादाय तु न। टिलोपस्य बहिरंगासिद्धत्वात्। **इति लोपस्त्विति।** अस्य ग्रन्थस्य प्राचीनाशयवर्णनपरतया छकाराद्वेति स्वोक्त्या न विरोधः। सुबन्ताण्णिजिति हरदत्तमते पदत्वसत्त्वमभ्युपेत्य स्वरीत्या आह। **परपदस्थेति।** हरदत्तमतसाधारण्यायाह। **लेपस्येति। एतेनेति।**

वत्त्वनिषेधं विनाऽस्य पदान्तत्वासिद्ध्याऽत्र निषेधाप्रवृत्तिः । स्थानिवत्त्वनिषेधज्ञाने पदान्तत्वज्ञानं तन्निर्णये च स्थानिवत्त्वाभावज्ञानमित्यन्योन्याश्रयस्तत्राप्रवृत्तौ मानम् । इदञ्च न पदान्तसूत्रे भाष्ये स्पष्टम् । न च पदसञ्ज्ञायां टिलोपस्य स्थानिवत्त्वाद्धस्य पदान्तत्वमेव नास्तीत्यशीति व्यर्थमिति वाच्यम् । पूर्वत्रासिद्धीय इति निषेधात् । साक्षात्पदत्वादिद्वारकपरम्परया वा पूर्वत्रासिद्धीयप्रापकस्य तत्प्रतिबन्धकस्य वाऽतिदेशस्य तेन निषेधादिति केचित् ॥

---

अन्त्ययुक्तिद्वयेनेत्यर्थः । आद्ययुक्तेः बहिर्भूतसुब्निमित्तकपदत्वसत्त्वेनासंभवादिति बोध्यम् । न पदान्तसूत्रे विधिशब्दः कर्मसाधनः पदान्तस्येति स्थानषष्ठी, तथा च पदान्तस्य यत्कार्यं तत्र न स्थानिवदित्यर्थे वृक्षव् करोतीत्यादौ वलोपे स्थानिवत्त्वनिषेधापत्तिरिति प्राचीनोक्तमयुक्तमिति ध्वनयन्नाह । किञ्चेति । कर्मसाधनविधिशब्दाश्रयणे तु षडिकासिद्धिरिति भाष्ये स्पष्टम् । अन्योन्याश्रय इति । अयं पदान्तस्य स्थाने विधावित्यर्थ एव । ध्वनितं चेदं न पदान्तसूत्रे वेतस्वानिति प्रतीकमुपादाय भावसाधनविधिशब्दाश्रयेणोच्यत इति वदता कैयटेन । स्फुटीकृतश्च तदवतरणग्रन्थे उद्योते । न तु पदचरमावयव इत्यर्थे । तत्र पदचरमावयवस्य विधेयतया पूर्वसिद्धत्वाभावेन तस्य निमित्तत्वाप्राप्त्यान्योन्याश्रयाप्रसरात् । तेन न पदान्तसूत्रस्थभाष्येण न विरोधः । एतेन वेतस्वानित्यत्राप्येवमापत्त्या भाष्यासङ्गतेस्सांभावनिकपदान्तत्वमाश्रित्य निषेधप्रवृत्तिस्सुवचेति तत्त्वमिति परास्तम् । साक्षादिति । साक्षात्साधकस्थानिवद्भावनिषेधस्य फलं किमु सन्तीति । अत्राल्लोपस्य स्थानिवद्भावस्साक्षाद्दत्वसाधकः । एवं तितउशब्दस्य अशब्देन समासे तस्माण्यन्ताण्णिचि तितव् इति भवति । अत्र णिलोपटिलोपयोस्स्थानिवद्भावस्साक्षाद्वलोपसाधकः । न चास्य वक्ष्यमाणरीत्याऽनभिधानमिति वाच्यम् । अस्यामवस्थायां वलोपप्राप्त्या लण्सूत्रस्थ-

भाष्येण लोपाघटितस्यानभिधानलाभेपि लोपघटितस्यानभिधानालाभात् । यत्तु वृक्षस्य वः वृक्षवः तस्माण्ण्यन्ताद्विचि वृक्षव् इत्यत्र टिलोपादेस्स्थानिवद्भावस्साक्षात्साधक इति तन्न । तेनैव स्थानिवद्भावेन वान्ते पदत्वस्य दुर्निरूपत्वात् । न च तस्य स्थानिवद्भावस्य वान्ते पदत्वाभावद्वारा प्रतिबन्धकतेति निषेधस्सुवच इति वाच्यम् । तेनैव सिद्धे एतदसाधारणफलत्वासम्भवात् । न च टिलोपस्थानिद्भावस्य तथात्वेपि णिलोपस्थानिवद्भावस्यातथात्वात्फलं सुवचमिति वाच्यम् । तस्य स्थानिवद्भावेपि उत्तरपदत्वे चेति निषेधेन वान्ते पदत्वाभावेन लोपाप्रसक्तेः । न च बहिर्भूतसुपमादाय पदत्वं सुवचमिति वाच्यम् । तदानीं टिलोपस्थानिवद्भावादविशेषात् । एवं सुगण् च इश्च तयोस्सुगण्योरित्यादौ यणादेशस्य स्थानिवद्भावस्साक्षात् ङमुट्साधक इति तदपि न फलम् । स्वविधौ स्थानिवत्त्वाभावात् । ङमो ङमुडिति भाष्योक्तपक्षान्तरे तु यथा कथंचित्फलं भवितुमर्हति । एवं शो तनूकरणे इत्यस्मात् घञर्थे के तेन वाकशब्दस्य समासे तस्माण्ण्यन्तात् क्विचि तितुत्रेतीडभावे वाक्श्तरित्यादौ टिलोपादेः स्थानिवद्भावः साक्षाच्छत्वसाधक इति फलदानमप्येतादृशसंज्ञायाः असिद्धावेव संघटते नान्यथेति दिक् । यदपि परंपरया साधकस्योदाहरणं पिपठीस्तत्रेति । अतो लोपस्य स्थाविवद्भावस्सान्ते पदसंज्ञाप्रतिबन्धद्वारा षत्वसाधक इति तन्न । अत्र षत्वस्यासिद्धत्वाद्रुत्वे विसर्गे सत्वे तस्यानादिष्टादचः पूर्वत्वाभावेन स्थानिवत्त्वाप्रसक्तेः । यदपि नौरिव अः नावः तस्मादाचारक्विबन्तात् कर्तरि क्विपि तत औप्रत्यये नावावित्यादावल्लोपस्य स्थानिवद्भावः वान्ते पदत्वाप्रतिबन्धद्वारा पूर्वत्रासिद्धीयलोपसाधक इति तदपि न । तस्य वृक्षवादितुल्यत्वेनानभिधानस्यैव ग्रन्थकृत्संमतत्वात् ॥

परे तु 'न पदान्ता हलोऽणः सन्ति' इति लण्सूत्रस्थभाष्याद् वृक्ष्वादेरनभिधानमेव । भोभगो इति सूत्रेऽघ्ग्रहणमनर्थकमन्यत्राभावादिति वार्त्तिकाच्च । अशोऽन्यत्र तन्निमित्तकार्यकार्यिणोऽभावा-

---

भट्टास्तु प्रापकस्थानिवत्त्वनिषेधस्य फलमनन्यथासिद्धं मृग्यमित्याहुः। तेषामयमाशयः । विजसार्वत्रिकः वाक्श्चतरिति संज्ञाया अप्रसिद्धिरिति । साक्षात्प्रतिबन्धकस्योदाहरणं राज्ञ इति । अत्राल्लोपस्य स्थानिवद्भावस्साक्षात् श्चुत्वप्रतिबन्धकः । परंपरया प्रतिबन्धकस्योदाहरणं पिपठीरिति । अल्लोपस्य स्थानिवद्भावस्सान्ते पदत्वप्रतिबन्धद्वारा रुत्वादि प्रतिबन्धकः। यत्त्वाचार्या नात्र फलं, पदसंज्ञाया अपि कार्यकाले पूर्वत्रासिद्धीयत्वेन साक्षादित्यनेनैव निर्वाहादित्याहुस्तन्मन्दम् । आकडारीयभपदसंज्ञाविषये यथोद्देश एवेत्यनेन तस्याः कार्यकालताया व्यवच्छेदात् । कार्यकालताया अभ्युपगमेपि विधिदेशीयताया अस्वीकाराच्च । अत एवायादिभ्यः परा प्रगृह्यसंज्ञेति भाष्यं प्रगृह्यसंज्ञाप्रयुक्तप्रकृतिभावस्य परत्वप्रतिपादनपरतया योजितमदसोमादिति सूत्रे उद्योते । कार्यकाले संज्ञाया विधिदेशीयत्वप्रतिपादनं तु परिभाषेन्दुशेखरे केचिदित्युक्त्या अरुचिग्रस्तम् । अत एवोद्योते परेत्वित्येवोक्तं विस्तरस्तु परिभाषेन्दुटिप्पणीतोऽवसेयः ॥

**न पदान्ता इति** । लण्सूत्रस्थभाष्यान्न पदान्ता हलोऽणस्संतीत्याशयकाल्लण्सूत्रस्थभाष्यादिति योजना। यथाश्रुतं तु न सम्यक्, तादृशपाठस्य भाष्येऽनुपलम्भात् । यद्यपि भो भगो इति सूत्रस्थकैयटपर्यालोचनायां तादृशपाठोऽनुमातुं शक्यते, तथापि अयमस्ति कर्तृ इत्युत्तरभाष्यानानुगुण्यादयं पाठोऽसङ्गत एव । स्पष्टं चेदं कौस्तुभे । एवं हि तत्र भाष्यं 'एवं तर्हि सामर्थ्यात् पूर्वेण न परेण अन्यथा अचोऽप्रगृह्यस्येत्येव वदे'दिति । वृक्ष्वादेरभिधाने तु तदसंगतिस्स्पष्टैव । अनभिधाने साधकान्तरमाह । वार्त्तिकाच्चेति । ननु

**दिति तदर्थः। न ह्यन्यत्र रुरस्तीति तद्व्याख्यानभाष्ये रुग्रहणमुप-लक्षणम्। एतदाशयमजानानैकदेशिना 'उत्तरार्थं हलि सर्वेषामिति वृक्षव् करोतीत्यत्र मा भूत्' इत्युक्तम्। अस्य चैकदेश्युक्तित्वं लण्सूत्र-स्थोक्तभाष्यविरोधेन स्पष्टमेव कैयटेनोक्तम्। अत एव भाष्ये उत्त-रार्थमित्युक्त्वा हलि सर्वेषामित्यत्रैव प्रयोजनमुक्तम्। हलि सर्वेषा-मित्यत्र वकारनिवृत्त्यैवात्र तद्वारणसंभवान्न तत्राप्यश्ग्रहणस्य प्रयो-जनमिति तद्भाष्यमेकदेश्युक्तिरेवेत्याहुः॥**

---

नह्यन्यत्र रुरस्तीति विवरणपरभाष्यात् भो भगो इति विहितकार्यकार्यिणोऽसत्त्वं लभ्यत इति कथमेतदनभिधानलाभ इत्यत आह। **रुग्रहणमुपलक्षणमिति।** वार्त्तिककारस्याज्ञानकल्पनापेक्षया एवं व्याख्यानस्यौचित्यमिति भावः। **वकारनिवृत्त्यैवेति।** ओतो गार्ग्यस्येति सूत्रे भो भगो इत्याद्यनुवृत्तेस्तादृश-स्यौकारात्परस्य वस्यासंभवात्तन्निवृत्तिरावश्यकीत्युत्तरत्रासंबन्धः। अत एव अव्यपरे इत्यादिनिर्देशास्संगच्छन्त इति भावः। एतेन वृक्षव् हसतीत्यादौ लोपार्थं तस्यावश्यकत्वाच्चिन्त्यमेतदिति परास्तम्। अनभिहितस्य तस्य निर्वा-हार्थं वकारानुवृत्तावव्यपरे इत्यादौ सौत्रत्वाद्याश्रयणीयतापातान्मण्डूकानु-वृत्त्याश्रयापत्तेश्चेति दिक्। **एकदेश्युक्तिरिति।** हलि सर्वेषामित्यत्र हशीत्येव सिद्धे अश्ग्रहणानुवृत्तेस्तत्र प्रयोजनालाभाच्चेयमेकदेश्युक्तिः। न च हलीति मोऽनुस्वार इत्युत्तरार्थमावश्यकमिति वाच्यम्। तत्र हलीति कर्तुं शक्यत्वात्। न चोभयग्रहणस्यापरिहार्यतया लाघवाभाव इति वाच्यम्। पदद्वये स्वरित-त्वाकल्पनाप्रयुक्तलाघवस्य सुस्थत्वात्। किञ्च एकाचो बश इति सूत्रे वक्ष्य-माणरीत्या अश्पदशक्त्यकल्पनाप्रयुक्तमपि लाघवं सुवचम्। न च लोपश्शेत्यर्थं तदावश्यकमिति वाच्यम्। तथासति हलि सर्वेषामित्येतत्पर्यन्तानुधावनस्य भगवतो निर्दलत्वापत्तेः॥

कानि सन्तीति । वाक्यसंस्कारपक्षेऽपि पूर्वोपस्थितनिमित्तकत्वरूपान्तरङ्गत्वमादायाऽन्तरङ्गाणां पूर्वं प्रवृत्तिरितीकारादेःस्थानिभूतादचः पूर्वत्वं बोद्धव्यम् ॥

---

एतेन भो भगो इति सूत्रभाष्ये वृक्षव् करोतीति प्रयोगस्य कण्ठत एव पठितत्वेनानभिधानोक्तिस्साहसादेव । न पदान्ता हलोऽण इति भाष्यस्य कार्यभाज इति शेष इति कैयटेन योजितत्वान्नानभिधाने प्रमाणम् । हलि सर्वेषामित्यत्राकारस्यानुवृत्त्या अणोऽप्रगृह्यस्येत्यत्र पर्युदासेनाच इति लाभेन च न वकारस्य कार्यभाक्त्वम् । अत एव पर्युदासेन वृक्षवादेः कार्यभाक्त्वं निराकृतम् । यद्वा दोषसंपादका इति शेषः । तेन हरयेहीत्यादेस्सत्त्वेपि न क्षतिः । वृक्षव् करोतीत्यत्राण्ग्रहणानुवृत्त्या न दोष इति भाष्ये स्पष्टम् । वकारनिवृत्त्या तद्वारणं न युक्तम् । द्वन्द्वनिर्दिष्टयोरेकदेशनिवृत्त्यसंभवात् । अत एवादसोमादिति सूत्रे माद्ग्रहणं कृतम् । भोभगो इति सूत्रस्थश्चिन्त्यमेतदिति कैयटग्रन्थस्तु लण्सूत्रस्थस्वोक्तदिशा उपपत्तिचिन्तनं कार्यमित्येवंपर इत्याहुः । तदपास्तम् । कीर्त् इति भाष्ये कण्ठतः पठितस्यानभिधानस्य भाष्यकारेणोक्तत्वात् । न पदान्ता इति भाष्यस्य कैयटोक्तयोजना तु न युक्ता । पर्युदासस्याग्रे वक्ष्यमाणत्वेन तदज्ञानेनैव पूर्वभाष्यस्य योजनीयत्वात् । अन्यथा पूर्वपक्षस्य सन्देहस्य चानुत्थानात् । मध्ये अचोऽप्रगृह्यस्यानुनासिक इत्येव ब्रूयादिति भाष्यासंगत्यापाताच्च । स्पष्टं चेदं तत्रैवोद्योते । सति गमके द्वन्द्वनिर्दिष्टयोरप्येकदेशस्य निवृत्तिरिष्यत एव । प्रकृते ओत इत्यत्रासंभव एव गमकमत एव संख्याव्ययादेरित्यतस्संख्यादेरित्येतावन्मात्रस्यानुवृत्तिस्सिद्धा । भोभगो इति सूत्रकैयटे चिन्त्यमेतदिति पाठो नोपलभ्यत एव, अश्ग्रहणानुरोधेनैतद्भाष्यकारेणोदाहृतमिति कैयटग्रन्थे अनुरोधेनेत्युक्त्या अनभिधानाशयकताया एव लाभात् । किञ्च लोपो व्योर्वलीति सूत्रे क्वावुपसंख्यानमिति वार्त्तिकस्य, वेरपृक्तस्येत्यत्र वेरिति

एकः पूर्व । गुण इत्यादेर्विधेयसमर्पकत्वेन तत्रैकत्वसंख्याया विवक्षणेनोभयोः पूर्वपरयोरेकवाक्यतयैव विधेयान्वयेन चानयोः पूलयोः कटं कुर्वित्यादित इवोभयसंबन्ध्येकविधेयस्यैव प्रतीतेरेकग्रहणं स्पष्टार्थम् ॥

उरण् । उः स्थाने इति 'षष्ठी स्थाने' इतिपरिभाषया लब्धम्, 'उदात्तस्वरितयोर्यणः' इतिवत् । स्थानेऽन्तरतम इत्यतः स्थानेग्रहणमनुवर्त्तते, तस्य लक्षणया प्रसङ्गावस्थायामित्यर्थस्तदाह । रपरः

---

योगं विभज्य व्यन्तयोर्व्योर्लोप इति पक्षान्तरस्य च फलैक्याय च वृक्षवादिप्रकृतिकण्यन्ताद्विचोऽनभिधानं बोध्यमित्यादिनागेशाशय उद्भावनीय इति दिक् ॥

विधेयसमर्पकेति । सूत्रे लिङ्गवचनमिति परिभाषा प्रकृतसूत्रस्थभाष्यप्रामाण्यादनुवादविषयेति भावः । एकत्वसंख्याया इति । अत्रैकत्वं स्वसजातीयनिष्ठभेदप्रतियोगितानवच्छेदकत्वरूपं ग्राह्यम् । साजात्यं च स्वप्रकृत्यर्थतावच्छेदकवत्त्व स्वसमभिव्याहृतपदार्थसंसर्गित्वोभयधर्मपुरस्कारेणेत्यन्यत्र विस्तरः ॥

स्थानेशब्दद्वयमिहानुवर्तते । तत्रैकमुःस्थाने योऽणित्यनुवादेपि स्थानसंबन्धलाभायेति कौस्तुभोक्तिं कटाक्षयन् स्वरीत्या व्याचष्टे । परिभाषालब्धमिति । ननु विधौ परिभाषेति परिभाषया कथमनुवादे स्थानसंबन्धलाभ इत्याशङ्कां दृष्टान्तेन परिहरति । उदात्तस्वरितयोरिति । स्थानशब्दस्य ताल्वादिस्थानपरतया आह । लक्षणयेति । इदं कैयटाद्यनुरोधेन । वस्तुतस्त्वक्लृप्तस्वरितत्वकस्य स्थानेन्तरतमसूत्रस्थस्थानेग्रहणस्य स्वरितत्वं परिकल्प्य लक्षणाश्रयणापेक्षया क्लृप्तस्वरितत्वकस्य षष्ठीस्थाने इत्यत्रत्यस्य प्रसङ्गार्थकस्य स्थानेग्रहणस्यानुवृत्तिरुचिता । एवञ्च लक्षणापि नाश्रयणीया । स्थान इति

सन्नेवेति । रपर इत्यवयववाचिना परशब्देन षष्ठ्यर्थे बहुव्रीहिस्ते-नास्यावयवत्वाद्यदागमा इति न्यायेन विशिष्टस्य गुणवृद्धित्वेन ऋकारस्य गुणवृद्धी अरारावेवेति नियमोपपत्तिः । अत एव 'रदाभ्याम्' इति सूत्रे 'थलि च सेटि' इति सूत्रे च भाष्ये 'गुणो भवति वृद्धिर्भवतीति रेफशिरा गुणवृद्धिसञ्ज्ञकोऽभिनिर्वर्त्तते' इत्युक्तम् । उः स्थानेऽण् प्रसज्यमान एव रपरो भवति, पूर्वभक्तश्च

---

वर्तते स्थानशब्दश्च प्रसङ्गवाचीति भाष्यं षष्ठीस्थान इति स्थानेग्रहणमादेशविशेषणार्थमनुवर्तत इत्याशयकम् । अण्विशेषणार्थमित्याशयेन "यद्येवमादेशोऽविशेषतो भवति आदेशश्च विशेषतः कथं द्वितीयं स्थानग्रहणमनुवर्तत" इत्युत्तरभाष्यं त्वेकदेशिनः । अनुवादे परिभाषाप्रवृत्तेरन्यत्रोक्तत्वेन उःस्थाने इत्यर्थस्य परिभाषालभ्यत्वेन तदर्थमनुवृत्तेरनावश्यकत्वेनानुवृत्तस्यादेशविशेषणताया एव लाभेन द्वितीयस्यानुवृत्तेरनुपयोगात् । ध्वनितं चेदं यद्येवमित्यादिभाष्यस्यैकदेश्युक्तित्वं वदतोद्योतकृतेति ध्येयम् । रपरइत्यवयववाचिनेति । यद्यप्यराराादिरूपेण विधानादत्राभक्तत्वादिशङ्कैव नोदेति । तथापि आनङ इवाराराादिरूपेणानुच्चारणात् प्राप्ताप्राप्तविवेकन्यायेन रेफमात्रविधौ सूत्रतात्पर्यादभक्तत्वादिशङ्काव्युदास आवश्यक इति भावः । एतेन, अणमनूद्य रपरत्वं विधीयत इति पक्षे अभक्तत्वादिविचारो भाष्ये कृतः । अराराादिरूपेण विधानमिति पक्षे तु आनङादिनकारविषये यथा न विचारस्तथात्रापि । एवंच मुधैवेयमवयवत्वसाधनप्रयास इति परास्तम् । प्रकृतसूत्रे तत्पक्षस्य स्थितत्वाच्च । यद्यपि भाष्ये अन्त इत्यनुवर्त्य पूर्वान्तत्वं स्थापितं, तथापि तदेकदेश्युक्तम् । अन्यथा परादित्वपक्षे विसर्जनीयप्रतिषेधावश्यकत्वोपपादनाय नाकल्पित इत्यत्र कल्पितसंघातभक्तोऽसौ नोत्सहतेऽवयवस्य पदान्ततां विहन्तुमिति भाष्योक्त्या परत्वपर्याप्त्यधिकरणीभूतो यावांस्तदादीत्यर्थलाभेन तुल्ययुक्त्या पूर्वान्त इत्यस्य पूर्वत्वपर्याप्त्यधि

**रेफ इत्ययं गुण इति कैयटः । अवयवत्वं वाचनिकमेव तत्साहश्यबोधनपर्यवसायि । अन्यथा वर्णस्य वर्णान्तरावयवत्वं हलन्ताच्चेतिसूत्रभाष्योक्तरीत्याऽसङ्गतं स्यात् । पञ्चम्यर्थे बहुव्रीहिणाऽनवयवत्वे तु गुणवृद्धिशब्देनाकारादेरेव रेफपरस्यैतदेकवाक्यतया विधानं स्यात् । गुणत्वादिकन्त्वकारादिनिष्ठमेव स्यादित्युक्तनियमानुपपत्तिः । अत एव वव्रे इत्यादौ हलादिःशेषसिद्धिः । अभ्यासावयवस्यैवानादेस्तेन**

---

करणान्त इत्यापत्तेर्ऋकारस्य गुणवृद्धी अरारावेवेति नियमानुपपत्तिः । रदाभ्यां थलि च सेटीति सूत्रभाष्यविरोधापत्तिः । अनुवृत्तान्तपदस्यैकदेशे रेफेऽन्वयक्लेशश्च । स्पष्टं चेदमुद्योते । तदेतत्सूचयन्नाह । नियमानुपपत्तिरिति । इत्युक्तमिति च । एवञ्चाभक्तत्वे संघातभक्तत्वे वा निरुक्तदोषो भाष्यविरोधश्चेति भावः । न चाभक्तत्वेऽप्युद्देश्यविधेयभावव्यत्यासेन गुणवृद्धिसंज्ञकः अकारादी रेफशिरा अभिनिर्वर्तत इति भाष्यं सुयोजमिति वाच्यम् । पेचिथेत्यादौ दोषवारणाय आद्यते गुणस्य योऽकार इति वैयधिकरण्येन व्याख्याने अर् घटकाकारस्य गुणावयवत्वप्रतिपादनाय प्रवृत्तस्य थलि च सेटीति सूत्रस्थभाष्यस्य वृद्धिनिमित्तात्प्रतिषेध इति वार्त्तिकस्य वृद्धिरेव निमित्तं वृद्धिनिमित्तं वृद्धिनिमित्तादिति व्याख्याने कार्तेस्संग्रहार्थं प्रवृत्तस्य च रदाभ्यामिति सूत्रस्थभाष्यस्य च तथा व्याख्यातुमशक्यत्वात् । तदेतत्सूचयन् भाष्याशयवर्णनपरं कैयटं दर्शयति । **उःस्थाने इत्यादि** । तथा चाकरविरुद्धव्याख्यानं हेयमेवेति भावः । **वाचनिकमिति** । वचनप्रामाण्यलब्धमित्यर्थः, न तु वास्तविकमिति भावः, तदाह । **तत्साहश्येति** । वास्तविकत्वे भाष्यविरोधं दर्शयति । **भाष्यरीत्येति** । तत्र हि "अयुक्तोऽयं निर्देशः कथं हीकोनाम हल् अन्तः स्यादन्यस्यान्य" इत्युक्तम् । अन्यस्यान्य इत्यनेनात्यन्तभेदमनयोर्दर्शयतीति कैयटः । **वव्रे इत्यादाविति** । आनुमानिकस्थानिवद्भावेनाभ्यासत्वं तु न । अभ्यासस्यानर्थकत्वात् ।

निवृत्तेः । एतेनाणमनूद्य रपरत्वं विधीयत इति परास्तम् । उक्तनिय-

---

अस्योद्योतोक्तरीत्या रेफमात्रविधाने तात्पर्येणैतस्यादेशत्वेनैतदनुरोधेनानुमानिकादेशविधायकवचनकल्पनाया अशक्यत्वाच्च । न च स्थानिवत्सूत्रोक्तरीत्या अरित्यादाविव निर्वाहः, हल्संधिप्रकरणवक्ष्यमाणरीत्या अभ्याससंज्ञाप्रथमप्रवृत्तिकाले साक्षात् स्थानिद्वारा वा सन्निहितानामेव हलां हलादिःशेषेण निवृत्त्या प्रकृते रेफस्यातथात्वेनादोषात् । एतेनारित्यादावुक्तरीत्या निर्वाहादिदं चिन्त्यमित्यपास्तम् । वव्रे इत्युदाहरणमभक्तत्वपरादित्वपक्षयोरुभयोरपि दोषप्रदर्शनार्थम् । आदिना गीरित्यादीनि भाष्योक्तान्यनुसंधेयानि । **अभ्यासावयवस्येति** । अभ्याससंज्ञाप्रथमप्रवृत्तिकाले साक्षात् स्थानिद्वारा वा सन्निहितस्यैवेत्यर्थः । **एतेनेति** । उक्तरीत्या वव्रे इत्यादौ दोषसद्भावेनेत्यर्थः । **नियमानुपपत्तेरिति** । न चानान्तर्यमेवैतयोरान्तर्यमिति भाष्योक्तरीत्या निर्वाह इति वाच्यम् । ऋवर्णावर्णयोः प्रमाणत अन्तरतमत्वेन आन्तर्याभाववानकारो न जात इति ऋकारस्थाने अकार एवेति नियमानुपपादनेनास्य पक्षस्य दुष्टत्वात् । ध्वनितं चेदमनान्तर्यमिति भाष्यस्य स्थानकृतान्तरतमाभाव इत्यर्थ इति वदतोद्योतकृता । एतेनैतत्पक्षरक्षणपक्षपातिनः अनान्तर्यमित्यत्र प्रतियोगिभूतमान्तर्यमादेशविशिष्टत्वे सति स्थानिविशिष्टत्वं, वैशिष्ट्यं च स्ववृत्तित्व स्वेतरस्वदळघटक यावदवृत्तित्व स्वदळभिन्नदळीयवृत्तित्वैतत्रितयसंबन्धेनेत्यादि वदन्तः परास्ताः । अचो ञ्णितीत्यादौ तावताप्यनिस्ताराच्च । न च तत्रात उपधाया इत्यतः अत इत्यपकृष्य वाक्यभेदं स्वीकृत्य माठरपरिवेषणन्यायेन अच्पदार्थे अकारातिरिक्तत्वेन संकोचं कृत्वा वृद्धिविधानेनादोष इति वाच्यम् । निष्फलापकर्षवाक्यभेदयोस्स्वीकारे गौरवात्, तावताप्याकारमादायान्तर्यस्य सत्त्वेनानिर्वाहाच्च । न चाकारस्य वृद्धिविधाने फलाभाव इति वाच्यम् । पर्जन्यवल्लक्षणप्रवृत्तेर्दुर्वारत्वादिति दिक् । एवमत्र स्वयं दोषमुक्त्वा कौस्तुभोक्तं

**मानुपपत्तेः। अत्र पक्षे क्व रपरत्वं क्व लपरत्वमिति व्यवस्थाऽनुपपत्तिस्तु न। रेफवत्स्थानिकस्य रेफपरत्वं, लकारवत्स्थानिकस्य लपरत्वमिति व्यवस्थासंभवात्। तत्रान्तरतम्यादिति। स्थानत इति भावः। रेफादिद्वाराऽऽदेशस्यापि मूर्धादिस्थानत्वात्। तत्र तत्राऽऽदेशानेव रलपरानुच्चार्येदं सूत्रं न कार्यमिति तु न वाच्यम्। 'आप्ज्ञप्यृधामीत्' 'भृञामित्' इत्यादौ दोषापत्तेः। अत्राण् पूर्वेणैव, प्रशास्तॄणामिति निर्देशात्। वस्तुतो रप्रत्याहाराभावेन रपर इत्यस्य स्थाने लँपर इति पठनीयमिति 'लपरत्वं वक्ष्यामि' इति तुल्यास्यसूत्रभाष्याल्लभ्यते॥**

---

दोषं परिहरति। **अत्र पक्षे** इत्यादिना। **संभवादिति।** अयं भावः। अत्रापि पक्षे प्राप्ताप्राप्तविवेकन्यायेन पूर्वान्तौ रलौ विधीयेते, तत्रान्तरतमपादानुवृत्त्याऽनादेशत्वेपि अन्तरतमौ तौ भवत इत्यर्थः। साधारणधर्मस्तु अवयवावयविभावतादात्म्यान्यतरसंबन्धेन यो रेफलकारवान् प्रसज्यप्रसंजकभावतादात्म्यान्यतरसंबन्धेन तत्संबन्धित्वं, यद्वा ऋस्थानिकाण्स्थानेऽन्तरतमो रपर एव विधीयते। सादृश्यं च प्रसज्यप्रसंजकभावतादात्म्यान्यतरसंबन्धेन रलवत्संबन्धिरूपमिति। अनेन प्रतिपत्तिगौरवं सूचितमिति भट्टाः। **रलपरानिति।** वृद्धिसंज्ञाविधावारालौ गुणसंज्ञाविधा वरलौ च पाठ्यौ। ऋत इत्यादौ तकारस्थाने रःपाठ्य इति भावः। यद्यपि यथाश्रुतन्यासे अष्टौ मात्राः, गुणादिसंज्ञाविधौ रलपरपाठेप्यष्टौ मात्रा वर्तन्त इति समम्। ऋत इदित्यादौ तकारेण रेफो निमातव्य इति समं, तथाप्यानाङि नकारङकारौ नोच्चारणीयौ, लपरश्चेति न वक्तव्यं योगाधिक्यं च नास्तीति लाघवमिति बोध्यम्। **आप्ज्ञबिति।** तत्र रपरपाठे ईप्सतीत्यस्या सिद्धिः, अपाठे ईत्सतीत्यस्यासिद्धिर्बोध्या। **भृञामिदिति।** यत्र यत्र यथाश्रुतन्यासे रपरत्वं प्रसक्तं, तत्र सर्वत्र रपरोच्चारणं क्रियत इति पूर्वपक्षतात्पर्यमुद्भाव्यायं

**झरो झ । 'झयो ह्' इत्यतो 'वाऽवसाने' इत्यतो वा विकल्पोऽनुवर्त्तते । हयवरट्सूत्रशेषे भाष्ये स्पष्टमिदम् । लोपे इति । ऋध धातोर्झर इति भावः । असतीति । द्वित्वाभाव इत्यनुकृष्यते । त्रिधमिति । त्रिधकारत्वं प्रक्रियाभिप्रायेण । न च द्वित्वाभिन्ने पूर्वत्र कर्त्तव्ये परमसिद्धमित्यर्थकेन 'पूर्वत्रासिद्धमद्वित्वे' इत्यनेन धातुधकारस्य जश्त्वे दस्य द्वित्वमिति इदमयुक्तमिति वाच्यम् । फले विशेषाभावेन तदनादरणात् । न ह्यत्र जश्त्वात्पूर्वमनन्तरं वा**

---

दोष उपन्यस्तः। अत्र इरितिपाठे त्वनेकाल्त्वात्सर्वादेशप्रसङ्गः । यथान्यासे तूपजीव्यविरोधात्स नेति भाष्ये स्पष्टमिति भावः । एतेन तत्र रपरत्वेपि हलादिश्शेषेण निवृत्तेश्चिन्त्योयं दोष इति परास्तम् । आदिना भृज्ञामिदित्यस्य संग्रहं वदतश्श्रीधरस्य फक्किकापर्यालोचनायां केषुचित्पुस्तकेषु भृज्ञामिति पाठो नास्तीति प्रतीयते । आदिना मातुरुत्संख्येत्यस्य संग्रहः, तत्र सर्वादेशत्वं दुरुद्धरमिति भावः । उरणोरगिति तु नास्त्रि । चच्छावित्यत्रेव वव्रश्चेत्यत्र हलादिश्शेषानापत्तेः । भट्टास्तु चाकर्तीत्यत्राभ्यासस्य कित्त्वेन दीर्घोऽकित इति दीर्घानापत्तिः, तत्प्रकरणस्थाकितएव पर्युदास इति माधवमतं तु न न्याय्यम् । मानाभावात्, नीगादीनां सर्वेषां वर्जनाय बाध्यसामान्यचिन्तापक्षस्यैवावश्यकतया नानन्तरस्येतिन्यायो माधवाभीष्टं साधयितुमीष्टे। सत्यभिधाने चच्छायत इत्येव । वस्तुतस्तु अकिद्ग्रहणस्य ज्ञापकत्वपरभाष्यप्रामाण्येनाभ्यासनिमित्तकक्ित एव ग्रहणमिति दीर्घोऽकित इत्यत्रत्योद्योतरीत्या तु प्रकृते न दोषः । तत्प्रमाण्यात् हाको यङ्लुकौ नानभिधानादित्युद्योतोक्तपक्षान्तरे अभ्यासनिमित्तककित एव ग्रहणमित्यत्र फलाभावाद्दोष एवेत्याहुः ॥

भाष्यसम्मताष्टाध्यायीपाठानुरोधेनाह । **वावसान इति** । उभयानुगुणमाह । **विकल्प इति** । **इत्यर्थकेनेति** । एतेन पूर्वत्र द्वित्वे परमसिद्धं

**द्वित्वे रूपे विशेषोऽस्ति। तदनन्तरञ्जश्त्वप्रवृत्तेः। तस्य परिभाषात्वेन फलविशेषे एव प्रवृत्तेरित्यन्यत्र विस्तरः। पञ्चमीति। विनिगमकाभावादिति भावः। अत एवास्य वैकल्पिकत्वम्॥**

**कृष्णैकेति। कृष्णेति संबुद्ध्यन्तं पृथक्पदमिति कश्चित्॥**

---

नेत्यर्थोऽयुक्तोऽसमर्थसमासापत्तेरिति सूचितम्। प्रक्रियायां जश्त्वस्य सकृत्प्रवृत्त्यसकृत्प्रवृत्तिकृतविशेषोस्तीत्यत उक्तम्। रूपे इति। यत्तु पूर्वत्रासिद्धमित्यस्यापि परिभाषात्वेन फलाभावादप्रवृत्तिरिति तन्न। तस्य परिभाषात्वस्य निराकृतत्वात्। विनिगमकाभावादिति। यत्तु इदं चिन्त्यमिति तन्न। पूर्वमेव दत्तोत्तरत्वात्। वैकल्पिकत्वमिति। विनिगमकाभावाद्वाक्यार्थाबोधे प्रसक्ते वृद्धिसूत्रे शास्त्रानर्थक्यस्य निराकृतत्वादन्यतरतात्पर्यनिश्चयेन केचिद्यणः परस्य मय इति व्याचख्युरपरे पुनर्मयः परस्य यण इति व्याचख्युः। एवं च व्याख्याद्वयस्य मतभेदसिद्धतया विकल्पसिद्ध्यति। अत एव भाष्ये किमुदाहरणमिति प्रश्ने यदि यण इति पञ्चमी उल्का इत्युदाहरणम्। अथ मय इति पञ्चमी दध्यत्रेत्युदाहरणमित्यनेन तस्य मतभेदेन वैकल्पिकत्वं सूचितम्। वृत्तिकृतापि केचित् अपरेतु इत्यादिना मतभेदप्रयुक्तमेव व्याख्याद्वयं दर्शितम्। एवं च न कस्यापि तन्त्राद्याश्रयणीयम्। एतेनेदं चिन्त्यं, विनिगमनाविरहेणार्थद्वयपरत्वेपि विकल्पालाभात्। अर्थद्वयपरत्वं तु तन्त्रावृत्त्यादिना बोध्यमित्याचार्याद्युक्तं परास्तम्। **कश्चिदिति।** पूरणगुणेति निषेधात्समासाभाव इति तदाशयः। समासस्यैवाभिप्रेतत्वेन गुणेन निषेधस्यानित्यत्वं वदतो दीक्षितस्य प्रयोगे एवंव्याख्यानस्यानावश्यकतेत्यरुचिः। एतेन पूरणगुणेति सूत्रे सिद्धान्तयिष्यमाणरीत्या इदमेव युक्तं, न त्वत्रास्वरसोद्भावनमित्यपास्तम्। तदभिप्रायकत्वे कश्चिदित्युक्तेरस्वारसिक-

एत्येध । ऊठ् अत्राऽऽदेश एव, व्याख्यानात् । एचीति नोठो विशेषणमूठस्तत्त्वासंभवात् । एत्येधत्योरिति योगं विभज्य तयोरेवैचीति विशेषणस्य भाष्ये कृतत्वाच्च । तदाह । एजाद्योरिति । एतिरत्र इणेव, प्रसिद्धत्वात् । उपैतीत्यादौ वृद्धिरेचीत्यनेन गतार्थत्वापत्तेः । स्वमतेप्यर्थगौरवं बुद्धिमान्द्यमित्यादिसिद्धये शाकपार्थिवादित्वस्यावश्यकतया समासे बाधकाभावाच्च ॥

**आदेश एवेति** । नतु धातुरिति भावः । अत एवोठः परनिपातस्संगच्छते, अन्यथा त्रयाणामपि धातुबोधकत्वाविशेषादल्पाच्तरत्वेनोठः पूर्वनिपातापत्तिः । आदेशत्वे तु तदपेक्षया शब्दशास्त्रमूलभूततया धातोरभ्यर्हितत्वेन नोठः पूर्वनिपातः । अत एव वाह ऊठिति दीर्घग्रहणं चरितार्थम् । तद्धि अत्र सामान्यग्रहणाय, अत्र धातोर्ग्रहणे तद्वैयर्थ्यं स्पष्टमेवेति बोध्यम् । तदाह । **व्यख्यानादिति** । **असम्भवादिति** । न चाङ्पूर्वकावतेः क्विपि तेन जनशब्दस्य समासे जनौरित्यादौ तत्संभव इति वाच्यम् । अस्यानभिधानात् । अत एवैकः पूर्वपरयोरिति सूत्रोक्तयोरूठ्द्वयपक्षतदितरपक्षयोर्न फलभेद इति निवेदितं प्राक् । ननु अस्याभिधानेपि नैकः पूर्वपरयोरिति सूत्रोक्तपक्षयोः फलभेदः ऊठ्द्वयेपि आङा सह गुणस्य प्रेद्ध इत्यादाविव बहिरङ्गतयान्तरङ्गत्वात् सवर्णदीर्घे तत अनेन वृद्धाविष्टसिद्धेः । न चैचीत्येत्येधत्योर्विशेषणमिति भाष्यादस्यानभिधानमिति वाच्यम् । प्रष्ठौह इत्यादौ वृद्ध्यर्थं तत्रासंबन्धबोधनार्थं तथा व्याख्यातत्वात् । एवं चासंभवकथनं न युज्यते । तत्त्वासंभवादित्यस्य एजादित्वविशेषणसाध्यासाधारणफलासंभवादित्यर्थः । जनौरित्यादौ जन आ उ इति स्थिते ऊठ एजादित्वेन विशेषणे प्रथमं वृद्धेरप्राप्त्या गुणे ततः पररूपं बाधित्वा वृद्धावविशेषेण पूर्वं वृद्धौ तत ओमाङोरिति पररूपे च विशेषाभावादित्याशयवर्णनमपि न सम्यक् । एचीत्यनुवृत्तेः प्रष्ठौह इत्यत्र वृद्ध्यभावस्यैव फलत्वस्य सुवचत्वादत आह । **एत्येधत्योरिति** । **इणेवेति** ।

**त्वमाशङ्क्याह। पररूपगुणेति। एत्येधत्योरेङि पररूपस्योठि चाऽद्गुणस्येति विवेकः। उपैधत इति। अत्र न सर्वादेशः। एत्येधत्याद्य-**

न तु वीत्यत्र प्रश्लिष्टः। इणीकारादाविति वार्त्तिकारम्भात्सानुबन्धकत्वेऽप्यस्य ग्रहणम्। ननूभयोरस्त्विति चेन्न। आरम्भप्रत्याख्यानयोः फलभेदापत्तेरित्याहुरिति भट्टाः। वस्तुतो भट्टोक्तं प्रसिद्धत्वादित्यक्षराननुगुणं, प्रसिद्धत्वादित्यनेन वीत्यत्र प्रश्लेषस्याप्रसिद्धिर्दर्शिता। केचित्कारमतसिद्धस्य प्रश्लेषस्य नागेशानभिप्रेतत्वात्। नहि वीत्यत्र प्रश्लेषे प्रमितं फलमुपलभ्यते। न च नहि तरणिरुदीते इत्यादौ वीत्यत्र प्रश्लिष्टात् कर्मव्यतीहारे तङि उदीते इति रूपसिद्धिस्तत्फलमिति वाच्यम्। व्यतिशब्दयोगं विना कर्मव्यतीहारप्रत्ययस्य क्वाप्यदृष्टत्वेन तस्य भावनिष्ठान्तताया एव वक्तव्यतया दैवादिकस्येङोपि निरुक्तरूपसिद्धेः। इक्तु यद्यपि प्रसिद्धस्तथापि तस्य नित्यमाधिपूर्वत्वेन नैतदुदाहरणत्वसंभव इति व्याख्यानमुचितम्। यद्वा प्रसिद्धत्वादित्यस्य इणो यण् इत्यादौ सूत्रकृता व्यवहृतत्वेन प्रसिद्धत्वादित्यर्थः। निरनुबन्धकपरिभाषा तु नात्र, युगपद्द्वयोरुपस्थितावेव तत्प्रवृत्तेरित्याशयो न्याय्यः। स्पष्टा चेयं रीतिरासुयुवपीत्यत्र सुनोतेरेव ग्रहणाय कृदन्तशेखरे। **आशङ्क्य**। आशङ्कां हृदि निधाय। **विवेक इति**। अत एव मूले गुणस्य परनिपातः। इणि निर्दिश्यमानपरिभाषया सिद्धेराह। **अत्रेति**। **सर्वादेश इति**। निर्दिश्यमानपरिभाषयेति भावः। ऐकरूप्यादाह। **एत्येधत्योरिति**। सूत्राणामित्युपलक्षणं, वार्त्तिकानामपि। केचित्तु सामानाधिकरण्येनान्वयेपि आदेः परस्येति परिभाषया न सर्वादेश इतीदमयुक्तमित्याहुः। तन्न। परस्यैव यत्रादेशस्तत्रैव तत्परिभाषाप्रवृत्तेः। एकादेशे तत्प्रवृत्तिस्वीकारेपि राममित्यादावदन्ततदादेरजादावमीत्यामि पूर्व इत्यस्यार्थापत्त्या पूर्वपरयोरिति पूर्वशब्देन प्राधान्यात्तदन्तपरामर्शे तस्यानेकाल्त्वेन सर्वादेशपूर्वरूपापत्तौ मकाराश्रवणप्रसंगः। न च तत्र फलाभावात्तदाद्यंशानुपस्थितावक एव प्राधान्यात् परामर्शेन

वयवेऽचीत्येवं क्रमेण सूत्राणामर्थात् । अयमेवार्थ इति प्रत्ययलक्षण-सूत्रस्थभाष्यस्वरसः । वृक्षे शाखेतिवदेत्येधत्यूठ्स्विति सप्तमी

---

न सर्वादेशप्रसंग इति वाच्यम् । तत्रेत्यस्याशब्दादमि निष्पन्नामृशब्दे परे पूर्वरूपवारणाय तदुपस्थितेरावश्यकत्वात् । एवमुपसर्गादृतीत्यादाववर्णान्तोपसर्गा-दृकारादौ धाताविव्यर्थे जायमानस्यारित्येतस्या वृद्धेरनेकाल्त्वेन सर्वादेशत्वापत्तिः। न च तत्र ऋस्थानिकत्वमुपजीव्य प्रवृत्तस्य रपरत्वस्य न सर्वादेशत्वप्रयोजकत्व-मिति वाच्यम् । उक्तदिशा ऋकारादेर्धातोस्सर्वस्य स्थानित्वाभावलाभेपि उप-सर्गस्य निवृत्तेर्दुर्वारत्वात् । अत एवात्र सामान्यतः प्रकरणस्य व्याख्यातत्वेपि तत्रोपसर्गावयवाकाराद्धात्ववयवे ऋकारे तयोः पूर्वपरयोरित्युचितमिति वक्ष्यति। न चैवं रीत्या पूर्वांशे वैयधिकरण्यस्य फलबलात् स्वीकारेपि परांशे तत्स्वीकारे फलाभाव इति वाच्यम् । ओमाङोश्चेत्यादौ परशब्देन ओमः परामर्शे तस्याने-काल्त्वेन सर्वादेशत्वेपि शिवायतेः क्विपि नपुंसकह्रस्वे शिवेति संबुद्ध्यन्तस्य ओमि-त्यनेन संहितायां शिवोमित्यस्य पूर्वान्तत्वेन धातुत्वे मो नो धातोरिति नत्वापत्ते-रिति दिक् । उक्तमर्थं भाष्यानुग्रहेण द्रढयति । **अयमेवार्थ इति** । आदेः परस्येति कुतो न समाहितमत आहेति भट्टोक्तमवतरणन्तु प्रकृतसूत्रमात्रविषयकं, न तु प्रकरणविषयकम् । प्रमाणोपन्यासस्तु प्रकरणमात्रापेक्ष इति न ग्रन्थस्वारस्यं पुष्णातीति बोध्यम् । **भाष्यस्वरस इति** । तत्र विशेषणतया अलाश्रयणे विध्यर्थमिति वार्त्तिकमते औतोम्शसोरित्यस्याजाद्योरम्शसोरित्यर्थे प्रसक्तस्य गव्यतीत्यादावात्वस्य वारणाय गोरात्वेपि नैषं विज्ञायते अमि अचीति, कथं तर्हि, अच्यमीत्युक्तम् । अच्यमीति अच् प्रधानं, तद्विशेषणममीति तदादिविध्य-भाव इति कैयटः । तद्विशेषणममीति प्रतीकमुपादायामोऽवयवेचीत्यर्थ इति भावमाविश्चकारोद्योतकारः । एवं चायमेवार्थ इति भाष्याल्लब्धमिति बोध्यम् । **इतिवदिति** । न्यायमते अवयवस्यावयव्याधारत्वप्रतीतावपि लोकेऽवयविनो-

बोध्या । प्रष्ठौह इति । प्रष्ठं वहतीत्यर्थे वहेण्वौ ततः शास्यूठि संप्रसारणे पूर्वरूपेऽनेन वृद्धिः ॥

प्रेदिधदिति । परे तु 'इणीकारादौ प्रतिषेधः' इति वार्त्तिके एधत्यनुपादानात् 'न त्वेधतेरव्यभिचारात्' इतिवृत्तेश्चास्यानभिधानमेव । 'एत्येधत्योरेचीति विशेषणम्' इति भाष्यस्यैधत्यंशे संभवमात्रेणोपरञ्जकतया विशेषणमित्याशय इत्याहुः । उपैधयत इत्यादा-

---

ऽवयवाधारत्वं प्रसिद्धमिति भावः । ऊठि सम्प्रसारणे इति । सम्प्रसारणसंज्ञके ऊठीत्यर्थः । समस्तपाठे सम्प्रसारणप्रयुक्तेत्यर्थः । आहुरिति । अत्र केचित्, यथोत्तरं मुनीनां प्रामाण्यादिणीकारादाविति वार्त्तिके इणीत्येधतेरप्युपलक्षणम् । मूलोक्तन्तु न युक्तं, वार्त्तिकानुसारेण एधत्यंशे एचीत्युपरञ्जकमिति कल्पनापेक्षया भाष्यानुसारेण वार्त्तिके उपलक्षणतया व्याख्यानस्यैव ज्यायस्त्वात् । तथा च इदिधदित्यस्यानभिधाने न मानमिति वदन्ति । ग्रन्थतत्त्वविदस्तु वार्तिके इण्ग्रहणस्योपलक्षणत्वे अन्यत्रास्यार्थस्यानुक्तत्वेनात्रैव वक्तव्यत्वेन तदनुक्त्वा भगवता वार्त्तिककृदुपहासस्यान्यत्रेवाकरणेन चोपक्रमस्य प्राबल्येन च संभवाभिप्रायकं भाष्यमित्येव न्याय्यम् । किञ्च भाष्ये किमिदमेत्येधत्यो रूपग्रहणमाहोस्विद्धातुग्रहणमिति प्रश्नवाक्ये एधत्यंशे शङ्काया अनुदयेन एत्यंशे विचारतात्पर्यकतायाःप्रदीपोद्योतयोः प्रदर्शितत्वेन तत्प्रसङ्गपठितवार्तिकस्थेण्ग्रहणस्योपलक्षणत्वकथनमयुक्तम् । अप्रसक्तार्थप्रतिपादनप्रसङ्गात् । अत एवोद्योते प्रथममुपलक्षणतया व्याख्यायापि वस्तुत इत्यादिनाऽस्यैवौचित्यमुक्तम्। किञ्चात्रैधतिग्रणस्य यथाकथञ्चित्फलकल्पनसंभवेपि प्रश्नवाक्ये एधतिग्रहणस्य तदसंभवात्तत्तौल्यमेवास्य वक्तुं युक्तमित्याहुः । यत्तु इणित्यस्येण्घटितसूत्रे इत्यर्थान्न न्यूनता । किञ्चार्थवत्येव स्थान्यादेशभावादेदिधीत्यस्येदिधीत्यादेशे प्रकृतिभागस्यैध्रूपत्वेपि अनर्थकत्वान्न वृद्धिप्राप्तिरिति तन्न । पाष्ठ-

वपि वृद्धिर्भवत्येव । प्रकृतिभागस्यैध्रूपत्वात् । किं च एत्येधत्यवयवेऽचीत्यर्थः प्रत्ययलक्षणसूत्रभाष्यसम्मत इत्यत्र न दोषः । पुरस्तादिति । पुरस्तादपवादा अनन्तरान्विधीन्बाधन्ते नोत्तरानिति न्यायः । अवश्यं स्वपरस्मिन्बाधनीये भेदेनापेक्षायां प्रथमोपस्थितबाधेनाऽकाङ्क्षानिवृत्तिर्हि तद्बीजम् । असाधुरेवेति । आङिणोरेकादेशस्य पूर्वान्ततयाऽऽङि पररूपेण बाधादिति भावः । अर्थवद्ग्रहण इति । अस्या बीजं 'स्वं रूपम्' इति सूत्रे उक्तम् । पररूपे प्राप्त इति । पूर्वं धातुः साधनेन युज्यत इति सिद्धान्तादिति भावः ॥

---

द्वित्वस्य स्थाने द्विर्वचनत्वाभावस्यान्यत्रोक्तत्वादिति दिक् ॥ ननु एचीत्यस्य प्रेदिधदितिव्यावर्त्यप्रदर्शनमयुक्तम् । ण्यन्तस्य शब्दान्तरत्वेनैव तत्र वृद्ध्यप्राप्तेरिति शङ्कां फलप्रदर्शनमुखेन निराकरोति । उपैधयत इतीत्यादि । एवं चैतत्सिद्धये प्रकृतिभागस्यैध्रूपत्वमादाय वृद्धेस्स्वीकर्तव्यतया तुल्ययुक्त्या तत्रापि स्यादिति भावः । तुष्यतु दुर्जन इति न्यायेनाह । किञ्चेति । नन्वेवमपि सर्वादेशोऽत्र स्यादत आह । किञ्चेति । न दोष इति । सर्वादेशरूपदोष इत्यर्थ इति श्रीधरव्याख्या तु न सम्यक्, सर्वादेशवारणस्य पूर्वमुक्तत्वेन पौनरुक्त्यापत्तेः । भेदेनेति । विशेषणेत्यर्थः । आकाङ्क्षानिवृत्तिरिति । विप्रतिषेधशास्त्रबाधे मानाभावस्याप्युपलक्षणमिदम् । ननु पूर्वं धातुस्साधनेनेति नये अस्य चारितार्थ्येन नयान्तरे परत्वाद्रूपान्तरं स्यादत आह—पूर्वं धातुरिति । ननु पूर्वं धातुरुपसर्गेणेति नये अन्तरङ्गत्वाद्गुणप्राप्त्या पररूपे प्राप्ते इत्यसङ्गतमिति श्रीधरोक्तावतरणं तु न सम्यक् । उपसंजनिष्यमाणन्यायेन गुणाप्रवृत्तेर्वक्तुं शक्यत्वात् ॥

उपसर्गादिति। तपरकरणादुप ऋकारीयतीत्यादौ 'वा सुपि' इति न वृद्धिः। सौत्रऋतिस्तु न गृह्यते, व्याख्यानात्। आदित्यनुवृत्तेन तदन्तविधिरित्याह। अवर्णान्तादिति। यस्मिन्विधिरिति परिभाषयाऽऽह। ऋकारादाविति। पूर्वपरयोस्तयोः समुदाययोरन्त्याद्योर्वर्णयोरेकादेश इत्यर्थः। उपसर्गावयवाकाराद्धात्ववयवे ऋकारे तयोः पूर्वपरयोर्वृद्धिरित्युचितम्। गतेरिति तु नोक्तम्। अच्छर्छतीत्यादौ दोषात्॥

---

तपरकरणादिति। अत्र भट्टाः, यद्यपि उपऋकारीयतीत्यत्र प्रकृतसूत्र एव फलं देयं, तथापि परत्रैव फलप्रदर्शनपरवृत्तिप्रामाण्यादेधत्यादिसाहचर्याच्च गणपठितस्यैव धातोरत्र ग्रहणमिति भावः, भाष्यानुग्रहस्त्वत्र मृग्य इत्याहुः। वस्तुतस्तु उपऋकारीयतीति प्रदर्शनमुभयत्र तपरकरणफलप्रदर्शनार्थम्। यथा यरोनुनासिक इत्यत्र पदान्तग्रहणस्य वेद्मीति व्यावर्त्यप्रदर्शनं परलोपऋकारीयतीत्यत्र वृद्धिवारणाय तपरकरणलभ्यार्थस्यावश्यकत्वे प्रकृतोदाहरणस्य तद्विषयतया नित्यवृद्धिस्स्यादिति। अत एव विकल्पस्स्यादिति वृत्त्यनुरोधान्न विकल्प इति वक्तव्ये न वृद्धिरित्युभयसाधारण्यार्थं संगच्छते। वा सुपीत्युपन्यासस्तूभयत्र तपरकरणाभावे वस्तुतो वासुपीत्यस्य प्रकृतोदाहरणे प्रवृत्तिस्स्यादिति नागेशाशय उद्भावनीय इति प्रतिभाति। व्याख्यानादिति। धातुग्रहणस्य ऋषभमिति व्यावर्त्यप्रदर्शनपरभाष्यरूपादित्यर्थः। परिभाषयेति। लब्धमिति शेषः। सर्वादेशवारणायाह। पूर्वेत्यादि। अन्त्याद्योरिति। अलोऽन्त्यस्यादेः परस्येति परिभाषाभ्यां लब्धमिदम्। एत्येधत्यूठ्स्विति सूत्रोक्तरीत्या सर्वादेशो दुर्वार इत्यतस्सिद्धान्तमाह। उपसर्गावयवेत्यादि। एतेन निर्दिश्यमानपरिभाषाप्रापकतया यथाश्रुते मूले संगच्छति लक्ष्ये च निर्बाधे कथं लक्षणावैयधिकरण्यगर्भितस्यौचित्यमिति चिन्त्यमेतदिति भट्टोक्तमपास्तम्॥

अन्ता। इह पूर्वपरयोरिति वर्तते यथासंख्यञ्च, अन्तादिशब्दावुपस्थितैकादेशस्थानिपरौ । पूर्वपरशब्दौ च तद्घटितसमुदाय-

---

इह पूर्वेति। एकग्रहणस्य प्रत्याख्यानादेकादेश इत्यर्थस्य प्रकरणात्सम्बन्धिमहिम्ना प्रत्यासत्त्या च लाभाच्चैवमुक्तम् । क्वचित्त्विहैकः पूर्वेतिपाठः, स तु सूत्रानुरोधीति बोध्यम् । वर्तत इति। अन्यथैकादेशस्तद्घटितसमुदायस्यान्तवदादिवदित्यर्थे सुखार्त इति समुदायनिरूपितचरमावयवत्वातिदेशेन हलन्तत्वात्ततः परस्य सोर्हल्ङ्यादिलोपापत्तिः । एवं चिनुयुरित्यादौ पररूपस्य तद्घटितसमुदायस्य युस् इत्यस्यादिवत्त्वेऽजादित्वाज्जुसि चेति गुणापत्तिरतो यस्यान्तवत्त्वमादिवत्त्वं चेष्यते तन्निर्देशार्थमनुवृत्तिरावश्यकीति भावः। भट्टास्तु अन्यथा वर्णवृत्तिधर्मस्यातिदेशस्स्यात्समुदायनिष्ठस्य च न स्यादित्याशयमाविश्चक्रुस्तन्न। अवयवत्वेन बोधकान्तादिपदोपस्थिताभ्यामवयवाभ्यामवयविनस्समुदायस्योपस्थितौ समुदायवृत्तिधर्मातिदेशस्यैव लाभात्। स्थानिपराविति। तयोश्चावयवत्वेनोपस्थित्या समुदायाक्षेपादेकादेशपूर्वस्थानिचरमावयवकसमुदायवत्परस्थान्याद्यवयवकसमुदायवदित्यर्थो लभ्यते। अन्यथा कृत एकादेशेऽवशिष्टपूर्वसमुदायस्य योऽन्तो वर्णभिन्नः तन्निष्ठधर्मस्यातिदेशस्स्यात्तथा च परमपादस्याः परमपादास्तेन परमपादेत्यादौ विभक्त्येकादेशात् प्रागेकादेशरहितपूर्वसमुदायान्तः पादिति तद्धर्मातिदेशे पादः पदिति पद्भावः स्यात्। अचः परस्मिन्निति तु न। पूर्वमात्रविधित्वाभावात्। निर्दिश्यमानत्वं तु स्थानिवद्भावेनेवान्तवद्भावेनाप्यतिदिश्यते। अत एव खट्वे खट्वया खट्वयोरित्यादौ परादिवद्भावेनाप्त्ववति आङि चाप इत्यादिनैत्वसिद्धिस्तत्र स्थानिवत्त्वं तु न, आद्यार्थकानल्विधाविति निषेधात्। अत एव प्रकृतसूत्रे भाष्ये खट्वेत्यत्र परादिवत्त्वेन हल्ङ्यादिलोपस्साधितः। एवं खट्वेत्यत्रैकादेशापेक्षया परस्याभावात्प्रकृतातिदेशाप्रवृत्तौ हल्ङ्यादिलोपानापत्तिरिति भावः। तद्घटितेति। एकादेशघटितेत्यर्थः, व्यपदेशातिदेशोयम्।

परौ । एवञ्च पूर्वस्य परस्य समुदायस्यान्तादिभ्यां वर्णाभ्यां पृथगवस्थिताभ्यां ये व्यवहाराः प्रातिपदिकत्वसुबन्तत्वप्रत्ययत्वादयस्ते

---

एवं चैकादेशघटितपूर्वसमुदायस्यैकादेशपूर्वस्थानिचरमावयववद्व्यवहार इत्यादि वाच्योऽर्थ इति भावः । फलितार्थमाह । एवं चेति ॥

वस्तुतस्त्वन्तादिशब्दावुपस्थितैकादेशस्थानिपराविति यथाश्रुतमेव । तद्घटितसमुदायपराविति चैकादेशस्थानिघटितसमुदायपरावित्यर्थः । पूर्वपरसमुदायश्चैकादेशप्रवृत्तिप्राक्कालिको ग्राह्यः । पूर्वपरयोरिति चान्तादिभ्यामन्वेति, एकादेशः पूर्वस्यान्तो यस्तद्वदित्यादि वाच्योर्थः । अत एव वृत्तौ यथा तस्यान्त आदिर्वा तदन्तर्भूतः तद्ग्रहणेन गृह्यते, तद्वदेकादेशोपीत्युक्तम् । व्याख्यातं च हरदत्तेन । तस्येत्यनेनैकादेशात्प्रागवस्थितः पूर्वः परश्च समुदायो निर्दिश्यते । अन्तादिशब्दाभ्यां चैकादेशस्य स्थानिनौ पूर्वपरौ । तद्ग्रहणेन गृह्यत इत्यनेनैकादेशात्प्राक् पूर्वपरयोः पृथगवस्थितयोस्ताभ्यां सह यो व्यपदेशः पूर्वपरसमुदायविषयो दृष्टः प्रातिपदिकमित्यादि स व्यपदेश एकादेशे कृतेऽपि भवतीति दर्शितमिति । अत एव कैयटे आदेशविधानात्प्राक् यौ पूर्वपरौ तौ गृह्येते, यथा वृक्ष औ इत्युक्तम् । वृक्ष औ इति प्रतीकमुपादाय कृते एकादेशे इह पूर्वपरयोर्भेदेन निर्देशाभावादित्यर्थ इत्युद्योते व्याख्यातम् । यद्यपि कैयटे क्वचित् कृते एकादेशे यौ पूर्वपरौ तौ गृह्येते इत्युक्तम् । तथाप्युद्योतेऽस्य व्याख्यानस्य क्षीरपेणेत्यत्रैकादेशे कृते पूर्वपान्तस्यान्तवत्त्वादेकादेशस्यैकाजुत्तरपद इति णत्वं फलत्वेन प्रदर्श्य यद्यपीदं प्रकृतपूर्वपरग्रहणेनापि सिध्यति, तथाप्येवमपि सिध्यतीत्यभिमान इत्युक्त्या तस्याऽयुक्तत्वं स्फुटीकृतम् । तथा सति पूर्वोपदर्शितपरमपादेत्यादौ दोषस्य दुर्वारत्वात् । न च तत्र भत्वाभावान्न दोष इति वाच्यम् । तस्याप्यतिदेष्टुं शक्यत्वात् । न चैवं व्याख्याने वर्णाश्रयकार्यप्रसङ्गः । तद्वदिति वक्तव्येऽन्तादिवदिति न्यासेन समुदायप्रयुक्तकार्यातिदेशो न तु स्वरूपाश्रयाति-

**कृतैकादेशस्य भवन्ति, न तु तद्वर्णमात्रवृत्तयोऽत्वह्रस्वत्वादय**

देश इति वक्तुं शक्यत्वात्। स्पष्टं चेदं हरदत्तग्रन्थे, तदेतदाह—एवं चेत्यादि॥

एतेनैकादेशस्थानिपराविति। एकादेशपूर्वस्थानिचरमावयवकैकादेशपरस्थान्याद्यवयवकसमुदायपरावित्यर्थः। तद्घटितसमुदायपराविति। एकादेशचरमावयवकैकादेशाद्यवयवकसमुदायपरावित्यर्थः, यथाश्रुतन्तु न युक्तम्। एकादेशघटितस्वाश्वशब्दे पूर्वान्तवद्भावेनैकादेशपूर्वस्थानिचरमावयवकसमुदायवृत्तिस्वशब्दत्वातिदेशे तस्मादीरिन् शब्दे वृद्ध्यापत्तेरिति वदन्तः परास्ताः। उक्तरीत्या यथाश्रुतस्य सामञ्जस्यात्। एवश्चेत्याद्युत्तरग्रन्थस्वारस्यभङ्गापत्तेश्चेत्यलम्॥

कृतैकादेशस्येति बहुव्रीहिरन्यपदार्थस्समुदायः। न च वृक्षावित्यादौ परादिवद्भावेन सुप्त्वं न स्यात्, समुदायाभावादिति वाच्यम्। असहायत्वेन व्यपदेशिवद्भावेन तत्त्वलाभात्। **तद्वर्णमात्रवृत्तय इति**। वर्णस्य ससहायत्वेन व्यपदेशिवद्भावेन समुदायत्वाभावादिति भावः। **अत्वह्रस्वत्वादय इति**। इदमुपलक्षणं, तदन्तत्वादीनामपि। तेन खट्वाभिरित्यादावदन्तत्वातिदेशोपि नेति बोध्यम्। नन्वेवं क्षीरपेणेत्यादावेकाजुत्तरपदत्वातिदेशो न स्यात्तस्यान्तवर्णमात्रवृत्त्यच्त्वाघटितत्वात्। न च तत्रोत्तरपदत्वमात्रातिदेश एव तात्पर्यमिति वाच्यम्। स्थानिवद्भावेन तु नैतल्लभ्यमित्याद्युत्तरग्रन्थस्यालग्नत्वापातादिति चेन्न। तद्वर्णमात्रवृत्तिश्च धर्मस्स्वस्थानिकादेशावृत्तिरेवेति विवक्षणेनादोषात्। न चैवमुत्तरपदाद्यच्त्वस्य सोमेन्द्रादावनतिदेशार्थं ताद्रूप्यानतिदेशादिति परिभाषेन्दुशेखरोक्तिर्विरुध्येतेति वाच्यम्। तस्य ग्रन्थस्य सोमेन्द्र एकारे इकारत्वातिदेशे इन्द्रशब्दवृत्त्यानुपूर्वीसम्पत्त्या एकादेशविशिष्टस्य देवतावाचकत्वमार्थसमाजग्रस्तमिति शङ्कोन्मूलनाय प्रवृत्तत्वादिति स्पष्टमन्यत्र। एतेनानयोर्ग्रन्थयोः परस्परविरोधपरिहाराय प्रकारान्तरमनुधावन्त औत्तराहाः

**इत्यर्थस्तत्फलितमाह। योऽयमित्यादि। तेन रामावित्यादौ परादिवत्त्वेन औ इत्यस्य सुप्त्वे पूर्वमान्तस्यैकदेशविकृतन्यायेन प्रकृतित्वे यस्माद्विहितस्तदादितदन्तत्वमार्थसमाजग्रस्तमिति पदत्वसिद्धिः। तद्वर्णमात्रवृत्तिधर्मानतिदेशात् खट्वाभिरित्यत्रात्वनिबन्धनैस्न, अयजे इन्द्रमित्यादौ सवर्णदीर्घश्च न। अत एव तुक्यसिद्धवचनं चरितार्थम्। अन्यथाऽधीत्येत्यादावादिवत्त्वेन ह्रस्वत्वप्रयुक्ततुक्सिद्धौ**

---

परास्ताः। एकादेशविरहितपूर्वपरसमुदाययोर्ग्रहणे दोषं प्रदर्शयन् मात्रपदं सफलयन् स्थानिवत्सूत्रेण गतार्थमिति प्राचीनमतं दूषयन् परादिवद्भावे प्रयोजनमाह। तेनेत्यादि। मात्रपदनिवेशेनैकादेशप्रवृत्तिप्राक्कालिकस्थानिघटितपूर्वपरसमुदाययोर्ग्रहणेन वेत्यर्थः। स्थानिवद्भावेन तु नैतत्सिद्धमाद्यार्थकानल्विधाविति निषेधात्। **एकदेशविकृतन्यायेनेति**। उभयत आश्रयणे नान्तादिवदिति प्राचीनमतसाधारण्यायेदम्। स्वरीत्या तु व्यपवर्गानपेक्षणादन्तवद्भावेनाप्येतल्लभ्यमिति बोध्यम्। ननु तद्वर्णमात्रवृत्तिधर्मस्यानतिदेशे तस्य ससहायत्वेन व्यपदेशिवद्भावेन समुदायत्वालाभो हेतुर्वाच्यः। स च यत्र वर्णस्ससहायस्तत्रैव संभवति, यत्र वर्णोऽर्थवानसहायः तत्र तद्वृत्तिधर्मातिदेशो दुर्निवारः। एवं च खट्वाभिरित्यत्र दोषवारणेऽप्ययजे इन्द्रमित्यादौ दोष एव, तत्राक्त्वस्य परादिवद्भावेनातिदेशे सवर्णदीर्घापत्तेरित्यतो ज्ञापकेनोक्तमर्थं साधयति। **अत एवेत्यादिना**॥

श्रीधरस्तु रामावित्यादौ द्वित्वरूपार्थतद्वाचकयोर्यस्समुदायस्तद्वृत्तित्वात्सुप्त्वमतिदिश्यत इत्युक्त्वा दैत्यारिः श्रीश इत्यादिसिद्ध्यर्थमइउणित्यादिषु तुल्यास्येति निर्देशेनार्थरहितानामकारादीनां निर्देशनाप्यत्वादेर्वर्णमात्रवृत्तित्वेनार्थघटितसमुदयधर्मत्वाभावान्नातिदेश इत्याशयमाविष्कृत्य तत्र मानमाह अत एवेतीत्याह। अत्रेदं वक्तव्यम्। न तु तद्वर्णमात्रवृत्तय इत्यर्थो नापूर्वः,

तद्वैयर्थ्यं स्पष्टमेव । तदुक्तं 'वर्णाश्रये चान्तादिवत्त्वप्रतिषेधो वक्तव्यो न वाऽताद्रूप्यातिदेशात्' इति । अन्तादिवर्णमात्रवृत्ति-

---

किन्तु एकादेशविशिष्टे तत्तत्स्थानिचरमावयवकादिवृत्तिधर्मस्यैवातिदेशेनार्थ-सिद्धः । यत्र तु स्थानी असहायस्तत्र तच्चरमावयवकत्वादेर्व्यपदेशिवद्भावेन तद्वर्ण एव सत्त्वेनैकादेशमात्रे तद्वैशिष्ट्यस्यापि सत्त्वेन तत्रातिदेशो निष्प्रत्यूहः । तत्रेक्त्वादेर्व्यपदेशिवद्भावेनातिदिष्टसमुदायत्वाश्रयवृत्तित्वात् । यदि त्वर्थवतीया-येत्यादौ कैयटोक्तरीत्या शब्दार्थोभयात्मकसमुदायलाभः नानर्थक इति तदाशयं ब्रूषे, तदेयायेत्यादौ व्यपदेशिवद्भावोदाहरणपरभाष्यविरोधश्शेखरविरोधश्च । एकपदा ऋगित्यादौ ऋक्त्वादेश्शब्दार्थोभयवृत्तित्वेन मुख्य एव व्यवहारः। अत्र तु पूर्वपरसमुदायत्वमेकादेशविशिष्टत्वं च न तादृशमनर्थकेपि तत्त्वस्य सुवचत्वात् । वस्तुगत्यार्थवदेव तद्भवतीत्यन्यदेतत् । एवञ्चायमर्थो न ज्ञापक-साध्यतां विना सर्वेष्टसाधक इत्यलम् ॥

**तद्वैयर्थ्यमिति** । नन्वधिपूर्वकादैवादिकादीङ्धातोर्ल्यपि अधीयेत्यत्र पूर्वान्तवद्भावेन ह्रस्वान्तत्वातिदेशेन प्राप्तस्य तुको वारणार्थं तदावश्यकम् । न चोभयत आश्रयणे नान्तादिवदिति निषेधः । व्यपवर्गानपेक्षणेन तन्निषेधा-प्रवृत्तेः । न च तुकि कर्तव्ये पदद्वयसंबन्धिवर्णद्वयनिमित्तकैकादेशस्य बहिरङ्गा-सिद्धत्वं, ह्रस्वस्य पूर्वपदसंबन्धित्वेन तुकोपि पदद्वयाश्रितत्वेन समत्वात् । एतेनात्र नाजानन्तर्य इति निषेधाप्रवृत्तये यत्र बहिरङ्गासिद्धत्वमन्तरङ्गशास्त्र-प्रवृत्तिप्रयोजकं, तत्रैव तत्प्रवृत्तिस्स्वीक्रियते । अक्षद्यूरित्यादौ बहिरङ्गासिद्धत्वस्य अन्तरङ्गवलिलोपप्रवृत्तिप्रयोजकत्वात्तत्र तत्प्रवृत्तिः । प्रकृते तु तत्प्रवृत्तिप्रतिबन्ध-कत्वान्न निषेधप्रवृत्तिरिति क्लिश्यन्तः परास्ताः । एवञ्चेद्यणादेशविषये प्रकृत-निषेधाप्रवृत्तिप्रसङ्गेन मूलोच्छेदापत्तेश्च । एतदेवाभिप्रेत्यास्य ग्रन्थस्य चिन्त्य-तोक्ताचार्यैरिति चेन्न । कृतीत्यनेन तदाद्यंशोपस्थितौ ह्रस्वान्ततदादेस्तुग्वि-

**धर्मानतिदेशादिति तदर्थः। क्षीरपेणेत्यादावेकारविशिष्टे एकाजुत्तरपदत्वं भवत्येव। स्थानिवद्भावेन तु नैतल्लभ्यम्। अप्राधान्येनाला-**

---

धानेन प्रकृते तदप्राप्तेः। न च परादिवद्भावेन तदादित्वं सुलभमिति वाच्यम्। एकादेशमात्रे तत्त्वलाभेऽपि तन्मात्रे ह्रस्वान्तत्वस्य पूर्वान्तत्वेनातिदेष्टुमशक्यत्वात्। तन्मात्रस्य ससहायत्वेनैकादेशवैशिष्ट्यस्य दुर्निरूपत्वात्। अधीत्यस्य तदादित्वस्य कथमप्यलाभात्। न चादर्शनं लोप इति सूत्रे उद्योते ह्रस्वस्येति सूत्रे प्रत्ययग्रहणपरिभाषानुपस्थितिरुक्तेति वाच्यम्। सिद्धान्ते फलाभावेन तदनुपस्थितावपीदानीमेतत्फलानुरोधात्तत्प्रवृत्तस्सूपपादत्वादिति दिक्। कैयटरीत्या सूत्रं स्थापयति। **क्षीरेत्यादिना। भवत्येवेति।** अयमत्र कैयटाशयः। कृते एकादेशेऽवशिष्टो यः पूर्वः पकारात्मकस्तच्चरमावयवत्वमेकादेशेऽतिदिश्यते, एवञ्च यदागमन्यायेनोत्तरपदत्वं स्वाश्रितमेकाजुत्तरपदत्वमार्थसमाजग्रस्तमिति। एवञ्चातिदिश्यमानधर्मस्य वर्णमात्रवृत्तित्वाभावादतद्रूप्यातिदेशादिति निषेधोपि नेति तादृशधर्मे स्वस्थानिकादेशावृत्तित्वनिवेशोऽपि निष्फल एवेति बोध्यम्। अत्र एनेत्यस्य परादिवत्त्वेन विभक्तित्वं, व्यपवर्गानपेक्षणेनोभयत इत्यस्याप्रवृत्तेः। एकदेशविकृतन्यायेन तु नेत्यस्य तत्त्वं दुर्लभमक्तपरिमाणनिष्ठत्वाद्विभक्तित्वस्येति भट्टोक्तन्तु कैयटाशयाननुगुणम्। तन्मते सामान्यत उभयत इति निषेधस्येष्टत्वात्। एकदेशविकृतन्यायस्य सामान्यतोऽनित्यत्वं स्वीकृत्याक्तपरिमाणे नायमित्यादिसंकोचानामनङ्गीकारस्य तन्मतसिद्धत्वात्। तस्मादेकदेशविकृतन्यायेन विभक्तिस्थत्वस्यैवापेक्षणेन तत्त्वमतिदेशनिरपेक्षमेव लब्धमिति वा तदाशयो वर्णनीय इति दिक्। नन्वेकाच्त्वं श्रुत्या सिद्धम्, उत्तरपदत्वं स्थानिवद्भावेन सुलभमित्यस्य फलस्योद्योत एव दूषितत्वात् स्थानिवत्त्वेनासिद्धिस्थल एवोदाहरणसम्भवे अनल्विधाविति निषेधविषयपर्यन्तानुधावनं कैयटस्य मुधेति सूचयन् स्वरीत्या फलमाह।

**श्रयणात् । किं चैकादेशे वर्णयोरेव स्थानित्वं, न समुदायस्येति भी ई भिय इत्यादावेकादेशविशिष्टे धातुत्वानापत्तिः । धातुत्वस्यै-कादेशस्थानिधर्मत्वाभावात् । आनुमानिकादेशकल्पकवाक्यमन्ता-दिघटितसमुदायस्यैकादेशघटित आदेश इत्येव, न तु प्रत्येकं तयोः**

---

**किश्चेत्यादिना** । ननु स्थानिवत्सूत्रेणेदं गतार्थमिति वदतां किं श्रौतस्थानि-वद्भावेन सिद्धिरुतानुमानिकेनेत्याशयस्तत्राद्ये आह । **वर्णयोरेवेति** । द्वितीय आह । **आनुमानिकेति** । अयं भावः, श्रौतस्थान्यादेशभावे प्रत्येकं स्थानि-त्वबोधनेन कृतार्थस्य पूर्वपरयोरिति द्विवचननिर्देशस्यानुमानिके तस्मिन् प्रत्येकं स्थानित्वसम्पादकत्वे मानाभाव इति । अथ श्रौतादेशस्य पूर्वपरयो-रुभयोस्स्थाने एकस्य सम्पादनेन कृतार्थस्यैकग्रहणस्यानुमानिकादेशस्यैकत्वबो-धने सामर्थ्याभावात्सर्वे सर्वपदादेशा इत्येतन्मूलकेनार्थवतोरेव स्थान्यादेश-भाव इति सिद्धान्तेन कल्प्यमानस्थान्यादेशभावस्यार्थवत्त्वप्रयुक्ततया श्रौत-स्थानिघटितयोः पूर्वपरसंघातयोरपि कल्पितार्थवत्त्वाऽव्यभिचारात्प्रत्येकं स्था-नित्वस्वीकारे बाधकाभावात् । स्थानेऽन्तरतमपरिभाषासहकारेण भीत्यस्य भीत्या-देशः ईत्यस्येत्यादेश इति कल्पनया न दोष इति चेन्न । राम इत्यादौ विसर्ग-सिद्धये वीवधे विवधत्वसिद्धये च कल्प्यमानस्थानिनोऽर्थवतोऽर्थवद्घटितस्यैव ग्रहणमिति वक्तुमशक्यत्वेनैकग्रहणानुरोधेन विशिष्टादेशत्वस्य न्याय्यतया तदनु-रोधेन विशिष्टस्यैव स्थानिताकल्पनस्यौचित्यात् । न च द्विवचनानुरोधेन प्रत्येकादेशत्वं कल्पयितुं शक्यमिति वाच्यम् । प्रधानीभूतादेशापेक्षयाऽप्रधा-नीभूतस्थान्यंशे श्रौतापेक्षया व्यत्यासकल्पनस्य न्याय्यत्वात् । अत एव भाष्ये आनुमानिकस्थानिवद्भावेन सिद्धिरित्यभिप्रायके किमर्थमिदमुच्यत इति प्रश्ने आमिश्रस्यादेशवचनादिति समाधानं क्षीरोदकदृष्टान्तदानं च सङ्गच्छते । अन्यथा प्रत्येकं स्थान्यादेशभावे संपृक्तत्वाभावेनोभयमप्यसंबद्धमेव स्यात् ।

**स्थानित्वबोधकं, तथासति स्वाऽवशब्दस्य स्थानिवत्त्वेन स्वशब्दतया तत ईरिन्शब्दे वृद्ध्यापत्तेः। किं च भवत्संमतस्य 'उभयत आश्रय-**

---

न च श्रौतस्थानिवद्भावेनासिद्धिपरम्। अत एव कैयटे यत्त्विह वार्तिकमन्तादिवचनमाभिश्रस्यादेशवचनादिति तदादेशग्रहणापरामर्शेनोक्तमित्युक्तमिति वाच्यम्। एतत्सूत्रसाध्यकार्याणां श्रौतस्थानिवद्भावेन साधयितुं कथमप्यशक्यतया प्रश्नस्य निरालम्बनत्वापत्तेः। सिद्धान्तिन आदेशग्रहणप्रयोजनाज्ञानस्य वक्तुमशक्यत्वाच्च। अत एवास्य कैयटस्य चिन्त्यत्वमुक्तमुद्योते। न चैवमिदं चैत्रस्येदं मैत्रस्येत्यादौ चैत्रस्येतीदमिति पदयोः पूर्वोत्तरवाक्यान्वयित्वेन वाक्यद्वयशक्तेरदृष्टचरत्वेनैकादेशपूर्वोत्तरस्थानिघटितसमुदायस्यानर्थक्येन विशिष्टस्थानिताया एकादेशविशिष्टसमुदायस्यानर्थक्येन विशिष्टादेशतायाश्च वक्तुमशक्यत्वेन प्रत्येकमेवानुमानिकस्थान्यादेशभावो वक्तव्य इत्यैकरूप्यात्सर्वत्र तथैवास्त्विति वाच्यम्। आनुमानिकस्थान्यादेशभावकल्पनस्य स्थानिवद्भावलभ्यकार्यार्थतया प्रकृते तादृशस्य कस्याप्यभावेन प्रमितस्य विशिष्टस्थान्यादेशभावस्य तत्रासम्भवेऽकल्पनाया एव न्याय्यत्वात्। न च शब्दानित्यत्ववारणार्थं तत्कल्पनमावश्यकमिति वाच्यम्। बुद्धिविपरिणामेनापि तत्सिद्धेः। अत एव 'कार्याविपरिणामाद्वा' इति भाष्योक्तं पक्षान्तरं स्वरसत उपपद्यत इति दिक्। ननु श्रौतानुरोधादानुमानिकं स्थानित्वं प्रत्येकमस्तु, आदेशत्वं विशिष्टस्यैवास्तु, एवञ्च भिय इत्यादौ पूर्वस्थानिवृत्तित्वाद्विशिष्टे धातुत्वातिदेशस्सुलभ इति चेत्तत्राह। **तथासतीति। वृद्ध्यापत्तेरिति।** इदमुपलक्षणमिन्द्रस्य वज्रोसीत्यादौ विशिष्टस्य तिङन्तत्वे निघातापत्तेरपि। ननु भिय इत्यत्रेयङ्सर्वथा सौत्रत्वेनैव साधनीयः। अन्यथा क्ङिति सूत्रभाष्योक्तरीत्याऽचः परस्मिन्निति स्थानिवद्भावेनेकारेण व्यवधानात्तदनापत्तेः। स्पष्टं चेदं स्थानिवत्सूत्रशेषे उद्योते। तथा च नायं दोष इति चेदेवमपि ज्ञानेत्यादावपि पूर्वरूपे मकारप्राग्वर्तिनस्तदा-

णे नान्तादिवत्' इत्यस्यासङ्गतौ भवत्संमताभोयादित्याद्यसिद्धिः । स्थानिवत्त्वं तूभयत आश्रयणे इष्यत एव । अन्यथाऽचः परस्मिन्नित्यस्याप्युभयत आश्रयणेऽप्रवृत्त्यापत्तौ प्लायत इत्याद्यसिद्धिरिति दिक् ॥

---

दित्वमेतत्सूत्रैकसाध्यमिति बोध्यम् । अत एव भियं इत्यादावित्यादिपदमुपात्तम् । एवं सूत्रावश्यकतां प्रदर्श्य स्थनिवत्सूत्रेण सिद्धमिति मनोरमायाः पूर्वापरविरोधं दर्शयति । किञ्चेति । ननु स्थानिवद्भावेन गतार्थमिति वदतामुभयत आश्रयणे न स्थानिवदिति पाठ्यमित्याशय इत्यत आह । स्थानिवत्त्वन्त्विति । इष्यत एवेति । नच तादृशं वचनं स्थानिवत्सूत्रानन्तरं पाठ्यं, मध्येऽपवादन्यायेन स्थानिवदित्यस्यैव निषेधः, न त्वचः परस्मिन्नित्यस्यापीति स्वीक्रियते । एवञ्च न काप्यनुपपत्तिरिति वाच्यम् । अपूर्वस्यैतन्निषेधस्य कर्तव्यतापत्त्याऽन्तादिवत्सूत्रं परित्यज्यैवं न्यासकरणे अपाणिनीयत्वापातात् । न च उभयत आश्रयण इत्येतद्वचनेनेदं सम्मितम् । अन्तादिवत्सूत्राकरणप्रयुक्तं लाघवमतिरिच्यत एवेति वाच्यम् । अन्तादिवत्सूत्रकरणे पूर्वपरशब्दाभ्यामन्तादिशब्दाभ्यां च विरोधस्य पुरस्स्फूर्तिकत्वाद्यदा पूर्वं प्रत्यवयवबुद्ध्या एकादेश आश्रीयते, तदा तस्यैव परं प्रत्यादिवद्भावस्य वक्तुमशक्यत्वादेकस्योभयापेक्षया पारतन्त्र्यविरोधादित्येवं न्यायसिद्धताया आकरे प्रतिपादितत्वेन तेनास्य तौल्यस्य वक्तुमशक्यत्वात् । एवं च पूर्वापरविरोधः प्राचां दुष्परिहर एवेति बोध्यम् । तदेतत्सर्वं हृदि निधायाह । दिगिति ॥

तदर्थस्तु क्षीरपेणेत्यत्र पे इत्यस्य उत्तरपदत्वं कथमपि न स्थानिवद्भावलभ्यम् । तत्र पे इत्यस्यानुमानिकादेशताया दुर्वचत्वात् । तथाहि, प्रत्येकं स्थान्यादेशभावकल्पनेपि यादृशपूर्वस्थानिघटितस्य यादृशपरस्थानिघटितेन सहैकार्थत्वं,

तयोरेव स्थानित्वं कल्पनीयमौचित्यान्न तु तद्घटकस्योत्तरस्थानिनानन्वितार्थकस्य, तथा सति कल्प्यमानस्थान्यादेशानां वैरूप्यापत्तेः। प इत्यस्य पे इत्यादेशः इनेत्यस्यैनेत्यादेश इति कल्पयितुं शक्यत्वेपि प इनेत्यस्य पेनेत्यादेश इति वक्तुमशक्यतया क्षीरप इनेत्यस्य क्षीरपेनेत्यादेश इति कल्पनीयतया वैरूप्यं स्पष्टमेव। एवञ्चान्तादिवद्भावं विनोत्तरपदत्वं तत्र दुर्घटं, ध्वनितञ्चेदमुद्योते। एकादेशस्थानित्वस्य वर्णयोस्तद्घटितार्थवत्समुदाययोर्वा कल्पनेप्युत्तरपदभूतपशब्दे तत्कल्पने मानाभावात्। अत एव राजकीय इत्यादावल्लोपो नेति ग्रन्थेन राजकीयमित्यत्र अनः कन्प्रत्ययरूपतया अर्थवत्त्वेपि छप्रत्ययसन्नियोगेन विधीयमानकादेशेनानुमीयमानः स्थानी छप्रत्ययार्थेनान्वयवदर्थक एव ग्रहीतुमुचितः। एवमिकारानिमित्तकैकादेशेनानुमीयमानस्थानिता तदाद्यर्थान्वयवदर्थकस्यैव कल्पनीयेति तद्भावः। किञ्च भोभगो इति सूत्रसम्मताद्यार्थकानल्विधावित्यनेन निषेधात् खट्वेत्यत्राप्त्वस्य स्थानिवद्भावेनातिदेष्टुमशक्यतया अन्तादिवत्सूत्रमावश्यकम्। न च तत्राप्त्वेन साक्षादवच्छिन्नोद्देश्यताककार्याभावान्न निषेध इति वाच्यम्। साक्षादवच्छिन्नत्वनिवेशे फलाभावस्य पूर्वमुपपादितत्वात्। सर्वस्यै इत्यादौ ह्रस्वोद्देश्यताया आप्त्वेन साक्षादवच्छिन्नत्वेन तावताप्यनिर्वाहाच्च। न चैवमेकादेशे स्थानिवद्भावेनाप्त्वसंपत्तये कृतस्यादीर्घग्रहणस्यासाङ्गत्यापत्तिः, त्वद्रीत्या स्थानिवत्त्वस्याप्राप्तेरिति वाच्यम्। न स्थानिवदित्यस्य स्थानिकार्यं न लभत इत्यर्थे येन केनापि प्राप्तस्य स्थानिकार्यस्य निषेध इति दीर्घेपि परादिवत्त्वप्रयोज्याप्त्वकार्याभावशङ्कावारणार्थं तदित्युद्योतेनैव दत्तोत्तरत्वात्। एवमृषभशब्दस्याङा समासे अद्य अर्षभ इत्यत्र पूर्वान्तवद्भावेनाङ्त्वातिदेशे अद्यर्षभसिद्धिः फलं, निरुक्तदिशा स्थानिवत्त्वाप्रवृत्तेः। एवं च सूत्रमावश्यकमेव, परन्तूभयत आश्रयण इति त्वनावश्यकं, स्पष्टं चेदमिण्धातुस्थशेखरग्रन्थे इति तत एवावसेयमिति। अत्रत्यं तत्त्वं तत्तद्ग्रन्थपरिशीलनचतुरा विभावयन्तु ॥

निर्देशादिति । न च कर्त्तरि चर्षीत्यादौ गुणस्य पदद्वयसंबन्धिवर्णद्वयाश्रितत्वेन बहिरङ्गत्वाद्रेफाभावेन न विसर्ग इति वाच्यम् । गुणस्येव पदद्वयसंबन्धिरेफस्वरात्मकवर्णद्वयाश्रितत्वेन विसर्गस्यापि तत्त्वात् । परनिमित्तकत्वमप्युभयोः समम् । किं च कार्यकालपक्षे त्रिपाद्यां तदुपस्थितावपि पूर्वं प्रति परस्यासिद्धत्वादन्तरङ्गाभावेन

---

सममिति । एवञ्चान्तरङ्गपरिभाषया नेष्टसिद्धिरिति भावः । कर्त्तरि चर्षीत्यादेर्गुणविसर्गयोस्साम्यं मन्यमानस्य गुणादेर्बहिरङ्गत्वमभ्युपेयुषः शङ्कितुरनुरोधेन समाधानव्याजेन वस्तुतः कार्यकालेपि त्रिपाद्यां परिभाषानुपस्थितिरेवेति स्वरीत्या शङ्काया एवानवकाश इत्याह । किञ्चेति । एतेनोभयोस्साम्यप्रतिपादनोत्तरमिदमनुत्थितिग्रस्तमित्यपास्तम् । यत्तु ननु गुणवृद्ध्योः प्रवृत्तिवेलायां पूर्वपरयोः पदत्वेन तयोः पदद्वयाश्रयत्वेपि विसर्गप्रवृत्तिसमये उत्तरस्य स्वतः पदत्वाभावात् शास्त्रीयकार्याभावेन फलाभावेन चातिदेशेन पदत्वाभावाच्च न विसर्गस्य पदद्वयाश्रितत्वमत आह । किञ्चेतीति श्रीधरोक्तमवतरणं तन्न । एकदेशविकृतन्यायस्याशास्त्रीयेपि कार्ये प्रवृत्त्याऽत्र विसर्गस्यानिष्टस्यैव फलत्वस्य सुवचत्वाच्च तन्न्यायेन पदत्वस्य सुवचत्वात् । इदानीं विशिष्टस्य पदत्वाभावेपि षकारादेः पदान्तरसम्बन्धित्वानपायाच्च । गुणवृद्धिप्रवृत्तिवेलायामपि तुल्ययुक्त्या प्रत्ययलक्षणाप्रवृत्त्या त्वया बहिरङ्गत्वस्य वक्तुमशक्यत्वाच्च । पूर्वं प्रतीति । सापादिकपरिभाषाशास्त्रं प्रतीत्यर्थः । अन्तरङ्गाभावेनेति । अन्तरङ्गत्वप्रकारकज्ञानाभावेनेत्यर्थः । परिभाषायां चेतनत्वारोपेण तया ज्ञायमानमेवान्तरङ्गं परिभाषोपस्थितौ नियामकं, न तु स्वरूपसदिति भावः । भट्टास्तु पूर्वं प्रतीत्यस्य बहिरङ्गशास्त्रं प्रतीत्यर्थमभिप्रेत्य न च पूर्वत्र कृते परासिद्धत्वे मानाभाव इत्यष्टानामित्यत्र वक्ष्यमाणरीत्या जातगुणादेरसिद्धत्वमनयेति युज्यत एवेति वाच्यम् । पूर्वशास्त्रदृष्ट्या परमसिद्धमित्येवार्थः, न

पूर्वस्यान्तरङ्गनिरूपितबहिरङ्गत्वाभावात्कथं तस्यासिद्धत्वप्रतिपादनम्। न चानया पूर्वस्यासिद्धत्वादभावेन तं प्रति परासिद्धत्वं 'पूर्वत्र' इत्यनेन वक्तुमशक्यमिति वाच्यम्। एवं हि विनिगमनाविरहादुभयोरप्यप्रवृत्तौ विसर्गो दुर्वारः। एवञ्च विरोधात्कार्यैककालपक्षेऽपि तदनुपस्थितिरेव त्रिपादीस्थेऽन्तरङ्गे उचिता। अत एव विसर्जनीयसूत्रे भाष्ये इमामेव युक्तिमुक्त्वा 'अयुक्तोऽयं परिहारो न वा बहिरङ्गलक्षणत्वात्' इत्युक्तम्। एवञ्च तत्र तत्र वचनान्येव कार्याणि, ज्ञापकानुसरणं वा कर्त्तव्यम्। अत एव निगाल्यत

---

तु कर्तव्य इत्यध्याहारः। अत एव न भकुर्छुरामिति कुरग्रहणं चरितार्थम्। तद्धि कुर्वन्तीत्यत्र हलि चेति दीर्घवारणार्थम्। अन्यथा तपरत्वेन गुणस्येव दीर्घस्यापि वारणे किन्तेन। अत एव चञ्चूर्यत इत्यत्र दीर्घसिद्धिः। अन्यथा चञ्चूर्तीत्यादौ गुणस्येव दीर्घस्याप्युदिति तपरत्वेन निवृत्तिरस्यात्। विसर्जनीयसूत्रस्थं भाष्यमपीह मानम्। अष्टानामित्यत्र शेखरस्तु अरुचिग्रस्ततया नेय इत्याहुः। पूर्वव्याख्यानेनैव निर्वाहेऽयं प्रयासो विफल इति भाति। अत्रत्यं तत्त्वं परिभाषेन्दुटिप्पणीतोऽवसेयम्। एतेन परे तु पूर्वत्र कर्तव्ये परस्यासिद्धत्वेपि तत्र कृते तस्यासिद्धत्वे मानाभाव इत्याद्याचार्योक्तमपास्तम्। विनिगमनाविरहादिति। पूर्वत्रेत्यस्य प्रथमप्रवृत्तौ श्रुतत्वमन्यत्रोक्तं विनिगमकमनुसन्धेयम्। तद्ध्वनयन् वक्ष्यति। प्रत्यक्षसिद्धस्यापीति। अयुक्तोयं परिहार इति। इत्थमेव च्छेद इति निरूपितं परिभाषेन्दुटिप्पण्याम्। वचनान्येव कार्याणीति। न च तत्तद्वचनाकरणप्रयुक्तं लाघवं प्राचीननये इति वाच्यम्। ऋतशब्दादाचारक्विबन्ताल्लुङि आर्तदित्यस्य ऋमच्छब्दात् क्यजन्ताल्लुङि आर्मदित्यस्य चक्रयकैत् ग्लायते प्राहिणोदित्यादीनां सिद्धये प्राचामपि वार्त्तिकानामावश्यकत्वादित्यन्यत्र विस्तरः। ज्ञापकानुसरणं वेति। तस्मादित्युत्तरस्येत्यादिज्ञाप-

इत्यादौ लत्वाद्यर्थं 'तस्य दोषः' इति वचनमेवारब्धम् । अन्यथाऽन्तरङ्गत्वाण्णिलोपात्पूर्वं वैकल्पिकलत्वे चक्रयत्र मायवपनीत्यादौ बहिरङ्गासिद्धत्वेन च सिद्धे तद्वैयर्थ्यं स्पष्टमेव । यत्तु लक्ष्यानुरोधात्कार्यकालपक्षे उपस्थितयाऽन्तरङ्गपरिभाषयाऽऽनुमानिक्या प्रत्यक्षसिद्धस्यापि 'पूर्वत्र' इत्यस्य बाध इति, तन्नलक्षणैकचक्षुषामादरणीयम् । अत एव 'उरण्' इति सूत्रे 'रेफस्य पूर्वान्तवत्त्वे विसर्जनीयप्रतिषेधो वक्तव्यो नार्कुटाद्यर्थम्' इत्युक्तं भाष्ये इति दिक् ॥

उपसर्गेणैवेति । तत्सञ्ज्ञायाः क्रियायोगनिमित्तत्वादित्यर्थः । यदर्थे क्रियारूपे प्रादीनामन्वयस्तं प्रत्येवोपसर्गत्वमिति भावः ।

---

कानुसरणमित्यर्थः । इदमुपलक्षणं, झल्ग्रहणापकर्षादीनाम् । दध्यकैदित्याद्यर्थमावश्यकत्वादिति भावः । विसर्जनीयप्रतिषेध इति । स्वाव्यवहितपूर्वत्वस्वोत्तरप्रत्ययनिमित्तकत्वोभयसम्बन्धेनार्थवद्विशिष्टरेफस्य प्रतिषेध इत्यर्थः । तेन नार्कल्पिरपि सिध्यति । होतुः पुत्र इत्यादौ न निषेध इति बोध्यम् । यदि तु कर्तरि चर्षीति निर्देशाद्यं खरं निमित्तीकृत्य विसर्गश्चिकीर्षितः तद्विशिष्टस्य रेफस्य न विसर्ग इति सामान्यतः कल्प्यते । वैशिष्ट्यं च स्वनिमित्तकत्वस्वाव्यवहितपूर्वाच्स्थानिकत्वोभयसम्बन्धेन, अत्र निमित्तता तद्भावभाविता मात्रेणेत्युच्यते, तदेदं वचनं न कार्यमिति बोध्यम् ॥

ननु प्रर्षभ इत्यत्रान्तर्भूतक्रियायोगमादायोपसर्गसंज्ञायामतिप्रसङ्गस्य वारणाय धातुग्रहणमत आह । यदर्थेति । यत्रोपसर्गादिसंज्ञाप्रयुक्तकार्यविधायके धातुत्वतद्व्याप्यान्यतरधर्मपुरस्कारेण धातोर्ग्रहणं, तत्र प्रत्यासत्त्याऽन्यस्य तत्प्रयुक्तकार्याविषयत्वं न्याय्यं, यत्र तु न तथा, तत्रान्यस्यापि तत्प्रयुक्तं कार्यं भवत्येव, यथा गतिर्गताविल्यत्र । तत्र गतेर्गतिनिरूपितगतित्वाभावेपि

**प्रकृते च प्रत्यासत्त्या ऋकारादिनिमित्तोपसर्गग्रहणात्प्रगतः ऋद्धः प्रर्द्ध इत्यत्र न । पुनरिति । प्रकृतसूत्रे भाष्ये स्फुटमेतत् । सुब्धाताविति । सुबन्तप्रकृतिके धातावित्यर्थः । तुल्यास्यसूत्रे उपाकीरि-**

---

निघातसिद्धिः । एवञ्च प्रकृते धातुग्रहणाभावे यदर्थ इत्याद्युक्तावपि न निर्वाहः। किंच ऋकारनिरूपितोपसर्गाप्रसिद्धया अन्यनिरूपितोपसर्गत्वमपि कार्य-प्रयोजकं स्यात्, अन्यत्रेव प्राद्युपलक्षकता वा स्यादत आह । **प्रकृते चेत्यादि** । अयं भावः, धात्वसाधारणधर्मपुरस्कारेण धातोर्ग्रहण एव प्रत्यासत्तिरिति न नियमः । किन्तु धातुवृत्तिधर्ममात्रग्रहणेपि । गतिर्गतावित्यादौ तु गतिनिरूपि-तगतित्वासम्भवान्न तथा । प्रकृते तु ऋकारनिरूपितोपसर्गत्वासम्भवे तद्घटित-निरूपितस्य प्रत्यासत्त्या ग्रहणं युक्तम् । तद्घटितनिरूपितस्य प्रसिद्धया उपलक्ष-कत्वमयुक्तमिति । नन्वेतादृशक्लेशपरिहारायैवास्तु धातुग्रहणमित्याशङ्क्य कृतेपि धातुग्रहणे प्रत्यासत्तेरावश्यकतां ध्वनयन्नाह । **प्रर्द्ध इत्यत्र नेति** । ननु धातु ग्रहणस्याटश्चेत्युत्तरार्थताया न माङ्योग इति सूत्रे भाष्ये उक्ततया कथमुक्तार्थ-सिद्धिरित्याशङ्कां प्रमाणोपन्यासेन परिहरति । **प्रकृतसूत्र इति** । **सुबन्त प्रकृतिके इति** । सुबन्तप्रकृतिके प्रत्ययान्ते इत्यर्थः । ननु सुबन्ते ऋकारा-दिप्रकृतिकक्विबन्ते धातावित्येवार्थस्य स्वारसिकतया सुप्पदस्य तत्प्रकृतिक प्रत्ययान्तलक्षणायां मानाभाव इत्यत आह । **तुल्यास्यसूत्र इति** । एवञ्च तद्भाष्यविरोधान्न तथार्थ इति भावः । नन्वेवमपि सुबन्तोपश्लिष्टो य ऋकारादि-धातूपश्लिष्ट इत्यर्थात्सुबन्तावयवकधातावित्यर्थो न्यायसिद्धः । अत एव वृत्तौ सुबन्तावयवयके धातावित्यव व्याख्यातम् । एवं च तुल्यास्यसूत्रभाष्य-मपि नानुपपन्नम् । तथा चैवंलक्षणायां मानाभाव इति चेन्न । तथासति सुबन्तधातूभयनिरूपितोपसर्गत्वस्य ग्रहणापत्तौ उपार्क् इत्यादावेव प्रवृत्ति-स्स्यादिति निरुक्तभाष्यासङ्गत्या तस्यैव मानत्वात् । न हि सति सम्भवे

यतीत्यादेरेतदुदाहरणत्वस्य भाष्ये उक्तत्वात् । शास्त्रे सुबन्तस्य धातुप्रकृतित्वेनोक्ततया तत्प्रकृतिके इति व्याख्यानमेवोचितम् । ऋषभस्य समीपमुपर्षभं, तदिच्छति उपर्षभीयतीत्यत्र तु न वृद्धिः । उपेत्यस्यानुपसर्गत्वात् । अत्रापि धाताविल्यनुवर्त्त्य वाक्यभेदेन व्याख्येयं, तेन सुब्धातावपि न प्रकृतिभावः । प्रार्षभीयतीति । अत्र शरोऽचीत्यस्यानुपन्यासेन व्यञ्जनात्परस्यैकस्यानेकस्य वोच्चारणे विशेषाभावेन 'अचो रहाभ्याम्' इत्यस्य तन्निषेधस्य चानावश्यकता सूचिता । वाक्यभेदेनेति । इदं वृत्तौ स्पष्टं, भाष्ये तु

---

तद्घटितनिरूपितं ग्रहीतुमुचितम् । नन्वेवमपि वृत्त्यनुरोधात्सुबन्तावयवके एव लक्षणास्तु इत्यत आह । शास्त्रे इति । सुबन्तधात्वोस्सम्बन्धस्य लक्षणाप्रयोजकस्य शास्त्रप्रसिद्धस्यैव ग्रहणौचित्यमिति भावः । एतेनोक्तार्थे लक्षणा वा तदवयवे लक्षणा वेत्यत्र भाष्यानुग्रहश्चिन्त्य इति भट्टोक्तमपास्तम् । प्रकरणप्रसिद्धसम्बन्धसम्बन्धिनि लक्षणया निर्वाहे अन्यसम्बन्धसम्बन्धिनि लक्षणायां मानाभावस्यैव विनिगमकत्वात् । तदेतदभिसन्धायाह । उचितमिति । एवं च उपार्षभपुरुषतीत्यादौ नित्यवृद्धिरेव न्याय्येति भावः । न वृद्धिरिति । नन्वन्तरङ्गत्वाद्गुणे कृते वृद्धिरत्र न प्राप्नोतीति चेन्न । उपसर्गसमानाकारमिति न्यायेन प्रेत्यस्य पृथक्कृतेः । व्याख्येयमिति । अत एव ऋत्यक इति सूत्रे प्रकृतसूत्रद्वयोदाहरणविषये ऋत्यक इत्यस्याप्रवृत्त्यर्थमारब्धस्य पूर्वविप्रतिषेधवार्तिकस्य धातुग्रहणसामर्थ्येन प्रत्याख्यानं सङ्गच्छते । प्रार्च्छतीति तदुदाहरणं त्वेतदुदाहरणस्याप्युपलक्षणमिति भावः । न च न माङ्योग इति सूत्रे धाताविल्युभयोश्शेष इति भाष्ये उभयोरित्यनुपपन्नम्, त्रयाणामिति प्राप्तेरिति वाच्यम् । उपसर्गनिमित्तककार्यस्यैक्यमङ्गीकृत्य तत्प्रवृत्तेरिति बोध्यम् । वृत्तौ स्पष्टमिति । केचित्कारमतत्त्वेनेति शेषः । तेषामयमाशयः, औतोम्शसोरिति

**न दृश्यते ॥**

**'एवे च' इतिवार्त्तिकं सूत्रे धाताविल्यनुवृत्तेरारब्धम् । अवधारणं नियमः । एवशब्दस्य द्योत्यमर्थद्वयमवधारणमसंभवरूपानवक्लृप्त्यादि च, तयोरन्त्योऽत्र एवशब्दार्थ इत्यभिप्रेत्याह अनवक्लृप्तावेवेति । क्वेव भोक्ष्यसे इत्युक्तेः स्थलसङ्कीर्णत्वादिना नास्ति संभवस्तव भोजनस्येति गम्यते ॥**

---

सूत्रे भाष्ये सुब्ग्रहणमनुवर्तते, वाग्रहणं निवृत्तं, यथा अलुगधिकारः प्रागानङः उत्तरपदाधिकारः प्रागङ्गाधिकारादित्युक्तम् । अत्र निवृत्तपदस्वारस्यात्तस्यापि स्वरितत्वमस्त्येव, दृष्टान्तस्य तादृशस्योक्तत्वात् । तत्फलमेवं व्याख्यानमेवेति । स्पष्टं चेदमुद्योते केचिदित्यादिना । न दृश्यत इति । अयं भावः । यस्य स्वरितत्वं प्रतिज्ञायते, तदेवानुवर्तते नान्यदिति कैयटोक्त्या भाष्यस्याननुवृत्तिरेव निवृत्तिरित्याशयकतया नैतद्व्याख्यानं भाष्यारूढम् । दृष्टान्तेपि निवृत्तस्यालुकः उत्तरत्राननुवृत्तेर्दृष्टतया तद्बलादिहोत्तरत्रानुवृत्तिरुचिता, मण्डूकानुवृत्तिप्रसङ्गात् । किं च यद्युत्तरत्रानुवृत्तिर्भाष्याभिप्रेता, तदा न संबध्यत इत्येव ब्रूयात् । उत्तरत्रावश्यकसंबन्धस्य निवृत्त्ययोगात् । किं च तथानुवृत्तावेकवाक्यतयैवान्वये महदनिष्टमापतेदिति । अत एवोद्योते अरुचिबोधकं केचित्त्वित्युक्तमिति दिक् । वक्तव्यपदाभावात्सूत्रत्वभ्रमनिरासायाह । वार्तिकमिति । धाताविल्यनुवृत्तेरिति । धातावित्यर्थाक्षेपकोपसर्गसंज्ञकार्थकोपसर्गादित्यनुवृत्तेरित्यर्थः । ऊठ्ग्रहणस्यान्तरङ्गपरिभाषाज्ञापकतापरभाष्यान्मण्डूकानुवृत्त्या उपसर्गादिति संबध्यत इति भावः । एतेन धाताविल्यनुवृत्तिः किमर्थेत्याशङ्क्य अनुवृत्तोपसर्गपदस्य एङ्निरूपितोपसर्गत्वाप्रसिद्ध्या प्राद्युपलक्षकत्वं मा भूदित्येवमर्थेति समाधाय उचितं तूपसर्गादित्यनुवृत्तेरिति भट्टोक्तमपास्तम् । अनुवृत्तोपसर्गपदस्य प्राद्युपलक्षकत्वभ्रमनिरासायैव तथोक्तत्वात् ॥

अचोऽन्त्या। अच इति निर्धारणे षष्ठी। अन्ते भवोऽन्त्यः। अन्त्यादीति गमकत्वाद् बहुव्रीहिः। मार्त्तण्ड इति। मृताण्डादागतो मार्त्तण्डः। अण्विषये एव पररूपम्। ननु मार्त्तशब्दान्त्याच् तकाराकारः स आदिर्यस्येत्यन्यपदार्थो दुर्लभ इति चेन्न। एकस्मिन्नेव समुदायरूपत्वारोपेण तदवयवत्वारोपेण च तदुपपत्तेः। एतन्मूलकमेव 'व्यपदेशिवदेकस्मिन्' इति पठ्यते इत्यलम्। वस्तुत आरोपस्य नात्रोपयोगः। 'शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः' इति पतञ्जल्युक्तेरर्थाभावेऽपि विकल्पात्मकं ज्ञानमत्र, तदपि लक्ष्या-

---

षष्ठीति। न च निर्धारणविभक्त्यन्तस्य बहुवचनान्ततया वक्ष्यमाणत्वेनेदमसंगतमिति वाच्यम्। सूत्रे व्यत्ययेनैकवचनमित्याशयात्। गमकत्वादिति। नित्यसापेक्षत्वादित्यर्थः। यत्तु सौत्रत्वादिति यावत्, अन्त्यपदस्यावयविनं प्रति साकाङ्क्षत्वेपि निर्धारणविधिं प्रत्यनाकाङ्क्षत्वादित्याहुरिति, तन्न। अनवयवबोधकान्त्यपदस्य निर्धारणविभक्त्यन्तांशे नित्यसाकाङ्क्षत्वात्। आगत इति। भगवतो नित्यत्वसंपत्तये जातार्थहानम्। ननु मृताण्डादिति दीर्घनिर्देशोनुपपन्न इत्यत आह। अण्विषय इति। व्यपदेशिवद्भावविषये सर्वत्र मुख्यव्यवहारप्रयोजकनिमित्तसद्भावसंपत्त्यर्थमेकस्मिन्नेव समुदायरूपावयवरूपादिकमारोप्य व्यवहार उपपादनीयः। तस्य च व्यवहारस्य न गौणत्वम्। लोकनिरूढत्वात्। अतो न गौणमुख्यन्यायावतार इति वदतः कैयटस्यानुरोधेन शङ्कते। नन्वित्यादि। तदनुरोधेनैव समाधत्ते। एकस्मिन्नेवेत्यादिनालमित्यन्तेन। मुख्यव्यवहारप्रयोजकनिमित्ताभावेपि चैतन्यस्य स्वरूपमिति व्यवहारोपपत्तये स्वीकृतस्य विकल्पात्मकज्ञानस्य लोकव्यवहार इव शास्त्रव्यवहारेपि प्रयोजकत्वस्वीकारेणैवोपपत्तावारोपस्य नात्रोपयोगः। व्यपदेशिवद्वचनमप्येतदाशयकमेवेत्याह। वस्तुत इति। शब्दज्ञानानुपातीति। प्रमाण-

विपर्ययविकल्पनिद्रास्मृतिरूपपञ्चवृत्तिषु विकल्पस्य लक्षणमिदम्। शब्दज्ञानजन्यो बाह्यवस्तुशून्यो विकल्प इति तदर्थ इति मिश्राः। वस्तुतस्तु अत्र शब्दपदेन शब्दप्रयोग उच्यते। ज्ञानपदेन तज्जन्यज्ञानं, ते अनुपतति अनूत्पादयति तदुभयजनक इत्यर्थः। वस्तुशून्यः बाह्यवस्तुशून्यःविकल्प इति सूत्रार्थः। अयं च बाधाबाधकालाविशेषेण सदा जायत इति विपर्ययाद्विशेषः। शाब्दबोधजनकपदार्थोपस्थितेर्वक्तुश्शब्दप्रयोगजनकमानसज्ञानस्यापि विकल्पत्वमुक्तं भवति। पदार्थोपस्थितेर्विकल्पत्वे उक्ते शाब्दबोधस्यापि तदुक्तप्रायमेव। 'अत्यन्तासत्यपि ह्यर्थे ज्ञानं शब्दः करोति ही'ति हरिकारिकायां ज्ञानमवष्टभ्य शब्दस्स्वप्रयोगं करोतीत्यप्यर्थाङ्गीकारेणोक्तसूत्रार्थस्सर्वोऽपि संगृहीत इति बोध्यम्। एतेन संबन्धांश एव विकल्पात्मकं ज्ञानं चैतन्यस्य स्वरूपमिति तदुदाहरणादिति वदन्त आचार्याः परास्ताः। तथा च सति शशशृङ्गादिपदाज्जायमानोपस्थितेः कुत्राप्यनन्तर्भावेन सूत्रस्य न्यूनतापत्तेः। न च तत्रापि शशशृङ्गयोस्संबन्धांश एव तद्वक्तुं शक्यमिति वाच्यम्। वृत्तौ विशिष्टशक्त्यङ्गीकर्तृभिस्तथा वक्तुमशक्यत्वात्। यत्तु संग्राहकशास्त्रस्यान्यत्र चारितार्थ्यादेतद्विषये वचनाभावे उपप्लव एव न स्यात्, विकल्पात्मकज्ञानजननं तु दूरेतरामित्याचार्यास्तन्न। संग्राहकवाक्येन जायमानस्य ज्ञानस्यांशतः प्रमात्वस्यांशतो विकल्पत्वस्य च वक्तुं शक्यतया लोकवच्छास्त्रेपि विकल्पविषयीभूतांशेपि प्रवृत्तौ बाधकाभावात्। दृश्यते हि लोके चैत्रस्यैकपुत्रत्वे मैत्रस्य बहुपुत्रत्वे चैत्रमैत्रयोर्ज्येष्ठपुत्रावानयेत्यादिवाक्यजन्यज्ञानादुभयानयने सार्वजनीना प्रवृत्तिः। यदपि विकल्पात्मकज्ञानस्य शास्त्रप्रवृत्त्युपयोगित्वं च निर्मूलम्। अत एवाद्यन्तवत्सूत्रे भाष्येऽपूर्वानुत्तरलक्षणत्वादाद्यन्तयोरसिद्धमेकस्मिन्नर्थे आद्यन्तवद्भावेनेति वार्तिकमतमुपन्यस्य गोनर्दीयस्त्वाह सत्यमेतत्सति त्वन्यस्मिन्निति स्वमतेन सूत्रारम्भ एव कार्य इत्युक्तमिति। तदपि भाष्यसंदर्भापर्यालोचनमूलकमेव। तथा हि,

नुरोधाच्छास्त्रप्रवृत्त्युपयोगीति बोद्धव्यम् । पतञ्जलिरिति तु अञ्जलेः पतित इति विग्रहे मयूरव्यंसकादित्वात्समासे तत्रैव निपातनादितशब्दस्य लोपे पृषोदरादित्वाद्वा तल्लोपे साधु ।

---

आद्यन्तवदेकस्मिन्निति सूत्रभाष्ये सूत्राशयमुपवर्ण्य विकल्पात्मकज्ञानेनैव सिद्धे सूत्रं नारम्भणीयमिति प्रतिपादयितुमस्ति प्रयोजनमेतदित्यादिना सूत्रस्य न्यूनतामाशङ्क्य तत्परिहाराय व्यपदेशिवद्भाववचनस्य कर्तव्यतामुद्भाव्य लोकवद्विकल्पात्मकज्ञानादेव सिद्धिरित्याशयेन व्यपदेशिवद्वचनमपि प्रत्याख्यातम् । प्रत्याख्याने लोकविज्ञानादिति हेतूक्त्या लोकवद्विकल्पात्मकज्ञानेनैव सिद्धिरिति सूचितम् । यत्तु विकल्पात्मकज्ञानस्य शास्त्रे उपयोगमनादृत्य प्रवृत्तस्य सूत्रस्यापूर्वानुत्तरलक्षणत्वादाद्यन्तयोरसिद्धमेकस्मिन्निति वार्तिककारेण तद्रीत्यैव कृतं प्रत्याख्यानं तु न युक्तम् । प्रमाविषयीभूताद्यन्तयोरपूर्वानुत्तरलक्षणत्वाभावादित्याशयेन गोनर्दीयस्त्वाहेत्याद्युक्तम्, तत्तु वार्तिककाराभिप्रेताद्यन्तपदप्रवृत्तिनिमित्तायुक्तत्वप्रतिपादनपरं, न तु विकल्पज्ञानस्याप्रवर्तकत्वपरम् । एवं च विकल्पात्मकज्ञानस्य शास्त्रप्रवृत्त्युपयोगित्वाभावो नैतद्भाष्याक्षरस्पृष्टः । प्रत्युत व्यपदेशिवद्वचनप्रत्याख्यानेन शास्त्रप्रवृत्त्युपयोगित्वमेव प्रदर्शितमिति स्फुटीभवति तत्रत्यभाष्यकैयटादिग्रन्थसन्दर्भपरिशीलनशालिनामित्यलम् । पतन्ति अञ्जलयो यस्मै इति विग्रहेण प्रकृतोदाहरणत्वं मनोरमोक्तं कटाक्षयन्नाह । अञ्जलेः पतित इति । इतशब्दलोपे इति । न च जश्त्वापत्तिरिति वाच्यम् । कृदन्तेन समासे तदप्राप्तेः । एतेनेदमुपलक्षणं, जश्त्वाभावस्यापीति परास्तम् । एवं चात्र पाठोऽनार्ष इति भावः । नन्वस्य मयूरव्यंसकादिषु पाठे अवधारणार्थकचशब्देन समासान्तराप्रवेशे श्रीमद्भगवत्पतञ्जलिविरचित इत्यनुपपन्नमत आह । पृषोदरादित्वाद्वेति । तत एव समासोपीति भावः । यद्वा सुप्सुपेति समासो बोध्यः । एतेन समासार्थं मयूरव्यं-

**गोनर्ददेशो कस्य चिद्दषेरञ्जलेः सन्ध्याकरणसमये पतित इत्यैतिह्यात् ॥**

**ओत्वोष्ठयोः । अत्र समर्थपरिभाषा नोपतिष्ठते । 'समासे-**

सकादित्वस्यावश्यकत्वेन पृषोदरादित्वकल्पनं किमभिप्रेत्येति तु चिन्त्यमित्य-पास्तम् । यत्त्वत्र जश्त्वाभावार्थमितशब्दस्य लोपे इत्यत्राकार उच्चारणार्थः । एवं चेदित्यस्य लोपे अकारस्य सत्त्वे तेन पररूपे तस्य स्थानिवत्त्वान्न जश्त्वम् । अन्यथा पाठोऽनार्ष इति साक्षादेव वदेदित्युक्तम् । तन्न । तल्लोपे साधुरित्य-तेन तल्लोपाव्यवहितोत्तरं साधुत्वबोधनेनानार्षत्वस्योक्तप्रायत्वात्तत्स्वारस्य-भङ्गापत्तेः । अन्येतु मयूरव्यंसकादित्वात्समासे अत्र पाठादितशब्दस्य पर रूपेऽर्धाधिकविकारेण पदत्वाभावाज्जश्त्वाभावः । न ह्यत्र टेरित्युपात्तमस्तीत्याहु-स्तन्न । मयूरव्यंसकादित्वे दोषस्योक्तत्वात् । न च पृषोदरादित्वात्समासः । समासमात्रफलकस्य पृषोदरादिपाठस्यादृष्टत्वात् । केचित्तु मयूरव्यंसकादित्वा-देव तित अम् इत्यस्य तमादेशमाहुः । परे त्वदन्तधातोरेव पतितसिद्धौ पत्ल-धातोः पत्त इत्येव । तथा चाञ्जलेः पत्त इति विग्रहे पररूपे संयोगान्तलोपे जश्त्वाभावश्चेत्यर्थमत्रैव पाठः, पृषोदरादौ मयूरव्यंसकादौ च पाठे गौरवादिति वदन्ति । तन्न । तादृशधातोस्सत्त्वे मानाभावात् । न च द्युत द्यावा नियुतः पत्यमानः इति श्रुत्यनुरोधात्तप संतापे वा इत्यत्र पतेति व्यत्यासेन पाठान्तरस्य स्थापितत्वात्तत्सिद्धिरिति वाच्यम् । श्रौतप्रयोगस्य तप्यतेर्वर्णव्यत्ययेन पतते-र्विकरणादिव्यत्ययेन वोपपत्तौ पाठान्तरे गमकत्वासंभवात् । लोके पत्त इति प्रयोगानुपलम्भेन पाठान्तरस्य छान्दसत्वाच्च । अत एव द्वितीयाश्रितातीत-पतितेति निर्देशेनैव पतितसाधनपरास्सर्वे ग्रन्थास्सङ्गच्छन्ते । किञ्चेदृशेषु संयोगान्तलोपो दुर्लभः, स्थानिवत्त्वात् । अत एव प्राप्तोदक इत्यादौ तादिलोपो नेत्यन्यत्र विस्तरः । ननु मनोरमोक्तरीतिरेव कुतो नेत्यत आह । **गोनर्ददेशो** इति । तत्र मानमाह । **ऐतिह्यादिति** ॥

ननु समर्थपरिभाषोपस्थित्या समास इत्येतल्लाभे समास इति व्यर्थमत

ऽङ्गुलेः सङ्गः' इत्यादौ समासग्रहणेन पदविधिरिति सूत्र-स्वरसेन भाष्यादिस्वारस्येन च पदत्वेन सुबन्तत्वेन वा यत्र

---

आह । अत्र समर्थेति । यत्तु वस्तुतस्तु तदुपस्थानेऽपि न तद्वैयर्थ्यम्, काल ओष्ठीयितुं शक्तस्य ओष्ठीयितुमित्यादावुपपदस्य क्यजन्तप्रकृतिकतुमुन्नन्तेनै-कार्थीभावसत्त्वेन तत्रातिप्रसङ्गवारणेन तत्सार्थक्यादिति तन्न । तदुपस्थितावव-र्णान्तस्य ओष्ठादिना यत्र सामर्थ्यं तत्रैव प्रवृत्तिस्स्यात् । तादृशश्च समास एवेति तद्वैयर्थ्यम्, काल ओष्ठीयितुमित्यादौ कालादेस्तुमुन्नन्तेनैकार्थीभावेपि ओष्ठमात्रेण तदभावेनातिप्रसङ्गाभावात् । यदप्यत्र तदुपस्थाने यत्रावर्णस्य ओष्ठादिना सामर्थ्यमौपगवोष्ठ इत्यादौ, तत्रैव स्यान्न तु दन्त्योष्ठ्यादौ, अकार-स्यानर्थक्येन सामर्थ्याभावादित्याशयोद्भावनं तदपि न । औपगवोष्ठ इत्यादाव-कारस्यार्थवत्त्वेऽपि तन्मात्रस्य ओष्ठादिना सामर्थ्याभावात् । अस्य ओष्ठः ओष्ठ इत्यादौ यद्यपि संभवति, तथापि दन्त्योष्ठ्यादौ समर्थपरिभाषानुपस्थानेऽपि दोषस्य वक्ष्यमाणतया तद्ग्रन्थस्वारस्यभङ्गापत्तेश्च। पदत्वेनेति । तेनोपपदम-तिङित्यत्र सुब्ग्रहणाननुवृत्तावपि परिभाषोपस्थितिरिति भावः । इदं गतिर्गता-विति सूत्रस्थकैयटानुसारेण । तत्रहि पदस्येत्यधिकारेण परिभाषोपस्थित्या पर-निमित्तानुपादानेऽपि यत्क्रियायुक्ताः प्रादय इति विशेषलाभेन आमन्द्रैर्हरिभि-र्याहीत्यादौ गतावित्यस्याभावेपि निघातो वारितः । एतेनास्योदाहरणं मृग्यं, प्रत्युत युष्मदस्मदोष्षष्ठीत्यादिष्वेतत्प्रवृत्तौ वाक्ये आदेशानापत्तिरित्याचार्योक्तिम-पास्तम्। कैयटस्य व्यपेक्षापि गृह्यत इत्याशयात् । अत एवानुदात्तं सर्वमिति सूत्रे समानवाक्य इति वार्तिकव्याख्यानावसरे ओदनं पच, तव भविष्यतीत्यादौ त्वत्क-र्तृकेण पाकेन त्वत्स्वामिक ओदनो भविष्यतीत्येवं पाकस्य युष्मदर्थस्य च व्यपे-क्षास्तीत्यादेशप्रसङ्गस्तद्वारणाय वार्तिकमिति कैयटोक्तं सङ्गच्छत इति दिक् । सामर्थ्यमेकार्थीभाव एवेति सिद्धान्तरीत्याह। सुबन्तत्वेन वेति। वा शब्दोनुक्त-

**साक्षादुद्देश्यता तत्रैवैतत्परिभाषाप्रवृत्तिस्वीकारात् । ओत्वोष्ठादिमात्रस्य पदत्वाभावात् । अवर्णादोत्वोष्ठयोरपि तद्घटितसमास इत्यर्थाद् "दन्त्योष्ठ्यो वः स्मृत" इतिप्रयोगसिद्धिः । अन्यथा प्रत्यासत्त्यौत्वाद्युत्तरपदकसमास एव प्रवृत्त्यापत्तौ तदसङ्गतिः स्पष्टैव । ओतुर्बिडालः ॥**

---

समुच्चायकः । तेन तिङन्तत्वादिनावच्छिन्नायामप्युद्देश्यतायामाख्यातमाख्यातेनेत्यादावेतदुपस्थितिः । पदविधिसहचरितोऽप्येतदुपस्थितौ निमित्तं, तेन कृदादिविधावप्येतदुपस्थितिः । अत्रोद्देश्यता शब्दप्रयोज्यैवेति नाग्रहः, किन्त्वर्थसिद्धापि । तेन तद्धितविधावप्यस्योपस्थितिः । एकशेषस्तु वस्तुतो न वृत्तिरित्यन्यत्र स्पष्टम् । एवं च समासकृत्तद्धितसनादिविधयोऽत्र पदविधिशब्देन गृह्यन्ते । तेनान्यारादितरर्तेत्यादौ नास्याः प्रवृत्तिः । **साक्षादिति** । तेन पदान्ताद्वेत्यत्र पदत्वस्य परंपरया उद्देश्यतावच्छेदकत्वेपि न क्षतिरिति भावः । यत्तु पदसंज्ञाप्रयोजकप्रत्ययोत्पत्तिप्रयोजकसंज्ञाशास्त्रीयोद्देश्यतावच्छेदकरूपावच्छिन्नसंपादक - त्वरूपविधित्वं पदविधित्वं, यथाश्रुतं तु न युक्तम् । यङादिविधौ ण्वुलादिविधौ स्वार्थिकतद्धितविधौ च परिभाषानुपस्थितिप्रसङ्गादिति तन्न । तत्र तत्रोपस्थित्युपायस्य ग्रन्थकृतैवोपदर्शितत्वात् । उक्तपदविधित्वं यद्यप्यनुगतं, तथापि न भाष्याक्षरानुगुणमिति विभावय । वस्तुगत्या पदसंज्ञकविधावित्यर्थेऽपि प्रकृते तदनुपस्थितिरेवेत्याह । **ओत्वोष्ठादिमात्रस्येति** । अत्र मात्रशब्दः कार्त्स्न्ये, श्यामादौ तत्त्वेपि जसादौ तदभावादिति भाव इति भट्टाः । आचार्यास्तु ओत्वोष्ठयोरादिमात्रस्यौकारस्य पदत्वाभावादिति व्याचख्युः । इदं व्याख्यानं ग्रन्थस्वारस्यं पुष्णाति । नन्वोकारमात्रस्य पदत्वाभावेप्योत्वोष्ठयोरेव परशब्देन ग्रहणे कथमुक्तार्थसिद्धिरत आह । **अवर्णादित्यादि** । एवमर्थस्यावश्यकतां दर्शयति । **प्रयोगसिद्धिरिति** ॥

ओमाङोः । अत्र एङीति नानुवर्त्तते, तेनेषदर्थकाऽङा सह ऋषभशब्दस्य समासेऽत्र अर्षभ इत्यत्र पररूपेऽव्यर्षभसिद्धिः । न चात्र परत्वाद्दीर्घप्रसङ्गः, प्रतिपदविधित्वञ्च निरवकाशत्वे सत्येव बाधकत्वे प्रयोजकमिदञ्च मध्येऽपवादन्यायेनावेहीत्यादौ वृद्धेरेव बाधकं स्यादिति वाच्यम् । लक्ष्यानुरोधेनात्र बाध्यसामान्यचिन्ता श्रयणात् । अन्यत्र प्रतिपदविधित्वस्य बलवत्त्वे प्रयोजकतादर्शनेन परदीर्घात्पूर्वं पररूपप्रवृत्तेश्च ॥

अव्यक्तशब्दार्थो ध्वनेरिति। अविद्यमानकत्वादिशब्दस्येत्यर्थः। तस्य चाच्छब्दोऽनुकरणे एव सम्भवतीत्याह । अनुकरणस्येति ।

---

अत्र चकार एङित्यनुवृत्त्यर्थ इति भ्रमनिरासायाह । नानुवर्तत इति। एवं च चकारो न कर्तव्य इति भावः । अव्यर्षभसिद्धिरिति । ननु ऋत्यक इति प्रकृतिभावे पश्चादव्यशब्देन संबन्धे सवर्णदीर्घे पश्चादृत्यक इत्यस्य वैकल्पिकत्वेनाप्रवृत्तौ गुणे एतत्सिद्धिरिति चेन्न । एकलक्ष्ये भावोपक्रमेऽभावस्यायोगात् । अन्यथा शुशुवतुरित्यत्र विभाषा श्वेरित्यस्य वैकल्पिकत्वेन प्रथममप्रवृत्तौ द्वित्वोत्तरं प्रवृत्तावनिष्टापत्तेः । चकारः पुनर्विधानार्थः, तेन न सवर्णदीर्घ इति हरदत्तोक्तमयुक्तम्, भाष्ये चकारस्यानर्थक्यप्रतिपादनादिति हृदि निधाय स्वयं समाधानान्तरं वक्तुं शङ्कते। नचेति। लक्ष्यानुरोधो लक्षणैकचक्षुष्काणामनुचित इत्यत आह । अन्यत्रेति। दर्शनेनेति। प्रतिपदविधित्वेन शीघ्रोपस्थितिकत्वेनान्तरङ्गत्वस्याप्युपलक्षणमिदम् ॥

अव्यक्तशब्दस्य ध्वनौ योगं दर्शयति । अविद्यमानेत्यादि । अविद्यमानं कत्वादि यस्मिंस्तादृशशब्दस्येत्यर्थः। एतेन अविद्यमानकादिशब्दस्येत्यर्थः। कत्वादेर्वर्णत्वव्याप्यजातित्वेन शब्दत्वाभावादित्यपास्तम् । अनुकरण

अत्रालोन्त्यस्येति न प्रवर्त्तते, 'नानर्थके' इति निषेधात् । आम्रेडितस्य वेति वक्तव्ये नाम्रेडितस्येत्यारम्भाद्वा । अत इति किम् । वटगिति ॥

नाम्रेडित । अव्यक्तानुकरणस्येति, अत इति च वर्त्तते । अव्यक्तानुकरणावयवीभूताम्रेडितावयवाच्छब्दस्येत्यर्थः । नाम्रेडितस्य तस्तु वेति न सूत्रितं, वैचित्र्यार्थम् । फलकल्पनाभिनिवेशस्तु न युक्तो, भाष्यानुक्तेः । अत एव 'तदधीते तद्वेद' इति सूत्रे 'द्विस्तद्ग्रहणं प्रमादकृतमाचार्यस्य' इति भाष्ये उक्तम् । लाघवानवधानलक्षणोऽत्र प्रमाद इति कैयटः । क तदवधानं क तदनवधानमिति तु भाष्यकृदुक्तप्रयोजने तदवधानमन्यत्रान्यदिति निर्णेयम् । ननु डाचोऽभावादेतदप्राप्तिरत आह । बहुलवचनादिति ॥

---

एवेति । एवं च सूत्रेऽनुकरणशब्दः भग्नदन्ताद्युच्चारिताव्यक्तानुकार्ये पररूपभ्रमनिवर्तकतया स्पष्टार्थ इति भावः । तत्प्रत्याख्याने आह । आम्रेडितस्येति । नन्वत इत्युच्यमानेऽपि स्वरूपग्रहणायातो गुण इत्यतोऽत इत्यनुवर्तमाने पुनरद्ग्रहणरूपज्ञापकाश्रयणगौरवाट्टेरित्येव सिद्धिरिति पृच्छति । अत इति किमिति । एतेनायमपपाठः प्रश्नोत्तरयोर्निरालम्बनत्वादित्याचार्योक्तमपास्तम् । यत्तु नाम्रेडितस्यान्त्यस्य तु वेति ज्ञापकादतो गुण इत्यतोनुवृत्तमत इति स्वरूपपरं स्यादिति पृच्छति । अत इति किमिति । अन्तस्यान्वाचयशिष्टत्वेनापि विधातुं शक्यत्वान्न ज्ञापकतेत्युत्तरमिति तन्न । तथाविधानस्य कथमपि सूत्राक्षरैरलाभात् । वैचित्र्यार्थमिति । मात्रालाघवाभावेऽपि प्रतिपत्तिलाघवं यथा भवति तथैव वक्तव्यमिति नियमाभावसूचनार्थमित्यर्थः । फलकल्पनाभिनिवेश इति । नाम्रेडितस्येत्यंशस्यान्वाचयशिष्टत्वज्ञापनद्वारा वटक् वटगितीत्यादौ पररूपमन्त्यस्य भवतीत्यभिनिवेश इत्यर्थः । भाष्ये उक्तमिति । तत्र द्विस्तद्ग्रहणे-

तस्य परम् । अवयववाचिपरशब्दयोगेऽत एव ज्ञापकात् षष्ठी । तस्यग्रहणं स्पष्टार्थं, द्वे इत्यनुवर्त्य षष्ठ्या विपरिणामेन सिद्धेः । अन्यद्विरुक्तपरस्य तु न सञ्ज्ञा, अष्टमे सर्वस्येत्येतत्प्रकरणे संज्ञाकरणात् ॥

झलां ज । अन्तग्रहणं झलीतिनिवृत्त्यर्थम् । सर्वोपकारकतया च प्रकरणान्तेऽस्य लेखः । एतेन अदित्यत्रैव लेख उचित इत्यपास्तम् ॥

अज्झलोः सावर्ण्यनिषेधादाह । अचि किमिति । अनिष्पत्ते-रिति । नाज्झलाविति सूत्रविषयनिर्णयेऽपवादविषयपरिहारेण तत्त-द्वर्णीयसवर्णपदवाच्यनिर्णयोत्तरं तावतां ग्रहणस्य ग्रहणकशास्त्रबो-ध्यतया एतद्बोधकाले ग्रहणकशास्त्रस्य तावद्ग्रहणबोधकत्वानि-ष्पत्तेरित्यर्थः ॥

---

नाधीयानविदुषोः पार्थक्यमुक्तम् । अन्यथा योऽधीते वेद च तत्रैव स्यादिति फलस्य कल्पयितुं शक्यत्वेन प्रमादकृतत्वकथनासङ्गतिरिति भावः ॥

ज्ञापकादिति । दिक्छब्दार्थेऽवधितयान्वितार्थबोधकादेव पञ्चमी, नान्यत इति बोधनद्वारेत्यर्थः । एवं च तादृशपूर्वशब्दयोगेऽपि षष्ठीसमर्थनार्थ-मुपयान्तरं नानुसर्तव्यमिति भावः । स्पष्टार्थमिति । ज्ञाप्यार्थस्तु क्षिप्रक्षुद्राणां यणादिपरमिति निर्देशेनान्यादिसाहचर्येण वा सिद्ध इति भावः । सिद्धेरिति । पूर्वोऽभ्यास इत्यत्रेवेति भावः । ननु तस्येत्युक्तौ तच्छब्दस्य सन्निहितपूर्वपरा-मर्शकतया संज्ञाया एतत्प्रकरणस्थद्वित्वविषयकता सेत्स्यतीति तदावश्यक-मित्याशङ्क्य तत्फलमन्यथा साधयति । अन्यद्विरुक्तेति ॥

झलीतिनिवृत्त्यर्थमिति । स्थ्वोर्ग्रहणं तु न निवर्तकं, तत्र विशेषणतया अन्वयसंभवात् । अत एव दधस्तथोश्चेति सूत्रे भाष्ये झलीत्यनुवर्त्य तथोश्चेति

सूत्रस्थसवर्णपदानुवृत्तिमभिप्रेत्याह । ऋति सवर्ण इति । तत्फलं दध्यृकारादावेतदप्रवृत्तिः । एतद्विधेययोरइउण्सूत्रानन्तरं पाठादच्त्वं, तेन तयोः स्थाने प्लुतसिद्धिस्तयोश्च न रपरत्वम् । द्विमात्रमिति । अत एव 'अकः सवर्णे' इत्यनेनैव ऋकारद्वयस्य

---

प्रत्याख्यातम् । झलीति मण्डूकानुवृत्तिरित्युद्योतः पक्षान्तरपरः । वक्ष्यमाण-मूलन्तु सूत्रमते । ननु झषस्तथोरिति सूत्रस्थमन्ते इति योगविभागार्थम् । झलां जशस्तथयोः ततः अन्ते इति झलां जशोन्ते इत्यर्थकम्, एवं चोर्धं इति न कर्तव्य-मिति भाष्यं विरुध्येतेति चेन्न । तदभावेऽपि जश् झलामिति न्यासेन जशिति योगविभागेन च तत्प्रत्याख्यानसंभवात् । योगविभागस्य गुरुभूततया एक-देश्युक्तितया तद्विरोधस्य दूषकत्वाच्च । निवृत्तिफलन्तु क्विन्प्रत्ययस्येत्यत्र बोध्यम् । नन्वेवं तत्रैवान्त इत्यस्तु, अत्र तत्संबन्धोस्तु, झशि जश्त्वविधायकं मास्तु, खरि चर्त्वेन न विशेषः, हेपरेऽपदान्तो झल्त्वसम्भवी, अभ्यासे चर्चेत्या-दिचतुस्सूत्री त्विहैव पाठ्या, तत्रैव वा झशीति योगविभागश्च न कर्तव्य इति चेन्न । सुध्युपास्य इत्यत्र द्वित्वस्यासिद्धत्वाज्झल्परत्वाभावेन जश्त्वानापत्तेः । पक्व इत्यत्र वत्वस्यासिद्धत्वाज्जश्त्वापत्तेश्चेति दिक् । यत्तु अत्र मूले पदान्ते इति पदान्तानां झलामित्यर्थः, यथाश्रुते सरितावित्यादौ पदचरमावयवस्ताविति तत्र विद्यमानझल्त्वात्तकारादेर्जश्त्वापत्तेरिति तन्न । अत्रान्तशब्दस्यावसानपरत्वेन तत्र तादेरविद्यमानत्वेन यथाश्रुते दोषाभावात् । भवदुक्तार्थे सूत्रस्वारस्यभङ्गाच्च । होढ इति सूत्रे पदान्ते विद्यमानस्य हस्येत्यर्थ इत्युत्तरग्रन्थासङ्गतेश्च ॥

वार्त्तिकविधेययोरयोगवाहेषु गणनमिति कौस्तुभं कटाक्षयन्नाह । अ इ उण् सूत्रानन्तरमिति । अयोगवाहेषु गणनखण्डन एव तात्पर्यं, न तु अ इ उण् सूत्राव्यवहितानन्तरं पाठे, तदेतत्फलमुखेनाह । प्लुतसिद्धिस्तयोश्च न रपरत्वमिति । यथा प्लुतो रपरत्वाभावश्च सिद्ध्यति तथा पठनीयमिति

स्थाने रेफद्वयवत्तारूपगुणकृतान्तर्येण कदाचिद्रेफद्वयगर्भस्य विवृतत्वान्तर्येण कदाचिद्विवृतस्य, ऌकारे लकारवत्तान्तर्येण कदाचिद् द्विलकारस्य कदाचिद्विवृतत्वसाम्येन रेफवत्तासाम्येन च तादृशस्य ऋकारस्य सिद्ध्या विकल्पफलसिद्धिमाश्रित्यैतद्वचनद्वयं 'तुल्यास्य' इति सूत्रे भाष्ये प्रत्याख्यातम् । द्वौ रेफाविति । अत्रापि तदेव

---

भावः । अइउण्सूत्रानन्तरमित्युक्तिस्तु इको यणचीत्यत्र स्थानेन्तरतमसूत्रेणैव निर्वाह इति दीक्षितरीत्या, यथासंख्येनापि निर्वाह इति स्वरीत्या त्वत्रानन्तरशब्दोऽव्यवहितानन्तर्यपरः । एवञ्च ऋऌक्सूत्रानन्तरमिति तात्पर्यम् । एवञ्च न यथासंख्यानुपपत्तिः । नवा स्थानेन्तरतमसूत्रभाष्यविरोधः । एतेन ऋऌक्सूत्रानन्तरं पठतो रत्नाकरस्याशयश्चिन्त्य इत्यपास्तम् । विवृतत्वान्तर्येणेति । रेफवत्तासहकृतेनेति शेषः । तेन नाकारादिदीर्घः । विवृतत्वसाम्येनेति । इदमीषत्स्पृष्टस्य ऋकारस्य व्यावृत्त्यर्थम् । प्रत्याख्यातमिति । अन्यथा तयोर्दीर्घत्वाभावात्तदसङ्गतिरिति भावः । केचित्तु तर्हि वक्तव्यमित्यादिशब्दाभावादिदमयुक्तम् । एतेन ह्रस्वऋकारस्येत्यादिवक्ष्यमाणग्रन्थोप्यपास्तः । प्रत्याख्याने फलभेदाभावायैतद्ग्रन्थप्रवृत्तेरित्याहुः । तन्न । ऋऌवर्णयोस्सावर्ण्यवचने एतद्ववचनद्वयं न कार्यम्, एतत्करणे तन्न कार्यमित्युक्त्वा, अनयोस्सवर्णसंज्ञावचनकरणस्य ज्यायस्त्वोक्त्या एतत्प्रत्याख्यानस्य स्पष्टं लाभादितिदिक् । ननु त्रिषष्टिर्वा चतुष्षष्टिर्वर्णाश्शम्भुमते मता इति शिक्षाविरोधः, एतयोराधिक्यादिति चेन्न । तुल्यास्यसूत्रभाष्यवार्तिकप्रामाण्येन तयोरपि तत्र पूरणात् । अक्षरसमाम्नाये मातृकापाठे चाविद्यमानानां यमानां तत्र पूरणवत् । यद्वा शिक्षायां संख्या धर्मकृता, न व्यक्तिकृता, प्रत्युच्चारणं शब्दो भिद्यत इति पक्षे तस्या असम्भवात् । अभितोऽज्भाक्तिसहितरेफघटितत्वतादृशलकारघटितत्वरूपधर्माभ्यां विवृतयोरीषत्स्पृष्टयोश्च

भाष्यं मानम्। द्विरेफत्वे हि रेफद्वयवति स्थानिन्ययं, लकारवत्यपर इति व्यवस्था सिद्ध्यति। अभित इति। द्वौ रेफावित्यनुषज्यते, तच्च द्वितीयान्तम्। अभितः पदयोगात्॥

एओङ्सूत्रे भाष्ये मातॄणामित्यादौ णत्वादिसिद्ध्यर्थमवश्यमङ्गीकर्त्तव्ये 'वर्णैकदेशा वर्णग्रहणेन गृह्यन्ते' इति पक्षे प्रत्लृयखट्वाभिर्वाचा तरतीत्यादौ तुगैस्द्ध्यज्लक्षणठानां शङ्कायाः, दीर्घादिति तुग्विधानसामर्थ्यंतपरकरणसामर्थ्यंनौद्ध्यचइतिसूत्रस्थनौग्रहणसामर्थ्यैर्भेदेनाप्रतिभासमानेषु वर्णावयवेष्ववयवसदृशस्वतन्त्रवर्णाश्रयकार्याभावज्ञापनरूपसमाधानस्य च करणवत् प्रातर्क्ॢतमित्यत्र रो रीत्यस्य, तद्लृकार इत्यादौ तोर्लीत्यस्य च शङ्कासमाधानाकरणेन 'यत्तद्रेफात्परं भक्तेः' इति हयवरट्सूत्रस्थभाष्येण च

---

ऋलवर्णयोर्द्वित्वे न काप्यनुपपत्तिरिति दिक्। व्यवस्थेति। एकरेफवत्त्वे हि होतृ लृकार इत्यत्रोक्तरीत्या अभीष्टस्य सिद्धावपि होतृ ऋकार इत्यत्र विवृतत्वसहकृतेन रेफवत्त्वेन विवृतस्यैव ऋकारस्य प्राप्त्या ईषत्स्पृष्टस्य कुत्राप्यप्राप्त्या अक्षरसमाम्नाये पाठसामर्थ्याद्व्यवस्थयैव स्यादिति भावः। **सामर्थ्यैरिति**। दीर्घादित्यनुकरणस्येतिना समासे तस्य तुग्विधानेन समासे तस्य सामर्थ्येन, एवं नौद्ध्यच इत्यनुकरणस्येतिना तस्य सूत्रेणेत्येवं क्रमेण सामर्थ्यान्तसमासः ततस्सामर्थ्यान्तत्रयाणां द्वन्द्व इति भावः। द्वन्द्वे इतिशब्दद्वयप्रवेशः कथमिति भट्टोक्तमनेन प्रत्युक्तम्। एवं विधप्रयोगाणां तत्र तत्रोपलम्भेन पूर्वोक्तरीत्या निर्वाह्यत्वात्। शङ्कासमाधानयोरकरणेनेति व्यस्तः पाठः, समस्तपाठे त्वेकदेशान्वयो बोध्यः। रेफात्परमिति। रेफभागात्परं यत्तेन व्यवधानादित्यर्थः। हयवरट्सूत्रेत्यपपाठः, एओङ्सूत्रे अस्य दर्शनात्। यद्वा हयवरडिति सूत्रं यस्मिन्नाह्निके तत्स्थभाष्येणेति योजनीयम्। एवमुक्तिस्तु

ऋऌक्सूत्रस्थयोरर्धमात्राऽभागस्याभितः क्लृप्तत्वेन तथैवोचितत्वा-
दिति भावः । द्वौ लकाराविति । हल्द्वयवत्पूर्वसाहचर्यादिति भावः ।
अत्र ह्रस्वऋकारद्वयस्थानिकैकादेश एव पूर्वस्य साधुत्वं ह्रस्वऋकार-
ऌकारस्थानिकैकादेश एवोत्तरस्य साधुत्वम् । अत एव ऌति न
ऋकारो नाप्यृति ऌकारः । अत एव वार्त्तिके ऋतीति तपरकरणमु-
त्तरवार्त्तिके ऌतीति च चरितार्थम् । तुल्यास्यसूत्रे भाष्ये यदेत-
दृतीति एतदृत इति वक्ष्यामीत्येतद्वचनाश्रयणेन ऋऌवर्णयोः सावर्ण्यं
न कार्यमिति च सङ्गच्छते । उपस्थितरेफीयप्रयत्नत्यागे मानाभावादी-

---

वैचित्र्यार्था । भाष्येण चेति । चेन ऋकारऌकार इत्यत्र यणो मय इति
शङ्कासमाधानयोरकरणस्य संग्रहः । अभित इति । पूर्वोत्तरपार्श्वयोरित्यर्थः ।
तस्यैक्ये लाघवमित्याशयेन मूले भक्तिरित्येकवचनम् । तथा च सर्वत इति
फलति । नन्वेवं प्रत्याख्याने गमॄणामित्यत्र लकारवत्तान्तर्येण कदाचिद्दोष-
स्स्पष्टोपि ऌकारस्स्यात् । एवं वार्तिकारम्भे ऋति ऌकारस्य ऌति ऋकारस्या-
पत्तिरतस्तयोः फलाभेदं योजयति । अत्रेत्यादिना । ह्रस्वऋकारद्वयेत्याद्यंशे
मानमाह । तपरकरणमिति । ऌकारस्थानिकेत्याद्यंशे तदाह । ऌतीतीति ।
पूर्वस्य ह्रस्वत्व एवेत्यत्र तदाह । तुल्यास्येति । गमॄणामित्यत्राप्रवृत्तिस्तु
आरम्भप्रत्याख्यानयोः फलैक्यानुरोधादिति बोध्यम् । ननु ऋतीत्यनेन
ऌतीति वचनमहिम्ना सवर्णाग्रहणेपि ऋत इत्यनेन तद्ग्रहणे ऌकारऋकारयोः
पूर्वस्य ऌकारद्वयस्य स्थाने उत्तरस्य चापत्तिरत आह । सावर्ण्यं न कार्यमिति
चेति । एतद्वार्तिकारम्भे सावर्ण्याभावेन न पूर्वोक्तापत्तिरिति भावः । अन्येषा-
मुदाहरणानामनभिधानामिति व्यवस्थितविभाषया वा तत्सिद्धिरित्युद्योतोक्त-
न्तूपायान्तरपरं बोध्यम् । अत्र ऋकारऌकाराभ्यामनयोरपि ग्रहणे अकस्सवर्ण
इत्यनेनैव सिद्धे इत्येकः पाठः, अकस्सवर्ण इत्यनेनैवेत्येतद्रहितोऽपरः । अन्त्य-

**षत्स्पृष्टाविमौ । विवृतत्वे हि विवृतऋकारऌकाराभ्यामनयोरपि ग्रहणेऽकः सवर्णे इत्यनेनैव सिद्धे वार्त्तिकस्यैव वैयर्थ्यापत्तेः ॥**

**एङः । पदान्तात् किम् । भवति ॥**

**सर्वत्र वि । प्रकृत्याऽन्त इति सूत्रात्प्रकृत्येत्यनुवर्त्तते । प्रकृतिशब्दोऽत्र स्वभाववाची, दुस्त्यजा प्रकृतिरित्यादौ तथा दर्शनात् । प्रकृत्या स्वभावेनावस्थानमित्यर्थः । अत एव प्रकृतिभावे न पूर्वरूपं, नाप्ययादय इति भावः । नान्तः पादमिति पाठे त्वनेन सूत्रेण गोशब्दस्य यत्प्राप्तं तन्नेति व्याख्यानेन नान्तः पादमित्यनेनैव**

---

पाठे वार्तिकस्येत्यस्य अच्त्वं वक्ष्यामीति वार्तिकस्येत्यर्थः । तयोर्ग्रहणे अच्त्वस्य स्वत एव सिद्धत्वात् । आद्ये वार्तिकस्येति जातावेकवचनम् । एतद्वार्तिकद्वयस्येत्यर्थः । इदं वाशब्दश्चार्थ इति मते, ध्वनितं चेदं तस्य तदर्थकत्वं तुल्यास्यसूत्रभाष्यकैयटादिषु । विकल्पार्थत्वे वार्तिकस्येत्यस्य वार्तिकद्वये विधेयनिर्देशस्येत्यर्थः । दीर्घ इत्यस्य तु दीर्घ इत्यनुवृत्त्यैव सिद्धेरिति भावः । एतेन विवृतत्वेपि नित्ये प्राप्ते विकल्पार्थं वचनम्, तेन पक्षे यणादेशः फलमिति परास्तम् । वैयर्थ्यापत्तेरिति । इदमुपलक्षणमारम्भप्रत्याख्यानयोः फलभेदापत्तेरपि ॥

ङसिङसोश्चेति नियमादपदान्ते नास्य प्रवृत्तिरिति शङ्कते । पदान्तात्किमिति । सुब्विषयक एव नियमस्स्यादित्युत्तरयति । भवतीति । न च भवतेर इति निर्देशान्नोक्तनियम इति वाच्यम् । एवमप्यनुबन्धादिविषयक एव नियमस्स्यादित्यौपगवादौ दोषस्स्यात् । अनुगवमित्यादिनिर्देशैस्तद्वारणे तु प्रतिपत्तिगौरवम् । उत्तरत्रास्यावश्यकत्वादिति भावः । एतत्प्रकरणे वर्णानामेव प्राधान्यमिति बोधयितुमन्तग्रहणम् । तत्फलन्तूक्तम् । एतेन स्पष्टार्थमित्यपास्तम् ॥

ननु नान्तःपादमिति पाठेऽनन्तरस्येतिन्यायेन पूर्वरूपस्यैव निषेधस्स्यादत आह । व्याख्यानेनेति । भाष्यप्रामाण्यादिति भावः ॥

पूर्वरूपत्वादिकं विकल्पेन निषिद्ध्यत इति बोद्धव्यम् ॥

अवङ् । स्फोटोऽयनं यस्य सः, स्फोटप्रतिपादक इत्यर्थः । स्फौटायनस्येतिपाठे नडादित्वं कल्प्यम् । स्फोटायनोऽवङः स्मर्त्ता, अन्यस्तु तदभावस्येति स्मृत्यन्तरानुसन्धानद्वारेणात्र विकल्पो बोद्धव्यः । निवृत्तमिति । अत एव इन्द्रे इति सामर्थ्यान्नित्यमिति भाष्या-

---

अयनं परायणम् । प्रतिपाद्यमिति यावत् । विभाषापदानुवृत्तेर्विकल्पलाभः स्फोटायनग्रहणं पूजार्थमिति वृत्त्युक्तन्तु न युक्तम् । पूजार्थस्यापि तद्ग्रहणस्य विकल्पार्थत्वेनोपपत्तेः । स्पष्टश्चेदं सेनकग्रहणं पूजार्थमितिप्रतीके पूजार्थमपीति शेखरे । एवं चात्र विभाषाग्रहणस्य स्वरितत्वं न कल्पनीयमिति लाघवमित्याशयेनाह । **स्फोटायनोऽवङ इत्यादि । अन्यस्तु तदभावस्येति ।** अन्यस्तु तस्य न स्मर्तेत्युक्ते अर्थादयमर्थो लभ्यते । न च प्लुतप्रगृह्येति सूत्रे पूर्वस्मिन्योगे विभाषाग्रहणं निवृत्तमिति भाष्यात् पूर्वस्मिन्निति इन्द्रे चेत्यत्रेत्यर्थ इति कैयटादारम्भसामर्थ्यादिति भाव इत्युद्योताच्चात्र विभाषाग्रहणानुवृत्तिर्लभ्यत इति तद्विरोध इति वाच्यम् । उपदर्शितलाघवानुरोधेन विकल्पार्थक ग्रहणमित्यर्थपरतया तेषां योजयितुं शक्यत्वात् । निवृत्तिरत्रानुवृत्तिरेवेत्याशयस्य कल्पयितुं शक्यत्वात् । एतेनास्य चिन्त्यता परास्ता । यत्वस्य चिन्त्यत्वे उपष्टम्भकतया अत एव सामर्थ्यान्नित्यमित्युत्तरग्रन्थसङ्गतिः । स्फोटायनग्रहणस्य पूजार्थत्वे हि तत्सङ्गच्छते अन्यथा मतान्तरे तस्मिन् तत्सिद्धये तस्यावश्यकत्वात्तदसङ्गतिरित्युक्तम्, तन्न । तस्य विकल्पार्थकत्वेपि विभाषापदस्यास्वरितत्वेनात्रानुवृत्ते रप्रसक्तत्वेन स्फोटायनग्रहणानुवृत्त्यैवास्य शङ्कितविकल्पकत्वेन मतान्तरेऽस्य विधायकत्वासम्भवेन सामर्थ्यस्य सत्त्वात् । **भाष्यादाविति ।** भाष्ये कण्ठतोऽनुक्तत्वेऽपि पूर्वस्मिन्नेव निवृत्तमित्यत्र हेतोरनुक्त्या उक्तहेतोः प्रसिद्धताध्वननेनायमर्थ उक्तप्राय एवेति भावः । उक्तभाष्यस्य योगविभागसामर्थ्याभिप्रायकत्वेनापि योजयितुं शक्यत्वादुक्तं वृत्त्या-

**दावुक्तम् । गवाग्रमिति । सन्निपातपरिभाषाया अनित्यत्वाद्दीर्घ इति बोद्धव्यम् । व्यवस्थितेति । 'देवत्रातो गलो ग्राह इतियोगे च सद्विधिः। मिथस्ते न विभाष्यन्ते गवाक्षः संशितव्रतः ॥ तेन प्राण्यवयवे न' इति शाच्छोरिति सूत्रे भाष्ये स्पष्टम् । 'अग्नीत्प्रेषणे' इति सूत्रे अग्नीदग्नीन्विहरेत्यत्र एतद्व्यावृत्त्यर्थं वार्त्तिककृद् बहुलग्रहणघटितं न्यासं कृतवान् । तत्प्रत्याख्यानाय भाष्ये कृतेन विभाषेति योगविभागेन विभाषेत्यस्य व्यवस्थितविभाषात्वं ध्वनितम् । तथा 'अजेर्व्यघञपोः' इति च व्यवस्थितविभाषेति अजेर्वीतिसूत्रे भाष्ये स्पष्टम् । न च व्यवस्थितविभाषयेन्द्रे नित्यावङि सिद्धे 'इन्द्रे च' इति व्यर्थमिति वाच्यम् । भाष्योक्तातिरि-**

---

दिपरिग्रहार्थमादाविति । भाष्ये गवोद्धादिप्रयोगोऽप्यत्रार्थे मानम् । अनित्यत्वादिति । हलोनन्तरा इति निर्देशाद्गवाक्ष इति भाष्योदाहरणाच्चैकादेशविषये परिभाषाया अप्रवृत्तिरिति भावः । अत एव परिभाषेन्दुशेखरे दोषाः खल्वपि साकल्येन परिगणिता इत्युक्त्वानन्तरं इतोऽन्यत्र प्रवृत्तिरेवेत्यत्रैकादेशेन निर्देशस्सङ्गच्छत इति दिक् । **व्यवस्थितेती**ति । तत्त्वं च, विभाषाशास्त्रीयोद्देश्यतावच्छेदकव्यापकीभूतं यद्भावाभावान्यतरत्तद्विधायकत्वमिति केचित् । देवत्रात इत्यत्र, नुदविदेति नत्वं न । गल इत्यत्राचि विभाषेति नित्यं लत्वम् । विषे गर इत्येव । ग्राह इत्यत्र विभाषाग्रह इति जलचरे नित्यो णः । ज्योतिषि ग्रह इत्येव । हन्तीति पलायत इत्यादावितिशब्दयोगे लक्षणहेत्वोः क्रियाया इति प्राप्तयोश्शतृशानचोः पाक्षिकयोरभावः । मिथः एकस्मिन्नेव विषये ते नत्वादयो न विकल्प्यन्ते, किन्तु भिन्नविषये इति, संशित इत्यत्र शाच्छोरन्यतरस्यामिति नित्यमित्वम् । नेदं परिगणनं किन्तु भाष्योक्तानामेव ग्रहणमित्यत्र तात्पर्यग्राहकमित्याशयेनाह । **अग्नीत्प्रेषण इत्यादिना । अप्रामाणि-**

क्तव्यवस्थितविभाषाणामप्रामाणिकत्वज्ञापनार्थं तत्सत्त्वादित्याहुः ॥

इन्द्रे च । क चिद्भाष्यपुस्तके चशब्दरहितः पाठः । इन्द्रावयवेऽचीत्यर्थस्तेन षष्ठीतत्पुरुषोत्तरपदषष्ठीतत्पुरुषे गवेन्द्रयज्ञ इत्यादाववङ्सिद्धिः । अन्यथा वाक्ये गोशब्दस्येन्द्रपरत्वासम्भवेन समासाक्षेपादिन्द्रशब्दस्योत्तरपदत्व एव प्रवृत्तिः स्यात् ॥

---

कत्वेति । एवञ्चाभिनिविशश्चेति सूत्रे परिक्रयण इति सूत्रान्मण्डूकानुवृत्त्या अन्यतरस्यां ग्रहणमनुवर्त्य व्यवस्थितविभाषाश्रयणेन पापेऽभिनिवेश इति लक्ष्यसाधनं दीक्षितादीनामयुक्तमिति भावः । ज्ञापनार्थमिति । ननु ज्ञापनोत्तरं कथं स्वांशे चारितार्थ्यम्? प्रकृतस्य व्यवस्थितविभाषात्वस्य भाष्ये उक्ततया प्रामाणिकतया तेनैव सिद्धिरिति चेन्न । यं यं विषयमधिकृत्य यस्य यस्य व्यवस्थितविभाषात्वमुक्तं तत्तदतिरिक्तविषयकस्य तस्य तस्य तत्त्वमप्रामाणिकमिति ज्ञापने तात्पर्यात् ॥

गो शब्दस्येति । प्रतिपदोक्तैङन्तगोशब्दस्येत्यर्थः । तेन हेचित्रगो इत्यस्य तत्सम्भवेऽपि न क्षतिः । परत्वासंभवेनेति । विभक्त्या व्यवधानादिति भावः । नन्वनुकरणे तत्सम्भवः गौणमुख्यन्यायस्तु नात्र, संज्ञादे गौणलाक्षणिकस्य च तत्र गौणत्वात् । नचाभेदविवक्षायां प्रातिपदिकत्वाभावेन पदत्वाभावान्नैतदुदाहरणत्वसम्भव इति वाच्यम् । स्वमते भेदविवक्षाया एव सत्त्वात् । न च तदा विभक्त्या व्यवधानमिति वाच्यम् । अनुकरणं चानितिपरमिति निपातत्वेनाव्ययत्वेन सुब्लुकः प्रवृत्तेरिति चेन्न । तत्र ओदित्यनेन प्रगृह्यत्वे प्रकृतिभावस्यैव प्रवृत्तेरिति दिक् । समासाक्षेपादिति । वस्तुगत्या समासस्यैवोदाहरणत्वसम्भवेन तस्यैवोपस्थित्येति भावः । एतेनानुकरणे तत्सम्भवादाक्षिप्तस्य शाब्देऽनन्वयाच्चेदं चिन्त्यमित्यपास्तम् । उत्तरपदत्व एवेति । प्रत्यासत्त्येति भावः । स्यादिति । सिद्धान्तेऽजित्यनुवृत्तिसामर्थ्यमूलकस्य इन्द्रशब्दा-

'प्लुतप्रगृह्या' इत्यस्य प्रकृत्येति पाठे एव सामञ्जस्यं मत्वाऽऽह। अथ प्रकृतीति। न चैतद्घटकपदार्थज्ञानाय प्रगृह्यत्वादिकथनं पूर्वं युक्तमिति वाच्यम्। इन्द्रे चेत्यत्र प्राचीनपठितनित्यग्रहणस्य प्रामादिकत्वं बोधयितुं तदव्यवहितमेतत्सूत्रलेखनात्। तत्र

---

वयवेऽचीति व्याख्यानस्य सामर्थ्यान्नोक्तापत्तिरिति भावः। भट्टास्तु, इदं च नव्यरीत्या मनो नारोहति तथापि भाष्ये उक्तमित्येतावता सन्तोष्टव्यमिति दिक्। अन्येत्विदं प्राचामनुरोधेन समते तूत्तरपदे इत्यस्याध्याहारः तत्फलं च त्रिपदद्वन्द्वबहुव्रीह्योर्गविन्द्रदेवदत्ता गविन्द्रप्रिय इत्यादावप्रवृत्तिरत एव प्रकृतसूत्रे इन्द्रादाविति वक्तव्यमित्युक्तम्। तस्य चायं भावस्त्रिपदेऽतिव्याप्तिवारणाया-जादाविन्द्रशब्द उत्तरपद इत्यर्थे गवेन्द्रयज्ञेऽव्याप्ति रत इदं वक्तव्यन्तदर्थस्तु इन्द्रस्यादिर्योऽच्तदादावुत्तरपद इति नाव्याप्तिरितीन्द्रशब्दे योऽच्तद्वादावुत्तर-पद इत्यर्थमाश्रित्य तत्प्रत्याख्यातमित्याहुरित्याहुः। तत्तु न ग्रन्थस्वारस्यं पुष्णाति। तथा हि। अतीतिनिवृत्तमिति मूलप्रतीकमुपादाय अत एवेन्द्रे चेत्यारम्भसामर्थ्या न्नित्य मित्युक्तमित्युक्तम्। उद्योते च इन्द्रे चेत्यत्रेति कैयटप्रतीकमुपादय आरम्भसामर्थ्यादिति भाव इत्युक्तम्। अस्य सूत्रस्यैवमाशयकत्वेऽचीत्यनुवृत्तावपीन्द्रशब्दावयवेऽचि यदि स्यात्तदादावुत्तरपद एवेति नियमार्थताया आवश्यकतया सामर्थ्योक्तिरसम्बद्धैव स्यात्। किं चैवमर्थे पूर्वेणात्र विकल्पो दुर्वारः। व्यवस्थितविभाषात्वं भाष्योक्तोदाहरणविषयकमित्युक्त-मित्यलं सर्वग्रन्थविरुद्धकल्पनया ॥

**सामञ्जस्यमिति**। विभक्तिविपरिणामानपेक्षणान्नेतिपाठे षष्ठ्या विपरिणाम आवश्यक इति भावः। **प्रगृह्यत्वादीति**। न च सूत्रे प्लुतस्य प्राथम्यात् प्लुतादीति वक्तुमुचितमिति वाच्यम्। प्लुतसंज्ञायाः पूर्वमुक्तत्वेन प्लुतविधायकशास्त्रानुक्तावपि सुप्तिङन्तमित्यादाविव वाक्यार्थबोधे प्रतिबन्धकाभावेन प्रगृह्यसंज्ञायाः

**नित्यग्रहणे तदव्यवहितोत्तरैतत्सूत्रे तद्वैयर्थ्यं स्पष्टमेवेत्याशयेनाह । प्लुताः प्रगृह्याश्च वक्ष्यन्त इति । अचीत्यनुवर्त्तमाने पुनरज्ग्रहणं प्रत्यासत्त्या यत्राचि अनयोः प्रकृतिभावस्तदज्निमित्तकार्यस्यैव तेनाभाव इत्यर्थलाभार्थं, तेन जानू उ अस्य रुजति जानू अस्येत्यादौ सवर्णदीर्घरूपसन्धि र्भवत्येव । एहि कृष्णेति । 'दूराद्धूते च' इति प्लुतः । अत्र प्लुतस्याश्रयात्सिद्धत्वं बोद्धयम् । नित्यमिति किमिति ।**

---

पूर्वमनुक्तौ पदार्थोपस्थित्यभावे वाक्यार्थबोधानुदयेन तस्यैव पूर्वकथनमावश्यकमिति द्योतयितुं क्रमपरित्यागात् । तद्वैयर्थ्यमिति । ननु पूर्वसूत्रे नित्यग्रहणं पठद्भिरत्र तदपठितमेवेति कथमिदामिति चेन्न । तैरपि नित्यग्रहणफलस्यात्रैवोक्तत्वेन भाष्येऽत्रैव पठितत्वेन चेहैव प्रामाणिकः पाठ इत्याशयात् । **अनुवर्तमाने इति** । जानु, उ रुजति जनू रुजतीत्यादावेतत्प्रवृत्तिवारणायेति भावः । एतेनाज्ग्रहणानुवृत्तिसामर्थ्यादुक्तार्थोभविष्यतीत्याशङ्क्यानुवृत्तिसामर्थ्यात्तस्मिन्निति परिभाषायाः पूर्वस्येत्येतद्रहिताया अप्युपस्थितिस्सम्भाव्येतेत्याशयादिति वदन्तःपरास्ताः । जानू अस्येति । आद्यार्थकानल्विधावित्यनेन स्थानिवत्त्वनिषेधेऽपि परादिवद्भावेन प्रगृह्यतया प्रकृतिभावः । भाष्ये जान्वस्येति तु मय उञ इति वत्वेनेति बोध्यम् । ननु जानु उ अस्येतिस्थिते प्रकृतिभावस्य सन्धिकार्यापवादत्वेऽपि समानाश्रये तद्बाधनेन चरितार्थस्यास्यान्तरङ्गबाधने मानाभाव इत्येतन्मूलकेनापवादोऽपि यद्यन्यत्रेतिन्यायेनाभीष्टसिद्धिरिति प्रकृतार्थस्य नोपयोगः । तदुक्तमिण्ङशीनामित्यादि । न चैवं वरुणवाचकवशब्दादाचारक्विबन्तात्कर्तरि क्विपि उरित्यत्र समानाश्रये चरितार्थस्योठोऽक्षद्यूरित्यादौ वर्णमात्राश्रयेण वलि लोपेनान्तरङ्गेणोठो बाधापत्तिरिति वाच्यम् । तन्न्यायस्य वार्तिकोक्तलक्ष्यसाधर्म्यात्पूर्वोपस्थितनिमित्तकत्वरूपान्तरङ्गविषयत्वेनादोषात् । न च इण्ङशीनामिति परिगणनमिति न प्रकृतेऽस्य

**वाग्रहणनिवृत्त्यैव तल्लाभ इति प्रश्नः। मा भूदिति। नित्यग्रहण-सामर्थ्येन पुनर्विधानाद् बाधकविषयेऽप्ययमेवेति भावः॥**

---

विषयः, अत एव न लोकेति निर्देशस्सङ्गच्छत इति वाच्यम्। तादृशनिर्देशस्य उश्च उकश्च ऊक इति द्वन्द्वगर्भद्वन्द्वेन निर्वाहस्य कैयटेनोक्तत्वेन परिगणनत्वे मानाभावात्। अत एवाष्टाभ्य उङिति न्यासनिराकरणं ग्रन्थकृतस्सङ्गच्छते। एतेन अद्य ई ईहते अद्येहत इत्येवेति परास्तमिति चेन्न। नान्तः पादमिति पाठे निषेधाश्च बलीयांस इत्यस्य प्रवृत्तेस्तदेकवाक्यतया प्रकृत्येति पाठेऽपि प्रकृते अपवाद इति न्यायाप्रवृत्तेरङ्गीकाराच्च। उ अस्येत्यनयोः प्रथमं सम्बन्धे पश्चात् जानु इत्यस्य सम्बन्धे पूर्वोपस्थितनिमित्तकत्वस्य प्रकृतिभाव एव सत्त्वाच्च। यत्तु विष्णो इतीत्यादावन्तरङ्गेऽवादेशे प्रकृतिभावे च बहिरङ्गप्रगृह्यत्व-स्यासिद्धत्वात्प्रकृतिभावानापत्त्या संबुद्धौ शाकल्यस्येत्यस्य वैयर्थ्येन प्रकृतिभाव-विषयेऽन्तरङ्गपरिभाषाया अप्रवृत्तेः। अत एव पचेते इमावित्यादौ प्रकृति-भावसिद्धिरिति श्रीधरेण समाहितम्। तन्न। उक्तरीत्याऽन्तरङ्गप्रकृतिभाव-दृष्ट्या बहिरङ्गप्रगृह्यसंज्ञाया असिद्धत्वाभावकल्पनेऽपि प्रकृतिभावापेक्षयाऽन्त-रङ्गसवर्णदीर्घप्रवृत्तौ प्रतिबन्धकाभावादिति दिक्। **वाग्रहणनिवृत्त्येति।** विकल्पार्थकग्रहणेत्यर्थः। अवङ्स्फोटायनस्येत्यस्य विभाषाग्रहणानुवृत्त्या वैकल्पिकत्वमिति स्फोटायनग्रहणाद्वैकल्पिकत्वमिति मतद्वयसाधारण्यानु-रोधादेवमुक्तम्। अन्यथा विभाषाग्रहणेत्येव वदेत्। यद्यपि कतिषु चित्पुस्त-केषु विभाषाग्रहणेत्येव पाठो दृश्यते, तथापि वाग्रहणेतीत्येव सर्वव्याख्यानेषु प्रतीकदर्शनादयमेव पाठस्सांप्रदायिक इति बोध्यम्। **पुनर्विधानादिति।** योगविभागेन वाक्यभेदेनेति भावः। इदं कैयटाद्यनुरोधेन। स्वरीत्या तु नित्य-पदमेवार्थिकम्, तस्य प्रकृत्येत्यनेन संबन्धेनायमर्थो लभ्यते प्रकृतिभाव एव यथा स्यादिति। यथाश्रुतं भाष्यमत्रार्थेऽनुकूलम्। एवं च योगविभागादि-

क्लेशः कैयटादीनां मुधैव । स्पष्टं चेदं प्रकृतसूत्रे उद्योते इति बोध्यम् । बाधकेति । परत्वादिति भावः । यद्यपि नेति वाच्ये प्रकृत्येत्युक्त्या पूर्वेषामिव परस्याऽपि बाधस्सुवचः, नेति पाठेऽपि बाध्यसामान्यचिन्तया सर्वबाधः । तथापि ऋत्यक इत्यत्रापि बाध्यसामान्यचिन्तावश्यकत्वेन हरी ऋच्छत इत्यत्रापवादविप्रतिषेधाध्द्रस्वस्स्यादिति नित्यग्रहणम्, इकोऽसवर्ण इत्यत्र न बाध्यसामान्यचिन्तावश्यकता, तद्विषये यण एव प्राप्तेरिति बोध्यमिति भट्टाः । वस्तुतस्तु इको यणचि एचोऽयवायावः आद्गुण इत्येतैरेव स्वविषयस्य सर्वस्य व्याप्तत्वात्तावदपवादत्वमेवास्य न्याय्यम् । अन्येषां बाधस्तु परत्वादेवोचितः । किंचेकोऽसवर्णे ऋत्यक इत्यनयोर्वैकल्पिकत्वेन तदभावेऽस्य चारितार्थ्येन तदपवादत्वं न युक्तम् । एवं चेकोऽसवर्ण इति ह्रस्वसमुचित इति ग्रन्थस्स्वरसत उपपद्यते । एवं ऋत्यक इत्यत्र बाध्यसामान्यचिन्ताया नावश्यकता, परविप्रतिषेधेनापि सिद्धेः । अत एव ऋति ह्रस्वादुपसर्गाद्वृद्धिर्विप्रतिषेधेनेति सङ्गच्छते । अन्यथा अपवादविषये विप्रतिषेधासङ्गतिस्स्पष्टैव । एवं च ऋते चेत्यादिविषये प्रतिपदोक्तत्वेन पूर्वोपस्थितिकतया वृद्धिरेव, न पाक्षिकः प्रकृतिभावः । एतेन सुखार्त इत्यत्र प्रकृतिभावेन पाक्षिकवृद्धिनिवृत्तिरित्याचार्योक्तमपास्तम् । न च तत्रापवादो यद्यन्यत्रेतिन्यायात्सिद्धिः । पूर्वोपस्थितनिमित्तकत्वरूपान्तरङ्गत्व एव तत्प्रवृत्तेरन्यत्रोक्तत्वादिति दिक् । अयमेवेति । ननु इको यणचीति सूत्रानन्तरं पदस्य शाकल्यस्य ह्रस्वः ऋत्यक इति सूत्रमस्तु, एवं च प्रकृतिभावस्यैव परत्वेन नित्यग्रहणमपि न कार्यम् । न च ह्रस्वस्य दीर्घादनुवृत्त्यैव सिद्धे इक् ग्रहणमपि न कार्यमिति वाच्यम् । यातिरित्यत्राल्लोपस्य स्थानिवत्त्वेन यणापत्तेः । पूर्वस्यैव विधौ स्थानिवत्त्वेन सवर्णदीर्घाऽप्राप्तेरिति चेन्न । अप्लुतवदुपस्थित इत्यत्रासवर्णग्रहणानुवृत्तये यथान्यासस्यावश्यकत्वात् । अत एव ईचाक्रवर्मणस्येत्यत्र ईग्रहणतत्प्रत्याख्यानयोर्न

फलभेद इति केचित् । वस्तुतस्तु तत्रासवर्णग्रहणानुवृत्तेर्भाष्यविरोधादिना दूषयिष्यमाणतया इदं समाधानं न विचारकाणां हृदये पदमादधाति । परंत्विदमिह संप्रधार्यम् । सिद्धः प्लुतस्स्वरसान्धिष्वित्यस्य प्लुतप्रकरणविहितकार्यमात्रस्य सिद्धताबोधकत्वमिति पक्षे अग्ना इ इन्द्रः अग्नायिन्द्रः अग्ना इ आशा अग्नायाशा पटा उ उदकं पटावुदकं पटा उ आशा पटावाशा इत्यादौ यकारवकारयोर्विधायकस्य तयोर्व्यावचि संहितायामित्यस्य सिद्धान्ते अकस्सवर्णे इकोऽसवर्णे इत्युभयापवादत्वमिष्टं सिध्यति । अन्यतरेणैकेनाप्येतद्विषयस्याव्याप्तत्वात् । प्रकृतन्यासे तु असवर्णग्रहणाभावेन तद्विषयस्य सर्वस्याप्यनेन व्याप्तत्वात् ह्रस्वापवादत्वमेव स्यात्, न तु दीर्घापवादत्वमित्यनिष्टं प्रसज्येत । किञ्च प्लुतस्यैव सिद्धत्वमिति पक्षेऽपीको यणचीति सूत्रपठितस्य प्लुतपूर्वस्य यणादेश इति वार्तिकस्योक्तोभयापवादत्वमिष्टमुक्तरीत्या न सिध्येत् । छान्दसत्वेन समाधानं त्वगतिकगतिः । छन्दोऽर्थमपि बहुशः प्रयत्नदर्शनात् । किं च ऋत्यक इत्येतद्विषये बाध्यविशेषचिन्ताया एवाङ्गीकर्तव्यतायाः पूर्वमुपपादितत्वेन तस्य परत्वात्सवर्णदीर्घबाधकत्वमिष्टमत्रन्यासे न संभवति । सवर्णदीर्घस्यैव परत्वाद्बाधकत्वापत्तौ होतृ ऋकार इत्यादि न सिध्येत् । न च ऋत्यण इत्येव कर्तव्ये अक इति न्यासेन ऋकारादिविषयकताया अप्यस्य बोधनेन तदंशस्य सवर्णदीर्घापवादत्वमप्यस्य सुवचमिति वाच्यम् । अण इति न्यासे अण्परेण वा पूर्वेणवेति सन्देहनिवृत्त्युपायस्याश्रयणे ज्ञानगौरवात्तत्परिहारफलकतया अक इति न्यासस्य ऋकारादिविषयकताबोधनद्वारा सवर्णदीर्घापवादत्वबोधने सामर्थ्यविरहात् । न चेकारोकारयोः पूर्वेणैव सिद्धावकारमात्रविषयकताया एवास्य फलितत्वेनाकारमात्र एकोच्चारणीये प्रत्याहारग्रहणमृकारादिविषयकतामस्य बोधयतीति वाच्यम् । समासे इकारोकारयोर्ह्रस्वविधानाय प्रत्याहारग्रहणस्यावश्यकत्वात् । किं च सवर्णग्रहणानुवृत्तेरेव भाष्याभिप्रेतत्वेनैवं न्यासे फलान्तरकल्पनाभिनिवेशस्य कर्तुमशक्यत्वादित्यलं बहुना ॥

इकोऽसवर्णे । 'एङः' इत्यतः पदान्तादित्यनुवृत्तं प्रथमया विपरिणम्यत इत्याह । पदान्ता इति । वेति । ह्रस्वयणोर्विधानसामर्थ्यात्तु न विकल्पसिद्धिः । अपदान्तादौ यणश्चारितार्थत्वात् । सामर्थ्यादेवेति । चेन प्रकृतिभावाकर्षणेऽपि 'ऋत्यकः' इत्यत्र चानुकृष्ट-

---

प्रथमयेति । सूत्रे श्रुतेनेक इति प्रथमान्तेन सामानाधिकरण्यानुरोधादिति भावः । न चेक इति षष्ठ्यन्तमिति भ्रमितव्यम् । एतत्प्रकरणीयोद्देश्यतायाः प्रथमान्तपदप्रयोज्यत्वावधारणात् । न च पदान्तादित्यस्य सर्वत्र विभाषेत्यादौ सप्तम्यन्ततया विपरिणतत्वेन दिव उदित्यादौ तथैवोपयोक्ष्यमाणत्वेन च इहापि तथैव विपरिणामोऽस्त्विति वाच्यम् । सर्वथा विपरिणामस्यावश्यकत्वेन संभवति सामानाधिकरण्ये वैयधिकरण्यस्यान्याय्यत्वात् । विद्यतिक्रियाध्याहारे गौरवाच्च, प्रथमान्ततया विपरिणामस्यैवौचित्यमित्याशयात् । एतेनास्य चिन्त्यतोक्तिः परास्ता । यत्तु पदान्तादचीक इत्यन्वयस्तु युक्ततर इति तन्न । पञ्चम्यन्तपदोपस्थाप्यविशेषणस्य सप्तम्यन्तोपस्थाप्येऽन्वयस्य क्वापि शास्त्रेऽदृष्टत्वात् । गुणानां च परार्थत्वादिति न्यायाच्च न तादृशान्वयः । अत एवोभय निर्देश इति सङ्गच्छत इति दिक् । वृत्त्याद्युक्तं खण्डयति । ह्रस्वेत्यादिना । चानुकृष्टत्वेनेति । न चास्यानित्यत्वेन प्रकृतेऽप्रवृत्त्यैव सिद्धे किं सामर्थ्याश्रयणेनेति वाच्यम् । अव्यवहितपूर्ववृत्त्यनुकर्षकचकारस्थले नैषेत्यनुगतानित्यत्वस्वीकारेण प्रकृते चकारस्य व्यवहितानुकर्षकत्वेन परिभाषाप्रवृत्ते दुर्वारत्वात् - केचित्तु चकाराः द्विविधाः अनुवृत्त्यर्थकाः निवृत्त्यर्थकाश्चेति । तत्राव्यवहितानुकर्षका अनुवृत्त्यर्थकाः व्यवहितानुकर्षका निवृत्त्यर्थकाः निवृत्त्यर्थकविषयेऽयमिति स्वयं परिभाषेन्दुचन्द्रिकायामभिधायेह वस्तुतस्तु चकारस्यानुवृत्त्यर्थकत्वेन निवृत्त्यर्थकत्वाभावा चानुकृष्टपरिभाषाऽप्रवृत्तोरिदं चिन्त्यमित्याहुस्तद्भ्रमसात् । अस्यापि चकारस्य व्यवहितप्रकृतिभावानुकर्षकत्वेन तदुक्तरीत्या निवृत्त्यर्थ-

त्वेन तदसम्बन्ध इति तदर्थं ह्रस्वविधानसामर्थ्यस्याऽवश्यकत्वेन चकारो व्यर्थ इति भावः । भाष्ये स्थितमिति । प्रकृतसूत्रे इति शेषः । एतेन 'ह्रस्वाभावे प्रकृतिभावार्थं चकार' इति न्यासाद्युक्तमपास्तम् । चक्री अत्रेति तु संहिताया अविवक्षायां बोद्धव्यम् । 'न समासे सितिचेति' वार्त्तिकम् । पार्श्वमिति । 'पश्वा णस् वक्तव्यः' इति णस् । सिति चेति पदत्वम् ॥

---

कत्वेन पूर्वापरस्वग्रन्थविरोधात् । प्रकृतसूत्रे इतीति । लुटि च क्लृप इति सूत्रभाष्यं तु विधेयान्तरासम्बद्धचकारप्रत्याख्यानपरमिति तत्तात्पर्यम् । एतेनेति । भाष्ये चकारस्य फलान्तराकथनेन सामर्थ्यसिद्धार्थानुवादकत्वध्वननेनेत्यर्थः । चेन प्रकृतिभावानुकर्षणेऽपि ह्रस्वप्रकृतिभावयोरुभयोरपि शाकल्यमतसिद्धतया अन्यतरविरहेणान्यतरप्रवृत्तेरयोगात् योगविभागेन शाकल्यग्रहणासम्बन्धेन प्रकृतिभावविधाने तस्य नित्यतापातात् चक्रयत्रेत्यसिद्धिरित्यपि बोध्यम् । नन्वेवं चक्री अत्रेत्यस्य सिद्धिः कथमित्यत आह । चक्री अत्रेतीति । अत्र केचित् होतृशब्दस्य ऋशब्देन समासे होतृइतीत्यनुकरणे पूर्वान्तवत्त्वेन पदान्ते ह्रस्वविधिसामर्थ्यात्तदभावेपि ह्रस्वस्थले पर्जन्यन्यायेन ह्रस्वप्रवृत्तावपि सामर्थ्याभावः । किंच नदी अत्रेत्यादौ ह्रस्वे तदनुकरणे अणादिप्रत्यये यस्येति चेत्यनापत्तिः । यदन्निमित्तको ह्रस्व स्तदन्निमित्तककार्याभाव एव सामर्थ्यात्कल्प्यत इति प्रत्यासत्त्याश्रयणे तु गौरवमित्याहुः । तन्न । ह्रस्वस्य ह्रस्वविधानस्य स्वरसन्ध्यभावस्य फलत्वेनाकरे उक्तत्वेन तद्विरोधेन फलकल्पनाया अनौचित्यात् । नदि अत्रेत्यादौ यत्र ह्रस्वः प्रवृत्तः तत्र कार्यान्तराभावबोधनेन कृतार्थस्य ह्रस्वविधानस्य तदनुकरणे कार्यान्तराभावबोधने सामर्थ्यविरहाच्चेति दिक् । वार्त्तिकमित्येकवचनेनास्यैकत्वं सूचितम् । न च वृत्तौ नेत्येव न्यस्यतामिति वाच्यम् । समि अचिचदित्यसिद्धेः ॥

ऋत्यकः । सवर्णार्थमनिगर्थश्चेदम् । होतृॠकारः । ब्रह्मऋषिः । आर्च्छदिति । आटो धात्ववयवत्वेनापदान्तत्वादिति भावः । एतेन 'आटश्च' इति पुनर्वृद्धिविधानार्थेन चेन उस्योमाङ्क्षु पररूपबाधवत्प्रकृतिभावस्यापि बाधेनेष्टसिद्धिरित्यपास्तम् । समासेऽपीति । व्याख्यानादिति भावः । सप्तऋषीणामिति । 'दिक्संख्ये' इति समासः ॥

प्रकरणशुद्धये प्रकृतिभावविधायकसूत्रद्वयमुपन्यस्य प्लुतप्रगृह्या इति सूत्राकाङ्क्षितप्लुतप्रगृह्ययोर्मध्ये प्रथमोपात्तत्वात् प्लुतप्रकरणमारभते । वाक्यस्य टेः । वाक्यस्येत्यभावे पदस्य टेरित्यर्थेऽनन्त्य-

---

ननु अ इत्येव वक्तव्ये प्रत्याहारग्रहणाच्छाकल्यग्रहणासम्बन्धेऽस्य वैकल्पिकत्वं न स्यादत आह । सवर्णार्थमित्यादि । एतेनेति । वहूवृच्छक इत्यत्रैतद्वारणायावश्यानुवर्तनीयेन पदान्तग्रहणेनैवार्च्छदित्यादिसिद्धेश्चेत्यर्थः । अपास्तमिति । अनन्तरस्येति न्यायेन पररूपमात्रबाधकत्वापत्तेश्चेति बोध्यम् । अत्र सूत्र एव पदान्तग्रहणस्यानन्यथासिद्धफलसम्भवे उत्तरसूत्रे आवश्यकत्वकथनमाचार्याणां चिन्त्यम् । क्वचित्पुस्तकेषु वहूवृच्छक इत्यपि बोध्यमिति पाठोऽपि दृश्यते । व्याख्यानादिति । सित्साहचर्यमूलकादित्यर्थः ॥

ननु इन्द्रे चेत्यत्र प्राचीनपठितनित्यग्रहणस्य प्रामादिकत्वबोधनाय तदव्यवहितोत्तरं प्लुतप्रगृह्या इत्युपन्यस्यापि तत्राकाङ्क्षितप्लुतादिक मनुपन्यस्य एतत्सूत्रद्वयोपन्यसनमनुचितमत आह । प्रकरणशुद्धये इति । अथ प्रकृतिभाव इति प्रतिज्ञायाः प्रकरणमात्रविषयकत्वादिति भावः । अनन्त्यस्यापीत्येकवचनं येन सामान्यविहितोऽपि प्लुतः प्रत्यासत्त्यादिना एकस्मिन्पदे समर्प्यते तदभिप्रायेण यथा प्रत्यभिवाद इत्यादिना । तेन प्रत्यभ्युद्यमानवाचकपदस्य टेरेव

स्यापि पदस्य टेः प्लुतः स्यात्। तत्सत्त्वे तु वाक्यस्य टिरन्त्यपदस्यैव सम्भवतीति न दोषः। टिग्रहणाभावे प्लुतश्रुत्योपस्थिताच्परिभाषयाऽजन्तस्यैव स्यात्। टिग्रहणे तु सामर्थ्याट्टिनाऽचो विशेषणाद्व्यञ्जनान्तस्यापि भवति ॥

प्रत्यभिवादे। प्रणामादिभिराशिषं वाचयमानो गुर्वादिर्यत्प्रतिसंभाषते तत्प्रत्यभिवादः। न त्वाशीर्वचनं, शूद्रे आशीर्वादरूपप्रत्यभिवादाभावेनाशूद्र इत्यस्य वैयर्थ्यापत्तेः। अत एव भाष्ये 'अशूद्रे इति किं कुशलयसि तुषजक' इत्युक्तम्। अभिवादये इति। नमस्कारादिपूर्वमाशीरादि वाचयामीत्यर्थः। आयुष्मानित्यायुष्मत्त्वस्य विधेयत्वात्संबोधनविभक्त्यभावः। एधीति भवेत्यस्याप्युपलक्षणम्।

---

प्लुतो विधीयते। भाष्ये वाक्ये यावन्ति, तेषां सर्वेषां प्लुतः प्राप्नोतीति तु तदतिरिक्तविषयकमिति न विरोध इति बोध्यम्। अचो विशेषणादिति। सर्वादेशवारणाय परिभाषोपस्थिते रावश्यकत्वादिति भावः ॥

प्रत्यभिवाद आशीर्वचनं न प्रत्युक्तिमात्रमिति हरदत्तोक्तिं कटाक्षयन्नाह। प्रणामादिभिरिति। प्रत्यभिवादाभावेनेति। शूद्रविषये आशीर्वादस्य स्मृतिषु निषिद्धत्वादिति भावः। विधेयत्वादिति। सम्बोध्यतावच्छेदकत्वेनाभिमतो यो धर्म स्तदवच्छिन्नस्य यत्र सिद्धत्वं तत्रैव संबोधनविभक्त्यङ्गीकारादिति भावः। एधीति भवेत्यस्याप्युपलक्षणमिति। अत्र केचित् 'आयुष्मान् भव सौम्येति वाच्यो विप्रोऽभिवादने' इति स्मृतौ भवेत्येतदस्यापि एधीत्यस्याप्युपलक्षणम् तेन एधीति प्रयोगो न दुष्यतीत्याहुः। अन्ये तु एधीत्येतदुदाहरणं भवेत्युदाहरणान्तरस्याप्युपलक्षणं पूर्वोक्तस्मृति संवादात्। एधीत्युदाहरणे तु भाष्यप्रयोग एव मानमित्याहुः। अत्र आद्यव्या-

प्रत्यभिवादे शर्मादिप्रयोगो न नियतः । 'एचोऽप्रगृह्यस्य' इति सूत्रे प्रत्यभिवादेऽन्तस्यैचः प्लुतविधानात् । आयुष्मानेधि अग्निभूता३इ इति भाष्ये तदुदाहरणाच्च । शर्मादिप्रयोगे तु तट्टेरेव प्लुतः । 'शर्मान्तं नाम ब्राह्मणस्य' इत्यादिस्मृत्या तस्य नामावयवत्वबोधनात् । स्त्रियां नेति । स्त्रिया अपि नाम्नाऽभिवादप्रत्यभिवादे इत्यर्थस्य भाष्यसंमतत्वादिति भावः । नाम गोत्रं वेति । अभिवादप्रत्यभिवादे नामगोत्राभ्यामेव स्मृतिषु प्रसिद्धेः । तत्राधिकृतस्य पदस्येत्यस्य प्रत्यभिवादे इत्यनेन विशेषणात्प्रत्यासत्त्या प्रत्यभ्युद्यमानार्थवाचकस्यैव प्लुत इति भावः । तत्र नामशब्देन द्वादशेऽह्नि पित्रादिकृतं गृह्यते । अत एवाऽयुष्मान् भव दण्डिन्नित्यादौ प्लुतो

---

ख्यानमेव ज्याय इति भाति । अप्रगृह्यस्येति सूत्रे इति । वार्त्तिककृतेति शेषः । सूत्रेणेति तृतीयान्तस्यैव क्वचित्पाठः । शर्मान्तं नाम ब्राह्मणस्येति वचनान्नाम्न्यनन्तर्भूतस्यैव शर्मादेः प्रयोग इति प्राचीनोक्तमयुक्तमिति सूचयन्नाह । तट्टेरेवेति । प्राचीननये तु स न स्यात् । प्रत्यभ्युद्यमानवाचकपदस्यैव प्लुतविधानादिति भावः । ननु तत्प्रयोगे न भवत्येव प्लुतः प्रत्यभ्युद्यमानार्थवाचकपदटे र्वाक्यटित्वाभावात् । शर्मशब्दस्य च तादृशपदत्वाभावादत आह । नामावयवत्वेति । स्मृतावन्तशब्द श्चरमावयववाची तद्गुणसंविज्ञानो बहुव्रीहिरिति भावः । स्मृतिष्विति । 'असौ नामाहमस्मीति स्वं नाम परिकीर्तयेदित्यादिष्वित्यर्थः । तत्र नामपदं गोत्रस्याप्युपलक्षणमिति भावः । ननु स्मृत्या नामगोत्रान्यतरप्रयोगलाभेऽपि तदन्तवाक्य एवैतत्प्रवृत्तिरिति कथमत आह । तत्राधीत्यादि । वाचकस्यैवेति । तादृशपदस्य टिसत् यद्वाक्यस्य टिस्तस्यैव प्लुतविधानान्नामगोत्रयोर्वाक्यान्ते प्रयोग एवैतत्प्रवृत्तिरिति भावः । दण्डिन्निति । कृतं कुर्यान्न तद्धितमिति तद्धितान्तस्य नामत्वनिषेधादिति भावः ।

नेति स्पष्टं भाष्ये । भोराजन्येति । भोःशब्दस्य राजन्यवैश्यवाचक नाम्नश्च टेः प्लुत इत्यर्थः । भोःशब्दस्याप्राप्ते इतरयोस्तु नामत्वात्प्राप्ते विभाषेयम् ॥

दूराद्धूते । यावति देशे प्राकृतप्रयत्नोच्चारितं संबोद्ध्यमानो न शृणोति किं त्वधिकं प्रयत्नमपेक्षते तावद् दूरम् । दूरादाह्वानञ्च दूराद् बोधनस्योपलक्षणं, न तु सम्बोधनविभक्तिनियामकस्याभिमुखीकृत्यबोधनरूपस्य सम्बोधनस्योपलक्षणम् । 'आगच्छतु भवान्देवदत्त' इत्येवमाह्वानस्यापि सम्भवात् । अत एवाऽकडारसूत्रे नदीगुरुसंज्ञयोः समावेशो वात्सीबन्धुरित्यत्र गुरोरिति प्लुतो 'नदी बन्धुनि' इति पूर्वपदान्तोदात्तत्वञ्च फलमुक्तं भाष्ये । अन्यथाऽत्र सम्बोधनाभावेन गुरोरित्यस्याप्राप्त्या तदसङ्गतिः स्पष्टैव । उपलक्षणत्वादसत्यप्याह्वाने भवति–तदाह सक्तूनित्यादि । अत्रापि दूराद्धूते

---

भोशब्देन स्वरूपग्रहणमितरत्र नेति प्रदर्शनाय व्याचष्टे । भोशब्दस्येत्यादि । विभाषेयमिति । उभयत्र विभाषेत्यर्थः ॥

दूरान्तिकार्थेभ्यो द्वितीया चेति प्रातिपदिकार्थमात्रे पञ्चमी । दूरत्वस्याव्यवस्थितत्वादाह । यावतीति । स्पष्टं चेदं भाष्यादौ । बोधनस्येति । सामान्यतो बोधनस्येत्यर्थः । विशेषतो बोधनस्योपलक्ष्यत्वे भाष्यविरोधमाह । अत एवेति । आकडारसूत्रे इति । रेफान्तानुकरणस्यागन्तुना अकारेण निर्देशोऽयम् । समावेश इति । नदीसंज्ञा तदन्तस्य गुरुसंज्ञा वर्णस्येति तयोस्समावेशो बोध्यः । असत्यपीति । यथा नक्षत्रं दृष्ट्वा वाचं विसृजेदित्यादौ कालोपलक्षणत्वे रात्रौ नक्षत्रदर्शनाभावेऽप्युपलक्ष्यमाणकालस्य सत्त्वाद्विसृजति तद्वदिति भावः । यत्तु अत एवातोरोरितिसूत्रे

इत्येतदनुवृत्तस्य पदस्येत्यस्य विशेषणं, तेन हूयमानार्थवाचिनः पदस्यैव टेः प्लुतः । तच्च रूढं यौगिकं वेत्यन्यदेतत् ॥

---

अप्लुताद्ग्रहणव्यावर्त्यतया सुस्रोत ३ अत्र त्वमसीत्युदाहृतं संगच्छते । तत्र अत्र त्वमसीति वाक्यशेषेणाह्वानाभावस्य लाभात् । न च वाक्यशेषेण सन्निकृष्टदेशवृत्तित्वबोधनाद्दूरादाह्वानाभावात् कथं प्लुत इति वाच्यम् । गुरोरितिसूत्रे दूरत्वस्याविवक्षणादिति भट्टोक्तं तच्चिन्त्यम्, दूरत्वाविवक्षाया भाष्यासम्मतत्वस्य स्वेनैवोक्तत्वात् । भोशिवेत्यादौ गुरोरभावेन भोकर्तृ इत्यादौ ऋकारसत्त्वेन भो ओ इत्यादावनन्त्याभावेन च गुरोरनृत इत्याद्यंशाप्रवृत्तौ सन्नियोगशिष्टन्यायेन टेरित्यंशस्याप्यप्रवृत्त्यापत्तिरिति विभक्तसूत्रम् । किं च वृत्तिकृन्मते तत्र दूरत्वमविवक्षित मत्र तद्विवक्षितमिति व्यवस्थार्थमपि तदिति बोध्यम् । अन्यदेतदिति । आकडारसूत्रे वात्सीबन्धुरित्यत्र गुरोरित्यस्य प्रवृत्तिपरेण भाष्येण क्लृ३प्तशिखेत्यत्र तत्प्रवृत्तिपरेण ऋलृक्सूत्रभाष्येण च गुरोरित्यस्य यौगिकनाम्नि प्रवृत्तिबोधनात् तद्विषये सर्वत्र प्रकृतसूत्रप्रवृत्ते गुरोरितिसूत्रभाष्ये ध्वनितत्वेन चास्य यौगिकनाम्न्यपि प्रवृत्तिरभीष्टैवेति भावः । तत्र हि गुरोः प्लुतविधाने लघोरन्त्यस्य प्लुतप्रसङ्गोऽन्येन विहितत्वात् न वा अनन्त्यस्यापीतिवचनमुभयनिर्देशार्थमित्युक्तम् । दूराद्धूतेचेत्यस्य रूढ एव प्रवृत्तौ क्लृप्तशिखादावन्त्यस्य प्लुतविधायकतया अस्य चारितार्थ्यात् । रूढे देवदत्तादावस्य सिद्धत्वाद्दूराद्धूत इत्यस्य दुर्वारतया समावेशस्यापरिहार्यतया सामान्यतः प्रवृत्तस्य पूर्वपक्षस्य निराकरणायोगात्तदसङ्गतिस्स्पष्टैव । अत्र सामान्यतो नामग्रहणे तु यथाप्राप्तटिसमुच्चयार्थकापिना एतद्विहितस्य सर्वस्य प्लुतस्य क्रोडीकारादेकैकग्रहणेन न समावेश इति सर्वमवदातम् । तदेतद्ध्वनयन् वक्ष्यति अपिशब्दो यथाप्राप्तटिसमुच्चयार्थ इति दिक् ॥

**हैहेप्र । हैहयोः सम्बोधनद्योतकत्वेन केवलाभ्यामपि ताभ्यां सम्बोधनदर्शनेन च तयोरपि हूयमानार्थपदत्वाद् 'गुरोरनृतः'**

---

**केवलाभ्यामपीति** । नामग्रहणनिषेधस्थले आगच्छ हे इत्यत्रेत्यर्थः । न चैवं स्वसमभिव्याहृतपदशक्त्युद्बोधकत्वरूपद्योतकत्वं तत्र तयोर्न स्यात् समभिव्याहृतपदस्य तादृशस्याभावादिति वाच्यम् । स्वघटितवाक्यार्थान्वययोग्यपदार्थाक्षेपकत्वरूपद्योतकत्वस्यात्र विवक्षितत्वात् । अत एव प्रादेशं विमाय परिलिखतीत्यर्थके प्रादेशं विपरिलिखतीत्यत्र विमानक्रियाक्षेपकत्वेन वेर्द्योतकत्वं सिध्यतीति दिक् । **दर्शनेन चेति** । चो हेतौ यतस्सम्बोधनदर्शनमतो द्योतकत्वमिति भावः । यद्वा न केवलं द्योतकत्वं किन्तु कदाचिद्वाचकत्वमपीत्याह । **दर्शनेन चेति** । द्योतकत्ववाचकत्वयोर्यथा प्रयोगं व्यवस्थितत्वादिति भावः । **गुरोरनृत इत्येवेति** । यत्र हूयमानार्थकपदे अनन्त्यो गुरुरस्ति तत्रैवैतदिति प्रत्यासत्त्यनाश्रयणेन दूराद्धूते चेत्यत्र प्रत्यभिवाद इति सूत्रसाहचर्याद्वृद्धस्यैव नाम्नोगोत्रस्य च ग्रहणमिति वदतां मतेन चेदम् । गुरोरनृत इत्यत्र तु सर्वविधस्यापि हूयमानार्थपदस्य ग्रहणमाकडारसूत्रस्थभाष्यप्रामाण्यादिति तदाशयः । यदि तु गुरोरितिसूत्रस्यानन्त्यगुरुमत्येव प्रवृत्तिः दूराद्धूते चेत्यत्र सर्वस्यापि हूयमानार्थस्य ग्रहणमित्युच्युते तदा दूराद्धूते चेत्येवसिद्धे नियमार्थमिदम् । गुरोरित्यस्योपन्यासस्तु मतान्तरसाधारण्यायोपलक्षणमिति बोध्यम् । अत एव पूर्वेण हूयमानार्थस्य विधानेनाप्रप्त्या वचनमिति कैयटे पूर्वेणेत्यस्य दूराद्धूते चेत्यनेनेत्याशयकतयावतारितमुद्योतकारेण । एतेनेदं चिन्त्यमित्यपास्तम् । मतान्तरसाधारण्यानुरोधेनैवमुक्तेः । अन्ये तु एक हैहेग्रहणेन विनिगमनाविरहेणान्त्ययोः प्लुतसिद्धावन्यत् हैहेग्रहणं नियमार्थम् । अत एव एवकारः पौनर्वचनिक इत्युक्तम् पदमञ्जर्यामित्याहुः । अपरे तु राम हे इत्यत्रापि द्योतकतारूपार्थवत्त्वमादाय निर्वाहे प्रयोगग्रहणेन पुनर्विधानं निय-

इत्येव सिद्धे नियमार्थमिदमित्याह । हैहयोरेवेति । हैहेऽन्ते इत्येव

---

मार्थम् । अनर्थकार्थमिति भाष्यं वाचकत्वाभाववदर्थमित्यर्थकं, हरदत्तग्रन्थोप्ये-
तदाशयक एवेत्याहुः । एतत्सर्वं हैहेन्त इत्याद्युत्तरग्रन्थाननुगुणत्वादुपेक्ष्यम् ।
ननु गुरोरित्यस्य दूराद्धूते चेत्यस्य च वाक्यान्त्यपद एव प्रवृत्त्याऽनन्त्ययोस्तयोः
प्लुतविधानार्थमेतत् । अन्यथा नियमफलस्यैव दुर्निरूपत्वात् । एवं च कथं
नियामकत्वमस्येत्यत आह । हैहेन्त इत्यादि । हैहेन्त इति बहुव्रीहिः,
तत्पुरुषत्वे त्वन्त इति भावप्रधानो निर्देशः, तयोरन्तत्वे इत्यर्थः । अयं भावः ।
हेहयोर्हूयमानार्थत्वे हैहयोरिति न्यासे किं वाक्यावयवयोस्तयोष्टेः प्लुत
इत्यर्थो वा, उत हैहेन्तवाक्यावयवहूयमानार्थपदस्य टेःप्लुत इत्यर्थो वा विव-
क्षितः । आद्ये वाक्यान्त्ययोः पूर्वेण सिद्धेऽप्यनन्त्ये विध्यर्थं स्यादिति हे रामे-
त्यादौ प्लुतसमावेशः स्यात् । द्वितीये रामहे इत्यादौ रामपदटेः प्लुतस्स्यात् ।
तत्प्लुतहैहेप्लुतयोस्समावेशश्च स्यात् । अनन्त्ययोः हैहयोः प्लुतो न स्यात् ।
प्रयोगे हैहयोरिति न्यासेत्वाद्यार्थरीत्याऽनन्त्ययोः प्लुते सिद्धेऽतिरिच्यमानं
प्रयोगग्रहणमन्त्यानन्त्यसाधारण्येन प्लुतप्रापकं भविष्यति द्वितीयार्थे त्वभिमते
हैहेन्त इत्येव वदेत्। तथा चानेनानन्त्ययोः प्लुतसिद्धान्त्ययोः पूर्वेण च
सिद्धौ सामान्यतः प्लुतबोधनं नियमार्थमतो न पूर्वोक्तदोषावकाश इति ।
अत्रेदं बोध्यम् । हैहेग्रहणं तु हैहयोरित्यस्य प्रयोग इत्यनेनान्वयभ्रमवारणाय,
तथा सत्यन्त्यानन्त्यसाधारण्येन तत्प्रयोगे हूयमानार्थपदस्य वाक्यघटकस्य
प्लुत इत्यर्थे अनन्त्यस्य प्लुतार्थं स्यात् । एवं च प्लुतसमावेशस्स्यात् । रामहे
इत्यादौ रामशब्दे प्लुतापत्तिश्च । हैहेप्रयोगे इत्युक्तावपि पूर्वोक्त एव दोषः।
अतो यथान्यास आदृतः । यदि तु हैहेप्रयोग इति समस्तपाठेन सिद्धे व्यस्त-
पाठेन तयोः प्लुतस्थानित्वबोधनात्कालाध्वनोरत्यन्तसंयोग इत्यत्रेव प्रत्या-
सत्त्या इष्टसिद्धिरित्युच्यते, तदा प्रथमं हैहेग्रहणं शक्यमकर्तुमिति । नन्वयं

सिद्धे प्रयोगग्रहणादनन्त्ययोरपि–तदाह। हे३ रामेति। केचित्तु एकं हैहेग्रहणमनन्त्यार्थम्। अन्यथा वाक्यस्य टेरित्यधिकारादन्त्ययोरेव तयोः स्यात्–तदाह। हे३ रामेति। प्रयोग इति तु यत्र सम्बोधनोत्तरं तयोः प्रयोगस्तत्र तेनैवाभिमुख्यस्य द्योतितत्वेन द्योत्याभावादनर्थकयोरपि तयोः प्लुतार्थं—तदाह। राम है३ इति। अन्यथाऽप्रयुक्तयोः

---

नियमपक्षो हैहयोर्हूयमानार्थकत्वं विना न सम्भवति। भाष्यकैयटाभ्यां तु तयोर्हूयमानार्थकत्वाभाव एव लभ्यते। तथाहि, भाष्ये हैहेग्रहणस्य हैहयोः प्लुतिः प्रयोजनमित्युक्त्वा देवदत्त हे इत्युदाहृतम्। यदि तयोर्हूयमानार्थपदत्वं, पूर्वेण सिद्धे इदमसम्बद्धमेव स्यात्। कैयटे च पूर्वेण हूयमानार्थस्य पदस्य वाक्यान्तस्य टेः प्लुतविधानात् हैहयोर्न प्राप्नोतीति वचनमित्युक्तम्। एवं च तयोस्तदर्थत्वाभावः स्पष्टं लभ्यत इत्यत आह। केचित्त्विति। एकं हैहेग्रहणमिति। हैहेप्रयोग इति समासघटक हैहेग्रहणमित्यर्थः। हैहयोरिति त्वित्त्युत्तरग्रन्थस्वारस्यात्। अन्त्ययोरेवेति। अधिकृतस्य वाक्यस्येत्यस्य टेरित्यनेन क्लृप्तसम्बन्धस्य त्यागे मानाभावादिति भावः। हैहेन्त इत्येव सिद्धे प्रयोगग्रहणेनोभयार्थत्वसिद्धिरिति तु न, प्रयोगग्रहणस्यानर्थकार्थत्वमात्रफलकताया एव भाष्ये उक्तत्वात्। अनन्त्यार्थत्वे प्रयत्नान्तरस्यैव कृतत्वाच्च। एतेनेदं चिन्त्यमित्यपास्तम्। 'यत्त्वस्य चिन्त्यतानिरसनार्थं हैहेग्रहणमिति प्रतीकमुपादाय तद्विशिष्टग्रहणमित्यर्थः, अन्यथा प्रयोगग्रहणसामर्थ्यादनन्त्यार्थताया अपि सुवचत्वादन्त्ययोरेवेत्युत्तरग्रन्थासंगति' रित्याहुस्तन्न। तथा सत्येकमिति विशेषणस्यानन्वितार्थत्वापाताद्वैयर्थ्यापाताच्च। भाष्यकृत्कृतप्रयत्नस्य वैयर्थ्यापाताच्च। ननु द्विर्हैहयोरित्येवास्तु, एकमनन्त्यार्थं, द्वितीयमन्त्यार्थं स्यात्। न चैकस्य वैयर्थ्यं, तदभावे हैहेन्तवाक्ये निर्दिश्यमानयोस्तयोस्स्यात्। अनन्त्ययोर्न स्यादित्यतस्तत्सत्त्वात्। तथा च प्रयोगग्रहणं किमर्थमित्यत आह। प्रयोग इति त्वित्यादि। अनर्थ-

**प्लुतासंभवात्तद्वैयर्थ्यं स्पष्टमेव । हैहयोरिति तु तयोर्हूयमानार्थपदत्वाभावादप्राप्ते विध्यर्थम् । नियमे तु न मानं, तेनात्र प्लुतसमावेशः । एतत्सर्वं भाष्यकैयटयोः स्पष्टमित्याहुः । यत्तु अयं हूयमानार्थपदस्य**

---

**कयोरिति** । आनर्थक्यं च ततो बुबोधयिषाविरहात्, शस्त्रीशब्दे स्त्रीशब्दस्येवेति बोध्यम् । एतेन द्योतितत्वेन द्योत्याभावादित्यसङ्गतं, द्योत्यैक्येऽपि व्यतिलुनीत इत्यादौ द्योतकसमुच्चयस्य दृष्टत्वादित्यपास्तम् । बुबोधयिषाविरहप्रतिपादनेऽस्योपयोगात् । अत एव भाष्ये हैहयोः प्लुत्यर्थमित्युक्त्वा देवदत्त हे इत्युदाहृत्य प्रयोगग्रहणमनर्थकार्थमित्यस्यापि देवदत्त हे इत्युदाहरणं संगच्छते । अन्यथा पूर्वोदाहरणेऽप्यानर्थक्ये तदसङ्गतिः स्पष्टैव । मम तु पूर्वत्र बुबोधयिषा, उत्तरत्र नेति वैलक्षण्यं सूपपादमिति दिक् । अनर्थकस्य पदत्वं तु निपातस्यानर्थकस्येति प्रातिपदिकत्वाद्बोध्यम् । **तद्वैयर्थ्यमिति** । सति तु प्रयोगग्रहणे तत्सामर्थ्यादानर्थक्ये सत्यपि तयोः प्रयोगः, तयोश्च प्लुतसिद्धिरिति भावः । **हूयमानार्थपदत्वाभावादिति** । आभिमुख्यद्योतकत्वेऽप्यभिमुखीभवनविषयकज्ञानाश्रयरूपहूयमानार्थत्वाभावादिति भावः । स्पष्टं चेदमुद्योते । यत्तु नामगोत्रयोरेव तद्वृत्तित्वात्, अत एव तच्च रूढमिति प्रागुक्तविरोधो नेति तन्न । वात्सीबन्धुरित्यादौ गुरोरनृत इति प्रवृत्तिप्रदर्शनपरभाष्यविरोधात् । स्वोक्तं प्रमाणयति । **एतत्सर्वमिति** । **आहुरिति** । अत्रारुचिबीजं तु भाष्ये प्रथमहैहेग्रहणस्य प्लुत्यर्थताया उक्तत्वेन तद्वैपरीत्येन कथनमसंङ्गतमिति। न च भाष्यस्योक्त एवाशय इति वाच्यम् । हैहेप्रयोगे हैहेग्रहणं हैहयोः प्लुत्यर्थमित्यत्र प्रयोगग्रहणविशिष्टस्योपादानदर्शनात्पुनर्हैहेग्रहणं किमर्थमनन्त्ययोरपि यथा स्यादित्यत्र पुनरित्युक्तेश्च तादृशाशयकत्वस्य वक्तुमशक्यत्वात् । अत एव वृत्तौ पुनर्हैहयोर्ग्रहणमनन्त्ययोरपि यथा स्यादित्यत्र सविभक्तिकनिर्देशस्संङ्गच्छत इति दिक् । ननु सर्वथा समावेशो दुर्निरूपः, अस्य सत्यपि संभवे बाधनं भवतीति न्यायेनैतद्विषये उत्सर्गाप्रवृत्तेरिति हरदत्तोक्तं निराकर्तुमनुवदति । **यत्त्वित्यादि** । **तस्याप्राप्तेरिति** । यत्तु गुरोरनृत इत्यस्य

टे. प्लुतस्य बाधकस्तत्र कौण्डिन्यन्यायादिति, तन्न। शिव हे इत्यादौ तस्याप्राप्तेस्तन्न्यायविषयाभावात् ॥

गुरोर। दूराद्धूत इत्यनुवर्त्तते, तेन दूराद्धोधन एव प्रवृत्तिः—तदाह। दूराद्धूत इति। दूरत्वञ्चात्राविवक्षितं, तेन प्रत्यभिवादे भोरा-

---

भिन्नपदत्वेऽपि प्रवृत्तिस्तथा चापवादत्वं सुस्थम्। अत एव गुरोरनृत इति सिद्धे नियमार्थमिति स्वरसत उपपद्यत इति तन्न। अनुदात्तं पदमित्येव सिद्धे एकैकग्रहणवैयर्थ्यशङ्कापरभाष्यविरोधात्। तथाङ्गीकारेऽप्यनन्त्यगुर्वभाववत्यस्य चारितार्थ्येनापवादत्वस्य दुर्निरूपत्वात्। तदेतत् ध्वनयंस्तादृशे चारितार्थ्यं दर्शयति। शिव हे इतीति ॥

दूराद्धोधन एवेति। दूराद्धूते चेति सूत्रविषय एवास्य प्रवृत्तिरिति भावः। अत एव भाष्ये गुरोः प्लुतविधाने लघोरन्त्यस्य प्लुतप्रसङ्गोऽन्येन विहितत्वादिति वार्तिके अन्येनेत्यस्य दूराद्धूते चेति विवरणं सङ्गच्छते। वृत्तिकृदुक्तरीत्या प्रत्यभिवादे इति सूत्रविषयेऽप्यस्य प्रवृत्तौ विशिष्योक्तिरसम्बद्धा स्यात्- न च दूराद्धूते चेति प्रत्यभिवादे इत्यादेरप्युपलक्षणमिति वाच्यम्। तथा सति प्राथम्यात्प्रत्यभिवादे इत्यस्यैव वक्तुमुचितत्वात्। अत एवान्येनेत्येकवचनमपि स्वरसत उपपद्यते। सूत्रशेषे एकैकग्रहणमनुदात्तं प्रश्नान्ताभिपूजितयोरिति विहितप्लुतसमावेशनिवृत्त्यर्थमिति भाष्यस्य त्वेतद्विहितप्लुतमनूद्यानुदात्तरूपगुणमात्रं तेन विधीयत इत्याशय इति न तद्विरोधः। अत एवानुदात्तं प्रश्नान्ताभिपूजितयोरिति सूत्रे वृत्तौ नानेन प्लुतो विधीयते, किं तु दूराद्धूतादिषु विहितस्य प्लुतस्यानुदात्तत्वं गुणमात्रं विधीयत इत्युक्तम्। यद्यपीदं वृत्तिग्रन्थे न दृश्यते, तथापि पाठान्तरतया हरदत्तग्रन्थे दर्शितमिति बोध्यम्। वृत्तिकृन्मतं दर्शयति। दूरत्वं चात्राविवक्षितमिति। भोराजन्येत्यस्यो-

जन्येत्यस्य विषयेऽप्यस्य प्रवृत्तिः । तद्विषयेऽप्युपलक्ष्यबोधनसत्त्वात् । सर्वप्लुतप्रकरणस्य तु न शेषः । तथा हि सति वाक्यस्य टेरित्यनेन सहैवास्याप्यधिकारत्वमेव कुर्यात् । एतत्त्रयविषयमेवेदमिति प्रकृतसूत्रे अनुदात्तं प्रश्नान्तेति सूत्रे च वृत्तौ स्पष्टम् । अपिशब्दो यथाप्राप्तटिसमुच्चयार्थः । यदि तु गुरोः सन्निधानादन्त्यो गुरुरेव समुच्चीयते

---

पन्यासस्तु प्राचामिति योगविभागो नास्तीत्यभिप्रायेण । तत्सत्त्वे तु प्रत्यभिवाद इत्यनेनैव राजन्यविशोर्विकल्पसिद्धेस्तयोर्ग्रहणस्याकर्तव्यतया भोशब्दस्यानन्त्यगुरुमत्त्वाभावेनैतदविषयतया च नैतदुपन्यासावश्यकता । एतत्त्रयेत्यप्येवमेवेति बोध्यम् । एतत्त्रयेति । प्रत्यभिवादे दूराद्धूते च भोराजन्येत्येतत्त्रयेत्यर्थः । यत्तु भोराजन्येति विहाय हैहेप्रेत्येतत्साधारणत्रित्वमुक्तं तन्न । तस्य नियामकत्वपक्षे तद्विषये एतदप्रवृत्तेः । विधित्वपक्षेपि तद्विषये एतत्प्रवृत्तौ फलाभावादेतदप्रवृत्तिमन्तरा विधित्वालाभाच्चेति दिक् । वृत्ताविति । आद्ये प्रत्यभिवाद इत्येवमादिना यः प्लुतो विहितस्तस्यैवायं स्थानिविशेष उच्यत इति हरदत्तप्रदर्शितपाठान्तरे, अन्त्ये पूर्वोक्तपाठान्तरे चेति भावः । टिसमुच्चयार्थ इति । तस्य समुच्चयेन पूर्वशास्त्रविहितप्लुतोऽनूद्यते, असमावेशार्थं नानेनापूर्वो विधीयते, गौरवात्फलाभावाच्च । अत एव दूराद्धूते चेत्यस्य आगच्छ भो माणवकदेवदत्त इत्युदाहृतं वृत्तौ । अन्यथा एतदविषयस्य शिवेत्यादेरुदाहर्तव्यतया एतद्विषयोदाहरणमसम्बद्धमेव स्यात् । एतद्विहितानामेवेत्युत्तरग्रन्थे त्वनुवादसाधारणमेव विधानं विवक्षितमिति बोध्यम् । यद्वा टेरप्यनेनैव प्लुतः, समुच्चयबलादेतद्विषये दूराद्धूते चेत्यादेरप्रवृत्तिरेव । एवं चैतद्विहितानामेवेति स्वरसत उपपद्यते । वृत्तौ देवदत्तादेस्तदुदाहरणं तु नैतत् प्लुतविधायकं, किं तु स्थानिविशेषनिर्णायकम्, एवं च पूर्वशास्त्रैरेव सर्वत्र प्लुतः, एकैकग्रहणमपि युगपत्स्थानित्वनिवर्तकमेवेत्याशयकमिति दिक् ।

तदाऽन्त्यलघुमति—अनन्त्यगुरावेतस्य, अन्त्यलघौ दूराद्धूते चेत्यादीनां दुर्वारत्वेन प्लुतसमावेशापत्तिः। एकैकग्रहणं त्वेतद्विहितानामेव पर्यायार्थं स्यात्। तेन यत्रान्त्योऽपि गुरुरनन्त्यगुरुद्वयं वा तत्रैव पर्यायः स्यात्। व्याख्यानाच्चैतदर्थलाभः। अनन्त्यस्यापीति। अपिनाऽन्त्यस्य गुरोरगुरोश्चेत्यर्थः। पर्यायार्थमिति। अन्यथा समावेशः स्यादिति भावः। अनुदात्तं पदमिति तु त्रिपाद्यां न प्रवर्त्तत इति तत्रैव वक्ष्यते। प्राचामिति तु पक्षे सर्वेषां प्लुताभा·

---

अन्त्यलघुमतीति। असुब्वत इति भाष्यप्रयोगान्न कर्मधारयादिति क्वाचित्कमिति भावः। इत्यादीनामिति। वृत्तिकृद्रीत्येदम्। आदिशब्दः प्रकारे। व्याख्यानाच्चेति। अनन्त्यस्यापीत्येतदुक्तिसामर्थ्यात्। अन्यथा एकैकग्रहणमहिम्ना वाक्यस्य टेरित्यधिकारबाधे अन्त्यानन्त्यगुरावेतत्प्रवृत्तौ तद्वैयर्थ्यं स्यादिति भावः। नन्वनुदात्तं पदमिति परिभाषया उदात्तद्वयासमावेशे तत्सन्नियोगशिष्टस्य प्लुतस्याप्यसमावेशस्सिद्ध इत्यत आह। अनुदात्तं पदमित्यादि। न प्रवर्तत इति। कार्यकालेऽपीति शेषः। एतद्विषये कार्यकालपक्ष एव नेति तु न सम्यक्। प्रकृतसूत्रे अनुदात्तं पदमिति सूत्रे च भाष्ये कार्यकालस्योक्तत्वात्। अत एव देवदत्त्येत्यादावामन्त्रिताद्युदात्तत्वे प्लुतसन्नियुक्तोदात्तस्य तस्य समावेशसिद्धिरिति स्पष्टमन्यत्र। तदाह। वक्ष्यत इति। नन्वेतद्विषये कार्यकालस्याप्यभ्युपगमे सति फले त्रिपाद्यामपि तत्प्रवृत्तेस्स्वरचतया पर्यायस्सिद्धस्तथा च प्राग्ग्रहणमन्तरा एकैकग्रहणेन विकल्पोपि सिध्यतीत्यपरमनुकूलम्। स्पष्टं चेदं भाष्ये इति चेन्न। अनुदात्तं प्रश्नान्ताभिपूजितयोरित्येतद्विषये उदात्तानुदात्तप्लुतसमावेशाभावार्थं तस्यावश्यकतया तेनैवान्यत्र समावेशाभावे सिद्धे फलाभावात्परिभाषा न प्रवर्तत इत्याशयात्। तदेतदभिसन्धायाह। प्राचामिति त्विति। यत्त्वनुदात्तं पदमिति परिभाषाया

वार्थम् । विकल्पत इति । सा च व्यवस्थितविभाषा । तेनाग्नीदग्नीन्विहरेत्यादौ 'अग्नीत्प्रेषणे' इति न । भाष्ये तु विभाषा पृष्टेति सूत्रे विभाषेति योगविभागो दर्शितः । साऽपि व्यवस्थितविभाषेति कैयटः । अत एव ओश्रावये परस्येति वक्तव्यमिति वचनस्य अग्नीदग्नीन् इत्यादौ प्लुतनिवृत्तये कृतस्य विभाषेति योगविभागेन प्रत्याख्यानं भाष्योक्तं सङ्गच्छते । एवञ्च भाष्यसंमतैषा व्यवस्थितविभाषेत्याहुः ॥

अप्लुतवदित्युक्त्या प्लुत इत्यध्याहारस्तदाह । प्लुतोऽप्लुतवदिति । प्लुत एव निषिद्ध्येतेति तत्स्थाने

---

उदात्तस्वरितान्यतरविधायकशास्त्रत्वस्य लिङ्गत्वेन त्रिपाद्या असिद्धत्वात्तादृशशास्त्रत्वप्रकारकज्ञानाभावादेतस्यास्त्रिपाद्यामप्रवृत्तावुदात्तप्लुतसमावेशाभावायैकैकग्रहणमित्याशयमाविश्चक्रुस्तन्न । प्रकृतपरिभाषया समावेशाभावप्रतिपादकप्रकृतभाष्यविरोधात् । व्यवस्थितविभाषात्वं प्रमाणयति । अत एवेति । भाष्यानुक्तेत्यत्र भाष्यासम्मतेत्येवार्थ इति भावः । ननु गुरोश्चानृत एकैकस्य प्राचामित्यस्तु, चकाराट्टेरेव समुच्चयान्नानुपपत्तिरिति चेन्न । अनन्त्यगुरुसमुच्चयापत्तेः । न च गुरुग्रहणं व्यर्थम् । गुरुमत्येवास्य प्रवृत्तिरित्येवमर्थं तत्सत्त्वात् । सिद्धान्त इव व्याख्यावलम्बने तु न कश्चिद्दोष इति भट्टाः । तत्र व्याख्यानमनन्त्यग्रहणमूलकमेवेत्युच्येत, तदा यथासूत्रमेव साध्विति दिक् ॥

अध्याहार इति । निर्धर्मिकारोपस्याप्रसिद्ध्या धर्म्युपादानस्यावश्यकतया अनुपस्थिताध्याहारकल्पनापेक्षया प्रतियोगितयोपस्थितस्यैवाध्याहारो न्याय्यः । किं चाप्लुतस्याप्लुतसादृश्यविधाने फलाभावेन प्लुत एव धर्मितया निर्दिश्यत इति भावः । तत्स्थाने इति । न च वद्ग्रहणाभावेऽपि षष्ठ्या अश्रु-

**अप्लुतस्य विधानेन स एव निवर्त्तेतेत्यर्थः । प्रसज्यप्रतिषेधेन व्याख्यानं तु न युक्तं, गौरवात् । किं च तथा सति प्लुतप्रकरणे एव नोपस्थित इति वदेत् ।**

---

तत्वेनादेशत्वानिर्णयात् प्लुतोऽप्लुत इत्युक्त्या प्लुते प्लुतभिन्नत्वस्यारोपं विना दुर्लभतया गोतो णिदित्यादाविव विनापि वतिं तदर्थावगतिरिति वाच्यम् । षष्ठ्यभावेऽपि नाभिनभं चेत्यादावादेशत्वनिर्णयात् । आदेशविधिप्रकरणाच्च वद्ग्रहणाभावे निरुक्तार्थापत्तिरित्याशयात् । **अप्लुतस्य विधाने इति ।** दीर्घ इति वाच्ये एवमुक्त्या अन्तरतमपरिभाषाबाधेन पर्युदासमहिम्ना हलामप्राप्त्या ह्रस्वस्य दीर्घस्य च विधाने इति भाव इति भट्टाः । अन्ये तूद्देश्यस्य प्लुतस्योपस्थितिर्दीर्घ इति न्यासे न स्यादित्यप्लुत इत्यस्य चरितार्थतया अन्तरतमपरिभाषाबाधे मानाभावेन दीर्घ एवात्रादेशो न्याय्य इत्याहुः । ननु प्रसज्यप्रतिषेधेन व्याख्याने यथाश्रुतमेवास्त्वित्यत आह । **प्रसज्यप्रेति । गौरवादिति ।** अयं भावः । अप्लुत इत्यनेन ह्रस्वदीर्घयोः दीर्घस्य वा विधानेऽपि सन्धिकार्यप्रवृत्त्या प्लुतस्य निषेधेऽपि तत्प्रवृत्त्या फले विशेषाभावेनासमर्थसमासाश्रयणप्रयुक्तं गौरवमत्र पक्षे इति । नन्व इति निपातस्य सम्बोधनार्थकस्य निपात एकाजिति प्रगृह्यत्वे दूराद्धूते चेति प्लुते पर्युदासपक्षे ह्रस्वदीर्घयोर्दीर्घस्यैव वा श्रवणं स्यात्, प्रसज्यप्रतिषेधे तु ह्रस्वस्यैव श्रवणं स्यादिति फलभेदेन फलमुखगौरवं न दोषायेत्यत आह । **किं चेति । इति वदेदिति ।** पर्युदासपक्षे ह्रस्वदीर्घयोर्दीर्घस्यैव वा श्रवणाय तथा नोक्तमिति भावः ॥

ननु प्लुतप्रकरणे तथा पाठे यस्यानन्तरं पाठस्तस्यैव निषेधः स्यात् । इह करणे तु सर्वस्यापीति फलभेदात्तथा नोक्तम् । न च वाक्यस्य टेरित्यनेन सहास्याधिकारत्वे तात्पर्यमिति वाच्यम् । तथा सति सर्वविधिष्वपि सम्बन्धादुपस्थिते इत्यस्य वाक्येन पदेन टिना वा सम्बन्धे देश्व-

दचेति सोमसु ३ दितीत्यादावपि निषेधापत्तिः । इह पाठे तूपस्थित इत्यस्य प्लुतस्थानिना अचैव सम्बन्धान्न तथेति फलभेदापत्तेरिति चेन्न । वाक्यस्य टे रित्यतः प्राक् नोपस्थिते प्लुत इति निषेधविधिरस्तु प्लुत इत्यस्योत्तरत्रानुवृत्तिरस्तु निषेधशास्त्रे साक्षात् प्लुतस्थानिनैवाचा उपस्थित इत्यस्य सम्बन्धोऽस्तु पुरस्तात्प्रतिषेधारम्भादिण्णिषेधवत् स्वाविषये प्राप्तस्य सर्वस्यापि निषेधो भवतीति न फलभेद इत्याशयात् । नन्वत्र न्यासे ईचाक्रवर्मणस्येत्यत्र प्रकरणादचीत्यस्य सम्बन्धे अवसाने अप्रवृत्तिस्सिध्यति त्रिपाद्यां तथा न्यासे त्ववसाने तत्प्रवृत्तिर्दुर्वारेति फलभेदः । न च तत्राचीति कर्तव्यमित्याशय इति वाच्यम् । तथा सति लाघवानवकाशात् । ये त्वचीति तत्र करणेऽपि लाघवमित्याशयं वदन्ति ते मान्याः । पदलाघवस्य वर्णलाघवस्य वा वक्तुमशक्यत्वादिति चेन्न । नोपस्थिते इत्यस्य त्रिपाद्यां न्यासेऽपि ईचाक्रवर्मणस्येत्यस्य प्रकृतिभावविधायकस्य प्लुतप्रगृह्या अचि नित्यमित्युत्तरं पाठे न बाधकमित्याशयात् । न चैवमागच्छतमग्नी ३ इदमित्यत्रापि प्रकृतिभावविकल्पापत्तिरिति वाच्यम् । येन नाप्राप्तिन्यायेन प्लुतप्रयुक्तप्रकृतिभावस्यैवानेन विकल्पाङ्गीकारात् । न च प्रगृह्यसंज्ञाप्रयुक्तस्यापि परत्वात् कुतो न बाध इति वाच्यम् । नित्यग्रहणेन प्रगृह्यसंज्ञाप्रयुक्तस्य नित्यप्रकृतिभावस्यैव प्रवृत्त्यङ्गीकारात् । न चात्र न्यासे संहिताधिकारादसंहितायां निषेधाप्रवृत्तिः त्रिपाद्यां न्यासे तदसम्बन्धादसंहितायां तत्प्रवृत्तिरिति फलभेद इति वाच्यम् । संहिताधिकारफलस्यौपश्लेषिकाधिकरणसप्तम्यैव सिद्धि मङ्गीकृत्य संहिताधिकारप्रत्याख्यातृभाष्यरीत्या फलभेदाभावात् । एतेन संहितायामित्यस्य संबन्धासम्बन्धाभ्यां विशेष इति परास्तम् । स्यादेतत्, अणोऽप्रगृह्यस्येत्यत्र पर्युदासादच इत्यर्थलाभ इति लण्सूत्रभाष्यस्वरसात् प्रगृह्यत्वस्याल्वृत्तिधर्मत्वेन पर्युदासपक्षे आदेशे अनतिदेशेन सन्धिकार्यप्रवृत्त्या भवदुक्तविशेषो न सम्भवति ।

न च पञ्चमी समासपक्षेऽचः परस्मिन्निति स्थानिवद्भावेन तत्त्वं सुलभमिति वाच्यम् । सर्वं वाक्यं सावधारणमिति न्यायेन षष्ठीसमासपक्षे पूर्वस्यैव विधाविव पञ्चमीसमासपक्षे परस्यैव विधौ तत्प्रवृत्तेः । अत एव अयजे इन्द्रमित्यादौ गुणस्य स्थानिवत्त्वात्सवर्णदीर्घो नेति चेन्न । ईदूदेदन्तं द्विवचनं प्रगृह्यमिति सिद्धान्तपक्षे प्रगृह्यत्वस्य पचेते इत्यादौ विशिष्टवृत्तितया अन्तधर्मत्वाभावात् । लण् सूत्रभाष्यं तु ईदादयो द्विवचनमित्येकदेश्युक्तपक्षाभिप्रायकमिति नार्थसाधकम् । तत्पक्षस्यैकदेश्युक्तित्वं तस्मात्स एवास्तु मध्यमः पक्ष इतीदाद्यन्तं द्विवचनमित्यर्थस्य सिद्धान्तत्वप्रतिपादकेन भाष्येण ध्वनितम् । किंच प्रगृह्यत्वस्यालमात्रवृत्तिधर्मत्वाङ्गीकारेपि द्विवचनत्वस्य निपातत्वस्य च अतथात्वेन लाभे पुनः प्रगृह्यसंज्ञाया वक्तुं शक्यतया फलं सुवचम् । संज्ञायाः कार्यार्थतया पुनः प्रवृत्तौ बाधकाभावात् । न च प्रकृतिवदतिदेशेन प्रगृह्यत्वस्य वक्ष्यमाणतया अप्लुतादेशस्थानिनि फलाभावाद्द्विवचनत्वाद्यनतिदेशे मध्ये विच्छिन्नत्वा दप्लुतादेशे तदतिदेशो दुर्लभः । स्पष्टा चेयंरीतिरजन्तस्त्रीलिङ्गप्रकरणे शेखरे इति वाच्यम् । अन्यत्र तथात्वेपि भविष्यति किंचिदनेन प्रयोजनमित्यभिसन्धिमात्रेण संज्ञाप्रवृत्त्या तदर्थं द्विवचनत्वातिदेशस्य मध्येऽप्यावश्यकतया विच्छेदाभावात् । अत एव सुनायिकेत्यादौ धातुत्वस्य मध्येऽविच्छेदाद्धात्वन्तयकोरित्यस्य प्रवृत्तिः । अन्यथा तत्र यणघटिते धातुत्वप्रयुक्तकार्याभावात् मध्ये विच्छेदेन धातुत्वानतिदेशे तदसिद्धिरिति तत्रैव निरूपयिष्यामः । नन्वेवमप्यप्लुतादेशस्थानितया अल्मात्रवृत्तिधर्मावच्छिन्नत्वेन स्वरीत्या प्रगृह्यत्वस्य द्विवचनत्वादेर्वा अतिदेशो दुर्लभ इति चेन्न । एतद्ग्रन्थस्य कौमुदीव्याख्यानाय प्रवृत्ततया तद्रीत्या पर्युदास एवोचित इत्याशयात् । किंच स्वरीत्याप्यज्मात्रनिमित्तकप्रगृह्यप्रकृतिभावापेक्षया इतिशब्दनिमित्तकाप्लुतादेशस्य बहिरङ्गतया असिद्धत्वेनाप्लुतादेशे प्रगृह्यत्वबुद्ध्या प्रकृतिभावस्य सुवचतया

विशेषस्सुवचः। जातासिद्धत्वमन्तरङ्गस्य निवर्तकमेव न प्रवर्तकमित्यत्र माना भावः। अत एव अक्षद्यूरित्यत्र यलोपवारणाय प्रयत्नविशेषो ग्रन्थकृतस्सङ्गच्छते। किंच प्रसज्यप्रतिषेधपक्षे प्रगृह्यत्वप्रयुक्तः प्रकृतिभावः पर्युदासपक्षे स नेत्येव विशेषः सुवचः। एवं च यदि तु लण्सूत्रभाष्यस्वरसात् प्रगृह्यत्वमन्तसाधारणमित्युच्यते तदा सर्वमतसाधारण्येन प्रसज्यप्रतिषेध एवोचित इत्यपास्तम्। यत्तु इति वदेदिति प्रतीकमुपादाय एवं चेत् प्लुतनिषेधस्य त्रिपादीस्थत्वेनासिद्धत्वात् प्लुतप्रगृह्या इति प्रकृतिभावे संहिताकार्यं न स्यात्। प्लुतनिषेधस्तु सुश्लोक इतीति श्रवणार्थं स्यात्। न च प्रसक्तस्य प्लुतस्यानेन निषेधो न तु जातस्य निवृत्तिरितीह प्लुत एव लक्ष्ये न प्रवृत्तः कुतस्तरां तत्प्रयुक्तः प्रकृति भाव इति वाच्यम्। प्रसक्तनिषेधे पूर्वत्रासिद्धमिति शास्त्रबाधप्रसङ्गात्। त्रैपादिकबाधकशास्त्रेण सति सम्भवे जातनिवृत्तेरेव कर्तुं योग्यत्वात्। जातनिवृत्तिकल्पनाप्रयुक्तं गौरवं पार्ष्णिकं निषादस्थपतिन्यायेन फलमुखत्वाददुष्टम्। अत एव रामादित्यत्र जश्त्वं वावसान इति क्रमस्सङ्गच्छते। बाधित्वेति व्याख्यानं तु निर्युक्तिकं रत्नमुडित्यादौ दोषग्रस्तं च। अत्र ज्ञापकं वत्करणमेव। अन्यथा उक्तरीत्या नोपस्थित इति वक्तव्ये अप्लुत इत्युक्तिरप्लुतसादृश्यविधानार्थं भविष्यतीति तद्वैयर्थ्यं स्पष्टमेवेतीदं चिन्त्यमित्याहुस्तन्न। प्रकृतिभावदृष्ट्या प्लुतस्याश्रयासिद्धत्वेन लक्ष्ये दृष्टस्यैव प्लुतस्य प्रकृतिभावविधानेन प्रकृते निषेधस्यासिद्धतामात्रेण लक्ष्ये प्लुतप्रवृत्तेर्दुर्वचतया लक्ष्ये प्लुतादर्शनेन प्रकृतिभावाप्रवृत्त्या निषेधफलस्य दुर्वचत्वात्। किंच प्लुतस्येव निषेधस्याप्याश्रयात्सिद्धत्वमार्थसमाजग्रस्तं किङति चेति सूत्रभाष्योक्तरीत्या निषेधानां विध्येकवाक्यतया अन्वयेन तत्तच्छास्त्रेषूपस्थितपूर्वत्रेत्यत्र पूर्वपदेन प्लुतप्रगृह्या इत्यस्य ग्रहणे तदेकवाक्यतापन्ननिषेधस्यासिद्धताया वक्तुमशक्यत्वात्। किंच पूर्वत्रासिद्धमित्येतद्बाधस्य न्यायप्राप्ततया जातनिवृत्तिकल्पना

अन्याय्या। अत एव जश्त्वं बाधित्वेत्यग्रिमग्रन्थस्सङ्गच्छते। रत्नमुडित्यादि-सिद्धिप्रकारस्तु तत्रैव वक्ष्यते। वस्करणज्ञापकत्वोपन्यासोपि न संघटते। अप्लुत इति न्यासे फलविशेषस्य पूर्वमुपदर्शिततया सादृश्यार्थपर्यवसानासम्भवात्। किंचैतन्मनोविलसितं प्लुतप्रकरणानन्तरं नोपस्थित इति पाठे यथा कथंचित्संभवति तदेव न। प्लुतप्रकरणात्पूर्वमेव तत्पाठस्योपदर्शितत्वादित्यलं बहुना। ननु सिद्धान्तेपि इन्द्रे च, इकोऽसवर्णे, ऋत्यकः, आङोनुना, प्रगृह्या अचि, प्लुताश्चाचाक्रवर्मणस्य, नोपस्थिते, दिवउत्, इति सूत्रयितुं शक्यम्। एवं हि शाकलविषये परत्वात्प्रकृतिभावस्सिद्ध इति नित्यग्रहणमपि न कार्यमित्यपरं लाघवम्। एवं च नोपस्थित इति सिद्धे अप्लुत इत्युक्तिर्नार्थान्तरसाधिकेति चेन्न। अग्नी ३ इतीत्यत्र प्लुतप्रयुक्तस्येव प्रगृह्यप्रयुक्तस्यापि निषेधानां बलीयस्त्वेन निषेधापत्तेः। अत एव तसिलादिष्वाकृत्वसुच इत्यत्र जातीयर्देशीयरोर्ग्रहणं सार्थकम्। तद्धि पुंवत्कर्मधारयेति सूत्रस्य कर्मधारयांश इव तदंशेपि निषेधापवादत्वसंपत्त्यर्थम्। अन्यथा परत्वादेव निषेधबाधे सिद्धे किं तेन? स्पष्टं चेदं तसिलादिसूत्रशेखरे। किंच सूत्रकारमते ई चाक्रवर्मणस्येत्यत्र ईग्रहणसत्त्वेन प्लुत इति पृथक्सूत्रकरणे गौरवमिति तथा वक्तुमशक्यमिति बोध्यम्। न च पर्युदासे प्रगृह्यप्रकृतिभावेन आदेशनिवृत्तौ भाष्योक्तदूषणानवतारः। निषेधस्य तु प्रकृतिभावाप्रतिबध्यत्वेन तदवतार इति वाच्यम्। वक्ष्यमाणरीत्याऽऽदेशस्य बहिरङ्गतयाऽसिद्धत्वेन प्रकृतिभावानिवर्त्यत्वात्। यत्तु प्रकृतिभावेन स्वापेक्षबहिरङ्गस्यापि निवृत्तिः, उपसर्गादृतीत्यत्र धाताविति योगविभागेन पुनर्वृद्धिविधानात् ज्ञापकात्। तेन सुखार्त इत्यत्र पक्षे वृद्धिनिवृत्तिस्सिद्धेति, तन्न। एकादेशप्रकरणे धात्ववयवे ऋतीत्येवं क्रमेणार्थस्योक्तत्वेन बहिरङ्गस्यैवाभावेन ज्ञापकशैथिल्यात्। सुखार्त इत्यादौ न पाक्षिकः प्रकृतिभाव इति पूर्वमेवावेदितम्। न चात्रापीतिशब्दावयवेऽचीत्येवार्थ इति वाच्यम्। वैयधि-

करण्यान्वयफलस्यैकादेशातिरिक्ते दुर्निरूपत्वात्। एतेन एहि स्व ३ इरिन् गच्छाति एहि देवदत्त ३ एधतेयं पाहि शिव ३ ओं नमस्करोमि त्वामित्यादौ बहिरङ्गसन्धिकार्याणां प्रकृतिभावेन वारणं न स्यादितिचेत्सत्यम् इष्टापत्तेः। अनिष्टत्वे ग्राहकप्रमाणोपलम्भे तु बहिरङ्गासिद्धत्वानित्यत्वमेव शरणमिति भट्टोक्तमपास्तम्। तेषां बहिरङ्गत्वाभावस्योपपादितत्वात्। न चाप्लुतादेशस्यासिद्धत्वेनाज्ञातत्वेपि स्वरूपतस्सत्त्वेन तस्य प्रकृतिभावेन निवृत्तिस्स्यादिति भाष्यविरोधस्तदवस्थ एवेति वाच्यम्। निपात एकाजिति सूत्रभाष्यप्रदीपोद्योतविरोधात्। तथाहि तत्रहि भाष्ये हलन्तस्य प्रगृह्यत्वे नैव दोषो न प्रयोजनमित्युक्तम्। प्रदीपे च ननु पुरोऽहिरित्यत्र प्रकृतिभावाद्रोरुत्वं न स्यात् नैष दोषः प्रगृह्यसंज्ञायां रुत्वस्यासिद्धत्वात् सकारस्य च कार्यान्तराप्रसङ्गादुत्वे तु रुत्वमाश्रयात्सिद्धमित्युक्तम्। उद्योते च ननु सान्तस्य प्रगृह्यत्वे एकदेशविकृतन्यायेन रान्तस्यापि तत्त्वात् प्रकृतिभावस्स्यादिति चेन्न, प्रकृतिभावेप्यसिद्धत्वादित्युक्तम्। स्वरूपसतो विकारस्य प्रकृतिभावेन निवृत्त्यङ्गीकारे तु तदसङ्गतिः स्पष्टैव। न चाज्निमित्तककार्याणामेव प्रकृतिभावेन निवृत्तिः रुत्वं तु न तथेति न भाष्यासङ्गतिरिति वाच्यम्। एवमपि पुर इहेत्यादौ अज्निमित्तकयत्वस्य प्रकृतिभावेन निवृत्त्यापत्त्या नैव दोष इत्युक्तेरसङ्गतेः। न च तत्र अज्ग्रहणं न क्रियत इति न दोष इति वाच्यम्। अस्यामवस्थायामेतदर्थमेव कर्तव्यतापातात्। किं च न्यायप्राप्तस्यासिद्धत्वस्य बाधे मानाभावः। न चैवमप्युत्वस्याज्निमित्तत्वेन प्रतिबन्धापत्तिः। रुत्वस्यासिद्धत्वेन स नेति प्रदीपोक्तं तु न सम्यक्। असिद्धत्वेपि सान्तबुद्ध्या प्रवर्तमानौ संज्ञाप्रकृतिभावौ रान्त एव प्राप्तौ तत्र च रान्तबुद्ध्या प्रवृत्तमुत्वं पश्यन्तौ तत्प्रतिबध्नीयातामेव तन्निमित्तरोरदर्शनेपि तत्प्रवृत्तिदर्शने प्रतिबन्धकाभावात्। अग्नी इत्यत्रानुनासिकविधेः द्विमात्रत्वग्रहेपि प्रगृह्यत्वप्रवृत्तिग्रहवदिति वाच्यम्। यद्बुद्ध्या प्रकृतिभावप्रवृत्तिः

**न च पर्युदासेऽग्नी३ इतीत्यादौ प्रगृह्याश्रयप्रकृतिभावं बाधित्वा परत्वादप्लुतवद्भावे दीर्घादिकं स्यादिति वाच्यम्। शब्दत इति शब्दसापेक्षाप्लुतवद्भावापेक्षया वर्णमात्रापेक्षप्रकृतिभावस्यान्तरङ्ग-**

---

तस्य यो विकारस्तत्प्रतिबन्धः। अत्र तु सुबुद्ध्या प्रकृतिभावप्रवृत्तिर्न तस्योत्वं विकार इत्याशयात्। वस्तुतोऽप्लुतादेशस्य इतिशब्दनिमित्तकत्वेप्यन्नि-मित्तकत्वाभावान्न प्रकृतिभाव निवर्त्यता। अन्येषां प्रकृतिभाव निवर्त्यानां यथाऽ न्निमित्तकत्वं तथोपपादितम्। तद्भावभावितामात्रेण निमित्तत्वाश्रयणे तु न मानमिति बोध्यमित्यलं पल्लवितेन।

ननु सिद्धान्ते वत्करणं प्लुतकार्यप्रतिषेधार्थमिति भाष्यात् प्रसज्यप्रति-षेधस्य लाभात्तदनुरोधेनात्रापि स एवास्तु, फलविशेषविचारस्तु पूर्वपक्षे नातीवोपयुज्यते। न च सिद्धान्तेपि पर्युदास एवास्तु लाघवात्। भाष्यं तु फलितार्थप्रदर्शनपरमस्त्विति वाच्यम्। पर्युदासे दोषसत्त्वेन लाघवस्याकिं चित्करत्वादित्याशयेन सिद्धान्ते पर्युदासे दोषं शङ्कते। **न चेति। परत्वा-दिति।** न चातिदिश्यमानकार्याणामुपदेशदेश एव देश इति स्वोक्तरीत्या दीर्घादेः परत्वाभावेनास्याश्शङ्काया नावतार इति वाच्यम्। कार्यातिदेशे कर्म-वत्कर्मणेति विहितात्मनेपदेनानुपराभ्यां कृञ इति सूत्रविहितपरस्मैपदबाध-प्रतिपादकदीक्षितानुरोधेन शङ्कायास्सत्त्वात्। यद्यप्यतिदिश्यमानकार्याणामुप-देशदेश एव देश इति प्रकृतिभावस्यैव परत्वमिति समाधातुं शक्यं तथापि शङ्कित्राशयानुसारेण समाधत्ते। **शब्दतइतीत्यादिना। अन्तरङ्गत्वादिति।** यत्त्विदमयुक्तं न धातुलोप इति सूत्रे अन्तरङ्गनिषेधदृष्ट्या गुणस्यासिद्धत्वेन प्रेद्ध इत्यादौ गुण इति भाष्योक्तरीत्या प्रकृतिभावेन दीर्घबाधानापत्तेः। किं च वत्करणाभावेप्यप्लुतशब्देन प्लुतस्य स्थाने विहितस्य दीर्घस्योक्तदिशा वारणे वत्करणवैयर्थ्यं तदवस्थमिति तन्न। प्रकृतिभावेन संधिकार्याभावस्य बोधनेन

त्वात्। अप्लुतवदित्यस्य प्लुतकार्यं नेत्यर्थस्तु न शब्दमर्यादालभ्यः।

स्वदृष्ट्या विद्यमानेषु स्वविषयातिरिक्तविषयकतया संकोचात् प्लुतभेदप्रगृह्यभेदयोरपि तत्तत् कार्ये निमित्ततया प्रवेशेन सुश्लोक ३ इतीत्यादौ प्लुतभेदरूपनिमित्ताभावादप्राप्तस्य गुणादेः प्रवर्तकतया आरभ्यमाणस्यातिदेशस्य यन्निमित्तवैकल्यप्रयुक्तेत्यादिन्यायेन प्रगृह्यभेदस्यापि निमित्ततया प्रकृतिभावेनातिदेशप्रापितगुणादिबाधस्यार्थसमाजग्रस्तत्वात् । एतेनातिदेशप्राप्तकार्यस्यासिद्धत्वात् कथं प्रकृतिभावनिवर्त्यत्वमित्यपास्तम् । यत्वेतत् खण्डनाय वस्तुतस्तु शास्त्रकार्यातिदेशयोरुभयोरप्यतिदिश्यमानकार्यस्योपदेशदेशानतिक्रमात् प्रकृतिभावस्यैव परत्वेन प्रवृत्त्या न कश्चिद्दोष इति भट्टोक्तं तन्न। अतिदिश्यमानकार्याणां कार्यातिदेशे अतिदेशदेश एव देश इति दीक्षितरीत्या प्रवृत्तैतद्ग्रन्थोपरि तावता दोषस्यानपायात् । न चैवं सति अग्नी इतीत्यादावप्लुतभावस्य परत्वात् प्रकृतिभावबाधकत्वशङ्कैव नावतरति, उक्तरीत्या प्रगृह्यस्यातिदेशाविषयत्वादिति वाच्यम् । अतिदेशेन प्रकृतिभावबाधे प्रकृतिभावोद्देश्यप्रगृह्ये सकृद्गतिन्यायसहकारेणोपस्थिताव्यवहितपूर्वप्लुतातिरिक्तत्वेन संकोचे गुणादिविधौ संकुचितसंकोचस्यैव न्यायप्राप्ततया तादृशप्रगृह्यभेदस्यैव निमित्ततया प्रकृते तस्याक्षततया अतिदेशेन दीर्घादिकं स्यादिति शङ्कित्राशयात्। एवं वत्करणाभावे अस्यातिदेशत्वाभावेन प्रगृह्यभेदस्य कथमपि निमित्तत्वालाभेनाप्लुतादेशप्रवृत्तेर्दुर्वारतया तत्र प्लुतश्रवणार्थं वत्करणमिति न किंचिदनुपपन्नमिति दिक् । नन्विमे शङ्कासमाधाने निर्दले वद्वचनं प्लुतकार्यप्रतिषेधार्थमिति भाष्यात् प्रसज्यप्रतिषेधस्यैव लाभात् । न चैवमस्य निषेधत्वे निषेधाश्च बलीयांस इति न्यायेन अग्नी इतीत्यत्र प्रगृह्यप्रकृतिभावस्यापि निषेधापत्तिरिति वाच्यम् । पूर्वोक्तन्यासान्तरेण नोपस्थिते इत्येव सिद्धे एवमुक्त्या प्रगृह्यप्रयुक्तप्रकृतिभावानवमर्देनैव प्लुतकार्यनिषेधे तात्पर्यावधारणादित्याशङ्क्य दूषयति । अप्लुतवदित्यस्येत्यादिना । न शब्दमर्यादालभ्य इति । यत्त्विदम-

**प्लुतेऽप्लुतसादृश्यविधानस्यैव शब्दतो लाभात्। भाष्ये प्लुतकार्यप्रतिषेधार्थमित्युक्तिस्तु फलितार्थाभिप्रायेणैवेति बोद्धव्यम्। प्रगृह्याश्रये इति। प्लुते कृतेऽपि तस्यासिद्धत्वाद्दीर्घत्ववृद्धिवत्**

---

युक्तम्, अचः परस्मिन्निति वत् तृतीयादिषु भाषितपुंस्कमितिवच्च अप्लुतो यथा प्लुतकार्यं न प्रवर्तयति तथा प्लुतोऽपीत्यभावातिदेशाङ्गीकारेणोक्तार्थलाभादिति तन्न। अभावातिदेशाङ्गीकारेप्यप्लुते यन्न तन्नेत्येव शब्दमर्यादया लाभेनाप्लुते अभवतः कार्यस्यैवाभावस्य बोधनेन त्वदुक्तार्थालाभात्। न चाप्लुते अभवत्कार्यं प्रकृतिभावः तच्च प्लुतकार्यमिति तदभाव एव बोधित इति वाच्यम्। अप्लुते प्रगृह्यप्रकृतिभावप्रवृत्त्या प्रकृतिभावस्याप्लुते अप्रवर्तमानकार्यत्वाभावेन भवदभिप्रेतासिद्धेः। तदेतदभिप्रेत्याह। **सादृश्यविधानस्यैवेति**। सादृश्यप्रयुक्तकार्यविधानस्यैवेत्यर्थः। प्राधान्यात् कार्यातिदेशोऽयम्। स्थान्यादेशप्रकरणात् प्लुतस्य स्थाने अप्लुतस्येव कार्यं तच्च प्रगृह्यभिन्ने दीर्घादि प्रगृह्ये तु प्रकृतिभावः तथा च प्रगृह्ये प्रकृतिभावार्थं यत्नान्तरमपि न कार्यमित्यपरं लाघवम् प्रगृह्यसंज्ञासूत्रस्थं प्रकृतसूत्रस्थं च भाष्यादिकं तु अग्नी ३ इतीत्यत्र प्रकृतिभावस्याप्लुतकार्यत्वप्रतिपादनपरं प्लुतस्यापि न निवृत्तिरिति भावः। सादृश्यमात्रविधाने तु कार्यान्तरं प्रतीव श्रवणेपि सादृश्यं स्यादिति बोध्यम्। ननु च भाष्यस्य का गतिरिति चेत्तत्राह। **भष्ये इत्यादि**। **इति बोध्यमिति**। यत्र प्रसज्य प्रतिषेधे फलं तत्रानायत्या सौत्रत्वादसमर्थसमासाद्याश्रयणेप्यन्यत्र पर्युदासस्यौचित्येन भाष्यस्यैवं तात्पर्यकल्पनमेवोचितमिति भावः। नन्वप्लुतसादृश्यप्रयुक्तकार्यविधानेपि सति प्रगृह्यत्वे प्रकृतिभावः स्यात् तत्तु न, त्रिमात्रिकस्येदूदेदित्यत्राग्रहणात्। स्थानिवत्त्वेन नैतत्। प्लुतस्थानिताया अच्त्वावच्छिन्नत्वादित्यत आह। **प्लुते कृतेपीति**। इति शब्दादिसमभिव्याहारे कार्यार्थे प्रगृह्यसञ्ज्ञातःपूर्वमन्तरङ्गत्वात् प्लुत इति भावः। **दीर्घत्ववृद्धिवदिति**।

तद्गतं प्रगृह्यत्वमनुकार्ये सुलभम् । अनुकरणे तु 'प्रकृतिवदनुकरणम्' इत्यतिदेशात्तत्त्वमिति भावः ॥

किं मया कर्त्तव्यमिति पृष्ट आह । चिनु ही ३ इदमिति । 'विभाषा पृष्टप्रतिवचने हेः' इति प्लुतः । इदंशब्दोऽत्र वाक्यान्तरस्थ इति हेरिकारस्य वाक्यटित्त्वम् । उभयत्र विभाषेयमिति । उपस्थिते प्राप्तेऽनुपस्थिते चाप्राप्ते इत्यर्थः । विभाष्यते विकल्प्यत इति विभाषा । गुरोश्च हल इत्यप्रत्यये टाप् । न वेति विभाषायामिति भाष्यप्रयोगात् । भाष्ये तु 'किमर्थमिदमुच्यतेऽनुपस्थितार्थं, तत्र ईग्रहणेन

---

शास्त्रासिद्धत्वेऽन्तरङ्गत्वात् त्रैपादिकप्रवृत्तावपि तत्रासिद्धत्वारोपेण तस्य लक्ष्ये ज्ञातत्वबुद्ध्यभावेन तत्कृतस्थानिनिवृत्तिबुद्धेरभावेन त्रिमात्रे दीर्घत्वबुद्धिरिति भावः । स्पष्टं चेदमुद्योते । तद्गतमिति । द्विमात्रिकगतमित्यर्थः । एवं च लक्ष्ये लक्षणन्यायावतारशङ्कापि नेति भावः । एतेन संज्ञायाः कार्यार्थतया कार्यस्य प्रकृते प्लुतोत्तरं प्राप्त्या पुनः प्रवृत्तेस्स्वीकारादिति वदन्तः परास्ताः । नन्वनुकरणे त्रिमात्रस्य त्रैपादिकाविहिततया तस्यासिद्धत्वाभावेन कथं तत्र प्रगृह्यत्वमत आह । अनुकरणे त्विति ॥

ननूभयत्र विभाषेयमित्यत्रेयमिति स्त्रीलिङ्गनिर्देशोनुपपन्नः । विभाषेत्यस्याव्ययत्वेनेदमिति सामान्ये नपुंसकस्य न्याय्यत्वादत आह । विभाष्यत इत्यादि । भाष्यप्रयोगादिति । अस्योभयत्र विभाषात्वं दूषयति । भाष्ये त्विति । किमर्थमिदमिति । अत्रोपस्थित इत्यनुवृत्तावारम्भसामर्थ्यादेव विकल्पे सिद्धे चाक्रवर्मणस्येत्येतत्सम्बद्धं किमर्थमिति प्रश्नः । स्पष्टं चेदमुद्योते । अनुपस्थितार्थमिति । उपस्थित इत्यस्य निवृत्त्या तत्र विकल्पलाभश्चाक्रवर्मणस्येत्येतदधीन एवेत्युत्तरम् । अनुपस्थिते अनीकारप्लुतेऽपि वैकल्पिकाप्लुतवद्भावस्येष्टत्वेग्रहणव्यावर्त्यालाभ इति तत्प्रत्याचष्टे । तत्र ईग्रहणेनेत्यादि ।

नार्थः, अविशेषेण चाक्रवर्मणस्याप्लुतवदित्येव, इदमपि सिद्धं वशा इयं वशेयम्' इत्युक्तम्। तद्बलेनोपस्थिते पूर्वविप्रतिषेधेन ईग्रहणेऽपि नित्याप्लुतवद्भाव एवेष्टः। प्रत्याख्याने नित्याप्लुतवद्भावस्य येन नाप्राप्तिन्यायेन वैकल्पिकतद्बोधिताभावांशबाधकत्वात्। उपस्थित इत्यस्य निवृत्त्या परविप्रतिषेधादुभयत्र विभाषेयमिति कैयटस्य प्रमादः। मूलं त्वितिशब्दभिन्ने वैदिकेतिशब्दे चेत्येवंपरतया

---

अविशेषेणेति। ईकारानीकारसाधारण्येनेत्यर्थः। पूर्वविप्रतिषेधे मानमुपन्यस्यति। प्रत्याख्याने इति। अभावांशेति। न च सूत्रबाधकत्वे वक्तव्ये इदमनुपपन्नमिति वाच्यम्। भावांशविधाने पूर्वोत्तरयोस्साम्येनाभावांशबाधे सूत्रबाधस्यैव पर्यवसानमित्याशयात्। बाधकत्वादिति। एवं चानुपस्थितार्थमेवेदमिति भावः। कैयटस्य प्रमाद इति॥

अत्र केचित् कैयटस्य प्रमादमपमार्ष्टुकामाः, वस्तुतः पूर्वविप्रतिषेधकल्पने गौरवादनुपस्थितार्थमिति भाष्यस्य तदर्थमपीत्यर्थ उचितः। अविशेषेणेति तदुत्तरभाष्यस्य स्थान्यंशे निमित्तांशे चाविशेषेणेत्यर्थः। चाक्रवर्मणस्याचार्यस्याप्लुतवद् भवतीत्येवेति तदुत्तरभाष्येणाप्लुतवच्चाक्रवर्मणस्येत्येतावत् सूत्रकरणसूचनात्, उपस्थित इत्यंशस्यापीग्रहणवदानर्थक्यसूचनात् फले विशेषाभावेन कैयटस्य सदुक्तिकत्वादित्याहुः। तन्न। भवद्रीत्या सर्वत्र प्लुतप्रकृतिभावस्य वैकल्पिकत्वलाभेन तादृशफलाभिप्रायकत्वे प्लुतप्रगृह्या इति सूत्रे प्रगृह्या अचि प्लुताश्चाक्रवर्मणस्येति न्यस्यैतस्य त्यक्तुं शक्यतया एवमाशयकल्पनाया अनौचित्यात्। परशब्दस्येष्टवाचितया सर्वपूर्वविप्रतिषेधसंग्रहे तत् कल्पनायां गौरवाभावाच्च। अपीति शेषपूरणेन व्याख्याने मानाभावाच्च। ईग्रहणेन नार्थ इति भाष्येण तत्प्रत्याख्यानमात्रस्यैव लाभेनान्यथाशयकल्पनाया अनौचित्याच्च। यदप्यप्लुतवदुपस्थित इति सूत्रे इकोऽसवर्णे इति सूत्रादसवर्णे इत्यनुवर्तते।

अत एव चिनुहि ३ इतीत्यादौ विकल्पेनाप्लुतवद्भावः । प्रत्याख्याने अपवादत्वान्नित्याप्लुतवद्भाव इति फलभेदो न । अत एव प्लुतप्रगृह्या इति सूत्रे भाष्ये नित्यग्रहणफलवर्णनं संगच्छते । अन्यथेको यणित्युत्तरं पदस्य शाकल्यस्य ह्रस्वः ऋत्यक इत्यनेनैव सिद्धे तदसङ्गतिस्स्पष्टैव । एवं च यथाश्रुतं मूलमेव युक्तं, नापि कैयटस्य प्रमाद इत्याहुः । तदपि न । त्वदुक्तन्यासस्य पूर्वमेव दूषितत्वेनासवर्णग्रहणानुवृत्तौ प्रमाणानुपलम्भात् । मध्ये ऋत्यक इत्यत्रापि तत्सम्बन्धापत्तौ सवर्णार्थमिति भाष्यविरोधापत्तेः । तदसम्बन्धे मण्डूकानुवृत्त्यापत्तेः । अग्नी ३ इतीत्यस्य वद्ग्रहणप्रयोजनप्रदर्शनपरभाष्येण तदननुवृत्तेस्स्फुटत्वेन तद्विरोधापत्तेः। तदनुवृत्त्यङ्गीकारे अग्नी ३ इतीत्यस्य पूर्वसूत्राविषयतया 'किमुपस्थितग्रहणानुवृत्त्या प्राप्तविभाषेयमथ तन्निवृत्त्या पूर्वविप्रतिषेधादप्राप्तविभाषा अथ परविप्रतिषेधादुभयत्र विभाषेति प्रश्नः, अनुपस्थितार्थमिति परविप्रतिषेधस्य न्याय्यत्वादुभयत्र विभाषेय'मिति कैयटस्य फलांशे यथाकथंचित् प्रमादापनोदनेऽप्युपन्यासांशे प्रमादस्य दुर्वारत्वात् । यथाश्रुतमूलासामञ्जस्यस्य तदवस्थत्वाच्च । तदननुवृत्तेरेव अस्तु हि ३ इत्यब्रवीदित्यादावप्लुतवद्भावस्य नित्य प्राप्तत्वादित्युक्तं हरदत्तेन । आरम्भप्रत्याख्यानयोः फलभेदस्तु पूर्वविप्रतिषेधाश्रयणेनैव वारित इत्यलमप्रामाणिकासवर्णग्रहणानुवृत्तिप्रयासेन । बृहच्छेखरे तु ईग्रहणेन नार्थ इत्यस्य चाक्रवर्मणस्येत्येतत्सम्बद्धेन नार्थः, न सकलप्रयोजनसिद्धिरित्यर्थः । अयंभावः । ईइति पृथक् पदं कार्यम् । उपस्थित इति वर्तते । पूर्वेण सिद्धे विकल्पार्थमिदम् । ततश्चाक्रवर्मणस्येति । अयमेव सूत्राशयः । एवं च सूत्रभाष्ययोर्न विरोधः, भाष्याविरोधेन सूत्रस्येव सूत्राविरोधेन भाष्यव्याख्याया उचितत्वात् । एतेन भाष्ये ईग्रहणसत्त्वे वशेयमित्यासिद्धिवच्चिनुहीतीत्यादौ नित्याप्लुतवद्भावासिद्धिर्नोक्ता । नापि पूर्वविप्रतिषेधारम्भगौरवमित्यपास्तम् । कैयटस्य प्रमाद इत्येव प्रामादिकामित्युक्तम् ॥

अत्रेदमवधेयम् । भाष्यस्यैवमाशयकल्पनेन चिनुहीतीत्यादौ वैकल्पिकाप्लुतवद्भावे तात्पर्यकल्पनं न युक्तम् । तथा सत्यसवर्णग्रहणानुवृत्त्या तत्फले सिद्धे ईग्रहणस्य योगविभागस्य च वैयर्थ्यापत्तेः । किं चैवमप्लुतवदुपस्थितेऽनी ३ चाक्रवर्मणस्येति वदेत् । अनी ३ इति पर्युदासादेव प्लुत इत्यर्थलाभ इत्यपरमनुकूलम् । न च पदगौरवम्, पदगौवाद्योगविभागस्यातिगुरुत्वात् । न च सा परिभाषा ग्रन्थकृदनभिप्रेतेति भ्रमितव्यम् । अस्वरससूचकस्य बहव इत्यस्योक्त्या परिभाषायामभिमतत्वसूचनात् । विवेचितं चेदं परिभाषेन्दुटिप्पण्याम् । किं चैवमपवादविषयातिरिक्तत्वेनोत्सर्गस्य सङ्कोचेऽप्लुतवदित्यस्येकाराविषयकत्वेन अग्नी ३ इतीत्यस्य पूर्वसूत्रे वद्ग्रहणप्रयोजनत्वोक्तिरसम्बद्धा स्यात् । किं च पूर्वेण सिद्धे विभक्तसूत्रस्य विकल्पार्थत्वं वैतदारम्भात् पूर्वस्य वैकल्पिकत्वं वेत्यत्र विनिगमनाविरहः । ज्ञापकादिना तत्परिहारे तु क्लेशः । किं च ई इति पृथक् सूत्रं प्रगृह्यप्रयुक्तप्रकृतिभावस्याप्यभावार्थमित्यपि वक्तुं शक्यतया विकल्पालाभः । तदर्थं चाक्रवर्मणग्रहणापकर्षस्य वा व्याख्यानस्य वा आश्रयणे क्लेशः । किंचेग्रहणेन नार्थ इति भाष्यस्य चाक्रवर्मणस्येत्येतत्सम्बद्धेन न सकलार्थसिद्धिरित्यभिप्रायकत्वे तदसम्बद्धेनेग्रहणेन यो लाभो लब्धः चिनुहीतीत्यादौ वैकल्पिकाप्लुतवद्भावात्मकस्तस्यैव प्रदर्शनीयतया तदप्रदर्शनमयुक्तमेव स्यात् । अविशेषेणेत्युत्तरभाष्येण तत्प्रत्याख्यानमेव स्वरसतो लभ्यते । इदमपीत्युत्तरभाष्येण सूत्रमते वशेयमित्यादेरसिद्धिरित्येव लाभात् । तस्माच्चिनुहीतीत्यादौ नित्याप्लुतवद्भाव एव भाष्याभिप्रेत इत्युपाध्यायाशय इति । ननु तर्हि परेत्विति वक्तव्ये अन्य इत्यरुचिबोधकशब्दोपादानं किमर्थमिति चेच्छृणु । किमर्थमिदमुच्यत इति भाष्यस्यारम्भसामर्थ्याद्विकल्पे सिद्धे चाक्रवर्मणस्येति किमिति प्रश्नाशयवर्णनमयुक्तम् । एतदारम्भसामर्थ्यात् पूर्वस्य विकल्पापत्तेः । न चास्यैव विकल्पः कुतो नेति वाच्यम् । एवमपि

कथंचिद्व्याख्येयमित्यन्ये । उद्देश्यप्रतिनिर्देश्ययोरैक्यमापादयत् सर्व-
नाम पर्यायेण तत्तल्लिङ्गभागितीयमिति निर्देशः ॥

विशेषणेन तदन्तविधिमाश्रित्याह । ईदूदेदन्तमिति । द्विवचन-
मिति । सञ्ज्ञाविधौ प्रत्ययग्रहणे तदन्तविधिनिषेधादिति भावः ।
एदन्तमिति व्याख्याने फलमाह । पचेते इति ॥

---

कस्य वैकल्पिकत्वं कस्य नित्यत्वमित्यत्र विनिगमकाभावेनाभीष्टासिद्धेः । किं
च प्लुतविषये सूत्रद्वयस्यापि प्रवृत्त्याऽस्य नित्यत्वे द्विर्बद्ध इति न्यायो विनि-
गमक इत्यपि वक्तुं शक्यम् । किं च ई इत्यस्य प्रगृह्यप्रयुक्तप्रकृतिभावस्यापि
बाधनार्थत्वं स्यादिति विकल्पालाभः । वद्ग्रहणप्रयोजनं तु वायू ३ इतीत्येव
स्यात् । तस्मात् किमर्थमिति पूर्वपक्षभाष्यं कैयटरीत्यैव लापनीयम् । किं च
मूलस्यान्यथालापनमनुचितं, तथासति चिनुहि ३ इतीत्येतदुदाहरणदानस्या-
सङ्गत्यापत्तेरिति तत्तदंश एवान्येषां मते अरुचिरिति गृहाण । तदेतत् सुधी-
भिराकलनीयम् ॥

न वेति विभाषेति सूत्रविषय एवोभयत्र विभाषेति व्यवहारस्य स्वारसि-
कत्वादाह । कथं चिदिति । योगपरत्वे सूत्रपरत्वे वा इयमिति स्त्रीलिङ्ग-
निर्देशोऽनुपपन्न इत्यत आह । उद्देश्येति । इति भाव इति । यत्तु वस्तु-
तस्तु ईदूदेदन्तं यद्द्विवचनं तदन्तं प्रगृह्यमित्यर्थेऽपि न दोषः । न च पदार्थः
पदार्थेनान्वेति, न तु पदार्थैकदेशेनेति व्युत्पत्तिविरोध इति वाच्यम् । गभीरायां
नद्यां घोषः, ङमो ह्रस्वादचीत्यादाविव द्विवचनपदमेव निरुक्तार्थकमीदूदेदिति
तात्पर्यग्राहकमिति स्वीकारात् । संज्ञाविधाविति परिभाषा तु फलाभावान्न
स्वीक्रियत इत्यन्यत्र विस्तर इत्याहुस्तन्न । क्तक्तवतू निष्ठेत्यस्य परिभाषात्वस्य
पूर्वमुपपादितत्वेन परिभाषास्वीकारे तत्र तव दोषस्य दुर्वारत्वात् । बहुत्रानेक-

निपात ए। निपात इति किम्। चकारात्र। प्रत्ययस्य शास्त्रकल्पितार्थवत्त्वात्। एकाजिति कर्मधारयो, वर्त्तिपदार्थप्रधानत्वेनान्तरङ्गत्वाद्, 'व्याहरति मृगः' इत्यादिनिर्देशाच्च। तेन प्रेदमित्यादौ न

---

क्लिष्टकल्पनापेक्षया परिभाषास्वीकारस्यैव लघुत्वाच्च। अत एव भाष्ये तस्मादस्तु स एव मध्यमः पक्ष इति स्वारस्यमधिरोहतीत्यन्यत्र विस्तरः। एदन्तांशे उदाहरणान्तरबीजं दर्शयति। एदन्तमितीत्यादि॥

अनाङिति पर्युदासादर्थवत एवैकाचो ग्रहणं तादृशश्च निपात एवेत्याशयेन पृच्छति। निपात इति किमिति। आङो द्योतकतया स्वातन्त्र्येण प्रयोगार्हार्थवतो ग्रहणं न पर्युदासेन लभ्यते। किन्तु यथाकथंचित्। तादृशार्थश्च प्रत्ययस्याऽपीत्युत्तरयति। चकारेति। एतेन वर्णग्रहणेऽर्थवद्ग्रहणपरिभाषाया अप्रवृत्तेरिदमसङ्गतमित्यपास्तम्। वस्तुतस्त्विदं प्राचामनुरोधेन। स्वमते तु ओत्सूत्रभाष्ये आह उ आहो इतीत्यनर्थकनिपातेप्यस्य प्रवर्तनेनात्रार्थवत एव ग्रहणमिति नियमाभावादनाङिति पर्युदासादप्रत्ययस्य ग्रहणमिति प्रश्नाशयः। उत्तराशयस्तु पर्युदासेन तथाश्रयणे न मानम्। तेन प्रत्ययानुकरणेप्यस्य प्रवृत्तिरिति। स्पष्टं चेदमुद्योते। अन्तरङ्गत्वादिति। तथा च वर्णो वर्णेनेति सूत्रे भाष्यम्। समानाधिकरणसमासाद्बहुव्रीहिर्विप्रतिषेधेन। नैष युक्तो विप्रतिषेधः, अन्तरङ्गः कर्मधारयः, कान्तरङ्गता? स्वपदार्थे कर्मधारयः अन्यपदार्थे बहुव्रीहिरिति। इदमर्थस्याप्यङ्गशब्देन ग्रहणमिति प्राचीनरीत्या। स्वरीत्या तु निषादस्थपत्यधिकरणोक्तरीत्या लाघवमेव कर्मधारयस्यान्तरङ्गत्वे बीजं बोध्यम्। नन्वेवं क्वापि बहुव्रीहिर्न स्यात्, किंचैकाचो द्वे, धातोरेकाच इत्यादौ सर्वत्र बहुव्रीहेरेव सूत्रशैलीसिद्धत्वाद्वैरूप्याभावायात्रापि बहुव्रीहिरेव स्यादत आह। व्याहरतीति। प्रमाणेन लौकिकयुक्तीनां बाधस्य

दोषः–तदाह। एकोऽजिति। आङ्वर्ज इति। पर्युदासस्यौचित्यात्। अत एवैकाज्नाङिति नासूत्रि। वासुदेववाचकस्य अशब्दस्य आङा सहाव्ययीभावे आ आत् अमित्यादौ सत्यभिधाने स्वत आङ्भिन्नत्वेन

---

सर्वत्र दृष्टत्वादिति भावः। औचित्यादिति। लाघवादिति भावः। अत एव निपात इति किमर्थमिति भाष्यकारीयः प्रश्नः स्वारस्यमधिरोहति। ननु प्रतिषिद्धार्थोयमारम्भ इत्योत्सूत्रस्थभाष्यात् प्रसज्यप्रतिषेधस्यैव लाभेन फलमुखं गौरवं न दोषावहमित्यत आह। अत एवेति। नासूत्रीति। एवं न्यासे वाक्यभेदसाम्येऽप्यसमर्थसमासानाश्रयणप्रयुक्तं लाघवमत्रेति भावः। प्रसज्यप्रतिषेधे फलविशेषोऽपि नेत्याह। वासुदेवेत्यादि। अमिति। आ+अ+अमिति स्थिते पदद्वयापेक्षसमाससंज्ञापेक्षया वर्णमात्रापेक्षैकादेशस्यान्तरङ्गत्वात् पूर्वं प्रवृत्तौ तत्समकालं वा तत्प्रवृत्तौ पश्चात् सामासिकलुकि ततो नपुंसकह्रस्व इति प्रक्रिया। तेन नादसोसेरिति सूत्रस्थशेखरविरोधः। एतेनापरनिमित्तकत्वेनान्तरङ्गत्वात्पूर्वं ह्रस्वे पश्चात्सवर्णदीर्घे निरुक्तरूपमेव नेति वदन्तः परास्ताः। ननूत्तरपदत्वे चेत्यस्य योगविभागप्रयुक्तप्रत्याख्यानेन समानफलकत्वलाभायोत्तरपदस्य तद्घटितस्यवा पदत्वे कर्तव्ये प्रत्ययलक्षणं नेत्यर्थेन पूर्वान्तवत्त्वेन प्राप्तपदत्वस्यापि निषेधादपदान्तत्वेन प्रगृह्यत्वेऽपि प्रकृतिभावाप्राप्त्या अमित्युपन्यासोऽसङ्गतः। न च प्लुतप्रगृह्येति सूत्रे पदान्तादिति नानुवर्तत इति वाच्यम्। अग्रे मण्डूकानुवृत्त्यापत्तेः। कस्य चिदकारान्तस्य प्रगृह्यसंज्ञकाशब्देन समासे तस्माज्जसि उत्तरपदत्वे चेति निषेधेन पदत्वाभावे प्रकृतिभाववारणायात्रानुवृत्तेरावश्यकत्वाच्चेत्यत आह। आदाविति। आदिना आगतः उः तस्यानन्दोऽवानन्द इत्यस्य संग्रहः। यत्तु अमित एत इत्यत्र प्रकृतिभावापत्तिरित्याशय इति तन्न। अव्ययीभावस्य समासान्तरघटकत्वे विवादात्। यदपि आईए एइतीत्यादौ तदापत्तिरिति तदपि न। तत्र

**पूर्वान्तवत्त्वेन निपातत्वेऽपि प्रगृह्यत्वन्न। पूर्वान्तवत्त्वेनाऽऽङ्त्वातिदेशे ऽतिदिश्यमानधर्मविरुद्धस्वाश्रयधर्मप्रयुक्तकार्यनिवृत्तेरतिदेशस्व-भावासिद्धत्वात्। परादित्वेनाङ्भिन्नत्वं तु न लभ्यम्, अशास्त्रीय-**

---

विसर्गस्यैव सत्त्वात्। सम्बुद्धौ परादिवद्भावेन नदीत्वाद्ध्रस्वप्रवृत्तेः। **प्रगृह्यत्वं नेति।** तत्फलं तु अमि पूर्वरूपसिद्धिरिति भावः। **विरुद्धेति।** केचित्तु अत्र विरुद्धत्वं तदभाववत्तानिश्चयमुद्रया, न तु तदभावव्याप्यवत्तानिश्चय-मुद्रयापि। अत एवाधुरित्यादौ विभाषा घ्राधेडिति लुगर्थमतिदिश्यमानघेट्त्वस्य तदभावव्याप्यवत्तानिश्चयमुद्रया विरुद्धस्वाश्रयादन्तत्वप्रयुक्तात् इति जुस्भवती-त्याहुः। तन्न। जुस्विधौ कथमपि घेट्त्वस्यानिमित्ततया तदानीं घेट्त्वाति-देशस्यैवाभावेन निरुक्तन्यायाविषयतया विरुद्धत्वसङ्कोचे फलाभावात्। अत्र त्वाङ्त्वमुद्देश्यतावच्छेदककोटिप्रविष्टमिति तस्यातिदेशस्सुवचः। अत एव ओषु-यातमित्यत्रौत्सूत्रप्रयोजनकथनं भाष्यकृतस्सङ्गच्छत इति दिक्। ननु स्वाश्र-याङ्भिन्नत्वस्यातिदिश्यमानधर्मविरुद्धत्वेपि स्वमते उभयत आश्रयण इत्य-स्याभावेन परादिवद्भावेनाङ्भिन्नत्वातिदेशे प्रगृह्यत्वं दुर्वारमत आह। **परादि-त्वेनेति। अशास्त्रीयत्वादिति।** शास्त्रप्रकरणात्सति संभवे शास्त्रीयकार्य एव शास्त्रीयधर्मातिदेशाङ्गीकारादिति भावः। अत्र शास्त्रीयत्वं न शास्त्रान्वितत्वं, किन्तु शास्त्रबोध्यत्वम्। यद्यपि क्वचित् पुस्तकेषु परादिवत्त्वेनाङ्भिन्नत्वं तु न लभ्यम्। अशास्त्रीयत्वादिति ग्रन्थो नास्ति। सर्वव्याख्यानस्वरसोप्यत्रैव। तथा प्ययमर्थः प्रतिषिद्धार्थोयमारम्भः ओषुयातमिति भाष्यस्य पर्युदासेऽपि योजन-परौत्सूत्रस्थोद्योते स्पष्टः। पर्युदासे तु न दोष इति कैयटस्तु चिन्त्य एवेति बोध्यम्॥

एतेन अन्ये त्वनाङिति प्रसज्यप्रतिषेध एव, यदयमनाङिति प्रतिषेधं शास्तीति प्रकृतसूत्रस्थभाष्यात्। प्रतिषिद्धार्थोयमारम्भ इत्योत्सूत्रस्थभाष्याच्च

त्वात् । ओदिति सूत्रे आ उ ओ, इत्यत्र अनाङिति— 'प्रतिषिद्धार्थोऽयमारम्भ' इति भाष्यं तु पर्युदासेऽपि गम्यस्य प्रतिषेधस्य सत्त्वान्नानुपपन्नम् । अनाङिति पर्युदासादेव निपातैकाज्-

---

तत्त्वस्यैव लाभात् । तेन पूर्वोक्तस्थले परादिवद्भावेन प्राप्तमपि प्रगृह्यत्वं न । गम्यमानप्रतिषेधाभिप्रायकत्वं तु न युक्तम् । ओपुयातं मरुत इत्यादौ परादिवद्भावेन प्राप्तप्रगृह्यत्वस्य निषेधकाभावेन प्रवृत्तिसौलभ्येन प्रतिषिद्धार्थोयमारम्भः ओषु यातं मरुत इत्यादिभाष्यग्रन्थसन्दर्भासङ्गतेः। न च प्रतिषिद्धार्थत्वे ओतश्च्विप्रतिषेध इति वार्त्तिकानुत्थितिरिति वाच्यम् । प्रतिषिद्धार्थाया अपि ओदन्तस्य प्रगृह्यसंज्ञायाः प्रतिबन्धकाभावेनादोभवतीत्यत्रापिप्राप्तेरित्याचार्योक्तमपास्तम् । न चाङ्भिन्नत्वस्याशास्त्रीयत्वेऽप्यतिदेशो भवत्येव । अत एवार्थवत्सूत्रे काण्डे इत्यादौ पूर्वान्तवत्त्वेन प्रत्ययान्तभिन्नत्वमाशङ्कितम् । एवं च पर्युदासत्वे ओत्सूत्रस्थभाष्यविरोधो लक्ष्यासिद्धिश्चेति वाच्यम् । काण्डे इत्यादौ पूर्वान्तवत्त्वेन प्रातिपदिकत्वातिदेशे सर्वथा दोषसत्त्वेन पर्युदास एव दोषदानपरभाष्यस्यैकदेश्युक्तित्वेन तद्बलेनाशास्त्रीयधर्मानतिदेशात् । अत एव स्थानिवत्सूत्रेण गतार्थत्वमाशङ्कितं भाष्ये । अन्यथा स्थानिवत्सूत्रेणाशास्त्रीयधर्मानतिदेशाद्गतार्थत्वशङ्का न संगच्छेत । किंचानेनाशास्त्रीयधर्मातिदेशाङ्गीकारे न किंचित् प्रयोजनमुपलभ्यतेऽन्यत्र दोषात् । न चैवमशास्त्रीयकार्येऽप्यस्याप्रवृत्तौ पर्युदासे प्रगृह्यत्वाभावस्याशास्त्रीयत्वेनाङ्त्वानातिदेशे स्वाश्रयमाङ्भिन्नत्वमादाय प्रगृह्यत्वं दुर्वारम्, अतिदिश्यमानेत्यादेरविषयत्वादिति वाच्यम् । पर्युदासलभ्याशास्त्रीयेऽपि शास्त्रतात्पर्यविषये शास्त्रीयवदतिदेशबोधनात् । स्पष्टं चेदमुद्योते । अत एवाप्रत्यय इत्यस्य पर्युदासत्वेऽपि तण्डुलानित्यत्र न दोष इत्यन्यत्र विस्तरः ॥

ननु तर्हि ओत्सूत्रस्थभाष्यासङ्गतिरत आह । ओदिति सूत्रे इत्यादि ।

पत्वे लब्धे निपातैकाज्ग्रहणं स्पष्टार्थम्। स्वाङ्गसमुदाये स्वाङ्गत्वाभाववदच्समुदायेऽच्त्वाभावादजित्येवाच्समुदायग्रहणाभावे सिद्धे एकग्रहणमन्यत्र वर्णग्रहणे जातिग्रहणार्थम्। तेन भिप्सतीत्यादिसिद्धिरिति भाष्ये स्पष्टम्। जातिग्रहणार्थमित्यस्योपात्तजात्याश्रयैकानेकव्यक्तिग्रहणार्थमित्यर्थः। तेन तितउशब्दैकदे-

---

स्पष्टार्थमिति। अन्यथा दीर्घत्वादिनापि सादृश्यं गृह्येतेति भाव इति भट्टाः। स्पष्टप्रयोजनकमित्यर्थः। तत्र निपातग्रहणमुत्तरार्थम्। एकाज्ग्रहणप्रयोजनं तु स्वयमेव वक्ष्यतीति श्रीधरः। अत्र भट्टोक्तमेव न्याय्यम्। तथाहि। निपातग्रहणस्योत्तरार्थत्वेऽपीहकरणस्य स्पष्टार्थताया एव लाभात्। एकाज्ग्रहणफलं वर्णग्रहण इति परिभाषाज्ञापनमप्यपृक्त एकालित्यत्रैकग्रहणेनैव सिद्धम्। उत्तरग्रन्थस्तु इह वस्तुतस्सतः प्रयोजनकथनपरमिति बोध्यम्। स्पष्टं चेदं कौस्तुभे। स्वाङ्गसमुदाये इति। अत्र यद्वक्तव्यं तदुक्तं प्राक्। सिद्धिरिति। हलन्ताच्चेति सूत्रेऽन्तग्रहणसामर्थ्यात् व्यवहिताव्यवहितसाधारणमेव सामीप्यं गृह्यत इति तु न शङ्क्यम्। यियक्षतीत्यादौ दोषात्। अत्र यद्वक्तव्यं तदूकाल इत्यत्रोक्तम्। इत्यर्थ इति। अन्यथा जातिग्रहणेऽपि जातेरेकैकव्यक्तिव्यङ्ग्यतयाऽसङ्गतिरेव। प्रवृत्तिनिमित्ततया जातिग्रहणस्य सर्वत्र सत्त्वेन तस्यावक्तव्यत्वाच्च। तज्जात्याश्रयमात्रारब्धसमुदाये सा जातिरारोप्यत इति भावः। एवं च णिजन्ते वक्ष्यमाणरीत्यानुपपत्तिर्नास्तीति बोध्यम्। यत्त्वत्र स्वांशे एकग्रहणचारितार्थ्यप्रदर्शनाय कैयटेनोक्तं अ इ उ अपेहीति समुदायस्यैका संज्ञास्यान्नावयवानां, समुदायैकाज्द्विर्वचनवदित्यन्त्यस्यैव प्रकृतिभावाद्यणादेशो न स्यात्, पूर्वयोस्तु स्वरसन्धिस्स्यात्। अच्समुदायपरिग्रहानुरोधित्वाच्च निपातसमुदायो गृह्येत। एकनिपातस्याच्समुदायस्याभावादिति। तदयुक्तम्। समुदायसंज्ञया अवयवानामप्यनुग्रहादेकाज्द्विर्वचनन्यायानवतारात्। निपातसमुदायस्य निपातग्रहणेन ग्रहणमपि स्वाङ्ग-

शस्य अउ इत्यस्यानुकरणे अउ अकरोदित्यत्र 'अनुकरणं चानिति' इति निपातत्वेऽपि प्रगृह्यत्वाभाव एकग्रहणफलं बोद्धव्यम् । ननु ङकारस्य क्वाप्यश्रवणेन ङिदङिद्विवेको दुर्ज्ञेय इत्यत आह । वाक्य-स्मरणयोरिति । वाक्यशब्देन स्वार्थगतमनभिमतत्वम् । स्मरणं विस्मृतस्य स्मृतिविषयता । एवं किल तदिति स्मृतार्थनिर्देशः ॥

निपात इत्यनुवृत्तमोदित्यनेन विशेष्यत इत्याह । ओदन्त इति । निपातसञ्ज्ञा चादिपदोपस्थितचादीनां सति संभवे-

---

समुदायस्य स्वाङ्गग्रहणेनेव न भवति । प्रत्येकं सूत्रचारितार्थ्यात् । स्पष्टं चेद-मुद्योत इति सूचयन् स्वयं चारितार्थ्यं दर्शयति । तेनेत्यादिना । इत्यस्येति । इदमुपलक्षणम् । अ इ उ इति निपातसमुदायानुकरणस्यापि । स्मृतार्थेति । आकारप्रतिपाद्यार्थेत्यर्थः ॥

अनुवृत्तमिति । तत्फलं तु मिथो इतीत्यत्र प्रगृह्यत्वाभावः । यत्तु देवोऽसीत्युदाहृतं बृहति, तत्तु वर्णग्रहणे प्रतिपदोक्तपरिभाषा नेति प्राचीनरीत्या । स्वरीत्या तु तत्परिभाषया व्यावर्त्यत इति न निपातग्रहणव्यावर्त्यंतदिति बोध्यम् । यद्वा प्रतिषिद्धार्थोयमारम्भः ओषुयातमिति भाष्यात्प्रकृतसूत्रे प्रतिपदोक्तपरिभाषा न प्रवर्तत इति बृहच्छेखराशय उन्नेयः । वस्तुतस्तु अनदः अदः अभवत् अदोऽभवदित्यादौ प्रगृह्यत्ववारणायात्र तत्परिभाषाया उत्तरत्र प्रवर्तनेन प्रतिषिद्धार्थोयमारम्भ इति भाष्यमेकदेश्युक्तमित्युद्योते उक्तत्वेनात्र तत्परिभाषाप्रवृत्तिरुचितेति बोध्यम् । अस्यैकदेश्युक्तित्वेन ततोऽपि तदुपष्टम्भेन पूर्वसूत्रे प्रसज्यप्रतिषेधं प्रत्याशा कार्या । ननु गौणमुख्यन्यायस्यार्थवद्ग्रहण-परिभाषामूलकतया तद्वदेव विशिष्टरूपोपादानविषयतया वर्णग्रहणे तदप्रवृत्तौ गोऽभवदित्यादौ तन्न्यायेन प्रगृह्यसंज्ञाया वारयितुमशक्यतया भाष्यासङ्गति-रत आह । निपातसंज्ञेत्यादि । ननु निपातपदेन चादीनामुपस्थितावपि

ऽर्थवतामेवेति सार्थकनिपातानां निपातपदेन तत्तदर्थविशिष्टानामेवोपस्थितिरिति गौणमुख्यन्यायेन प्रकृतसूत्रस्थनिपातपदेन गौणार्थानां न ग्रहणमिति गोऽभवदित्यादौ च्व्यन्ते नास्य प्रवृत्तिः। एवञ्च कार्यकालपक्षेऽपि च्व्यन्ता निपाता इत्यस्यानुपस्थितिरेतत्प-

---

तेषामनुच्चारणादुच्चारितस्यैव प्रत्यायकत्वात् प्रकृते तदर्थानुपस्थितावर्थोपस्थितिमूलकप्रकृतपरिभाषायाः कथं प्रवृत्तिरत आह। **अर्थवतामेवेति**। अर्थवद्ग्रहणपरिभाषया असत्त्व इति पर्युदासाच्चेति भावः। ननु निपातसंज्ञासूत्रेऽर्थोपस्थितिसत्त्वेऽप्यत्रार्थोपस्थितिः कथमत आह। **सार्थकनिपातानामित्यादि**। यद्रूपावच्छेदेन संज्ञाविधानं तद्रूपावच्छेदेनैव संज्ञ्युपस्थितेर्नियततया निपातप्रदेशेषु विशिष्टरूपस्य निपातपदस्योपादानसत्त्वे संज्ञिविशेषणत्वेनोपस्थितमर्थमादाय परिभाषाप्रवृत्तावारोपितगोत्वादिविशिष्टबोधकच्व्यन्तगोशब्दव्यावृत्तिः सुलभेति भावः। एतेन यद्यपि निपातपदेन चादीनामर्थवतामेवोपस्थितिरिति चाद्यंशे गौणमुख्यन्यायकार्यं प्रवर्तताम्। च्व्यन्तांशे तु न विशिष्टरूपोपादानमित्यर्थवद्ग्रहणपरिभाषागौणमुख्यन्याययोर्न प्रवृत्तिः। च्व्यन्तांशे मुख्यार्थासम्भवश्च। तथापि चाद्यंशे विशिष्टरूपोपादानमात्रेण प्रवर्तमानगौणमुख्यन्यायो गौणार्थके प्रगृह्यसंज्ञां व्यावर्तयति, भाष्यप्रामाण्यादिति परास्तम्। प्रगृह्यसंज्ञाविधायके चादीनामुपस्थितावपि तदुपादानाभावाच्च। ननु यथोद्देशे गृहीतशक्त्या निपातपदेन चादिच्व्यन्तयोरुपस्थितौ चाद्यंशे मुख्यस्य च्व्यन्तांशे गौणस्य चोभयोर्ग्रहणसंभवात् प्रकृतन्यायविषयत्वेऽपि कार्यकाले तत्तत्संज्ञाशास्त्राणां प्रत्येकमुपस्थिताविशेषेण च्व्यन्ता निपाता इत्यस्याप्युपस्थितौ तदेकवाक्यतापन्नप्रगृह्यसंज्ञासूत्रे मुख्यार्थस्यासम्भवेन प्रकृतन्यायाप्रवृत्ति स्स्यादत आह। **कार्यकालपक्ष इति**। तत्पक्षेऽपि प्रकृतन्यायसहकारेण मुख्यार्थविशिष्टचादीनां संज्ञाविधायकस्यैवोपस्थितिर्न गौणार्थविशिष्टच्व्यन्तस्य संज्ञाविधायकस्येति भावः॥

त्वात्। अत एवानर्थकेऽपि निपाते सा सञ्ज्ञा सिद्ध्यति ॥

त्रपो इतीत्यादौ प्रगृह्यत्वायाह। संबुद्धिनिमित्तक इति। सम्बुद्धिपर इति व्याख्याने तु सोर्लुका लुप्तत्वेन तत्परत्वाभावान्न

---

ख्यानमनित्यत्वादिति प्रतीकस्थेन नन्वव्ययसंज्ञायाः कथं पदकार्यत्वं येनानित्यत्वमवलम्ब्यत इति चेच्छृणु। पदकार्यविषयकोयं न्याय इत्यस्य यस्य शब्दस्य वस्तुतः पदत्वविशिष्टस्यैव यत्कार्यप्रयोजकत्वं प्राप्नोति, तत्र कार्ये तस्य गौणार्थकस्य न ग्रहणमिति न्यायार्थ इत्यर्थः। अस्ति च च्व्यन्तस्य पदत्ववत एवाव्ययत्वप्रयोजकत्वमित्यादिस्वग्रन्थेन विरुद्धमिति बोध्यम्। अनित्यत्वादिति। अयं भावः। इणष्षीध्वमित्यत्राङ्गग्रहणादर्थवद्ग्रहणपरिभाषा अनित्या। तस्याश्चानित्यत्वादप्रवृत्तौ तन्मूलभूतस्य गौणमुख्यन्यायस्य कथं प्रवृत्तिस्स्यादिति। अत एव गोऽभवदिति भाष्यप्रयोगस्सङ्गच्छते। अनर्थकेऽपीति। अपिना गौणार्थकस्य संग्रहः। सा संज्ञेति। अव्ययसंज्ञेत्यर्थः। भट्टास्तु निपातप्रगृह्यसंज्ञेत्यर्थमाहुस्तत्तु अक्षराननुगुणमिति भाति ॥

त्रपो इतीत्यादाविति। न च सम्बुद्धेरिति षष्ठ्यन्तं पठ्यताम्। तथा च प्रत्ययलक्षणेन सम्बुद्ध्यन्तत्वं सुलभमिति किं निमित्तसप्तम्याश्रयणेनेति वाच्यम्। विष्णुवाचकाशब्दस्य सम्बुद्ध्यन्तस्योशब्देन सन्धौ पूर्वान्तवत्त्वेन सम्बुद्ध्यन्तत्वे परादिवत्त्वेन निपातत्वेऽप्योदित्येतद्बाधित्वा परत्वाद्विकल्पापत्तेः। ननु त्रपो इतीति न्यूनम्। सम्बुद्धिलोपस्थलेऽपि सम्बुद्धित्वस्याल्पमात्रवृत्तिधर्मावच्छिन्नस्थानितावद्वृत्तिकत्वात्। स्थानिवत्त्वेनानतिदेशे सर्वत्रापि तत्परत्वस्य दौर्लभ्यादिति चेन्न। सम्बुद्धिनिमित्तक इति प्राचीनग्रन्थावतरणरूपतयाऽस्य ग्रन्थस्य तन्मते आद्यार्थकानल्विधाविति निषेधाभावेनादोषात्। तत्स्वीकारेप्यतिदिश्यमानधर्मेण साक्षादवच्छिन्नोद्देश्यताककार्य एव तन्निषेध इति वदतां मते

स्यात् । न लुमतेति निषेधानित्यत्वं त्वगतिकगतिः । इताविति किम् । पटोऽत्र । अनार्षे किम् । ब्रह्मबन्धवित्यब्रवीत् । संहितायाा विवक्षायामप्यवादिरहितप्रयोगार्थमिदम् । तद्विवक्षा च वर्णोच्चारणे नियतेनार्धमात्राकालव्यवायेनोच्चारणेच्छा । तदधिकार्द्धमात्राकाल-

---

दोषाभावाच्च । नियमस्य विधिमुखेन प्रवृत्तिरिति पक्षे प्रत्ययलक्षणेन सम्बुद्धित्वं सुलभमिति समाधानं तु न सम्यक् । एतन्निषेधविषये तत्प्रवृत्तौ नियमकथाया एवोच्छिन्नत्वापत्तेः । वस्तुतस्तु स्वरीत्या आद्यार्थकानल्विधाविति निषेधे अतिदिश्यमानधर्मे साक्षादवच्छिन्नोद्देश्यताकत्वानिवेशे फलाभावस्य पूर्वमुपपादितत्वेन सर्वत्रापि निमित्तसप्तम्याश्रयणे फलं बोध्यम् । ननु सावित्येव सिद्धे सम्बुद्धिग्रहणं प्रगृह्यत्वे न लुमतेत्यस्याप्रवृत्तिज्ञापनार्थम् । तेन मिथो इतीत्यत्रातिव्याप्तिवारणेन सम्बुद्धिग्रहणं चरितार्थम् । फलं च त्वपो इतीति, किं निमित्तसप्तम्याश्रयणेनेत्यत आह । न लुमतेतीत्यादि । इदं प्राचीनरीत्या । स्वरीत्या तु सर्वत्रापि निमित्तसप्तम्याश्रयणफलस्योपदर्शितत्वेन ज्ञापनफलं दुर्निरूपमित्येव समाधातुं शक्यम् । सावित्युक्तौ तु निमित्तसप्तम्याश्रयणस्यान्यार्थमावश्यकतया सुनिमित्तकौकार इत्यर्थे शिवोऽर्च्य इत्येतदेकदेशशिवो इत्यस्यानुकरणे शिवो इतीत्यत्र प्रगृह्यत्ववारणाय सम्बुद्धिग्रहणमिति दिक् । उत्तरत्रेतावित्येतन्मात्रानुवृत्त्यर्थमुपस्थिते इति नोक्तम् । ब्रह्मबन्धविति । वेदे आपाद्यमानरूपाभावात् । प्रगृह्यत्वस्य वैकल्पिकत्वेन चानार्ष इति व्यर्थमिति केचित् । अर्धमात्राकालव्यवायेनेति । यत्तु अर्धमात्राधिककालव्यवायेनोच्चारणेच्छा संहिताविवक्षा । यथाश्रुतं तु न युक्तम् । अर्धमात्रान्यूनकालेनोच्चारणस्थले संहितात्वानापत्तेरिति, तत्तु वर्णोच्चारणे नियतेनेत्यक्षरादर्शनमूलकं, नियतस्य परिहर्तुमशक्यतया तादृशस्थलस्य गगनकुसुमायमानत्वात् । तदधिकार्धमात्रेति । ततोऽप्यधिककालव्यवायेनोच्चा-

व्यवायेनोच्चारणेच्छा च तदविवक्षेति बोद्धयम् ॥

उञः । अत्रोञ् निपात एव । उञ ऊँ इत्येकसूत्रत्वे तु शाकल्यग्रहणाननुवृत्तौ ऊँ इतीत्येकमेव स्यात् । प्रगृह्यसञ्ज्ञाप्रकरणेन प्रगृह्यत्वस्यादेशस्य च सहविधानात् । उ इति वितीति च न

---

रणं त्वर्थबोधानुपयोगित्वाच्छिष्टसम्प्रदायविरोधाच्च हेयमेव ॥

**निपात एवेति** । न तु प्रत्याहारः, उजित्येव सिद्धेः, नापि कृतसम्प्रसारणस्य वेञो, लाक्षणिकत्वात्तुक्प्रवृत्त्या फलाभावाच्च । न चादेशविधौ फलम् । तुग्विशिष्टस्यानिर्दिश्यमानत्वादिति भावः । एकयोगे हि उञ इति श्रुतमादेशेन श्रुतत्वात्सम्बध्यते न प्रगृह्यसंज्ञया । सा तु निपात एकाजिति नित्यैवास्य भवति । शाकल्यश्रुत्यनुवृत्त्या चादेशे विकल्पिते रूपद्वयं स्यात् । ऊँ इति उ इति न तु वितीति तदर्थो योगविभाग इति कैयटस्यायुक्ततां ध्वनयन् स्वयं योगविभागफलमन्यथा वक्तुमुपक्रमते । **एकसूत्रत्वे त्विति** । उञ इत्यस्य प्रगृह्यसंज्ञयाऽपि सम्बन्धे हेतुमाह । **प्रकरणेनेति** । तेन न प्रगृह्यसंज्ञयेति कैयटोक्तमयुक्तमिति सूचितम् । ननु प्रगृह्यसंज्ञाया अपि विधानेन वाक्यभेदापत्तिरत आह । **सहविधानादिति** । द्वयोरपि विधेयतयोः समूहालम्बनात्मकैकबोधीयतया न वाक्यभेद इति भावः । ध्वनितं चेदमुद्योते सहविधानेन वाक्यभेदस्याप्यभावादिति ग्रन्थेन । एतेनोभयोस्सहविधाने वाक्यभेदापत्त्या गौरवाद्विशिष्टविधानमेव न्याय्यम् । अत एव भाष्ये प्रगृह्यसंज्ञकश्चेत्यनेन विशिष्टविधानमेव बोधितमित्यपास्तम्, गौरवाभावस्योद्योत एव स्पष्टमुक्तत्वात् । विशिष्टविधाने बाधकस्याग्रे मूल एव स्फुटत्वाच्च । न च प्रगृह्यसंज्ञकश्चेति भाष्यविरोध इति वाच्यम् । स्थानिवद्भावलब्धार्थस्वरूपकथनमिदमित्युत्तरस्याग्रे वक्ष्यमाणत्वात् । तदेतद्ध्वनयन्नवक्ष्यति । **मानाभावादिति** । अत एव भाष्ये उञ ऊँ इत्ययमादेशो भवति

स्यात् । आदेशे प्रगृह्यत्वकार्यन्तु स्थानिवद्भावेन बोद्ध्यम् ।

---

शाकल्यस्य मतेन दीर्घोऽनुनासिकः प्रगृह्यसंज्ञकश्चेत्युक्तम् । विशिष्टविधानाशयकत्वे तूञः प्रगृह्यः ॐ इत्ययमादेशो भवतीत्युक्त्वा ततो दीर्घोऽनुनासिकश्चेति स्वरूपं विवृणुयात् । स्वरूपविवरणप्रसङ्ग उक्तस्य प्रगृह्यसंज्ञकश्चेत्यस्य वक्ष्यमाणरीत्या स्वरूपकथनपरतैव ज्यायसी । एतेन सहविधानाशयकत्वे ॐ आदेशः प्रगृह्यसंज्ञा चेति ब्रूयात् । तस्माद्वाक्यभेदेन संज्ञाविधानमित्यपास्तम् । न च सामानाधिकरण्येनान्वयस्य पूर्वं क्लृप्तत्वादुञ इति श्रुतमादेशेनैव सम्बध्यते, न प्रगृह्यसंज्ञयेति कैयटोक्तेश्च संभवति सामानाधिकरण्ये वैयधिकरण्यस्यान्याय्यत्वेनास्यादेशविशेषणत्वमेव युक्तमिति वाच्यम् । किमर्थो योगविभाग इत्युत्तरभाष्यासङ्गत्यापत्तेः । तथाहि । किमर्थो योगविभाग इति भाष्यस्यायमाशयः । प्रगृह्यत्वादेशयोश्शाकल्यमत एव प्राप्त्या एकप्रयोग एव प्रवृत्तौ ॐ इतीति रूपमेतत्सूत्रविहितप्रगृह्यत्वस्य प्राप्तविभाषात्वेन पक्षेऽभावतात्पर्यकतया निपात इत्यस्याप्रवृत्तौ वितीति रूपमिति द्वे रूपे, ते चैकयोगेऽपि सिध्यत इति । एवं चैकयोगे वितीति न सिद्ध्यतीति कैयटोक्तमपास्तम् । ॐ वा शाकल्यस्येत्युत्तरभाष्यस्य त्वयमाशयः । योगविभागसामर्थ्याच्छाकल्यानुवृत्तिसामर्थ्याच्च शाकल्यपदं न यथाश्रुतार्थकम् , किंतु विकल्पमात्रतात्पर्यकम् । एवं च शाकल्यमत एव विकल्पः फलितः । तेन सकलेष्टसिद्धिरिति । इदं सर्वं प्रगृह्यत्वस्य विधान एव संघटते । अन्यथा विशिष्टविधाने पक्षे तदभावाद्वितीत्यस्य तन्मत एवादेशविधानेनोभयोरेकप्रयोगे प्रवृत्त्या उ इतीत्यस्य सिद्धिरित्येकयोगयोगविभागपक्षयोः फलभेदेन सामर्थ्याभावाद्विकल्पालाभेनाभीष्टासिद्ध्या शाकल्यस्याचार्यस्य मतेन ॐ विभाषा यथा स्यादित्यस्यासंगत्यापत्तिरिति स्पष्टं तद्विदामिति दिक् । ननु सहविधाने उ इत्यस्य प्रगृह्यत्वाभावेन सन्धिकार्ये वितीति स्यादिति ॐ इत्येकमेवेत्यनुपपन्नमत आह । आदेशे प्रगृह्यकार्यं त्विति । ननु विशिष्ट-

**प्रगृह्यत्वस्य साक्षादुद्देश्यसम्बन्धस्य क्लृप्ततयात्र विधेयविशेषणत्वे मानाभावात् । शाकल्यग्रहणानुवृत्तावपि प्रगृह्यत्वस्य ऊँ आदेशस्य विकल्पे ऊँ इति वितीति सिद्ध्यति, न तु उ इतीति । प्रगृह्यत्ववि-कल्पेन पक्षे तदभावेऽप्यस्य तात्पर्यादेतदभावे निपात एका-जित्यस्याप्रवृत्तेः । तदुक्तं भाष्ये योगविभागं प्रदर्श्य किमर्थो योगविभागः शाकल्यमते ऊँ विभाषा यथा स्यात् । ऊँ इति उ इति । अन्येषामाचार्याणां मतेन वितीति । अनेन हि योगविभा-गस्य 'उ इति' इति रूपसिद्धिः फलमिति स्पष्टमेव लभ्यते । अतो योगविभागेन व्याचष्टे । उञ इति । उञो—वाचकं प्रगृह्य-पदमित्यर्थः ॥**

---

विधानमेवास्तु । एवं च स्थानिवद्भावाश्रयणमपि नावश्यकमिति लाघवमत आह । **प्रगृह्यत्वस्येत्यादि** । **मानाभावादिति** । एतदुपपादितं प्राक् । **न तु उ इतीति** । न च निरनुबन्धकोकारमादाय तत्सिद्धिरिति वाच्यम् । उ इतीत्यतस्सानुबन्धकबोधस्यापीष्टत्वादिति स्पष्टमुद्योते । न चादेशाभावपक्षे शाकलह्रस्वेन उ इतीति तदभावे वितीति च सिद्ध्यतीति वाच्यम् । योग-विभागाभावे शाकल्यग्रहणस्य यथाश्रुतत्वेन ऊँभावविनिर्मुक्तस्यान्यमतसिद्ध-प्रयोगस्य शाकलह्रस्वाविषयकत्वात् । न च शाकलह्रस्वोत्तरं स्थानिवत्त्वेनोऽन्त्वाति देशस्याद्यार्थकानल्विधाविति निषेधेनाप्राप्त्या सर्वथा निरवकाशत्वेन बाधका-देशप्रवृत्तौ पश्चाच्छाकलप्रवृत्तिर्दुर्वारेति वाच्यम् । अतोऽमित्यादाविवोत्सर्गा-प्रवृत्तेः । प्रसह्यसंज्ञा तु निपात एकाजिति नित्यैव भवतीति कैयटोक्तमयुक्तमिति सूचयन्नाह । **प्रगृह्यत्वविकल्पेनेत्यादि** । स्वोक्तमर्थं भाष्यानुग्रहेण द्रढयति । **तदुक्तमिति** । ननूञ इति षष्ठीनिर्देशात् समानाधिकरणपदस्य संज्ञात्वप्रत्याय-कस्याभावात् कथमस्य संज्ञाविधायकतेत्यत आह । **उञो वाचकमिति** ।

शाकल्यस्येतौ प्रगृह्यमित्यनुवर्त्तते तदाह । उञ इतौ वेत्यादि । विकल्पाननुवृत्तौ हि निपात एकेत्येव सिद्धे इदं व्यर्थमेव स्यात् । एवञ्च प्राप्तविभाषेयम् । ऊँ इत्यत्र शाकल्यप्रगृह्यपदयोरसम्बन्धे उञ इत्यर्थाधिकारादप्रगृह्यस्यैवादेशो तस्य 'इको यण्' इति यणि ऊँ इतीत्यस्यासिद्धिः । दीर्घोच्चारणवैयर्थ्यापत्तिश्च । विकल्पमात्रसम्बन्धेऽपि ऊँ इतीत्यस्यासिद्धिरिति विधानसामर्थ्यात्प्रगृह्यपदसम्बन्धः ।

---

संज्ञाप्रकरणात् प्रगृह्यपदस्य स्वरूपपदार्थकतया तेन सहोञो वाच्यवाचकभावातिरिक्तसम्बन्धस्यासम्भवात्स एव षष्ठ्यर्थ इति भावः । यणीति । न चादेशविधानवैयर्थ्यम् । प्रगृह्यसंज्ञाबाधनेन चारितार्थ्यात् । अनन्त्यस्यापीति प्लुतविषये चारितार्थ्याच्च । एतेन दीर्घमुच्चारणं यस्यानुनासिकत्वविशिष्टादेशस्य तद्वैयर्थ्यापत्तिरिति श्रीधरोक्तमपास्तम् । यदपि शाकलप्रकृतिभावे अनुनासिकोच्चारणसार्थक्यमिति तन्न । शाकल्यान्यमत एवादेशप्रवृत्त्या तत्र शाकलाप्रवृत्तेः । एतेन विधिवैयर्थ्यं तु नोक्तम् । प्रतिपदोक्तत्वादत्र कृते शाकल्येनानुनासिके ह्रस्वे कृते साफल्यादिति भट्टोक्तमपास्तम् । तदेतदभिसन्धायाह । दीर्घोच्चारणेति । वैयर्थ्यापत्तिश्चेति । यत्तु संहिताया अविवक्षायां तच्चरितार्थमिति, तन्न । संहिताधिकारप्रत्याख्यानरीत्याऽर्धमात्राधिककालव्यवाये आदेशस्यैवाप्रवृत्तेः । विधानेति । प्राचीनरीत्या इदम् । तन्मते शाकलह्रस्वस्य तक्रकौण्डिन्यन्यायेनास्यापवादतया तद्विषये ह्रस्वाप्रवृत्तेः । स्वरीत्या तु ह्रस्वे कृते स्थानिवद्भावेनोत्त्वालाभान्निरवकाशत्वेन बाधकत्वादनन्तरं शाकलह्रस्वे दीर्घोच्चारणवैयर्थ्यमेव बोध्यमिति भट्टाः । वस्तुतोऽनन्त्यस्यापीति प्लुतविषये विधिसार्थक्येन सर्वमतेष्वपि दीर्घविधानेत्यर्थ उचितः । अत एवोद्योते ऊँ इति दीर्घोच्चारणात् प्रगृह्यपदस्यात्र सम्बन्ध इत्युक्तमिति ध्येयम् । यदि शाकल्यस्येति नापेक्ष्यते, तदा प्रगृह्यस्योञो

**प्रगृह्यपदमात्रसम्बन्धेऽर्थाधिकारादप्रगृह्यस्य नित्ये ऊँ आदेशे ऊँ इतीति, प्रगृह्यस्य उइतीति सिद्धेऽपि वितीति न सिद्ध्येत् । तदाह । उञ इतौ दीर्घोऽनुनासिक इत्यादि । अत्र विशिष्टस्य विधिरिति न वाक्यभेदः । न च प्रगृह्यत्वमादेशश्च शाकल्यमते इति तयोरेकप्रयोगे एव प्रवृत्तिः स्यादिति वाच्यम् । योगविभागसामर्थ्येन शाकल्यमते एव भावाभावकल्पनात् । वस्तुत उञनुवादेन सञ्ज्ञाऽऽदेशयोः सहविधानमेव न्याय्यम् । आदेशे स्थानिवद्भावात्प्रगृह्यकार्यम् । भाष्ये 'प्रगृह्यसञ्ज्ञकश्च' इत्यपि स्थानिवद्भावलब्धार्थस्वरूपकथनमिति न्यायविदो विचारयन्तु ॥**

---

नित्यमादेश इति कैयटेनोक्तम् । तस्यायं भावः । अनुवर्तमानप्रगृह्यस्यादेशेन सम्बन्धे उञ्मात्रस्य नित्यं प्रगृह्यसंज्ञकस्य ऊँभावस्य विधानापत्तौ योगविभागेन प्रगृह्यसंज्ञाविधानस्य वैयर्थ्यापत्तेरनुवर्तमानं प्रगृह्यपदं षष्ठ्यन्ततया विपरिणमय्य स्थानिना सम्बध्यत इति । स्पष्टं चेदमुद्योते । तदेतत्कैयटमतमयुक्तमिति ध्वनयन्नाह । **अर्थाधिकारादिति** । अयं भावः । प्रगृह्यस्य स्थानिना सम्बन्धे तद्विशेषणमहिम्नैव निपात एकाजिति सूत्रप्राप्तस्योञो प्रगृह्यत्वस्य वैकल्पिकत्वसिद्ध्या ऊँ इति वितीति कैयटाभिप्रेतरूपद्वयसिद्धौ योगविभागवैयर्थ्यस्य तादवस्थ्यात्तत्सार्थक्यायाप्रगृह्यस्यैवादेशविधानमुचितम् । योगविभागस्तु अत्र पक्षे उ इतीति सिद्ध्यर्थमावश्यकम् । अन्यथा निपातप्रगृह्यसंज्ञाया अयमपवादस्स्यादिति तदसिद्धिस्स्पष्टैवेति । एतेनेदमयुक्तम् । उञितिपदस्याप्रगृह्यत्वे शक्त्यभावादिति परास्तम् । अप्रगृह्यत्वशक्त्यभावेऽपि प्रगृह्यसंज्ञाविधौ प्रगृह्यस्योद्देश्यत्वासम्भवेनार्थादप्रगृह्य एव सम्भवतीत्याशयात् । **अत्र विशिष्टस्येति** । इदं तु कौस्तुभरीत्या । मूलाक्षराणां तत्रैव स्वारस्यात् । **योगविभागसामर्थ्येनेति** । उपपादितमेतत् । स्वसिद्धान्तं सोपपत्तिकं दर्शयति । **वस्तुतस्त्विति** । अत्र यद्वक्तव्यं तदुक्तम् । **विचारयन्त्विति** ॥

अत्राचार्याः । योगविभागाभावे प्रगृह्यत्वस्य ऊँ आदेशस्य च शाकल्यमतेन युगपत्प्रवृत्तौ तन्मते ऊँ इतीति तदन्यमते उ इति प्रगृह्यत्वस्य निपात एकाजनाङिति सामान्यशास्त्रप्रणयनेन तदन्यमतेऽपि सत्त्वनिश्चयेन स्मृत्यन्तरानुसन्धानद्वारा प्रगृह्यत्वांशे विकल्पासम्भवेनादेशांश एव स्मृत्यन्तरानुसन्धानद्वारा विकल्पपर्यवसानापत्तेः । यथा ऋतो भारद्वाजस्येत्यस्याचस्तास्वदिति सामान्यशास्त्रप्रणयनेन ऋदन्ते स्मृत्यन्तरानुसन्धानद्वारा नेड्विकल्पबोधकत्वम् । न च प्रगृह्यपदानुवृत्तिवैयर्थ्यम् । तस्योत्तरत्रानुवृत्त्यर्थत्वेनोपपत्तेः । तथा चैकयोगत्वे शाकल्यमते ऊँ इतीत्येकमेव स्यात् । तदेतदुक्तं भाष्ये, शाकल्यस्याचार्यस्य मते ऊँ इति विभाषा यथा स्यात् । ऊँ इति उ इतीति । तदन्यमतेन निपात एकाजिति नित्यं प्रगृह्यत्वादु इतीति स्यात् । तदेतदुक्तं भाष्ये अन्येषामाचार्यणां मतेन वितीति, योगविभागेन उञ इत्यनेन प्रगृह्यत्वस्य शाकल्यमते विधानेन योगविभागेन सिद्धप्रगृह्यसंज्ञाविज्ञानसामर्थ्यात् स्मृत्यन्तरानुसन्धानद्वारा सामान्यशास्त्रसत्त्वेऽपि प्रगृह्यत्वांशे विकल्पस्सिद्ध्यति । द्वितीययोगेन तु सति प्रगृह्यत्व एवादेशविकल्पः । तत्रापि शाकल्यग्रहणानुवृत्तिसामर्थ्यात् । ननु शाकल्यग्रहणानुवृत्तिस्सति प्रगृह्यत्व एवादेशो यथा स्यात्, नत्वप्रगृह्यत्व इत्येवमर्था स्यात्, न स्यात् दीर्घोच्चारणसामर्थ्येन प्रगृह्यपदानुवृत्तिसामर्थ्येन च सत्येव प्रगृह्यत्वे आदेशकल्पनासम्भवात् । तस्मात् द्वितीययोगे शाकल्यानुवृत्तिस्सति प्रगृह्यत्वे आदेशविकल्पार्थेत्येव तत्त्वमित्याहुः । तदन्ये न मन्यन्ते । तथा हि । योगविभागाभावे तदुक्तरीत्या निपातसंज्ञाया नित्यत्वे किमर्थो योगविभाग इति प्रश्नस्य निरालम्बनत्वापत्तिः । योगविभागे प्रगृह्यसंज्ञाया विकल्परूपफलस्य स्पष्टत्वात् । किं चैवं प्रगृह्यपदानुवृत्तिवैयर्थ्यम् । न चोत्तरार्थम् । उत्तरसूत्रस्य प्रकरणादावपि मनोरमोक्तरीत्या पठितुं शक्यत्वेन तन्मात्रफलकल्पनाया अनौचित्यात् । किं चोत्तरार्थस्यापीहानुवृत्तस्य

**मय उञो ।** व्याख्यानादत्र मय् प्रत्याहारः । अस्य त्रैपादिकत्वेनासिद्धत्वान्न 'प्लुतप्रगृह्या' इत्यनेन बाधः । **नानुस्वार इति ।** किंवितीत्यादौ प्रगृह्यसञ्ज्ञाऽभावेऽस्यासिद्धत्वाद् 'इको यण्' इति याणि अनुस्वारो भवत्येव ॥

ननु 'यः शिष्यते स लुप्यमानार्थाभिधायी' इति न्यायेन गौरीशब्दस्य सप्तम्यर्थवृत्तित्वेऽपीकारस्य तत्त्वाभावोऽत आह । **ईदूदन्तमिति ।** शब्दस्वरूपस्य विशेष्यत्वात्तदन्तविधिरिति भावः ।

---

शाब्दीयविषयताप्रयोजकत्वाव्यभिचारादेतद्विहितप्रगृह्यसंज्ञाया निपात इति विहितापवादत्वेन तत्रोऽतिरिक्तत्वेन संकोचेन तस्याप्राप्त्या एतद्विहितप्रगृह्यसंज्ञायां विकल्पसम्बन्धस्य दुर्वारतया पक्षे निपातसंज्ञा दुर्वचा । विकल्पासम्बन्धेऽप्यादेशप्रगृह्यसंज्ञयोस्सहविधानेनादेशविकल्पे तत्सन्नियोगशिष्टस्य प्रगृह्यत्वस्य चिण्वदिट इव तदभावे अप्रवृत्तिः । एतेनात्र सूत्रे आचार्योक्ता सर्वाप्ययुक्तता परिहृतेति दिक् । तदेतत्सर्वं तत्तदाकरग्रन्थपरिशीलनचतुरा विभावयन्तु ॥

**व्याख्यानादिति ।** त्रिपाद्यां पाठकरणरूपादित्यर्थः । अन्यथा मयधातोः परस्योञो वत्वस्य सापादिकत्वे त्रैपादिकत्वे वा विशेषाभावेनेको यणचीत्यस्यानन्तरं मय उञो वेत्येवावक्ष्यदिति भावः । यत्तु मत इत्येव सिद्धे मय इत्युक्तेर्न धातुग्रहणमिति तन्न । मतशब्दाण्ण्यन्तात् क्विपि निष्पन्नान्मा भूदित्येवमर्थं तथा नोक्तमिति वक्तुं शक्यत्वात् । ननु प्रत्याहारग्रहणेपि त्रिपाद्यां पाठो व्यर्थः । प्रकृतिभावबाधकस्य वत्वस्येको यणित्यनन्तरं विधानेनेष्टसिद्धेः । न चैवं किम्वितीत्यत्रानुस्वारापत्तिरिति वाच्यम् । सन्निपातपरिभाषया वारयितुं शक्यत्वात् । न च तत्र पाठेऽप्रगृह्येऽपि परत्वादनेन वत्वे सन्निपातपरिभाषयाऽनुस्वाराभावे किंवितीति सानुस्वारो न स्यादिति वाच्यम् । अस्य विकल्पत्वेनैतदभावे

मामकी तनू इति । प्रगृह्येष्विवतिशब्दप्रयोगस्य पदकारैर्नियमितत्वा-त्पदपाठे प्रगृह्यत्वफलमत्र बोद्धयम् । ईदूतौ किम् । अग्ना भवाति । सप्तम्या डादेशः । तपरत्वमसन्देहाय । सप्तमीति किम् । धीती, मती । ह्रस्वान्ताभ्यां तृतीयैकवचनस्य पूर्वसवर्णे सवर्णदीर्घः । अर्थग्रहणं किमिति । न च तदभावे 'ईदूदेद्' इतिवदीदूदन्ता या सप्तमीत्यर्थापत्तिः । तथा च यथीत्यादावेव स्यात्, एकादेशस्य परादि-वद्भावेन सप्तमीत्वात्, न तु गौरीत्यादाविति तत्सिद्ध्यर्थं तदावश्य-कमिति वाच्यम् । 'ईदूतौ सप्तमी प्रगृह्यम्' 'अदसः' 'एच्च द्विवचनम्' इत्येव सिद्धे गुरुभूतन्यासकरणेन तत्प्रकरणापेक्षया

---

यणि निरुक्तरूपसिद्धेरिति चेन्न । तक्षिरक्षिभ्यां ण्यन्ताभ्यां क्विपि निष्पन्ना-त्तक् रगित्यादेः परत्वेनोजः प्रयोगे इष्टस्य वत्वस्य सपादायां पाठे संयोगान्त-लोपस्यासिद्धत्वेनासिद्धेः । न च तत्र णिलोपस्य पञ्चमीसमासेन स्थानि-वद्भावश्शङ्क्यः, पूर्वत्रासिद्धीये तन्निषेधात् । न च पञ्चमीसमासे स निषेधो नेति वाच्यम् । मानाभावात् । एवमपि रत्नमुट् उ उक्त इत्यादाविष्टस्य वत्वस्य सपादायां पाठे जश्त्वासिद्धत्वेनानापत्तेः । एवं प्रत्यङ् उ उक्तमित्यत्र ङमुट्-संपत्तिरपि फलं बोध्यम् । त्रिपाद्यामन्तरङ्गपरिभाषाया अप्रवृत्त्या वत्वे ङमुड-नापत्तेः । सन्निपातपरिभाषानित्यताज्ञापनं तु प्राचीनरीत्या, नवीनानां तु न यासयोरिति निर्देश एव तदनित्यत्वज्ञापक इति दिक् ॥

ईदूदन्तमिति विशेष्यासन्निधानेऽपि तदन्तपरतया व्याख्याने प्रयोजना-न्तरं दर्शयितुमाह । मामकी इति । ननु मामकी इत्यत्र अच्परत्वाभावादव-सानाभावाच्च प्रगृह्यत्वफलं दुर्वचमत आह । प्रगृह्येष्विवति । ईदूतौ किमिति । दीर्घ इत्येव रामेष्वित्यादौ न दोष इति प्रश्नः । असन्देहायेति । गुणानामभेद-कत्वेन सवर्णग्रहणार्थत्वाभावादिति भावः । सप्तमीति किमिति । सुबर्थ

वैजात्यबोधनादूकारांशेऽसम्भवाच्च 'संज्ञाविधौ' इतितदन्तग्रहण-
निषेधाप्रवृत्त्या ईदूदन्तं सप्तम्यन्तमित्यर्थेनेष्टसिद्धेरिति प्रश्नः।
ययीत्यादेरनभिधानमेवेति परे ॥

वृत्ताविति। अर्थग्रहणसामर्थ्यात्सप्तम्यर्थमात्रे पर्यवसन्नमित्य-
र्थेनात्र तत्संसृष्टाऽधेयार्थेऽपि वृत्तेर्न दोषः। 'सञ्ज्ञायाम्' इति
समासे जहत्स्वार्थायां वृत्तौ पूर्वपदस्याऽनर्थक्येऽपि सुप्सुपेति
समासे अजहत्स्वार्थायां प्रसक्तदोषस्योक्तरीत्यैव वारणमिति भावः।
गौरी अधिश्रित इत्यत्राधिश्रयणक्रियायामेव गौरीपदबोद्ध्याधिकर-

---

इत्येतावता सिद्धमिति प्रश्नः। अनभिधानमेवेति। न चास्ति सप्तमी ईदूताविति
भाष्यादिति भावः। स्पष्टं चेदमुद्योते। यत्तु पञ्चमीसमासेन स्थानिवद्भावाद्य-
यीत्यादेर्न चास्तीति भाष्यविषयतेति तदनभिधाने न मानमित्याहुस्तन्न।
पञ्चमीसमासेन स्थानिवद्भावस्यापि स्वविधावप्रवृत्तेः। पूर्वसान्निमित्तत्वेना-
श्रितादिति वदतां सुतरामप्रवृत्तेश्चेति दिक्। सप्तम्यर्थमात्रे पर्यवसन्नमिति।
तत्त्वं च स्वसमभिव्याहृतपदान्तरार्थानन्वयित्वेनोपस्थितिविषयत्वम्। स्पष्टं
चेदमुद्योते। अत्र मात्रपदेन सप्तमीप्रकृत्यर्थातिरिक्तो व्यवच्छिद्यते, न तु सामा-
न्यतः सप्तम्यर्थातिरिक्तः। तादृशस्य प्रकृत्यर्थस्याव्यभिचरिततया व्यवच्छेत्तुम-
शक्यत्वादिति भावः। एतेन मूलोक्तं तु न युक्तम्। गौरीत्यादौ गौरीत्वावच्छि-
न्नार्थवृत्तित्वेन सप्तम्यर्थमात्रपर्यवसन्नत्वाभावात्। किन्तु सप्तम्यर्थमात्रपर्यव-
सन्नत्वं च सप्तम्यर्थविशिष्टत्वम्। वैशिष्ट्यं च स्वनिरूपितशक्तिपर्याप्त्यधि-
करणत्व स्वप्रतियोगिनिरूपितशक्तिपर्याप्त्यधिकरणत्व स्वानुयोगिनिरूपित-
शक्त्यनधिकरणत्वैतत्त्रितयसम्बन्धेनेति परिष्करणीयमिति परास्तम्। स्व-
प्रतियोगिनिरूपितशक्तिपर्याप्त्याधिकरणत्वरूपाद्वितीयसम्बन्धनिवेशस्य फला-

णत्वान्वय इति गौर्यधिकरणके लक्षणायां मानाभाव इति न तत्र दोषः । वाप्यामश्व इति । सुप्सुपेति समासः । संज्ञायामिति वा । ननु सञ्ज्ञायामिति समासे वाक्येन सञ्ज्ञाऽनवगमान्नित्यसमासत्वेन विग्रहोऽनुचित इति चेन्न । तेषु समाससमानार्थकवाक्याभावेन नित्यसमाससदृशत्वेऽपि नित्यसमासत्वाभावात् । विभाषाधिकार-बाधे मानाभावात् । नित्यसमासे हि वृत्तिघटकपदानां पृथक् प्रयो-गाभाव एव । अत्र तु पृथक्प्रयोगेऽपि तद्बोध्यविशिष्टार्थप्रतीति-मात्रमित्याहुः ॥

अणोऽप्र । अण इति किम् । कर्तृ हर्तृ । अत्राण्पूर्वेणैव, व्या-ख्यानात् । आगच्छतमग्नी इत्यादौ प्लुतस्यासिद्धत्वात्ततः प्रागेव यथोद्देशत्वात् प्रगृह्यत्वे जाते पश्चात्प्लुते तस्याप्यनुनासिकप्रति-बन्धार्थं पुनः सञ्ज्ञेति नानुनासिकः । सञ्ज्ञायाः कार्यार्थत्वात्पुनः

---

भावाच्च । मानाभाव इति । न चाधिश्रयणक्रियायामन्वयेऽपि नामार्थ-धात्वर्थयोरभेदान्वयव्युत्पत्त्यनुरोधाल्लक्षणावश्यकीति वाच्यम् । दधि पश्ये-त्यादिवद्विभक्तिस्मरणेनोपपत्तेः । न च विभक्तिस्मृतावीदन्तस्य सप्तम्यर्थपर्य-वसानासम्भवः । पञ्चकं प्रातिपदिकार्थ इति स्वीकारे तत्सम्भवादित्यन्यत्र विस्तरः ॥

व्याख्यानादिति । एतत्सूत्रविषयमणामसम्भवेनासन्देहायाच इत्येव सिद्धे पर्युदासेन वा तत्सिद्धेऽण्ग्रहणरूपाद्व्याख्यानादित्यर्थः । न च प्रगृह्यत्वस्य द्विवचननिपातानामपि प्रवृत्त्या अजितरसाधारणत्वात् कथं पर्युदासेन तत्सिद्धि-रिति वाच्यम् । लण्सूत्रस्थभाष्यप्रामाण्यात् संज्ञायाः कार्यार्थत्वात् कार्यस्य समुदायेऽनुपलम्भेन फलाभावाच्च तत्तद्वर्णपर्यवसायितया प्रदेशेष्वपि तस्यैव

**प्रवृत्तौ कार्यमेव बीजम्। स्थानिवत्त्वन्तु न, प्लुतस्थान्यल्वृत्तिधर्मत्वेनाल्विधित्वात्। पूर्वसवर्णे कृते द्विवचनत्वन्तु परादिवद्भावेन। तेन तादूप्यानतिदेशेऽप्येतद्धर्मातिदेशाङ्गीकारात्। अत एव रामाविल्यादौ परादिवद्भावेन सुप्त्वात्पदत्वं साधितमन्तादिवदित्यत्र भाष्ये इति स्पष्टमाकरे॥**

---

ग्रहणात्। पुनः **प्रवृत्ताविति**। कार्यकालपक्षेण तु न निर्वाहः। तत्पक्षे संज्ञानां विधिदेशीयत्वेन तद्दृष्ट्या प्लुतस्य सिद्धत्वात् संज्ञाया अप्रवृत्तेः। वस्तुतस्त्वयादिभ्यः परैव प्रगृह्यसंज्ञेति भाष्यस्योद्योतेऽन्यथा योजितत्वेन कार्यकालपक्षेऽपि संज्ञाया विधिदेशीयत्वे मानाभावेन तद्दृष्ट्या प्लुतस्यासिद्धत्वात् संज्ञा सुलभेति न दोष इति बोध्यम्। **प्लुतस्थान्यल्वृत्तिधर्मत्वेनेति**। अस्य प्रगृह्यत्वस्येत्यादिः। प्लुतस्थान्यसाधारणधर्मत्वेनेत्यर्थः। प्लुतस्य तादृशधर्मत्वं लण्सूत्रस्थभाष्यादित्यवोचाम। यद्वा प्लुतस्य स्थानी योल्तद्वृत्तिर्यो धर्मस्तत्त्वेनेत्यर्थः। तेनाद्यार्थकानल्विधाविति निषेध इति भावः। एवं च पूर्वसवर्णे कृते द्विवचनत्वं त्वित्युत्तरग्रन्थस्वारस्यानुरोधादियमेव व्याख्या ग्रन्थकृदभिप्रेतेति भाति। यत्तु वस्तुतस्त्वप्रगृह्यस्येत्यस्य पर्युदासत्वेन तेन धर्मेण साक्षादवच्छिन्नोद्देश्यककार्याभावादनल्विधावित्यस्याप्रवृत्त्या स्थानिवत्त्वं सुलभमित्याहुः, तन्मन्दम्। तावतापि द्वितीयार्थकानल्विधाविति निषेधस्य दुर्वारत्वात्। तादृशधर्मेण साक्षादवच्छिन्नत्वनिवेशे फलाभावस्य पूर्वमुपपादितत्वेनाद्यार्थकानल्विधाविति निषेधस्यापि सत्त्वाच्च। **एतद्धर्मातिदेशाङ्गीकारादिति**। अत्र द्विवचनस्यानिनोऽसहायत्वेन तद्घटितसमुदायत्वातिदेशेन द्विवचनत्वस्य समुदायवृत्तित्वादिति भाव इत्यन्यत्र विस्तरः। अत्रेदं बोध्यम्। राम इत्यादौ विसर्गस्य नानेनानुनासिकः। अप्रगृह्यस्येति पर्युदासेन हल्त्वानुपहितानामेवाणामनुनासिकविधानात्। हयवरट्सूत्रभाष्येऽयोगवाहानामुपदेशे फलानां परिगणनादन्यविषये उपदेशस्यैवा-

अच्सन्धिरिति । 'सिद्धमनच्त्वात्' इति वार्त्तिकप्रयोगेण 'अल्पाच्तरम्' इति सौत्रप्रयोगेण 'कथमनच्त्वम्' इति भाष्य-प्रयोगेण च वृत्तिघटकाच्पदे पदान्तकार्यस्य तत्सन्निधानेन श्चुत्वस्य चाभावो बोद्धयते इति केचित् ॥

इति स्वरसन्धिः ॥



---

भावाच्च । न च परिगणने जश्भावस्यापि सत्त्वात् रामं जयतीत्यादौ जश्त्वा-पत्तिरिति वाच्यम् । भुजन्युब्जाविति निपातनमाश्रित्य जश्भावप्रयोजनस्य भाष्ये प्रत्याख्यानात् । तदेकवाक्यतयोपध्मानीयस्यैव जश्त्वं प्रति पाठाङ्गी-काराच्चेति सर्वमवदातमिति । केचिदिति । अत्रारुचिबीजं तु वृत्तिघटकेत्य-सङ्गतम् । अक्षिवत्येकशेषवृत्तिघटके कुत्वदर्शनात् । यदि तु वृत्तिघटकयत्-किंचिन्निरूपितपूर्वत्ववत्येव तद्वृत्तिघटकाच्पदे इत्युच्यते, यदि वैकशेषस्य वृत्तित्वमेव नाङ्गीक्रियत इत्युच्यते, तदा कथमज्ग्रहणेष्विति वार्त्तिकप्रयोगस्या-च्कार्याणीत्यादिभाष्यप्रयोगस्य चासङ्गतिः । अतस्सुन्निरूपितपूर्वत्वाभाव-वत्यच्पदे इति वक्तव्यम् । किञ्च पदान्तकार्यस्येति सामान्यतः कथनमप्य-सङ्गतम् । क्वचिज्जश्त्वदर्शनात् । तस्मात्तादृशाच्पदघटकचकारस्य तद्विशेष्यक-चुत्वप्रकारकबुद्धिप्रयोज्यकार्यसमर्पकत्वं नेति ज्ञापनीयम् । तेन तत्सन्निधानेन श्चुत्वस्येत्यर्थान्तरं न कल्पनीयमित्यपरं लाघवमिति । केचित्तु आदिरन्त्येने-त्येतत्सूत्रबोधितसंज्ञामात्रस्योपलक्षणमिदम् । अत एव यणादीत्यादौ ङमुडभाव इति सकलेष्टसिद्धिरित्याहुस्तन्न । तत्र पदान्तत्वप्रयुक्तकार्यमात्रस्याभावबोधने जश्त्वाभावप्रसङ्गात् । स्वौजसमौट्छसिति निर्देशानुपपत्तेश्च । छत्वविधौ विरप्श-मित्यादिसिद्धये पदान्ताज्झय इति सिद्धान्तात्, प्रातिस्विककार्यनिवेशे गौरवात्,

तिङ्तिङ इति प्रयोगानुपपत्तेश्च । आक्षरसमाम्नायिकानुबन्धैः कृतसंज्ञास्विति निवेशे गौरवम् । तङानाविति निर्देशस्य प्राचीननये असाङ्गत्यापत्तिश्च । तस्मात् पूर्वोक्तसरणिरेव ज्यायसीति विभावनीयम् ॥

इति स्वरसन्धिः

इति श्रीमन्महामहोपाध्याय तातोपनामकसुब्रह्मण्यशास्त्रिविरचिते
गुरुप्रसादाख्ये लघुशब्देन्दुशेखरव्याख्याने
स्वरसन्ध्यन्तो द्वितीयः खण्डः

शब्देन्दुशेखरगुरुप्रसादः परिकल्पताम् ।
उपासितश्रीललिताकुमारीपरितुष्टये ॥

ॐ तत्सत् ॥



॥ श्रीः ॥

# ॥ अथ हल्सन्धिप्रकरणम् ॥

वटमूलसमासीनमभीष्टफलदायिनम् ।
भावये सच्चिदानन्दं दक्षिणामूर्तिमीश्वरम् ॥१॥

गौतमान्वयसंभूतः पेरिवंशाब्धिचन्द्रमाः ।
नरसाम्बाजगन्नाथतनूजातः सुधीमणिः ॥२॥

ललिताश्चितवामाङ्गो गुरुशुश्रूषणे रतः ।
विद्यावतीसमाश्लिष्टवामभागविभूषितात् ॥३॥

अल्कनारायणेभेन्द्रादतुलप्रतिभावतः ।
विजयाभिख्यनगरीपालकाल्लब्धजीविकः ॥४॥

पितर्युपरते तस्मिन्नल्पे वयसि दुर्विधेः ।
तदात्मजाच्छ्रीविजयरामेभेन्द्रात्सुपोषितः ॥५॥

दक्षिणास्यं च वाग्देवीं पाणिन्यादिमुनित्रयम् ।
नत्वा गुरुं कलापूर्णं सुब्रह्मण्यसुधीमणिम् ॥६॥

वैयाकरणसम्राजं सर्वतन्त्रार्थकोविदम् ।
तत्कृपालब्धनागेशग्रन्थगूढार्थविस्तरः ॥७॥

तदीयशेखरगुरुप्रसादस्य प्रपूरणम् ।
तद्ग्रन्थादिस्थविज्ञप्तिवाक्यशेषेण चोदितः ॥८॥

स्तोश्चु । स् इति श् इति च लुप्तविभक्तिके भिन्ने पदे । योग इति । संयोग इति तदर्थः । तेन चितमित्यादौ न दोषः । अत्र पदस्येत्यधिकृतमपि न सम्बध्यते । 'शात्' इति

---

तत्प्रसादेन कुरुते श्रीरामस्य च धीमतः ।
प्रियच्छात्रस्य साहाय्यान्मनीषी वेङ्कटेश्वरः ॥९॥

गुरुप्रसादशेषोऽयमावहन् विदुषां मुदम् ।
शितिकण्ठकृपालेशाज्जृम्भतां सुचिरं भुवि ॥१०॥

अत्र समाहारद्वन्द्वे नपुंसकत्वापत्तिः, इतरेतरयोगे द्विवचनापत्तिरत आह । **सिति । लुप्तविभक्तिके इति** । सुपां सुलुगित्यनेनेति भावः । एवमुत्तरसूत्रेऽपि बोध्यम् । समाहारद्वन्द्वमाश्रित्य सौत्रपुंस्त्वकल्पनं तु न युक्तम् । उभयत्र तत्कल्पने गौरवात् । शास्त्रबाधापत्तेश्च । अत्र पक्षे उत्तरत्रानयोरनुवृत्तये प्रत्येकं स्वरितत्वं प्रतिज्ञेयम् । तदपि स्वरितत्वस्याज्झलसाधारणदोषरूपत्व एव संभवति । तस्याज्निष्ठस्वररूपत्वे तु एकत्राचोऽभावेन तत्प्रतिज्ञानस्य कर्तुमशक्यतया सौत्रत्वाल्लिङ्गव्यत्ययकल्पनयैकपदत्वमेव न्याय्यमित्यवधेयम् । योगस्य व्यवधानेऽपि सत्त्वादाह । **संयोग इति** । सत्या भामेतिवन्निर्देश इति भावः । **अधिकृतमपीति** । पदान्तस्येत्यस्य प्रत्याख्यानपक्षे यरोऽनुनासिक इत्येतदर्थमधिकृत मपीत्यर्थः । **न सम्बध्यत इति** । सामानाधिकरण्येन विशेष्यतया न सम्बध्यते । किन्तु वैयधिकरण्येन विशेषणतया सम्बध्यत इत्यर्थः । पदस्येत्यपदान्तस्य मूर्धन्य इत्यतः प्रागधिकार इति पदस्येति सूत्रस्थभाष्यन्तु पदान्तस्येति सूत्रसत्त्वे यरोऽनुनासिक इत्यत्र तदनुवृत्त्यैव सिद्धौ पदस्येत्यस्यापदान्तस्येत्यनन्तरमनुवृत्तौ फलाभावेन विरोधसद्भावेन च तदुत्तरमननुवृत्तिप्रतिपादनपरमिति न तद्विरोधः । पदान्तस्येति सूत्रारम्भपक्षे त्वत्र पदस्येत्यस्य पदान्त-

ज्ञापकात् । तेन याच्ञा सिद्धा । शात्परस्य स्तोः श्चुत्वनिषेधकात् 'शात्' इति लिङ्गादेव निमित्तकार्यिणोर्यथासंख्यं न । एवमुत्तरसूत्रेऽपि 'तोः षि' इति ज्ञापकान्न नत् । शकारचवर्गौ स्त इति । यथासंख्यमिति शेषः । हरिश्शेते इति । 'वा शरि' इति विसर्गाभावे शः । सच्चिदिति । चुत्वस्यासिद्धत्वाज्झत्वेन दत्वे तस्य चुत्वेन जकारे चर्त्वमिति बोद्धव्यम् । तयोरत्रालेखस्तु वैचित्र्यार्थः । विश्न इति ।

---

स्येत्यर्थः । पदान्तस्येति णत्वनिषेधकं सूत्रं यरोऽनुनासिक इत्येतदर्थमधिकृतमपीति भावः । पदान्तस्येत्येव वक्तव्ये अत्रान्तपदानुक्तिस्तु तत्र सूत्रेऽन्तपदानुवृत्तेरनावश्यकत्वसूचनायैव । तत्र न पदान्तादित्यतः पदान्तादित्यस्यानुवृत्तिस्तु न युक्ता । विभक्तिविपरिणामे गौरवात् । एतेन पदाधिकारस्य अपदान्तस्य मूर्धन्य इत्येतदवधिकत्वादयुक्तमेतदित्याचार्योक्तमपास्तम् । शादिति ज्ञापकादिति । तद्धि विश्न इत्यादौ श्चुत्वनिषेधाय । अत्र पदस्येत्यस्य पदान्तस्येत्यस्य वा सम्बन्धे तु तत्र नकारस्य पदान्तत्वाभावेन श्चुत्वाप्राप्त्या तद्वैयर्थ्यं स्पष्टमेव । न च विश्नशब्दादाचक्षाणणिजन्तात्क्विप्यल्लोपणिलोपयोः कृतयोस्सम्बुद्धौ पदान्तनकारस्य सत्त्वेन न ज्ञापकसम्भव इति वाच्यम् । संयोगान्तस्य लोप इति सूत्रस्थशब्दरत्नोक्तदिशा गिरिवेडित्यादाविव संयोगान्तलोपे पादान्तनकारस्य दुर्लभत्वात् । एतेन विश्नमाचष्टे विश्न् इतीत्यादौ सम्बुध्यन्ते पदान्ते शात्परतवर्गसम्भवेनेदमप्ययुक्तमिति केचिदित्याचार्योक्तमपास्तम् । अत्र केचिदित्युक्त्याऽऽचार्याणामपि तन्नाभिमतमित्यवधेयम् । शादिति लिङ्गादेवेति । यावता विनाऽनुपपत्तिस्तावत्सर्वं ज्ञाप्यत इत्ययमप्यर्थोऽनेन ज्ञाप्यत इति भावः । इति शेष इति । तत्र यथासंख्यसूत्रबाधे मानाभावात्परस्मैपदानां णलतुसित्यादौ सूत्रान्तरस्थक्रमेणवानादिसिद्धतथदधनेत्यादिक्रममादाय कार्यप्रवृत्तिरिति भावः । वैचित्र्यार्थ इति । जश्त्वचर्त्वयोः

'यजयाचयतविच्छप्रच्छरक्षो नङ्' इति नङि 'च्छ्वोः' इति शादेशे ङित्त्वाद् गुणाभावः। 'प्रश्ने चासन्नकाले' इति निर्देशात्सम्प्रसारणाभावः ॥

न पदान्ता। पदाट्टोरित्येव सिद्धेऽन्तग्रहणं स्पष्टार्थम्। टोः किमिति। षकारस्यापि पदान्ते जश्त्वविधानात्प्रश्नः। 'ह्रस्वात्तादौ' इति षत्वस्यासिद्धत्वाज्जश्त्वाभाव इत्युत्तरम्। षण्णवतिरिति। षडधिका नवतिरिति विग्रहः। षण् णगर्य इति पृथक्पदे ॥

---

प्रवृत्तिमन्तरापि सञ्चिदित्यादिसिद्धिरिह वैचित्र्यम्। प्रश्ने चेति। प्रश्नशब्द इत्यादिः। यद्वा ब्राह्मणाभ्यां कृतं देहीति वद्विभक्त्यन्ततन्त्रमत्र बोध्यम् ॥

स्पष्टार्थमिति। न च पदान्ताद्वेत्यत्र वक्ष्यमाणरीत्या समर्थपरिभाषाया अप्रवृत्त्यर्थं तदिति वाच्यम्। अस्य त्रैपादिकत्वेनासिद्धत्वादस्य पदोद्देश्यकविधित्वाभावादनामिति लिङ्गाच्च तत्परिभाषाया अप्रवृत्तेः। टोः किमिति कौमुदीग्रन्थस्याशयमाह। षकारस्यापीति। एवञ्च पदान्तषकारस्यासम्भवेन पूर्वसूत्रात् ष्टुनेत्यनुवर्त्य विभक्तिविपरिणामेन व्याख्यानेपि सिद्धावत्र सूत्रे टोरिति किमर्थमित्याशयः। षत्वस्यासिद्धत्वादिति। इदमुपलक्षणं, विसर्गसत्वयोरपि। एवञ्च सर्पिस् तममिति स्थिते जश्त्वं बाधित्वाऽपवादत्वाद्रुत्वे विसर्गे सत्वे षत्वे च कृते जश्त्वदृष्ट्या विसर्गसत्वषत्वानामसिद्धत्वेन रुत्वस्यापवादत्वात्सिद्धत्वेन चाझल्त्वाज्जश्त्वाभाव इति पदान्तषकारस्य सम्भवेन ष्टुनेत्यनुवृत्तौ दोषसम्भवादिदमावश्यकमिति भावः। अत्र रुत्वात्पूर्वं षत्वं तु न भवति। रुत्वदृष्ट्या तस्यासिद्धत्वात्। षण्णवतिरित्यत्रेतरेतरयोगे समाहारद्वन्द्वे वा द्विवचननपुंसकत्वयोरापत्तेरत आह। षडधिकेति। पृथक् पदे इति। दिक्संख्ये संज्ञायामिति नियमात्समासाप्राप्तेरिति भावः ॥

यरोनु । पदान्तस्येति किम् । वेद्मि, बध्नाति । स्पर्शे चरितार्थ इति । उपलक्षणमिदं वलयोरपि प्रवृत्तेः । एतच्च जातिपक्षे स्पष्ट-

---

वेद्मीति । इदं वार्त्तिकप्रत्युदाहरणम् । सूत्रस्य तु चख्नतुः जग्मतुरित्यादि बोध्यम् । नन्वनुनासिकविधेः कमल् मनोरथः वृक्षवाँश्चिनोषीत्यादौ स्थानप्रयत्नाभ्यामन्तरतमयोः वलयोरपि प्रवृत्त्या चारितार्थ्येन मूले स्पर्शे चरितार्थ इति न्यूनमित्यत आह । उपलक्षणमिति । वलयोरिति । इदमुपलक्षणं, यकारस्यापि । अतो दध्याँश्चिनोषीत्यादौ नश्छव्यप्रशानिति रुत्वेऽनुनासिके च सति यकारेऽस्य चारितार्थ्येऽपि न न्यूनता । स्वसिद्धान्ते न पदान्ताः परेऽणस्सन्तीति भाष्येण कमल् वृक्षवादेरनभिधानान्मूलकृद्रीत्येयं न्यूनतापरिहृतिरित्यवधेयम् । एतच्चेति । मूलोक्तरीत्या चतुर्मुख इत्यत्रानुनासिकवारणमित्यर्थः। स्पष्टमेवेति ॥

अयं भावः । स्थानेन्तरतम इति सप्तम्यन्तपाठे षष्ठीस्थान इत्यतस्तत्र षष्ठीत्यनुवर्तते । स्थानशब्दस्य च तिष्ठत्यस्मिन्नादेश इत्यधिकरणव्युत्पत्त्या स्थानिनीत्यर्थः । एवञ्चादेशस्यान्तरतमे स्थानिनि षष्ठी उपसंहर्तव्येति तदर्थः। इदं च सूत्रं विधिप्रदेशे यरोऽनुनासिक इत्यादावुपस्थितं सद्यर इति षष्ठ्या अनुनासिकान्तरतमे यत्वावच्छिन्ने उपसंहृतिं बोधयति । तेषु च केचनानुनासिकस्य स्थानप्रयत्नाभ्यामुभाभ्यामप्यन्तरतमाः केचन स्थानमात्रेणैव, तत्र स्थानप्रयत्नाभ्यामुभाभ्यामप्यन्तरतमे स्थानिनि षष्ठ्या उपसंहारेणैतन्मुरारिः षाण्मातुर इत्यादावनुनासिकप्रवृत्त्या सूत्रस्य चारितार्थ्येन केवलं स्थानमात्रेणान्तरतमे रेफे षष्ठी उपसंहृता न भवतीति चतुर्मुख इत्यादौ नानुनासिकप्रवृत्तिरिति । स्पष्टं चेदं स्थानेन्तरतम इति सूत्रे भाष्यकैयटयोः । तत्र हि भाष्ये यथा पुनरियमन्तरतमनिर्वृत्तिस्सा किं प्रकृतितो भवति स्थानिन्यन्तरतमे षष्ठीति, आहोस्विदादेशतः स्थाने प्राप्यमाणानामन्तरतम आदेशो भवतीति । कुतः पुनरियं विचारणा ।

**मेव । व्यक्तिपक्षेऽपि तादृशव्यक्तौ चरितार्थस्य एतद्व्यक्तिविषयतयोपप्लव एव नेति बोद्धयम् । स्पष्टञ्चेदम् 'इको यणचि' इत्यत्र**

---

उभयथा हि तुल्या संहिता । स्थानेन्तरतम उरण् रपर इति । किञ्चातः । यदि प्रकृतितः इको यणचीति यणां ये अन्तरतमा इकः तत्र षष्ठी । यत्र षष्ठी तत्रादेशो भवतीति इहैव स्यात् । दध्यत्र, मध्वत्र, कुमार्यर्थं ब्रह्मबन्ध्वर्थमित्यत्र न स्यात् । आदेशतः पुनरन्तरमनिर्वृत्तौ सत्यां सर्वत्र षष्ठी । यत्र षष्ठी तत्रादेशा भवन्तीति सर्वत्र सिद्धं भवतीत्युक्तम् ॥

ननु जातिपक्षे प्रागुक्तरीत्या दोषवारणेपि व्यक्तिपक्षे दोषो दुर्वार एव। तत्र पक्षे प्रतिलक्ष्यं लक्षणोपप्लवेन चतुर्मुख इत्यादिलक्ष्यविषयकतयोपप्लुतलक्षणस्याचारितार्थ्येन तत्सामर्थ्यात्तत्रानुनासिकप्रवृत्तेर्दुर्वारत्वादित्याशङ्क्य तत्पक्षेपि दोषमुद्धरति । **व्यक्तिपक्षेपीति । तादृशव्यक्ताविति** । स्थानप्रयत्नाभ्यामन्तरतमे यरीत्यर्थः । **एतद्व्यक्तीति** । स्थानमात्रेणान्तरतमरेफरूपेत्यर्थः । **उपप्लव एव नेति** । यर इति षष्ठ्या स्थानप्रयत्नाभ्यामुभाभ्यामप्यन्तरतमे स्थानिन्युपसंहारादिति भावः । प्रथमान्तपाठे तु नात्र निर्वाहः । तत्र पक्षे स्थानपदस्य प्रसङ्गवाचितया प्रसङ्गे सति सदृशतम आदेशो भवतीति तदर्थः । आदेशविधायके यरोनुनासिक इत्यादावुच्चारितायाष्षष्ठ्या अनियमात्सर्वेष्वपि स्थानिषूपसंहारादेतत्परिभाषोपस्थित्या यकारस्यान्तरतमोऽनुनासिको भवति, वकारस्यान्तरतमोऽनुनासिक इत्यादिरूपेण वाक्यार्थस्सम्पद्यते । तत्र यकारादीनां स्थानप्रयत्नाभ्यामुभाभ्यामप्यन्तरतमस्यानुनासिकस्य सत्त्वात्स एव भवति । रेफस्य तु तादृशस्याभावात्केवलं स्थानमात्रेणैवान्तरतमोऽनुनासिको भवतीति चतुर्मुख इत्यादौ दोषो दुर्वार एव । शर्षु तु कथं चिदप्यन्तरतमस्यानुनासिकस्याभावेन तत्र षष्ठ्या उपसंहाराभावान्न दोषः । अनेनैव हेतुना प्रातर्नयतीत्यादावनुनासिकवारणं सप्तम्यन्तपाठमाश्रित्यैव कृतं कौस्तुभे । उद्योते च तत्पक्ष एव स दोषो वारित इति बोध्यम् ॥

यत्तु वृत्तिकृता आकृतौ पदार्थे समुदाये सकृल्लक्ष्ये लक्षणं प्रवर्तत इत्येतस्मिन्दर्शने यरोऽनुनासिकेऽनुनासिको वाऽन्तरतमो भवतीत्येवमेतत्प्रवर्तते। तदनेन गकारादीनां ङकारादयो ये यथा स्वस्थानतो गुणतश्चान्तरतमास्ते सर्वे विहिताः। ये तु न स्थानतो नापि गुणतः स्थानमात्रेण गुणमात्रेण वाऽन्तरतमास्ते सर्वे निवर्त्तिता इति स्थानमात्रान्तरतमो रेफस्य णकारो न भवतीति प्रथमान्तपाठमाश्रित्यैव जातिपक्षेऽयं दोषो वारितः। तदनुसारिभिराचार्यैरपि "यद्वा कैयटोक्तरीत्या स्थानेऽन्तरतमपरिभाषोपस्थानाद्दोषाभावः। न च रेफे स्थानप्रयत्नाभ्यामन्तरतमस्य ताभ्यामनन्तरतमस्य चाप्राप्त्याऽन्तरतमपरिभाषाया अनुपस्थितिरिति वाच्यम्। व्यक्तिपक्षेऽन्तरतमानन्तरतमयोः प्राप्तावेव तदुपस्थिता वपि जातिपक्षे कतिपयलक्ष्येषु तयोः प्राप्तिमात्रेणान्तरतमपरिभाषोपस्थानस्य दुर्वारत्वात्। णकारस्य स्थानेन रेफान्तर्येऽप्याभ्यन्तरप्रयत्नेन तदभावान्नान्तरतमत्वम्। स्थानप्रयत्नाभ्यामान्तर्यं ह्यन्तरतमत्वमित्येवं प्रकारेण प्रथमान्तपाठमाश्रित्यैवायं दोषो वारितः। तत्तु स्थानेन्तरतम इति सूत्रभाष्यविरोधात्कौस्तुभादिग्रन्थविरोधाल्लक्ष्यासिद्धेश्चोपेक्ष्यम्। तत्र हि दीर्घेषु यणसिद्ध्या सप्तम्यन्तपाठं निराकृत्य प्रथमान्तपाठस्सिद्धान्तितः। आचार्योक्तदिशा प्रथमान्तपाठेऽपि रेफे स्थानमात्रेणान्तरतमस्य णकारस्येव दीर्घे स्थानमात्रेणान्तरतमस्य यणोऽप्रवृत्त्या दोषसम्भवेन तदसङ्गतिः स्पष्टैव। यण्विधिस्तु दध्यत्रेत्यादौ स्थानप्रमाणाभ्यामुभाभ्यामप्यन्तरतमं यणं प्रवर्त्य कृतार्थ इति न तत्सामर्थ्यम्। ल्वादिभ्य इत्यादिनिर्देशैरिको यणचीत्यादौ व्यक्तिपक्षाश्रयणेनादोषः। तत्र पक्षे दीर्घादिव्यक्तिष्वन्तरतमानन्तरतमयोरसम्भवेन सकलाङ्गसंहिताया अन्तरतमपरिभाषाया अप्रवृत्तेरिति तदुक्तिरप्ययुक्ता। तथा सति सप्तम्यन्तपाठेऽपि दीर्घादिव्यक्तिविषयकतयोपप्लुतवाक्यविधेयस्य यणः स्थानप्रमाणाभ्यामुभाभ्यामप्यन्तरतमस्य अनन्तरतमस्य च स्थानिनो असम्भवेनान्तरतमपरिभाषाया

कैयटे। परे तु स्थानेऽन्तरतमसूत्रे सप्तम्यन्तपाठस्य भाष्यकृता दूषितत्वेनैतद्युक्तेरुक्तिसम्भव एव न। तस्मात् 'अनुस्वारस्य' इति सूत्रात्सवर्णग्रहणमपकृष्य सवर्णोऽनुनासिको भवतीत्यर्थान्न दोषः। तदुक्तं भाष्ये, 'रेफेऽनुनासिकपरसवर्णत्वयोः प्रतिषेधो वक्तव्यो, न वक्तव्यो रेफोष्मणां सवर्णा न सन्ति' इति। चिन्मय-

---

अप्रवृत्त्या दोषाभावेन तत्पक्षे तत्र दोषकथनपरभाष्यासङ्गतेर्दुर्वारत्वात्। प्रथमान्तपाठे व्यक्तिपक्षाश्रयणं सप्तम्यन्तपाठे जातिपक्ष इति तु सुतरामयुक्तमित्यवधेयम् ॥

एवमत्र मूलकाराशयमुपवर्ण्य स्वसिद्धान्तमाह। परे त्विति। सवर्णा न सन्तीति। एतदुत्तरमाहुरिति शेषः। अनुनासिकोऽनुस्वारान्तरतमश्च सवर्णो रेफोष्मणां नास्तीत्यर्थः। एतेन सवर्णग्रहणापकर्षस्सूचितः ॥

यत्त्वत्राचार्याः तुल्यास्यप्रयत्नमिति सूत्रं यस्मात्प्रत्ययविधिरितिवद्यत्रानुनासिको विधीयते, तत्र तुल्यास्यमित्युपतिष्ठत इत्यर्थकतया परिभाषारूपमपि। अनुनासिकपदानुवृत्तेः। अनुस्वारस्य ययीत्यत्र च मण्डूकप्लुत्या अनुनासिकपदमनुवर्तते। तेन चतुर्मुखः कुण्डं रथेनेत्यादौ न दोषः। न च महिष्मानित्यत्र षकारस्य ऋकारापत्तिः। तस्य षकारेण सूत्रमते स्थानप्रयत्नोभयसाम्यादिति वाच्यम्। भाष्यमते प्रयत्नभेदेनादोषात्। जश्त्ववारणाय स्थानिवत्त्वप्रवृत्तेरावश्यकतया तेनैवानुनासिकवारणसम्भवाच्च। सवर्णग्रहणापकर्षस्तु न रेफोष्मणां सवर्णा न सन्तीति भाष्याभिप्रेतः, तत्र तत्र प्रत्ययादित्युभयोश्शेष इत्यादिभाष्येणापकर्षस्य भाष्यकारासम्मतत्वावगमात्। दूरेतरां बहुसूत्रैर्व्यवहितेऽपकर्षः। दंशनमित्यादावुक्तरीत्या परसवर्णवारणसम्भवाद्ययीति न कर्तव्यमित्याशयेन रेफोष्मणामिति भाष्ये ऊष्मग्रहणमित्याहुः। तन्न। तुल्यास्यमित्यस्य संज्ञात्वपरि-

मिति । स्वार्थिकः 'तत्प्रकृतवचने' इति मयट् । तत्र तदिति वाक्यभेदेन क्वचित्प्राचुर्यरूपप्रकृतवचनाभावेऽपि मयडर्थम् । अत एव

---

भाषात्वयोरङ्गीकारेऽनुनासिकपदस्य मण्डूकप्लुत्यङ्गीकारे च सवर्णग्रहणापकर्षापेक्षया लाघवाभावात् । किञ्चान्तरतमपरिभाषोपस्थानादेव कुण्डं रथेनेत्यादौ परसवर्णवारणसम्भवे तदर्थमनुस्वारस्य ययीत्यत्रानुनासिकपदानुवृत्तेः फलाभावः। तत्र तस्याननुवृत्तितात्पर्यक हयवरट् सूत्रस्थप्रदीपोद्योतविरोधश्च, किञ्च यद्वेत्यादिप्रकारान्तरानुधावनेन तस्याप्येवंरीत्या दोषवारणेऽरुचिस्सूचिता । किञ्चाष्टन आ विभक्तावित्यत्र रायो हलीत्यतो हलीत्यपकर्षस्य सर्वसम्मतत्वेन स्वेनापि तत्र तथैवाङ्गीकृतत्वेन चात्र शास्त्रे सर्वथाऽपकर्षानाश्रयणमयुक्तमेव । यणः प्रतिषेधो वाच्य इति वार्तिकप्रत्याख्यानाय संयोगान्तलोप इत्यत्र झलो झलीत्यतो झल्ग्रहणापकर्षस्य वार्तिककृता कण्ठत उक्तत्वेन भाष्यकृत्सम्मतत्वेन च रेफस्य परोपदेशेऽनुनासिकप्रतिषेधावक्तव्यतायां "रेफोष्मणां सवर्णा न सन्तीति हेतुप्रदर्शनपरहयवरट् सूत्रस्थभाष्येणानुनासिकविधौ सवर्णग्रहणापकर्षस्य सूचितत्वेन चापकर्षस्य भाष्यकारासम्मतत्वकथनमपि साहसमात्रमेवेति सुधियो विभावयन्तु॥

चिन्मयमित्यत्र प्राचुर्यस्याप्रतीतेराह । स्वार्थिक इति । अत्यन्तस्वार्थिक इत्यर्थः । ननु तत्प्रकृतवचन इत्यनेन प्रकृत्यर्थगतप्राचुर्ये द्योत्ये मयड्विधानात्कथं तेनात्यन्तस्वार्थिकस्य सिद्धिरित्यत आह । तत्रेति । अयं भावः । तत्प्रकृतवचन इत्यत्र भावे अधिकरणे वा ल्युट् । व्याख्यानात्तन्त्रेणार्थद्वये सूत्रतात्पर्यात् । तत्राद्ये प्राचुर्येण प्रस्तुतस्य वचने बोधने सति प्रातिपदिकात्प्रत्यय इत्यक्षरार्थः । प्रचुरार्थबोधकात्प्रथमासमर्थात्स्वार्थे मयडिति यावत् । द्वितीये तु प्रकृत इति लुप्तसप्तम्यन्तम् । वचन इत्यत्र प्रकृत्यर्थोऽविवक्षितः । प्राचुर्येण प्रस्तुतेऽर्थे वर्तमानात्प्रथमासमर्थादधिकरणे मयडित्यक्षरार्थः । तत्राद्यव्याख्याने अस्य स्वार्थिकत्वेन देवात्तलित्येवमादिवत्समर्थविभक्तेस्सिद्धत्वात्तद्ग्रहणमनर्थकं

चिन्मयं ब्रह्मेति सामानाधिकरण्यम् । चिन्मात्रमिति क्वाचित्कोऽपपाठः । मात्रचः प्रत्ययस्यात्रोपपत्त्यभावात् । मयूरव्यंसकादिष्वेवार्थमात्रशब्देनात्र समासस्य वक्ष्यमाणत्वात् । निपातनादिति । यवादिगणे ककुद्मानिति प्रकृतिप्रत्ययसमुदायः पठ्यत इति मतेनेदम् ॥

उदः स्था । 'तस्मादित्युत्तरस्य' इति परिभाषालभ्यमर्थमाह । उदः परयोरिति । अत्राघोषस्येति । समनियतत्वेनान्यतमाग्रहणे बाधकाभावेन श्वासविवारयोस्त्यागेऽपि न न्यूनतेति बोद्धव्यम् । थस्यासिद्धत्वादिति । त्रिपाद्यां परत्वादिति भावः । 'हलो यमाम्'

---

सद्वाक्यभेदेन क्वचित्प्राचुर्यरूपप्रकृतवचनाभावेऽप्यत्यन्तस्वार्थिकं मयटं विधत्त इति । सामानाधिकरण्यमिति । प्राचुर्ये मयटि त्वन्नमयो यज्ञ इत्यादावन्नयज्ञयोरिव चिद्ब्रह्मणोर्भेद एव स्यान्नाभेदरूपं सामानाधिकरण्यमित्यर्थः । उपपत्त्यभावादिति । प्रमाणे द्वयसजितिसूत्रे प्रमाणशब्दस्य परिच्छेदकपरत्वाच्चितः परिच्छेदकत्वासम्भवादिति भावः । नन्वेवं चिन्मात्रं ब्रह्मेति प्रयोगस्य का गतिरित्याह । मयूरेति । इति मतेनेदमिति । यदा तु यवादिगणे प्रकृतिमात्रस्यैव पाठ इति सिद्धान्तमतं, तदा यचि भं तसौ मत्वर्थ इति तात्पूर्वं दकारप्रश्लेषेण दान्तस्य भत्वात्प्रकृते न दोष इति बोध्यम् ॥

परिभाषालभ्यमिति । विधौ परिभाषा उपतिष्ठते, नानुवाद इति त्विको गुणवृद्धी अचश्चेति परिभाषाद्वयविषयकमेवेति भावः । समनियतत्वेनेति । त्रयाणां परस्परमव्यभिचरितत्वेनेत्यर्थः । न न्यूनतेति । समनियतेष्वन्यतमस्य ग्रहणे इतरयोरपि ग्रहणस्य कृतप्रायत्वादिति भावः । अघोषस्यैव ग्रहणं त्वशोकवनिकान्यायेनेति बोध्यम् । मूले थस्यासिद्धत्वेति । एवञ्च

**इतिसूत्रोक्तभाष्यसंमताष्टाध्यायीपाठे तु थस्यासिद्धत्वाभावेन चर्त्वं भवत्येव। अत एव 'उत्पूर्वस्कन्दे रोगे उपसंख्यानम्, उत्कन्दो रोग' इति भाष्यं सङ्गच्छते । मूलन्तु प्राचामनुरोधेनेति परे। न चेदं सूत्रं व्यर्थं 'झलो झलि' इत्यनेन सस्य लोपे उत्थानस्य सिद्धेरिति वाच्यम् । झलादौ प्रत्यये तेन लोप इत्यर्थस्यानेन ज्ञापनात् ।**

---

पूर्वमेव चर्त्वस्य सकारे प्रवृत्तत्वाल्लक्ष्ये लक्षणस्येति न्यायेन न पूर्वसवर्णोत्तरं चर्त्वं, विकारकृतलक्ष्यभेदस्यानाश्रयणादिति भावः । एतेन थस्यासिद्धत्वेपि सकारबुद्ध्या तत्प्राप्तिरिति शङ्कापि नेति ध्येयम् ॥

**हलो यमां यमीति** । हलो यमां यमीति सूत्रेऽस्माभिरुक्त इत्यर्थः । एतेन हलो यमामिति सूत्रस्य भाष्यकृताऽनुपादानादिदमसङ्गतमित्यपास्तम् । **भाष्यसम्मतेति** । नादिन्याक्रोश इत्यनन्तरं क्रमेणोदस्थास्तंभोः पूर्वस्य, शश्छोटि, अभ्यासे चर्च, झरो झरीति सूत्राणां भाष्यकृतोपादानात्तथा पाठो भाष्यसम्मत इति लभ्यत इति भावः । ननु पूर्वसवर्णस्य तक्रन्यायेन चर्त्वबाधकतया तदुत्तरं कथं चर्त्वप्रवृत्तिरित्यत आह । **अत एवेति** । एवञ्चैतद्भाष्यप्रामाण्यादत्र तन्न्यायानित्यत्वमिति भावः । नन्वेवं मूलग्रन्थस्य का गतिरित्यत आह । **मूलं त्विति** । **प्राचामनुरोधेनेति** । यथाश्रुताष्टाध्यायीपाठानुसारेणासम्भव एव बाधकत्वमिति वार्तिकमतानुसारेण च व्याचक्षाणानां प्राचामनुसारेणेति भावः । **व्यर्थमिति** । न च लोपपक्षे उदो दकारस्य चर्त्वे तस्य द्वित्वे द्वितकारं रूपं, पूर्वसवर्णेन सकारस्य थकारादेशे तस्य पूर्वोक्तरीत्या चर्त्वेन तकारे पूर्वतकारस्य द्वित्वे तकारत्रयस्य श्रवणमिति भेदात्कथमस्य वैयर्थ्यमिति वाच्यम् । व्यञ्जनात्परस्यैकस्यानेकस्य वोच्चारणे विशेषाभावेन पूर्वत्रासिद्धीयमद्वित्व इति न्यायेन द्वित्वदृष्ट्या पूर्वसवर्णस्य सिद्धत्वात्परत्वात्पूर्वसवर्णे कृते सकृद्गतिन्यायेन पश्चाद्द्वित्वाप्रवृत्तौ सूत्रारम्भेपि

उदस्थादित्यत्र तु निर्दिश्यमानपरिभाषया निर्दिश्यमानादेरेव स्था-नित्वान्न दोषः ॥

झय इति पञ्चमीत्याह । झयः परस्येति । पूर्वस्येत्यनुवर्त्तते । घोषवत इति । समनियतत्वेऽपि विनिगमनाविरहात्स्वरूपप्रति-पादनाय च त्रितयग्रहणम् ॥

झय इति । पदान्तादित्यपि बोद्धयम् । तेन विरप्शामित्यादौ छत्वं न । जकारे कृते इति । छत्वमिति शेषः । पूर्वोक्तभाष्यसंमता-ष्टाध्यायीपाठे चर्त्वस्य छत्वं प्रत्यसिद्धत्वात् ॥

मोऽनु । पदस्येत्यधिकृतं म इत्यनेन विशेष्यत इत्याह । मान्त-स्येति । 'हलि सर्वेषाम्' इत्यतो हलीत्यनुवर्त्तते । हलि किम् । राममाश्रय ॥

नश्चा । चेन मोऽनुकृष्यते । अपदान्तस्य किम् । राजन्पाहि । यशांसीति । यशस्शब्दाद् जसः शौ 'नपुंसकस्य' इति नुमि

---

द्वितकारस्यैव रूपस्य सिद्ध्या लोपपूर्वसवर्णयो रूपभेदाभावेन चास्य वैयर्थ्यमि-त्याशयात् । ननूदस्थादित्यत्र लोपस्याप्राप्त्या तत्रेदं सार्थकमित्याशङ्क्याह । उदस्थादिति । आगमसहितस्य निर्दिश्यमानत्वाभावात्तद्रहितस्य तत्त्वेपि तस्योदः परत्वाभावाच्च न तत्रास्य प्राप्तिरिति भावः ॥

झलि परे हकारस्य ढत्वविधानेन हकारात्परस्य झयोऽसम्भवादुत्तरसूत्रे पदान्तादित्यनेन सामानाधिकरण्याय झय इत्यस्य पञ्चम्यन्ततया एव वक्तव्य-तयाऽर्थाधिकारानुरोधादत्रापि तथैवाश्रयणस्योचितत्वाच्चाह । झय इति पञ्च-मीति । विरप्शामिति । विपूर्वाद्रपेरौणादिकश्शप्रत्ययः ॥

सान्तेति दीर्घः । आक्रंस्यत इति । क्रमेर्लृट् 'आङ उद्गमने' इति तङ् स्यः ॥

अनुस्वारस्य । परेति लुप्तषष्ठीकं पृथक्पदम् । अत एव 'उदः स्था' इत्यादौ सवर्णग्रहणानुवृत्तिः 'यरोऽनुनासिक' इत्यत्र तदपकर्षश्च सिद्धः । ययीति स्पष्टार्थम् । दंशनमित्यादौ तु न दोषः । शकारसवर्णाप्रसिद्धेः । प्रयत्नभेदेनाज्झलोः सावर्ण्याभावात् । अचि अनुस्वाराभावात् ॥

मो राजि । नेति सिद्धे म इत्युक्तिः 'हे मपरे' इत्येतद्विषये प्रशाम् ह्मलयतीत्यादौ 'मो नो धातोः' इतिनत्वबाधनार्था, निषेधस्त्वनन्तरत्वादनुस्वारस्यैव स्यात् । ध्वनितश्चेदम् 'एतदोऽन्' 'अमो मश्' इति सूत्रयोर्भाष्ये ॥

हे मपरे । मपरे इति बहुव्रीहिः, न तु तत्पुरुषोऽसंभवात् । 'मोऽनुस्वारः' इत्यतो म इत्यनुवर्त्तते ॥

---

अप्रसिद्धेरिति । स्थानेन्तरतम इति परिभाषोपस्थित्याऽनुस्वारस्यान्तरतमः परसवर्णो भवतीत्यर्थादनुस्वारान्तरतमस्य शकारसवर्णस्याप्रसिद्धेरिति भावः । एतेन शकारसवर्णस्य शकारस्य प्रसिद्धत्वेपि तस्यानुस्वारान्तरतमत्वाभावाददोष इति बोध्यम् । यत्तु यरोऽनुनासिक इत्यतोऽनुनासिक इत्यस्यात्रानुवृत्त्या शर्रेफसवर्णानुनासिकाप्रसिद्धेरिति मिश्रास्तदनुसारिण औचराहाश्च वदन्ति । तन्न । हयवरट्सूत्रस्थप्रदीपोद्योताभ्यामनुवृत्त्यभावस्यैव लाभेन तद्विरोधात् । निरुक्तरीत्या दोषवारणेनानुवृत्तेरनावश्यकत्वाच्च । नन्वनुस्वारान्तरतमश्शकारसवर्णोऽनुनासिक ईकारः प्रसिद्ध एवेत्याशङ्क्याह । प्रयत्नभेदेनेति । ध्वनितं चेदमिति । मकारस्य मकारविधानादनुस्वारादयो बाध्यन्त इति तत्रोक्तेरिति भावः । बहुव्रीहिरिति । पञ्चम्यर्थ इति भावः । असम्भवादिति ।

**यथासंख्य ।** सम्यक् ख्यानं संख्या, क्रमवैशिष्ट्येन ज्ञानम् । 'यत्सांख्यैः प्राप्यते स्थानम्' इत्यत्र संख्याशब्दस्य ज्ञानार्थताया दृष्टत्वात् । तामनतिक्रम्य यथासंख्यम् । अनुदेशः पश्चाद्भववाक्यार्थबोधकालिकः सम्बन्धः । साम्यं संख्यया, योग्यत्वाद्व्याख्यानाच्च । एवञ्च समसंख्यानां सम्बन्धो येन क्रमेण पदज्ञानं पदादुपस्थितिर्वा तेनैव क्रमेण वाक्यार्थबोधविषयः सम्बन्ध-

---

हकारे परे मोऽनुस्वार इत्यनेन नश्चापदान्तस्येत्यनेन वाऽनुस्वारप्रवृत्त्या मकारात्परहकारस्यासम्भवादिति भावः ॥

अत्र संख्याशब्दस्यैकत्वादिरूढस्य ग्रहणे वाक्यार्थानुपपत्तिरतो यौगिक इति व्याचष्टे । **सम्यक् ख्यानमिति ।** संख्यापदस्यावयवशक्त्या ज्ञानार्थकत्वे वृद्धसम्मतिं दर्शयति । **यत्सांख्यैरिति ।** संख्याशब्देन क्रमो लक्ष्यत इति वृत्तिकाराद्युक्तं तु न युक्तम् । राजकोशादिना संख्याशब्दस्य निरुक्तार्थे शक्तेर्बोधितत्वेन प्रसिद्धप्रयोगसत्त्वेन च लक्षणां विनैवोपपत्तौ तदाश्रयणस्यानावश्यकत्वात् । नन्वत्र सङ्ख्याकृतमेव साम्यं ग्राह्यमित्यत्र मानाभावेन स्थानादिकृतसाम्यस्यापि प्रतीत्या तन्निरासायाह । **साम्यं संख्ययेति ।** अत्र बीजमाह । **योग्यत्वादिति ।** लक्ष्यानुसारादित्यर्थः । लक्ष्यानुसरणस्य लक्षणैकचक्षुष्काणामशक्यत्वादाह । **व्याख्यानादिति ।** तूदीशलातुरवर्मतीकूचवाराड्ढक्छण्ढञ्यक इत्यादावेतच्छास्त्रप्रवर्तनपरयथासंख्यसूत्रस्थभाष्यरूपादित्यर्थः । **समसंख्यानां सम्बन्ध इति ।** एतदुत्तरं यथासंख्यमित्यर्थ इति शेषः । अन्यथैकस्य संबन्धपदस्य नैरर्थक्यापत्तेः । तदेव विवृणोति । **येन क्रमेणेत्यादिना । पदज्ञानमिति ।** अस्योदाहरणं समूलाकृतेत्यादि । परस्मैपदानां णलित्यादौ क्रमेण पदज्ञानाभावादाह । **पदादुपस्थितिर्वेति ।** एतेन शब्दतोऽर्थतो वा संख्यासाम्येऽस्य प्रवृत्तिरिति सूचितम् । यद्यपि परस्मैपदशब्देन

**स्तेषामित्यर्थः । फलितमाह । समसम्बन्धीति । यद्यपि स्थाना-ख्यलौकिकप्रमाणादेव सिद्धं, तथापि 'परस्मैपदानाम्' 'एचोऽयवा-यावः' इत्यादौ शब्दतः सूत्रान्तरस्थक्रममादाय सम्बन्धबोधार्थम्,**

---

साक्षाल्लादेशानां संज्ञिनां युगपदेवोपस्थितिर्न क्रमेण, तथापि लादेशज्ञानाय तिबादिसूत्रानुसंधानस्यावश्यकत्वेन तत्र तिबादीनां क्रमेणैवोपस्थित्या साक्षात्सूत्रान्तरस्थं परंपरयाऽत्रोपस्थितं क्रममादायाप्यारम्भसामर्थ्यादस्य प्रवृत्तिरित्याशयः । **स्थानाख्यलौकिकप्रमाणादेवेति** । स्थानं चात्र क्रमः । शत्रुं मित्रं विपत्तिं च जय रञ्जय भञ्जयेत्यादौ लोके यथा क्रमेणान्वयबोधस्तथा शास्त्रेपि तत्सिद्ध्या नारम्भणीयं सूत्रमिति तदाशयः । सूत्रारम्भफलं दर्शयति । **तथापी-त्यादिना । शब्दतः सूत्रान्तरस्थेति** । शब्दतः सूत्रान्तरस्थमर्थतोऽत्रोपस्थितमित्यर्थः । **सम्बन्धबोधार्थमिति** । स्थानाख्यलौकिकप्रमाणेन शब्द-साम्य एव क्रमेणान्वयबोधस्य लोके दृष्टतया शास्त्रेपि तेन प्रमाणेन तथैव क्रमान्वयबोधः स्यात् । परस्मैपदानामित्यादौ शब्दसाम्याभावेन तथा बोधो न स्यात् । अतस्तादृशेषु क्रमान्वयबोधलाभयेदमारम्भणीयमिति भावः । न चैतत्सूत्रारम्भेपि परस्मैपदशब्देन शतृक्वसोरप्युपस्थित्याऽर्थतोपि संख्या-साम्याभावेन कथं तत्रास्य प्रवृत्तिः । किञ्च परस्मैपदशब्देन परस्मैपदवत्त्वेन रूपेण लादेशानां युगपदेवोपस्थित्या कथं च तत्र क्रमान्वयबोध इति वाच्यम् । शतृक्वसोः परस्मैपदसंज्ञासत्त्वेपि तत्र परस्मैपदशब्देन सन्निहितानां तिबादीना-मेव ग्रहणेनार्थतस्संख्यासाम्यस्याव्याहतत्वात् । परस्मैपदशब्देन परस्मैपदव-त्त्वेन रूपेण लादेशानां युगपदुपस्थित्या लादेशानां णलादयो भवन्तीति समान्यतो बोधे जातेऽपि तादृशबोधस्य लक्ष्यसंस्कारकत्वाभावेन विशकलि-तोपस्थित्या विशेषतो बोधस्यावश्यमाश्रयणीयतया तत्र लादेशज्ञानार्थमनु सन्धीयमानतिबादिसूत्रस्थं क्रमं विहाय व्युत्क्रमेण तेषामुपस्थितिकल्पने माना-

'आद्यन्तौ टकितौ' इत्यादौ समासनिर्देशे साहित्ये द्वन्द्वविधानाद-प्राप्तक्रमान्वयबोधनार्थश्चेदम्। एवञ्च तत्र यथासंख्येनान्वयबोधक-वाक्यकल्पना एतत्प्रामाण्यात्, ततश्च बोध इति बोद्धव्यम्। अत्र

---

भावेन तेनैव क्रमेण तेषां विशकलितोपस्थित्या क्रमान्वयबोधस्य सूपपादत्वाच्च॥

एतेन पदादुपस्थितिर्वेति प्रतीकमुपादाय पदनिष्ठशक्तिग्रहप्रयोजकशास्त्रे येन क्रमेण पदज्ञानमित्यर्थः। यथाश्रुतं तु न युक्तम्। परस्मैपदशब्देन सङ्केत-सम्बन्धेन परस्मैपदवतामुपस्थित्या क्रमेणोपस्थितेरभावादित्यौत्तराहोक्तमपा-स्तम्। "च्वादिशब्दैश्चानादिसिद्धलोकप्रसिद्धक्रमेणैवोपस्थितिरिति तात्पर्य-मिति" स्तोश्चुनेति सूत्रस्थशब्दरत्नग्रन्थेनापि परस्मैपदादिशब्दैस्संज्ञिनां क्रमे-णोपस्थितिरित्यर्थस्य सूचितत्वात्॥

ननु प्रागुक्तलौकिकप्रमाणस्य शब्दसाम्य इवार्थसाम्येऽपि प्रवृत्तिरस्तु, किं सूत्रेणेत्याशङ्क्य फलान्तरमाह। **आद्यन्ताविति। साहित्ये द्वन्द्वविधाना-दिति।** इतरेतरयोगेपि साहित्यस्यैव प्राधान्यादिति भावः। **क्रमान्वयबोध-नार्थमिति॥**

अयं भावः। लौकिकप्रमाणेन क्रमान्वयबोधे तत्तत्पदार्थानां सर्वसाधारण-व्यासज्यवृत्तिधर्मानवच्छिन्नत्वेनोपस्थितेस्तन्त्रतया यत्रासमासेनोच्चारणं तत्रैव क्रमान्वयबोधस्स्यात्। समासनिर्देशे तादृशोपस्थितेरभावेन स न स्यात्। अत एवा-जाविधनौ देवदत्तयज्ञदत्तावित्युक्ते न ज्ञायते कस्याजा धनं, कस्यावय इत्युक्तं भाष्ये। एवञ्च तत्र लौकिकप्रमाणेनाप्राप्तक्रमान्वयबोधार्थमिदमारम्भणीयमिति॥

**एवञ्चेति।** एतदर्थमेतत्सूत्रारम्भे इत्यर्थः। **वाक्यकल्पनेति।** प्राथ-मिकबोधस्तु साहित्यावच्छिन्ने साहित्यावच्छिन्नस्यैवेति भावः। **ततश्चेति।** सूत्रारम्भसामर्थ्येन कल्पिताद्वाक्यान्तरादित्यर्थः। **बोध इति।** लक्ष्यसिद्ध्यु-

स्वरितेनेत्यपकृष्यत इति 'ख्यत्यात्' इत्यादौ नातिप्रसङ्गः । तत्र प्रतिपत्तिकालिकमेव संख्यासाम्यमेतच्छास्त्रप्रवृत्त्युपयोगीति 'ञम-ङ्णनम्' इति सूत्रे भाष्ये स्पष्टम् ॥

---

पयोगी क्रमान्वयबोध इत्यर्थः । इदं च सूत्रमस्मिन्शास्त्रे द्वन्द्वसमासनिर्दिष्टयोः पश्चात्क्रमेणान्वयेऽपि सामर्थ्यात्साहित्यावच्छिन्ने साहित्यावच्छिन्नस्यान्वयमात्रेण द्वन्द्वस्य साधुतां बोधयति । तेन लोके आद्यन्तौ वर्णानां विप्रशूद्राविल्या-देस्साधुत्वं नेत्यवधेयम् । ननु ख्यत्यात्परस्येत्यादावपि शब्दतः संख्यासाम्यस्य सत्त्वेनैतच्छास्त्रप्रवृत्त्यापत्तिरित्याशङ्क्याह । **अपकृष्यत इति** । स्वरितत्वयुक्तानां समसंख्यानां सम्बन्धो यथासंख्यमित्यर्थः । एवञ्चात्र स्वरितत्वाभावान्नाति-प्रसङ्ग इति भावः । यद्यप्युत्तरत्रानुवृत्तये ङसिङसोरितिपदे स्वरितत्वमस्ति, तथापि ययो र्यथासंख्यमन्वयस्तयोर्द्वयोरपि स्वरितत्वसत्त्व एवैतच्छास्त्रप्रवृत्त्या ख्यत्यादितिपदे स्वरितत्वाभावेन तदप्रवृत्तेः । ननु स्यतासी लृलुटोरित्यत्र लृशब्देन लृङ्लृटोरुपस्थित्या संख्यासाम्याभावेन संख्यातानुदेशो न स्यादि-त्यत आह । **तत्रेति** । यथासंख्याश्रये विधावित्यर्थः । **प्रतिपत्तिकालिक-मेवेति** । प्राथमिकवाक्यार्थबोधकालिकमेव, न तु लक्ष्यसंस्कारकालिकमित्यर्थः। **भाष्ये स्पष्टमिति** । तत्र हि मकारप्रत्याख्याने ये मकारेण प्रत्याहाराः ते ञकारेणैव सन्तु, ङञो ह्रस्वादचि ङञुण्णित्यमिति यथा । तर्हि पदान्तयोर्झ-कारभकारयोरभावात्पश्चागमास्त्रय आगमिन इति वैषम्यात्सङ्ख्यातानुदेशो न प्राप्नोतीत्याशङ्क्य, सन्तु तावद्येषामागमानामागमिनस्सन्तीत्युक्तम् । प्रतिपत्ति-कालिकं सङ्ख्यासाम्यमादाय यथासङ्ख्यशास्त्रप्रवृत्त्या वाक्यार्थबोधे जाते येषा-मागमानामागमिनस्सन्ति त एव तेषां भवन्त्विति तदाशयः ॥

यत्त्वत्रौत्तराहाः, अनुपूर्वकदिशधातोः पश्चाद्भवज्ञानमर्थः । तथा च सूत्रे अनुदेशपदेनोपस्थितिपश्चाद्भवशाब्दबोधविषयीभूताकाङ्क्षाभास्यसम्बन्ध उच्यते ।

अनोः पश्चादर्थकत्वाद्दिशेः ज्ञानार्थकत्वात् । समानामिति चावर्तते । एकत्रानुयोगित्वमपरत्र प्रतियोगित्वं च षष्ठ्यर्थः। समानामित्यस्य तुल्यसङ्ख्यावतामित्यर्थः। यथासंख्यमित्यस्य च संख्याकर्मकातिक्रमणकर्तृत्वाभाववानित्यर्थः । तथा च तुल्यसंख्यावत्प्रतियोगिकः तुल्यसंख्यावदनुयोगिकश्चाकाङ्क्षाभास्यसम्बन्धः संख्याकर्मकातिक्रमणकर्तृत्वाभाववान्भवतीति वाक्यार्थः। संख्यात्र क्रमः। क्रमश्चापेक्षाबुद्धिविशेषविषयता। आकाङ्क्षाभास्यसम्बन्धे संख्याकर्मकातिक्रमणकर्तृत्वाभावश्च स्वप्रतियोगिवृत्त्यपेक्षाबुद्धिविशेषविषयतासजातीयापेक्षाबुद्धिविशेषविषयतावदनुयोगिकत्वम् । साजात्यं च स्वनिरूपकापेक्षाबुद्धिनिष्ठजनकतानिरूपितजन्यतावच्छेदकसंख्यात्वव्याप्यजात्यवच्छिन्नजन्यतानिरूपित जनकतावच्छेदकत्वम्। स्ववृत्तिस्वनिरूपकापेक्षाबुद्धीयैकत्वनिष्ठप्रकारतानिरूपितैकत्वविशिष्टत्वावच्छिन्नधर्मितात्वस्ववृत्तिस्वनिरूपकापेक्षाबुद्धीयैकत्वानिष्ठप्रकारतानिरूपितैकत्वानवच्छिन्नधर्मितात्वैतदन्यतरवत्त्वम् । एतदुभयधर्माभ्यामित्याहुः॥

अत्रेदं वक्तव्यम्। अत्र लक्ष्यसंस्कारार्थं कल्पिते समूले उपपदे हनो णमुल् इति बोधे भासमानस्सम्बन्धः न समूलादित्रितयप्रतियोगिकः। न वा हनादित्रितयानुयोगिकः। यस्तु संग्राहकवाक्याज्जायमानबोधे भासमानस्स यथाकथंचित्तुल्यसंख्यावत्प्रतियोगिकः तुल्यसङ्ख्यावदनुयोगिकश्च भवति। न स लक्ष्यसंस्कारकबोधे भासते। एवञ्च तुल्यसङ्ख्यावत्प्रतियोगिकस्तुल्यसङ्ख्यावदनुयोगिकश्च सम्बन्धो लक्ष्यसंस्कारकबोधे भासमानो न भवतीत्येतत्सम्बन्धस्य विशेषस्वरूपकल्पनेऽपि लक्ष्यसंस्कारकबोधे भासमानस्य सम्बन्धस्याविशेषितत्वान्नाभीष्टार्थलाभः। किञ्च संग्राहकवाक्यजबोधे सर्वेषामप्यनुयोगिकत्वप्रतियोगिकत्वयोस्सत्त्वेन भवदुक्तरीत्या समूलप्रतियोगिकत्वं कृञनुयोगिकत्वं चादाय सङ्ख्याकर्मकातिक्रमणकर्तृत्वस्यैव सत्त्वेन भावाभावयोर्विरोधेन संख्याकर्मकातिक्रमणकर्तृत्वाभावस्य तत्र स्थातुमशक्यत्वेन भवत्परिष्कृतातिक्रमणकर्तृत्वाभावो

न सूत्राक्षरानुगुणः । समूलप्रतियोगिकत्वं हननुयोगिकत्वं चादाय भवदुक्तातिक्रमणकर्तृत्वाभावस्यापि तत्र सत्त्वात् । नहि समूलादिशब्दनिष्ठं तदर्थनिष्ठं वाऽतिक्रमणकर्तृत्वं तयोर्निरंशत्वेनाव्याप्यवृत्ति, येन भावाभावयोस्समावेश उपपाद्येत । अतस्समसङ्ख्यावत्प्रतियोगिकस्समसङ्ख्यावदनुयोगिकश्च सम्बन्ध एवंविधो भवतीति व्याख्यानमयुक्तमेव, परन्तु समसङ्ख्याकानामर्थानां प्रत्येकमेवंविधस्सम्बन्धो भवतीत्येव सूत्रतात्पर्यं वर्णनीयम् । एवञ्च समानामित्यस्यावृत्तिर्दुरर्थिका निरर्थिका च । किञ्चेयं बिभीषिका अयमेकस्तद्विशिष्टोऽयमेक इत्याकारकापेक्षाबुद्धेरेव द्वित्वजनकत्वमिति सिद्धवत्कृत्य प्रवृत्ता। तदेव तु न सिद्धम्। अयमेकोऽयमेक इत्याकारकापेक्षाबुद्धेरेव द्वित्वजनकतायास्तत्र तत्र प्रतिपादनात् । यद्युच्छृङ्खलतया भवदभिमतापेक्षाबुद्धेरपि द्वित्वजनकत्वमभ्युपेयते, तथापि यस्यायमेकोऽयमेक इत्याकारकापेक्षाबुद्ध्या द्वित्वं जातं, तस्य भवदुक्तरीत्या एतत्सूत्रमभिमतार्थस्य बोधकं न स्यात् । एतादृशस्थले भवदभिमतापेक्षाबुद्धिरेव द्वित्वं जनयतीति न राज्ञामाज्ञास्ति । किञ्च यथासङ्ख्यसूत्रोदाहरणेषु क्वचित् ङ्णोः कुक्टुक् शरीत्यादौ द्विवचनेन द्वित्वबोधानुरोधाद्यथाकथंचिद्द्वित्वोत्पत्तेरङ्गीकारेऽपि समूलाकृतजीवेष्वित्यादौ बहुवचनेन त्रित्वादेः प्रतीत्या तत्र त्रित्वोत्पत्तेरावश्यकत्वेन तत्रापि द्वित्वोत्पत्तौ मानाभावेन द्वित्वोत्पत्त्युपजीव्यया भवदुक्तव्याख्यया कथं निर्वाहः। यदि तत्रापि शपथेन द्वित्वोत्पत्तिं ब्रूषे, तथापि तत्र जायमानं द्वित्वं समूलमेकं तद्विशिष्टोयमकृत एक इत्यपेक्षाबुद्ध्यैव जायते, न त्वकृत एकस्तद्विशिष्टं समूलमेकमित्यपेक्षाबुद्ध्येति कोसौ निर्बन्धः । एवं हनादिविषयेऽपि निर्बन्धाऽभावेऽभीष्टसम्बन्धविपरीतसम्बन्धभानं दुर्वारम् । किञ्चात्र भासमानत्रित्वानुरोधेन भवद्रीत्या समूल एकस्तद्विशिष्टोयमकृत एकः, इमौ द्वौ, तद्विशिष्टोऽयंजीव एक इत्यपेक्षाबुद्ध्या त्रित्वजनने जीवनिष्ठविषयतासाजात्यस्य हन्निष्ठविषयतायां समूलनिष्ठविषयतासाजात्यस्य ग्रहनिष्ठविषयतायां च सत्त्वेन सर्वस्यापीष्टस्य व्याकुली भावः

प्रसज्येत। किञ्च चतुर्दशसूत्र्यां निर्विभक्तिकानामेव वर्णानां निर्देशेन तत्रैचां सङ्ख्यावैशिष्ट्येन बोधाभावादेचोऽयवायाव इत्यादावेकवचनसत्त्वेन द्वित्वादिवैशिष्ट्येन बोधासम्भवात्तदुपस्थाप्येषु द्वित्वमवश्यमुत्पद्यत इति नियामकाभावेन तत्र यथासङ्ख्यसूत्रस्य द्वित्वोत्पत्त्यधीनबोधजनकस्याप्रवृत्त्या तत्र यथासङ्ख्यसूत्रेणेष्टसिद्धिरिति भाष्यमसम्बद्धमेव स्यात्। एवमनेकदोषदूषितरीतेराश्रयणमस्पृष्टदर्शनान्तरविषयाणां केषांचिद्व्यामोहनाय प्रवृत्ता बिभीषिकैवेति परिगृह्णन्तु दर्शनान्तरव्युत्पन्ना वैयाकरणप्रकाण्डा इत्यलमतिविस्तरेण॥

यदपि पूर्वोपदर्शितां विसंष्ठुलां रीतिमेवावष्टभ्य नित्यानन्देनोक्तम्। समसङ्ख्यावतां सम्बन्धः सङ्ख्यात्वव्याप्यजातिविशिष्टो भवतीत्यर्थः। वैशिष्ट्यञ्च स्वावच्छिन्नसङ्ख्यानिष्ठजन्यतानिरूपितजनकतावदपेक्षाबुद्धीयैकत्वावच्छिन्नविशेष्यताश्रयप्रतियोगिकत्व स्वावच्छिन्नसङ्ख्यानिष्ठजन्यतानिरूपितजनकतावदपेक्षाबुद्धीयैकत्वावच्छिन्नविशेष्यताश्रयानुयोगिकत्व, एतदन्यतरवत्त्वम्। स्वावच्छिन्नसङ्ख्यानिष्ठजन्यतानिरूपितजनकदावदपेक्षाबुद्धीयैकत्वावच्छिन्नप्रकारताश्रयप्रतियोगिकत्व, स्वावच्छिन्नसङ्ख्यानिष्ठ जन्यतानिरूपितजनकतावदपेक्षाबुद्धीयैकत्वावच्छिन्नप्रकारताश्रयानुयोगिकत्वैतदन्यतरवत्त्वं, एतदुभयसम्बन्धेनेति, तदनुगमरीत्यपरिज्ञानमूलकमेव। तथाहि। तत्र जातेः स्वपदेन ग्रहणेऽकृतग्रहयोस्सम्बन्धेपि तज्जात्यवच्छिन्नद्वित्वानामनियततया समूल एकस्तद्विशिष्टोयमकृत एक इत्याकारकापेक्षाबुद्धिजन्यद्वित्वमादाय स्वावच्छिन्नैतद्द्वित्वनिष्ठजन्यतानिरूपितजनकतावदपेक्षाबुद्धीयैकत्वावच्छिन्नविशेष्यताश्रयप्रतियोगिकत्वस्य कृञ् एकस्तद्विशिष्टोऽयं ग्रहेक इत्याकारकापेक्षाबुद्धिजन्यद्वित्वमादाय स्वावच्छिन्नैतद्द्वित्वनिष्ठजन्यतानिरूपितजनकतावदपेक्षाबुद्धीयैकत्वावच्छिन्नविशेष्यताश्रयानुयोगिकत्वस्य च सत्त्वेनानिष्टसम्बन्धः प्रसज्येत। उभयत्र विद्यमानाया द्वित्वत्वजातेरेकत्वेन तत्र स्वत्वघटितसम्बन्धनिवेशेन विशेषालाभात्॥

एते यवला निरनुनासिका एव । विधीयमानत्वेन सवर्णाग्राहकत्वात् । जातिग्रहणप्राप्तस्येव गुणाभेदकत्वप्राप्तस्यापि अप्रत्यय इत्यनेन निषेधाच्च । एवं 'मय उञ' इत्यत्रापि । अत एव मतोर्मस्य नानुनासिको वकारः । अन्यथा 'तद्वानासाम्' इत्यादौ नित्यानुनासिकापत्त्या तन्निर्देशासङ्गत्यापत्तिरित्याहुः ॥

चयो द्वितीया इति । 'नादिन्याक्रोशे' इत्यत्र भाष्ये इदम् । एतत्सामर्थ्यादेतत्कृतद्वितीयस्य न चर्त्वम् । 'ऊष्मोदयं प्रथमं

---

मकारस्थाने यवलानां विधानेनान्तरतम्यादनुनासिकास्ते स्युरिति भ्रमनिरासायाह । एते यवला इति । यवलपरे यवला वेति वार्तिकविधेया इत्यर्थः । तत्र हेतुमाह । विधीयमानत्वेनेति । एवञ्च तैस्सवर्णानामग्रहणे निरनुनासिकानामेव वार्तिकविधेयत्वेनानुनासिकस्थानेपि निरनुनासिका एव भवन्तीति भावः । ननु सूत्रप्राप्तसवर्णानामप्रत्यय इत्यनेन निषेधेऽपि गुणाभेदकत्वपक्षेण सानुनासिकानां ग्रहणं दुर्वारमेवेत्याशङ्क्याह । जातिग्रहणेत्यादिना । यथाऽण्ग्रहणप्रत्याख्याने तपरसूत्रवदप्रत्यय इत्येतद्योगविभागेन जातिग्रहणप्राप्तसवर्णग्रहणनिषेधक मेवं पक्षद्वयेपि तस्य गुणाभेदकत्वपक्षप्राप्तसवर्णग्रहणनिषेधकत्वमपि वाक्यभेदेनाश्रयणीयमिति भावः । मय उञो वो वेति सूत्रमनोरमोक्तस्यानुनासिकवकारघटितरूपस्यायुक्ततां ध्वनयितुमाह । एवमिति । एवञ्च तत्रानुनासिकस्थानेऽपि निरनुनासिक एवादेश इति भावः । अत एवेति । गुणाभेदकत्वपक्षप्राप्तसवर्णग्रहणस्याप्यप्रत्यय इत्यनेन निषेधादेवेत्यर्थः । अत्र मानं दर्शयति । तद्वानासामिति । न च तसौ मत्वर्थ इत्यत्र दकारप्रश्लेषाद्भत्वेन पदत्वबाधादनुनासिकाप्राप्त्या नेदं प्रमाणमिति वाच्यम् । प्रत्यस्थादिति सूत्रस्थस्यासुब्वत इति भाष्यप्रयोगस्यात्र मानत्वात् । अस्य तदुपलक्षकत्वात् । एतत्सामर्थ्यादिति । एतदुत्तरं चर्त्वप्रवृत्तावस्य वैयर्थ्यापत्त्या नैतत्प्रवृत्त्युत्तरं चर्त्वमिति भावः ॥

**स्पर्शमेके द्वितीयमाहुरपदान्तभाजम्' इति प्रातिशाख्येऽपदान्तभाजमिति चर्त्वासिद्धत्वलब्धार्थानुवादः । पदान्ते जश्त्वप्रवृत्त्या चर्त्वं विना चयोऽलाभात् । अत्र तु कृते न जश्त्वप्राप्तिरस्यासिद्धत्वात् ।**

---

यत्त्विदमयुक्तम्, अफ्सरा वथ्सा इत्यदावस्य चारितार्थ्यात् । तत्र ह्यप्पूर्वात्सर्तेरसिः, वदेस्सः । ततश्चर्त्वे एव तस्य सिद्धत्वाश्रयणेनैतस्य प्रवृत्तेः । तयोरव्युत्पन्नत्वेपि खरि चेत्येतदपवादत्वादेवास्मिन्कृते न तस्य प्रवृत्तिरित्याचार्याः, तदसत् । एतद्वार्तिकस्य तावन्मात्रफलकत्वे लोकवेदसाधारण्येन द्वितीयादेशविधानस्य चारितार्थ्याभावात् । न चैतद्वेदासाधारणमेवेति वाच्यम् । छान्दसोदाहरणविषये ऋषीणामाशयभेदस्य दुर्वचतया पौष्करसादिग्रहणस्यापार्थकत्वापत्तेः । द्वितीयादेशदृष्ट्या चर्त्वस्यासिद्धतया स्वदृष्ट्याऽविद्यमानेन तेनास्य बाध्यबाधकभावस्यैवासम्भवेन तदुत्तरं प्राप्तस्य चर्त्वस्य येन नाप्राप्तिन्यायेन वारयितुमशक्यत्वाच्च ॥

ननु प्रातिशाख्ये ऊष्मपरकस्यापदान्तभाज एव चयो द्वितीयादेशविधानेन तद्विरोधात्कथमत्र द्वितीयादेश इत्यत आह । **चर्त्वासिद्धत्वेति ।** पदान्ते प्रायो जश्त्वप्रवृत्त्या चर्त्वं विना चयोऽलाभेन तस्य च द्वितीयादेशदृष्ट्याऽसिद्धत्वेनापदान्तभाज एव चयो द्वितीयादेशविधानस्य फलिततया तदनुवादकमेव तदिति भावः । एवञ्चात्र कुक्टुकोरसिद्धत्वाज्जश्त्वाप्रवृत्तौ फलाभावेन चर्त्वस्याप्यप्रवृत्त्या स्वतस्सिद्धस्यैव चयस्सत्त्वेन द्वितीयादेशप्रवृत्तौ न बाधकमित्याशयः । ननु पदान्ते द्वितीयादेशविधानेऽपि नोपयोगः । तदुत्तरं जश्त्वचर्त्वयोः प्रवृत्त्या विशेषाभावादित्यत आह । **अत्र त्विति ।** नन्वेवमफ्सरा वथ्सेति भाष्यकारोपदर्शितप्रकृतवार्तिकोदाहरणासङ्गतिः । तत्र पकारतकारयोश्चर्त्वनिष्पन्नत्वेन तस्यासिद्धत्वाद्द्वितीयादेशाप्राप्तेरित्यत आह । **अफ्सरा इति ।** अपदान्तभाजमित्यस्य यथाश्रुतार्थपरत्वेपि भाष्यकारोपदर्शितेऽफ्सरा इत्युदाहरणे

**अप्सरा वध्सा इति भाष्योदाहृते छान्दसत्वाच्चर्त्वस्यासिद्धत्वं न । एवञ्च प्रातिशाख्येऽपदान्तभाजमित्युत्सर्गः । यद्वा तयोरव्युत्पन्नत्वं, न त्वप्पूर्वात् सर्त्तेरसिर्वदेः सो वेत्यन्यत्र विस्तरः ॥**

**डः सि । सीति सप्तमी षष्ठ्यर्थे, व्याख्यानात् । तदाह सस्येति । पदस्येत्यनुवर्त्तमानस्य वैयधिकरण्येनान्वयात्पदावयवस्य सस्येत्यर्थः ।**

---

द्वितीयादेशसम्पादनाय व्युत्पत्तिपक्षे छान्दसत्वस्यैव शरणीकर्तव्यतया तस्य निरुक्तार्थपरत्वेपि छान्दसत्वाच्चर्त्वासिद्धत्वाभावकल्पनेन द्वितीयादेशसिद्ध्या न प्रागुक्तभाष्योदाहरणासङ्गतिरिति भावः । वस्तुतस्तूणादीनामव्युत्पन्नत्वस्यैव सिद्धान्ततया तत्र द्वितीयादेशसम्पादनाय छान्दसत्वाश्रयणमनावश्यकमेवेत्याशयेन पक्षान्तरमाह । **यद्वेति** ॥

**षष्ठ्यर्थ इति** । अत्रोभयोरपि निर्देशयोरनवकाशत्वेन तुल्यबलत्वात्परया तस्मादिति परिभाषया सीति सप्तम्यास्तस्मिन्निति परिभाषाप्रवृत्तिप्रयोजकमौपश्लेषिकाधिकरणबोधकत्वमेव बाध्यत इति षष्ठ्यर्थत्वमेवास्य सम्पद्यते । सप्तमीनिर्देशस्तु लाघवार्थ इति भावः ॥

यत्तु षष्ठ्यंशविकलतस्मिन्नितिपरिभाषोपस्थित्या सकाराव्यवहितपूर्वत्वविशिष्टो यो डकारस्तदव्यवहितोत्तरत्वविशिष्टस्य धुडित्यर्थेन सामञ्जस्यात्फलितार्थकथनमित्यौत्तराहाः, तदयुक्तम् । तस्मिन्नितिपरिभाषायास्तस्मादित्युत्तरस्येत्यनेन परत्वाद्बाधेन तत्परिभाषोपस्थितेरत्र वक्तुमशक्यत्वात् । द्वयोरपि निर्देशयोश्चारितार्थ्य इवानवकाशत्वेऽपि विप्रतिषेधस्य निर्बाधतया विप्रतिषेधस्तत्राप्रवृत्तौ मानभावात् ॥

**वैयधिकरण्येनान्वयादिति** । विशेषणविशेष्ययोर्विभिन्नविभक्तिकत्वेन सामानाधिकरण्येनान्वयासम्भवादिति भावः । **लक्ष्यभेदादिति** । पूर्वं खर्पर-

षड्त्सन्त इति। धुटि धस्य चर्त्वे लक्ष्यभेदात्पुनर्डस्य चर्त्वम् ॥

नश्च। नकारान्तादिति। पदस्येत्यनुवृत्तं पञ्चम्या विपरिणम्यत इति भावः। वैयधिकरण्येनैवान्वय इति ङमुट्सूत्रस्थभाष्यस्वरसः। नस्य पदान्तस्येति। अपदान्तनकारेऽनुस्वारप्रवृत्त्या फलितार्थप्रदर्शनमिदम्। नान्तस्य पदस्येत्युचितम्। चतुष्टयमिति। वक्ष्यमाणविकल्पैरिति भावः। तेन तुकश्चुत्वे छत्वस्यासिद्धत्वाच्चयो द्वितीया इति पक्षे चस्य छत्वेन छकारछकारछकारशकारघटितरूपद्वयाधिक्ये ञशानुस्वारविसर्गाणां द्वित्वविकल्पेनाऽऽधिक्येऽपि न क्षतिः॥

ङमो। पदस्येत्यनुवृत्तं सामानाधिकरण्यानुरोधात्पञ्चम्या विपरिणम्यत इत्याह। तदन्तं यत्पदं तस्मादिति। तत्र ङम् स्वयं

---

झल्त्वावच्छिन्नस्य धकारस्य ततस्तादृशस्य डकारस्येति लक्ष्यभेदस्य सत्त्वान्न लक्ष्ये लक्षणमिति न्यायस्यात्र विषय इति भावः। ननु विशेषणविशेष्ययोर्विभिन्नविभक्तित्वेन सामानाधिकरण्यासम्भवात्तदन्तविधेरप्राप्त्या नकारान्तात्परस्य सस्येति वृत्तिरनुचितेत्यत आह। पञ्चम्या विपरिणम्यत इति। ङमुट्सूत्रस्थभाष्यस्वरस इति। तत्र हि पदावयवस्य ङमः परस्येति व्याख्यातमेवञ्च तत्र तस्य वैयधिकरण्येन सम्बन्धे तुल्यन्यायादत्रापि तस्य तथैव सम्बन्ध उचित इति भावः। न चैवंसति पयांसि यशांसीत्यादावपि धुडापत्तिरिति वाच्यम्। धुटोऽसिद्धत्वादनुस्वारे कृते नकाराभावेन तदप्राप्तेः। न इति पञ्चम्याः पूर्वत्र कृतार्थतया शीति सप्तम्याश्चाकृतार्थतया तुल्यबलत्वाभावेन विप्रतिषेधाप्रवृत्तौ तस्मिन्निति परिभाषाया एव प्रवृत्तिरित्याशयेनाह। मूले नस्य पदान्तस्येति। उचितमिति। पदाधिकारेऽसति बाधके तस्य विशेष्यतायाा एव न्याय्यत्वादिति भावः॥

पञ्चम्येति। तदन्तेनेत्यर्थः। तत्रेति। उक्तवाक्य इत्यर्थः। सम्बन्ध-

ह्रस्वादितिविशेषणसबन्धमनुभूय पदविशेषणत्वेन तदन्तपर इति भावः । ङम इति पञ्चमीबलादचीति सप्तमी षष्ठ्यर्थे, तदाह । अच

---

मनुभूयेति । गुणः कृतात्मसंस्कार इति न्यायेनेति भावः । एवञ्च ङम इत्यस्य ह्रस्वादित्यनेन सम्बन्धवेलायां पदस्येत्यनेन सम्बन्धाभावात्तत्र विशेषणताया अगृहीतत्वेन तदन्तबोधकत्वाभावान्नैकदेशान्वयापत्तिरित्याशयः । एतेनैतत्प्रतीकमुपादाय गभीरायां नद्यां घोष इत्यत्र नदीपदं गाम्भीर्यविशिष्टनदीतीरे लाक्षणिकम् । गभीरायामिति तात्पर्यग्राहकमिति यथा, तथा ङम्पदमेव ह्रस्वात्परत्वविशिष्टङमन्ते लाक्षणिकम् । ह्रस्वादिति तात्पर्यग्राहकमिति भाव इति वदन्त औत्तराहाः परास्ताः । लक्षणां विना निरुक्तरीत्या एकदेशान्वयापत्तिवारणे तदाश्रयणस्य व्यर्थत्वात् । इति भाव इति । ह्रस्वात्परो यो ङमित्यादिमूलग्रन्थस्येति भावः ॥

वस्तुतस्तु पदस्येत्यस्य विशेष्यत्वे ह्रस्वादिति ङम इति च प्राधान्यात्तस्यैव विशेषणं स्यात् । तथा च ह्रस्वात्परं ङमन्तं यत्पदं तस्मात्परस्याच इत्येवार्थः स्यान्न मूलोक्तार्थः । तादृशार्थस्य न ह्युपाधेरुपाधिर्भवतीत्यादिना भाष्यकृता तत्र तत्रावहेलनात् । एवञ्च राममाणवका नवेत्यादौ ङमुट्स्यात् । प्रत्यङ्ङात्मेत्यादौ च तन्न स्यादित्यतिमहदनिष्टमापद्येत । अतः पदस्येत्यस्य विशेषणत्वमेवाश्रित्य पदावयवङमः परस्येत्येवं रूपेणार्थ आश्रयणीयः । अत एव प्रकृतसूत्रे भाष्ये "न वा पदाधिकारस्य विशेषणत्वा"दिति तस्य विशेषणत्वमेवाश्रितमित्यवधेयम् ॥

तदेतद्वक्ष्यति भाष्ये त्वित्यादिना । पञ्चमीबलादिति । अत्र पञ्चमीनिर्देशस्य निरवकाशत्वेन सप्तमीनिर्देशस्य मय उञो वो वेत्युत्तरत्र सावकाशत्वेन तस्मादिति परिभाषया स्वार्थ एव पञ्चमीनिर्देशो भविष्यति, सप्तमी तु षष्ठ्यर्थ इति

इति । सप्तमीनिर्देशस्तु लाघवार्थः । 'ङम उत्तरस्याचः' इति तस्मिन्निितिसूत्रस्थभाष्यात् । ङमन्तं यत्पदमिति किम् । अनितोत्यादौ ङमुण्मा भूदिति । भाष्ये तु विभक्तिव्यत्ययकल्पने गौरवात्पदावयवङमः परस्येति वैयधिकरण्यमेवोक्तम् । दण्डिनेत्यत्र ङमुडभावोमण्डूकप्लुत्या 'उञि च पदे' इत्यतः पदे इत्यनुवर्त्याजादेः

---

भावः । नन्वेवं सप्तमीनिर्देशो व्यर्थोऽत आह । सप्तमीनिर्देशस्त्विति । लाघवार्थ इति । प्रकृतोत्तरसूत्रयोरावश्यकस्य विभक्तिद्वयस्य युगपदुच्चारयितुमशक्यत्वेनान्यतरत्र तद्व्यत्ययकल्पनायास्सर्वथावश्यकत्वे सप्तमीनिर्देशं कृत्वा इहैव तत्कल्पनमुचितमर्धमात्रालाघवानुरोधेनेति भावः । नन्वत्र ङम इत्यस्य यदि पञ्चम्यन्तत्वं निश्चितं स्यात्तदा निरवकाशेन तेनाचीत्यस्य षष्ठ्यर्थत्वकल्पनं सप्तमीनिर्देशस्य लाघवार्थत्वप्रतिपादनं च युक्तं, तत्रैव किं मानमत आह । ङम उत्तरस्याच इति । टाङसीति सूत्रस्थभाष्येण मात्रालाघवस्यैवाभ्यर्हितत्वबोधनादिति भावः । सिद्धान्तमाह । भाष्ये त्विति । गौरवादिति । इदमुपलक्षणं, पदस्येत्यस्य विशेष्यत्वे मूलोक्तार्थालाभ इत्यस्यापि । अजादेः पदस्येति । न चैवमप्यश्वस्य पुत्रोऽश्वपुत्रः, न अश्वपुत्रोऽनश्वपुत्र इत्यत्र ङमुडापत्तिः । अश्व इत्यस्याजादिपदत्वान्नुटश्चानश्वपुत्र इति पदावयवत्वाच्चेति वाच्यम् । उणादयो बहुलं, सुप्तिङन्तं पदम् , सनाद्यन्ता धातवः, अनजादौ च विभाषा लोपो वक्तव्य इत्यादिनिर्देशैर्ङमः परीभूताजादिपदस्य वृत्तौ ङमुटः क्वाचित्कत्वज्ञापनेनादोषात् । तत्र तत्र ङमुड्वारणाय सौत्रत्वाद्याश्रयणापेक्षया ईदृशार्थकल्पनाया एव युक्तत्वात् । अत एवाणादिसंज्ञार्थानि, अप्लुतकार्यं यणादिकं करोति यङन्तप्रक्रियेत्यादि, प्रयोगा अपि सङ्गच्छन्ते । ङमन्तं यत्पदं तस्मात्परस्याजादेः पदस्येत्येवं सामानाधिकरण्येनान्वयेऽप्युत्तरपदत्वे चेति वार्त्तिकप्रत्याख्यानपक्षे प्रत्ययलक्षणेन ङमन्तपदात्पराजादिपदस्य प्रागुक्तप्रयोगेषु सत्त्वेन तत्र ङमुड्वारणायैषैव गतिरा-

पदस्य ङमुडित्यर्थेन बोद्धव्यः । पदस्येत्यस्याऽऽवृत्त्या सम्बन्धेऽपि

श्रयणीया । वार्तिकारम्भेऽप्यपदादिविधावित्यस्य पर्युदासत्वेन पदान्तनिमित्तकविधावेव तन्निषेधप्रवृत्तेराश्रयणीयतया ङमुटि तन्निषेधाप्रवृत्त्या तत्र ङमुड्वारणमनयैव दिशा कार्यमिति बोध्यम् ॥

एतेन वस्तुतस्त्विदं भाष्यमेकदेश्युक्तिः । अश्वस्य पुत्रोऽश्वपुत्रः । न अश्वपुत्रोऽनश्वपुत्र इत्यादौ ङमुडापत्तेः । न च ङम इत्यस्यावृत्तिं कृत्वा ङमन्तपदावयवो यो ङमजादिपदाव्यवहितपूर्वत्वविशिष्टः तदव्यवहितोत्तरस्य ङमुडित्यर्थेन न दोष इति वाच्यम् । एवमप्यनश्वपुत्रराजन्नित्यादौ ङमुटो दुर्वारत्वात् । अजादौ पदे इत्यस्य ङमन्तपदेऽन्वयविवक्षणेनानश्वपुत्रराजन्नित्यादिदोषवारणेपि वैयधिकरण्येनान्वये गौरवं स्फुटमेव । तस्मात् ह्रस्वात्परो यो ङम् तदन्तं यत्पदमिति सामानाधिकरण्येनैवान्वय इति निष्कर्ष इति वाराणसेयोक्तमपास्तम् । विभक्तिव्यत्ययकल्पनाप्रयुक्तगौरवस्य तस्यापि सत्त्वात् ॥

यदप्येवं व्याख्याने राजन्नकैरित्यत्राकचो मध्यपातित्वाभावेन तद्विशिष्टस्यातिङन्तत्वात् पदत्वाभावेन नुडनापत्तिरित्यौत्तराहाः, तदयुक्तम् । तत्राप्यर्थवत्सूत्रेण विशिष्टस्य प्रातिपदिकसंज्ञाया निर्बाधत्वादौत्सर्गिकैकवचनेन पदत्वाक्षतेः । अन्यथा तस्यापदत्वेनापदं न प्रयुञ्जीतेति निषेधविषयतया लोके प्रयोग एव न स्यात् ॥

आवृत्त्येति । यत्तु इदमयुक्तम् । ङमंशे पदस्येत्यस्य वैयधिकरण्येनान्वयेऽनुपयोगात्, पदाधिकारस्य विशेषणत्वादिति भाष्यन्त्वधिकारप्राप्तस्य त्यागायोगादुपरञ्जकतयान्वयप्रदर्शनपरमित्याचार्यास्तन्न । अनुकार्यानुकरणयोरभेदविवक्षायां राजनित्याहेत्यादौ ङमुड्वारणाय ङमंशेपि तत्सम्बन्धस्यावश्यकत्वमिति तदाशयात् । सिद्धान्तभूतभेदविवक्षायां तु गवित्ययमाहेति वदत्राप्यनुकरणस्वरूपभङ्गभियैव सन्धिकार्याप्रवृत्तेर्वाच्यतया पदस्येत्यस्य ङमंशेपि

**विशेषणविशेष्ययोरुभयोः सप्तम्यन्तत्वे एव तदादिविधिप्रवृत्त्या**

---

सम्बन्धस्सम्भवमात्रेणैव । अत एवोद्योते अनुवृत्तपदस्येत्यस्याचीत्यनेन विशेषणत्वेऽपीत्येवोक्तम्, न त्वावृत्त्येत्यपि ॥

उभयोस्सप्तम्यन्तत्व एवेति । यत्त्विदमप्ययुक्तम् । तीषसहेत्यादौ तदादिविध्यनापत्तेः । ङस्सीत्यादौ पदाधिकारस्य विशेषणत्वेन लिट्तिस्वत्यादौ धुट्सिद्धावस्यार्थस्यानुपयोगाच्च । वलादेरित्यादिग्रहणं त्वचि श्नु इतिवद्वलि परत आर्धधातुकस्येत्यर्थप्रतीतिवारणाय । पदस्येत्यधिकृतस्यानुवृत्त्यैव निर्वाहे भाष्यकारीयमण्डूकप्लुत्या उञि च पद इत्यतः पदे इत्यस्यानुवृत्त्याश्रयणं तु ङम इत्यस्य षष्ठ्यन्तत्वाश्रयणेनाजादौ पदे ङमो ङमुडित्यर्थाभिप्रायकम् । ङम इत्यस्य पञ्चम्यन्तत्वे ह्यचीत्यस्य षष्ठ्यन्तत्वकल्पना स्यात् । अजादेः पदस्य ङमुडित्यर्थे तु प्रत्यङर्थ इत्यादौ समासे ङमुडापत्तिः । आद्यन्तौ टकितावित्येतदेकवाक्यतयाऽस्यापि पदादिविधित्वात् । अपदादिविधावित्यत्रोपपदविभक्तेरिति न्यायेन कर्मषष्ठीत्वस्यैवापत्तेरित्याचार्यास्तन्न । तीषसहेत्यत्र वलादेरित्यनुवृत्तविशेषणीभूतवल्पदार्थस्य तकारेण विशेषणात्तकाररूपवलादेरिति वाच्यार्थलाभेन तकारादेरार्धधातुकस्येत्यर्थलाभस्य ग्रन्थकृतैव तिङन्तशेखरे वक्ष्यमाणत्वेन तत्र दोषदानस्यायुक्तत्वात् । ङस्सि धुडित्यत्र श्चुत्वं धुटि सिद्धं वाच्यमिति वार्त्तिकबलात्तदन्तविधेर्यस्मिन्विधिरिति परिभाषायामुक्तानियमाश्रयणेन तदादिविधेश्चाप्रवृत्तावगत्या पदस्येत्यस्य वैयधिकरण्यमाश्रितम् । एवञ्च तत्र पदस्येत्यस्य विशेषणत्वं प्रकृतनियमाधीनमेवेतीदृशनियमाभावे सामानाधिकरण्येनान्वयानुरोधात्तत्र पदस्येत्यस्य विशेष्यत्वमेव स्यात् । एवञ्च सादेः पदस्येत्यर्थापत्तौ लिट्तिस्वत्यादौ धुडनापत्त्यास्यार्थस्यानुपयुक्तत्वकथनं सुतरामसङ्गतमेवेति वलि परत आर्धधातुकस्येत्यर्थप्रतीति वारणाय वलादेरित्यादिग्रहणमित्यप्ययुक्तम् । नेड्वशीति निषेधाच्छमिता यज्ञ इत्यादिनिर्देशाच्च तादृशविरुद्धार्थ-

तदलाभः स्यात् । एतदर्थमेवाचीति सप्तमीनिर्देशः । ङमन्तं यत्पद-मित्यर्थेऽपि परमदण्डिनेत्यादावेतद्वारणाय 'पदे' इत्यनुवृत्तिरावश्य-क्येव । अन्तर्वर्त्तिविभक्त्या दण्डिन्नित्यस्य पदत्वात् । 'उत्तरपदत्वे च' इति प्रत्ययलक्षणनिषेधस्तु न । माषकुम्भवापेनेत्यादौ पदव्यवायेऽपीति निषेधसिद्धये तस्य यत्रोत्तरपदस्य कार्यित्वं तत्रैव प्रवृत्तेः ।

---

प्रतीतेर्वारयितुं शक्यत्वात् । किञ्चोभयोस्सप्तम्यन्तत्व एवेति नियमानङ्गीकारे प्रकृतपरिभाषोपस्थापिकाया विशेषणीभूताल्ग्राहकसप्तम्यन्तपदश्रुतेर्विद्यमानत्वेन परिभाषोपस्थितौ तदन्तविध्यपवादभूतैतत्परिभाषाप्रवृत्तिप्रयोजकसामानाधिकर-ण्योपायतया वलीति सप्तम्या अपि षष्ठ्यर्थत्वस्याश्रयणीयतया निर्दिष्टपरिभाषा-प्रवृत्तिप्रयोजकहेतोरौपश्लेषिकाधिकरणरूपार्थस्याभावेन तत्परिभाषानुपस्थित्या त्वदुक्तविरुद्धान्वयप्रतीतेर्वक्तुमशक्यत्वाच्च । विवेचितं चैतत्परिभाषेन्दुटिप्पण्याम् । पदस्येत्यधिकृतस्यानुवृत्त्यैव निर्वाहे भाष्यकृता पदे इत्यस्यानुवृत्त्याश्रयणन्तु ङम इत्यस्य षष्ठ्यन्तत्वाश्रयणेनाजादौ पदे ङमो ङमुडित्यर्थाभिप्रायकमित्यप्य-युक्तम् । उभयनिर्देशे पञ्चमीनिर्देशो बलीयानिति न्यायविरुद्धत्वान्ङम उत्तरस्या-च इत्येवं व्याख्यानपरतस्मिन्निति सूत्रस्थभाष्यविरुद्धत्वाच्च । यदप्यजादेः पदस्य ङमुडित्यर्थे प्रत्यङर्थ इत्यादौ समासे ङमुडापत्तिरिति, तदप्ययुक्तम् । त्वदुक्त-व्याख्यानेऽपि तत्र ङमुड्वारणायोपायान्तरान्वेषणस्य तवाप्यावश्यकत्वात् ॥

**तदलाभ इति** । तदादिविध्यलाभ इत्यर्थः । **एतदर्थमेवेति** । एत-दर्थमपीत्यर्थः । अपिना लाघवार्थत्वस्या समुच्चयः । तदादिविध्यर्थं लाघवार्थं च सप्तमीनिर्देश इति भावः । ननु पदस्येत्यस्य वैयधिकरण्येनान्वये दण्डिने-त्यादौ ङमुड्वारणाय पदे इत्यस्य मण्डूकानुवृत्तेराश्रयणीयतया न विभक्ति-व्यत्ययकल्पनापेक्षया लाघवमत्रापीत्यत आह । **ङमन्तं यत्पदमित्यर्थेपीति** । **तत्रैवेति** । इदञ्च प्रत्यासत्तिन्यायमूलकम्, अपदादिविधावित्यस्य लाघवात्पर्यु-

दासत्वेन पदादिविधिभिन्ने तत्सदृशे पदान्तविधावित्यर्थः। विषयसप्तमी चेयम्। विषयता चात्र जनकतारूपा, एवञ्च समासचरमावयवस्य पदान्तत्वनिमित्तककार्यजनकपदसंज्ञायां कर्तव्यायां प्रत्ययलक्षणं नेति वाच्यार्थः। पदादिविधेरुत्तरपदसम्बन्धित्वेन तद्भिन्नस्यापि प्रत्यासत्त्या तत्सम्बन्धिन एव ग्रहणादुत्तरपदस्य कार्यित्व एव पदान्तत्वनिमित्तकविधावेव च प्रत्ययलक्षणं नेत्यर्थः फलतीति भावः। अपदादिविधावित्यस्य पर्युदासत्वाश्रयणादेव पदान्तत्वानिमित्तके ङमुडादिविधावस्याप्रवृत्त्या सुगण्णीश इत्यादौ ङमुट्सिद्धिः। अत एवैतत्प्रत्याख्यानपरभाष्येण न फलभेदः। अन्यथा तत्पक्षे सौ परतस्तदादेरवान्तरसुबन्तस्य च पदत्वलाभेन तत्र ङमुट्प्राप्त्या आरम्भे चानेन निषेधात्पदत्वाभावेन तदप्राप्त्या च फलभेदो दुर्वार एव स्यात्। अत एवैतद्वार्तिकप्रत्याख्यानोत्तरं पठितेनोत्तरपदस्य पदादिविधावेव प्रत्ययलक्षणं, न पदान्तविधावित्यर्थकेनोत्तरपदत्वे चापदादिविधाविति वचनेनास्य न फलभेदः। अत एव तस्य नुगचीति न्यासेऽनश्च इत्यादौ ङमुडापादनपरं तस्मान्नुडचीति सूत्रस्थं भाष्यमपि संगच्छते। न चैवं सुकरिणौ सुसर्पिषावित्यादौ णत्वषत्वे न स्याताम्। तयोः पदान्तविधित्वाभावेनैतन्निषेधाप्रवृत्तौ प्रत्ययलक्षणेन पदत्वादाद्ये पदान्तस्येति निषेधादन्त्ये चापदान्तसकाराभावाच्चेति वाच्यम्। आद्ये णत्वस्य पदान्तविधित्वाभावेपि तन्निषेधस्य तत्त्वेन तत्र कर्तव्ये प्रत्ययलक्षणप्रतिषेधेन तन्निषेधाप्रवृत्तेः। अन्त्येप्यपदान्तस्येत्यस्य प्रसज्यप्रतिषेधपरतया व्याख्यानेन षत्वनिषेधस्य पदान्तविधित्वात्तत्र कर्तव्ये प्रत्ययलक्षणनिषेधेन तन्निषेधाप्रवृत्तेः। पर्युदासेपि प्रतिषेधस्यार्थतया तस्य पदान्तत्वनिमित्तकत्वमक्षतमेव। न चापदादिविधावित्यस्य प्रसज्यप्रतिषेधपरतया व्याख्यानेपि ङमुटः पदादिविधित्वादुत्तरपदत्वे चेत्यस्याप्रवृत्तौ प्रत्ययलक्षणेन पदत्वात्सुगण्णीश इत्यादौ ङमुट्सुलभ एवेति वाच्यम्। पदादिविधिशब्देन प्रतिपदोक्तस्य

सात्पदाद्योरित्यस्यैवात्र ग्रहणेन ङमुड्येतन्निषेधाप्रवृत्तावुत्तरपदत्वे चेति निषेध-प्रवृत्तेर्दुर्वारतया तत्र ङमुटो दुर्वचत्वात् । अत एव परमबुधावित्यत्र प्रत्यय-लक्षणेन पदत्वमाश्रित्य भष्भावो न । अन्यथा तस्यापि पदादिविधित्वेनोत्तर-पदत्वे चेत्यस्याप्रवृत्तौ स स्यादेव । एवं योगविभागेनैतद्वार्तिकप्रत्याख्यान-परभाष्यनयेपि योगविभागस्येष्टसिध्यर्थतयाऽसर्वनामस्थान इति निषेधस्य पदा-न्तत्वनिमित्तकविधावेव प्रवृत्तिरिति तत्साहचर्याद्भसंज्ञाया अपि पदान्तत्व-प्रयुक्तकार्यप्रतिबन्धकतयैव प्रवृत्त्या न सुगण्णीशौ सुगण्णीशयोरित्यादिसमासे-ष्वारम्भप्रत्याख्यानयोः फलभेद इत्यवधेयम् ॥

ननु पूर्वदण्डिप्रिय इत्यत्र त्रिपदबहुव्रीहाववान्तरतत्पुरुषगर्भे नलोपार्थ-मुत्तरपदत्वे चेतिनिषेधाप्रवृत्तये तत्र मध्यमत्वानाक्रान्तस्यैवोत्तरपदस्य ग्रहणेन माषकुम्भवापेनेत्यादौ कुम्भेत्यस्य मध्यमत्वाक्रान्तत्वादुत्तरपदत्वे चेति निषेधा-प्रवृत्तौ पदव्यवायेपीति निषेधस्सुलभ एवेति कार्यित्वनिवेशो विफल एवेति चेन्मैवम् । यद्वृत्त्यारम्भकसुब्निमित्तकपदसंज्ञा चिकीर्षिता तद्वृत्तिविशिष्टत्वं मध्यमत्वमिति परिष्कारेणादोषात् । वैशिष्ट्यञ्च स्वघटकत्व स्वघटकार्थवद्व्य-वहितोत्तरत्व स्वघटकार्थवद्व्यवहितपूर्वत्वैतत्त्रितयसम्बन्धेन । पूर्वदण्डिप्रिय इत्यादौ दण्डिन्नित्यस्य बहुव्रीहिवृत्त्यारम्भकसुब्निमित्तकपदसंज्ञायाश्चिकीर्षि-तत्वेन तद्वृत्तिघटकत्वस्य तद्वृत्तिघटकार्थवत्पूर्वशब्दाव्यवहितोत्तरत्वस्य तद्वृत्ति-घटकार्थवत्प्रियशब्दाव्यवहितपूर्वत्वस्य च दण्डिन्निति पदे सत्त्वेन निरुक्तसम्बन्धेन वृत्तिवैशिष्ट्यस्य तत्र सत्त्वान्मध्यमत्वाक्रान्तमेवेति न प्रत्ययलक्षणनिषेधः । षष्ठीतत्पुरुषपूर्वपदकषष्ठीतत्पुरुषे माषकुम्भवापेनेत्यादौ तु कुम्भशब्दस्य आद्यषष्ठी-समासारम्भकसुपं निमित्तीकृत्य पदसंज्ञायाश्चिकीर्षितत्वेन तादृशवृत्तिघटकार्थ-वदव्यवहितपूर्वत्वस्याभावान्न निरुक्तसम्बन्धेन वृत्तिवैशिष्ट्यमिति तस्य मध्यम-

त्वानाक्रान्तत्वादुत्तरपदत्वे चेति निषेधाप्रवृत्तये कार्यित्वनिवेश आवश्यकः। ईदृशस्य मध्यमत्वस्य ग्रहणादेव परमलोम्निशयः परमलोम्निचर इत्यादावलुक्समासे लोमन्नित्यस्योत्तरपदत्व इति प्रत्ययलक्षणनिषेधेन पदत्वाभावान्नलोपो न। अन्यथा लोमन्नित्यस्यापि मध्यमत्वाक्रान्तत्वेन निषेधाप्रवृत्त्या नलोपो दुर्वार एव स्यात्। अत एव नित्यं समास इति सूत्रस्थानुत्तरपदग्रहणस्य क्वचिद्विशेष्यान्त-रसत्त्वेऽपि शब्दस्वरूपं विशेष्यमध्याहृत्य तदन्तविधिरित्यर्थज्ञापकत्वप्रतिपादनपर-नित्यं समास इति सूत्रस्थशेखरग्रन्थसंगतिः। तत्र हि पदस्येत्यधिकारादिसु-सन्तपदावयवस्य विसर्गस्य समासे नित्यं ष इत्यर्थलाभेन कर्मधारयगर्भषष्ठी-तत्पुरुषे परमसर्पिःकुण्डिकेत्यादौ परमसर्पिरित्यस्य प्रत्ययलक्षणेन पदत्वेपि प्रत्ययग्रहणपरिभाषया इसन्तत्वाभावेन सर्पिरित्यस्येसन्तत्वेऽप्युत्तरपदत्वे चेतिनिषेधेन प्रत्ययलक्षणाप्रवृत्त्या पदत्वाभावेन चेसन्तपदाभावादेव षत्वाप्रवृत्तौ तत्र षत्ववारणायानुत्तरपदग्रहणं व्यर्थमित्याशङ्क्य तस्य निरुक्तार्थज्ञापकत्व-मुक्तम्। यथा कथञ्चिन्मध्यमत्वग्रहणे तु सर्पिरित्यस्यापि मध्यमत्वाक्रान्तत्वेनो-त्तरपदत्वे चेति निषेधाप्रवृत्तौ प्रत्ययलक्षणेन सुबन्तत्वात्पदत्वे इसन्तपदस्य सत्त्वात्तत्र षत्वप्राप्तौ तद्वारणायानुत्तरपदग्रहणस्यावश्यकत्वेन तस्य ज्ञापकत्वो-पवर्णनमसंगतमेव स्यात्। न चैवमप्यार्द्रगोमयेण शुष्कगोमयेणेत्यादौ पदव्यवाये-पीति निषेधाप्रवृत्त्यर्थमारब्धस्यातद्धित इति वक्तव्यमितिवार्त्तिकस्य प्रत्याख्या-नाय पदे परतो यो व्यवाय इति सप्तमीसमास आश्रितो भाष्ये। तन्मते माष-कुम्भवापेन चतुरङ्गयोगेनेत्यादौ गतिकारकोपपदानामित्यनेन सुबुत्पत्तेः प्रागेव समासे वापेत्यादेः पदत्वाभावेन णत्वनिषेधाप्राप्त्या तत्र निषेधसिद्धये पदपदं पदत्वयोग्योपलक्षणमित्यवश्यमभ्युपेयम्। तथा पदेन व्यवाय इति तृतीयासमासे-ऽपि माषपवापेनेत्यादौ णत्वनिषेधसिद्धये पदपदस्य तादृशार्थकत्वमाश्रयणीयम्। एवञ्च माषकुम्भवापेनेत्यादौ कुम्भेत्यस्य पदत्वाभावेपि पदत्वयोग्यतायास्सत्त्वेन

णत्वनिषेधसिद्ध्या कार्यित्वनिवेशो विफल एवेति वाच्यम्। पदपदस्य लक्षणाश्रयणे गौरवात् । सप्तमीसमासे माषकुम्भवापेनेत्यादौ णत्वनिषेधस्तु गतिकारकोपपदानामित्यस्यानित्यत्वेन सुबुत्पत्त्यनन्तरमेव समासाश्रयणादुपपाद्यः । एवं माषपवापेनेत्यादावपि । स्पष्टश्चैतत्समासप्रकरणे शेखरे । पदपदस्य पदत्वयोग्यपरत्वेऽपि परमदेवदत्तशब्दादाचारक्विपि लोटि हेर्लुकि परमदेवदत्त जानासीत्येकवाक्ये तिङतिङ इति निघातसिद्धये कार्यित्वनिवेश आवश्यकः । यद्यपि प्रत्यासत्तिन्यायमूलकस्य कार्यित्वनिवेशस्याभावेऽपि निघातस्य पदान्तविधित्वाभावादेवैतन्निषेधाप्रवृत्त्या तत्सिद्धम्, तथापि परमशब्दस्य अटधातुप्रकृतिकशत्रन्तेन समासे ततः प्रातिपदिकणिचीष्ठवद्भावेन टिलोपे ततः क्तिच्क्तौ च संज्ञायामित्यनेन क्तिचि तितुत्रेत्यादिना इण्णिषेधे परमाट्तिरित्यत्रोत्तरपदस्य प्रत्ययलक्षणेन पदत्वमाश्रित्य न पदान्तादिति ष्टुत्वनिषेधः कार्यित्वनिवेशस्यासाधारणं फलमित्यवधेयम् । अत्र ष्टुत्वनिषेधस्यापि पदान्तविधित्वेन कार्यित्वनिवेशं विना केवलपर्युदासत्वमात्राश्रयणेन न निर्वाहः । एवञ्च सुगण्णीश इत्यत्र ङमुट्सिद्धये पर्युदासत्वमेतदर्थं प्रत्यासत्तिन्यायमूलकः कार्यित्वनिवेशश्चावश्यक इति सुधियो विभावयन्तु ॥

यत्तु पञ्चगोराड्धन इत्यत्र त्रिपदे बहुव्रीहाववान्तरतत्पुरुषगर्भे न पदान्तादिति ष्टुत्वनिषेधः कार्यित्वनिवेशस्य फलमिति चित्रप्रभाकरास्तन्न। गोराट्शब्दस्य मध्यमत्वाक्रान्तत्वादेव निषेधाप्रवृत्तावस्यैतदसाधारणफलत्वाभावात् ॥

यदपि कार्यित्वनिवेशो विफलः। परमाट्तिरित्यस्याप्रमितत्वेन तत्र ष्टुत्वस्येष्टापत्तेरेव कर्तुं शक्यत्वात् । लेढीतिलिट् परमश्चासौ लिट्च परमलिट् तस्मादाचारक्विबन्ताद्वनिपि परमलिड्वत्यादीनामिवास्याप्यारम्भप्रत्याख्यानयोः फलभेदवारणायानभिधानस्यैव न्याय्यत्वाच्चेत्यौत्तराहाः, तन्न । प्रत्याख्यानपक्षे ष्टुत्वनिषेधस्य न्यायप्राप्ततया तत्र ष्टुत्वस्येष्टापत्तेः कर्तुमशक्यत्वात् ।

आरम्भप्रत्याख्यानयोः फलभेदवारणायानभिधानकल्पनापेक्षया प्रत्यासत्तिन्यायमूलककार्यित्वनिवेशेनैव फलभेदवारणस्य कर्तुं युक्तत्वाच्च । ह्रस्वनद्याप इति सूत्रस्थभाष्यप्रामाण्येन हलन्तेभ्य आचारक्विपोऽभावेन परमलिह्वेत्यादीनामिवेति दृष्टान्तस्य सुतराममङ्गतत्वाच्च ॥

गुरुचरणास्तु उत्तरपदत्वे चापदादिविधाविति वार्तिके उत्तरशब्देनोत्तरपदं लक्ष्यते । तच्च समासचरमावयवे रूढम् । पदत्व इत्यस्य तत्प्रयुक्ते कार्य इत्यर्थः । अपदादिविधाविति च लाघवात्पर्युदासः । समासचरमावयवस्य पदादिविधिभिन्ने पदसंज्ञाप्रयुक्ते कार्ये कर्तव्ये प्रत्ययलक्षणं नेत्यक्षरार्थः । पदादिविधिश्चात्र प्रतिपदोक्तत्वात्सात्पदाद्योरित्येव गृह्यते । तेन परमबुधावित्यादौ भष्भावो न । एवञ्च प्रतिपदोक्तपदादिविधेरादेशरूपत्वेन तत्सादृश्यात्पदत्वप्रयुक्तकार्यस्याप्यादेशस्यैव ग्रहणमित्यागमविधावस्याप्रवृत्त्या सुगण्णीश इत्यादौ प्रत्ययलक्षणेन पदत्वान्ङमुट्सिद्धः । न च प्रतिपदोक्तपदादिविधे ष्षत्वनिषेधस्यादेशरूपत्वाभावात्तत्सादृश्येन कथमादेशरूपस्यैव कार्यस्य ग्रहणमिति वक्तुं शक्यमिति वाच्यम् । सर्वत्रारोपितत्वस्यैव नञर्थतया सात्पदाद्योरित्यस्य पदादिसकारस्य षत्वकर्तृकाऽरोपिता सत्तेति वाच्यार्थलाभेन तस्याप्यादेशविधित्वानपायात् । अत एव न कलञ्जं भक्षयेदित्यादौ नानुपपत्तिः । अन्यथा कलञ्जभक्षणाभावः प्रेरणाविषय इति बोधे प्रत्ययानां स्वप्रकृत्यर्थान्वितस्वार्थबोधकत्वव्युत्पत्तिभङ्गः । आरोपितत्वस्य नञर्थत्वे त्वारोपितकलञ्जभक्षणं प्रेरणाविषय इति बोधलाभेन न तद्व्युत्पत्तिभङ्गः । अत एव च वैयाकरणसिद्धान्तसम्मतस्य धात्वर्थमुख्यविशेष्यकबोधस्याप्यव्यभिचारः । अत एव तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता । अप्राशस्त्यं विरोधश्च नञर्थाष्षट्प्रकीर्तिताः, इत्यभियुक्तवाक्ये सादृश्याद्यार्थिकार्थेष्वभावभेदयोर्गणनमपि सङ्गच्छते । स्पष्टं चेदं निपातार्थवादे मञ्जूषायाम् । अभावबोधस्त्वार्थ इति त्वन्यदेतत् । एवं माषकुम्भ-

वापेनेत्यादौ चोत्तरपदस्य कार्यित्वाभावेनैतन्निषेधाप्रवृत्तौ प्रत्ययलक्षणेन कुम्भशब्दस्य पदत्वात्पदव्यवायेपीति निषेधसिद्धिः। पदपदस्य पदत्वयोग्यपरत्वाश्रयणेन तु नात्र निर्वाहः। पदत्वयोग्यतायाः पदसंज्ञाप्रयोजकप्रत्ययनिष्ठविधेयतानिरूपितोद्देश्यतावच्छेदकरूपाक्रान्तत्वरूपतया लक्ष्ये लक्षणस्येतिन्यायेन स्वस्मिन्स्वविधेयघटितातिरिक्तत्वेन संकोचात्। स्वप्रवृत्त्युत्तरं स्वीयोद्देश्यतावच्छेदकाक्रान्तेरभावेन कुम्भशब्दस्य निरुक्तपदत्वयोग्यताया अप्यभावात्। उत्तरपदस्य कार्यित्व एवेत्यादिशेखरशब्दरत्नादिषु कार्यित्वशब्दः स्थानित्वपरः। अत एव न लुमताङ्गस्येति सूत्रे 'पदादिविधावेव प्रत्ययलक्षणं न पदान्तविधाविति' भाष्यस्य पदान्तस्थानिकविधावित्यर्थ इति व्याख्याने उद्योतग्रन्थे स्थानिपदोपादानं स्वरसतस्संगच्छते। तत्र चान्तश्शब्दोऽवयवमात्रपरः। स चादिभिन्न एव। तत्र तत्र पदान्तत्वनिमित्तककार्य एवेत्यादिनागेशग्रन्थास्तु प्रागुक्तभाष्यस्य यथाश्रुतार्थकत्वमाश्रित्य पक्षान्तरपरतया प्रवृत्ता एव, न तु तादृशार्थे ग्रन्थकृतो निर्भरः। अत एव शब्दरत्ने अपदादिविधाविति पर्युदासेन पदान्तत्वनिमित्तके विधावेव स निषेध इत्युत्तरं, माषकुम्भवापेनेत्यादिसिद्धये किञ्चेत्यादिना कार्यित्वनिवेश आदृतः। भावप्रकाशकृतापि तद्व्याख्यानावसरेऽयमेवार्थस्सूचितः। अत एव च प्रकृतसूत्रे ग्रन्थकृतापि कार्यित्वनिवेश एव कृतः। उत्तरपदत्वे चेति वार्तिकव्याख्यानावसरे च हलन्तशेखरे पदत्वपदस्य तत्प्रयुक्तकार्यपरत्वं स्वीकृत्यापदादिविधावित्यस्य प्रसज्यप्रतिषेधपरतया व्याख्यानं ग्रन्थकृतस्संगच्छते। कार्यशब्देनागमस्यापि ग्रहणे प्रागुक्तरीत्या ङमुड्विधावपदादिविधावित्यस्याप्रवृत्तावनेन निषेधात्पदत्वाभावे सुगण्णीश इत्यादौ ङमुट्दुर्लभ एव स्यात्। अत्र प्रसज्यप्रतिषेधपरतया व्याख्याने आदेशरूपस्यैव कार्यस्य ग्रहणमित्यर्थस्तु प्रत्यासत्त्या प्रत्याख्यानपरभाष्यप्रामाण्याद्वा उपपाद्यः। सुकारिणौ सुसर्पिषावित्यादावुत्तरपदस्य कार्यित्वसत्त्वेन प्रकृतनिषेध-

**'तेन निषेधेन सिद्धम्' इत्येतत्सूत्रस्थभाष्योक्तिस्त्वेकदेशिन इति दिक्। 'इको यणाचि' इति सौत्रो निर्देशः ॥**

**रुप्रकरण इति। अत एव 'समः सुटि' इत्यादौ प्रश्लेषेण सविधानमिति भाष्ये उक्तम्। रोः पूर्वस्येत्युपलक्षणं रुप्रकरणविधेयस्य। एवमुत्तरत्र रोः पूर्वस्मादित्यपि। अयमधिकारः। तेनोत्तरसूत्रविषये**

---

प्रवृत्त्या प्रत्ययलक्षणाभावेन पदत्वाभावाण्णत्वषत्वयोर्निर्बाधतया नात्र पक्षे पदान्तस्येत्यस्य प्रसज्यप्रतिषेधपरतया व्याख्यानपरिक्लेशोऽपि। एतेन कार्यित्वानिवेशस्य फलसम्पादनाय परमाद्गतिरित्यप्रसिद्धसंज्ञापदमुत्प्रेक्षमाणाः परास्ता इति नागेशगूढाशयमुद्भावयन्ति ॥

नन्वेवं परमदण्डिनेत्यत्रोत्तरपदत्वे चेति निषेधेन ङमुट्वारणपरं प्रकृतसूत्रस्थं भाष्यं विरुद्ध्येतेत्यत आह। **एकदेशिन इति।** उत्तरपदत्वे च पदादिविधावेव प्रत्ययलक्षणं न पदान्तविधाविति न लुमतेति सूत्रस्थभाष्यविरोधान्नलोपादिविधौ प्लुत्यन्त इति वार्तिकस्थभाष्यविरोधादपदादिविधावित्यस्य पर्युदासपरतया व्याख्याने लाघवाच्च तद्भाष्यमेकदेश्युक्तिरित्याशयः। **सौत्र इति।** संहिताया अविवक्षया तु न निर्वाहः, हशि चेत्युत्वार्थं तद्विवक्षाया आवश्यकत्वात्। पदभेदेन विवक्षाऽविवक्षे इति तु न युक्तम्। संहितया सूत्रकृदपाठीदिति सर्वसम्मतत्वाच्च। एतेन संहिताया अविवक्षयाप्येतत्साध्विति मिश्रोक्तमपास्तम् ॥

अत्रेति सर्वनाम्ना रुप्रकरणस्य परामर्शे मानमाह। **अत एवेति।** अन्यथा तत्पक्षेऽनुनासिकासिद्ध्या तदसंगतिः स्पष्टैव। **उपलक्षणमिति।** रोः पूर्वस्येत्यत्र रोरिति पदं रुप्रकरणविधेयस्योपलक्षणं, तेन सविधानपक्षे सकारस्य लोपपक्षेऽभावस्य च सङ्ग्रह इति भावः। **रोः पूर्वस्मादित्यपीति।**

**एवास्य प्रवृत्तिः, न तु 'मतुवसोः' इत्यत्र, तत्सूत्रस्थवार्त्तिकयोश्च । अत्रेति तु—रुप्रकरण एवास्य सम्बन्धो, न त्वग्रे 'ढो ढे लोप' इत्यादावित्यर्थसूचनार्थं, स्पष्टार्थमेव । तुशब्दः परस्य नित्यं रुत्वं पूर्वस्य वाऽनुनासिक इति विशेषद्योतनार्थः। रोः पूर्वस्येत्यस्य च रुस्थानिनः पूर्वस्येत्यर्थो बोद्धव्यः । अनुनासिकात्पर इत्यत्रानुनासिका-**

---

तद्धटकेरोरितिपदमपीत्यर्थः । अत्र सूत्रे पूर्वत्वमव्यवधानगर्भं, व्याख्यानात् । अत एव चक्रिँस्त्रायस्वेत्यत्र चकाराकारस्य नानुनासिकः । एवमुत्तरत्र परत्व-मपि । **अधिकार इति** । अत एव तुग्रहणं चरितार्थम् । अन्यथा विधित्वपक्षे तद्द्योत्यस्य कस्यापि विशेषस्याभावेन तदसङ्गतिः स्पष्टैव । अधिकारत्वे तु तत्तच्छास्त्रैरस्यैकवाक्यतया परस्य नित्यं रुत्वं, पूर्वस्य तु वानुनासिक इत्येवंरूपेण परस्मात्कार्यिणः पूर्वस्य विशेषद्योतनाय तदावश्यकमिति बोद्धव्यम् । अधिकार-त्वाङ्गीकारे फलमाह । **तेनेति** । मतुवसोरितिसूत्रस्य भाष्यकृता उदाहरणा-दानात्तत्रानुनासिकाप्रवृत्तेरसन्दिग्धत्वादाह । **तत्सूत्रस्थेति** । वन उपसंख्यानं विभाषा भवदिति वार्तिकविषय इत्यर्थः । एतद्वार्तिकोदाहरणविषये भाष्यकृता-ऽनुनासिकाद्यनुच्चारणात्तत्र तदभाव एवेष्टः, स च विधित्वे न सिध्येदिति भावः । न चानुनासिकस्य वैकल्पिकत्वेन तदनुच्चारणात्तत्र तदभावस्येष्टत्वानु-मानमयुक्तमेवेति वाच्यम् । वैकल्पिकेषु भावानुष्ठानस्य धर्माधिक्यफलकतया भावघटिते उच्चारणीये तदनुच्चारणस्य तदनुमापकत्वात् । नन्वधिकारत्वेऽत्र ग्रहणं व्यर्थमत आह । **अत्रेति त्विति** । **स्पष्टार्थमिति** । रुप्रकरणादन्यत्र स्वरितत्वाभावकल्पनयैवासम्बन्धसिद्धेरिति भावः । अत्र पक्षे तुशब्दावश्यकतां दर्शयति । **तु शब्द इति** । नन्वधिकारत्वपक्षे रोः पूर्वस्येत्यर्थोऽसम्भवी, तत्पक्षे तत्तत्सूत्रैरस्यैकवाक्यतया समोन्त्यस्यालो रुस्स्यात्पूर्वस्य तु वाऽनुनासिक इत्येवंरूपेण रुणा सहैवानुनासिकविधानेन तदानीं रोरसिद्धतया तस्य पूर्वत्वे-ऽवधित्वेनान्वयासम्भवादित्यत आह । **रोः पूर्वस्येत्यस्य चेति** । एतेन

**दिति ल्यब्लोपे पञ्चमी, व्याख्यानात्। अयमागमोऽनवयव एव, अवयवत्वे मानाभावात् ॥**

---

वस्तुतस्त्वेतत्प्रकरणविधेयाव्यवहितपूर्वस्येत्यर्थो बोध्यः। अत एव समो वा लोप इति कल्पेऽप्यनुनासिकसिद्धिः। अन्यथा रुस्थान्यव्यवहितपूर्वत्वस्याभावात्स न स्यादित्यौत्तराहोक्तमपास्तम्। रोरित्यस्य रुप्रकरणविधेयोपलक्षकतायाः प्रागुपदर्शितत्वेन रुप्रकरणविधेयस्थानिनः पूर्वस्येत्यर्थाल्लोपपक्षेपि दोषाभावात्। लोपपक्षेऽनुनासिकसिद्ध्यर्थमाहेत्यवतरणं तु न युक्तम्। अभावस्यापि बुद्धिकृतं पौर्वापर्यं वर्णवदिति शेखरविरोधात् ॥

**व्याख्यानादिति**। अत्रानुस्वारपरानुनासिकः पूर्वस्य तु वेत्येव सिद्धे पृथक् सूत्रकरणरूपादित्यर्थः। **अयमागम इति**। इतरानुपमर्देन जायमानत्वात्प्रत्ययाधिकारे पाठाभावाच्चास्य तत्त्वेन व्यवहारः। प्रत्ययादेशभिन्नत्वे सति साक्षाल्लक्ष्यसंस्कारकतया शास्त्रविहितत्वस्यैवागमत्वात्। **मानाभावादिति**। अवयवत्वबोधकपदाभावादित्यर्थः। किञ्चावयवत्वेऽभिमते पूर्वस्येत्यनुवर्त्य पूर्वस्यावयवः पर इत्येव व्याख्यानं कुर्यान्न पञ्चम्या। किञ्च ङमुटमिवानुस्वारकमेव विदध्यादित्यपि बोध्यम्। अत एवानुस्वारस्य द्वित्वसिद्धिः। अन्यथा यदागमन्यायेन विशिष्टेऽच्त्वादचः परत्वाभावेन तन्न स्यात्। अत एव च संस्कर्तेत्यादावनुस्वारस्य द्वित्वप्रतिपादनपरमूलग्रन्थसंगतिः। यत्र त्वागमस्यापि द्वित्वं दृश्यते, तत्र न्यायानित्यत्वेन तत्साध्यम्। प्रकृते तु न्यायसिद्धत्वादस्यार्थस्यैवमेवोचितमित्यवधेयम्। एवमैजागमोप्यनवयव एव। तस्यावयवत्वप्रतिपादनपरतद्धितशेखरग्रन्थस्तु प्राचीनानुसार्येव। अत एव तत्रारुचिबोधकं हरदत्त इति पदं ग्रन्थकृता प्रयुक्तम्। वस्तुतस्तु हरदत्तस्यापि तस्य तत्त्वमनभिमतमेव। अत एव पदमञ्जर्यामैचोरभक्तत्वे इश्चाजश्च यजौ उश्चाजश्च वजौ तयोरिदमित्यर्थे अणि ऐयजमौवजमिति जाते प्रातिपदिकस्यावृद्धत्वात्त-

तम्छो न स्यादित्याशङ्क्य, यद्येवंविधमभिधानमस्ति, ततः पूर्वशब्द आवर्तितव्यः । तत्रैकोऽवयववचनः अपरो व्यवस्थावचनः । ताभ्यां पूर्वावैचौ भवतः, तौ चाङ्गस्यावयवाविति समाहितम् । अत्र यद्येवंविधमभिधानमस्तीत्यनेन तादृशप्रयोगाणामनभिधानमेवेति सूचितम् । एवञ्च फलाभावादैचोरेतादृशक्लिष्टकल्पनयावयवत्वसाधनं मुधैवेति तदाशयः प्रतीयत इति विभावनीयम् ॥

यत्तु मानाभावादिति प्रतीकमुपादाय चिन्त्यमिदं, सूत्रे परशब्दस्यावयवत्वविशिष्टपरत्वावच्छिन्नवाचकत्वेन उरण्रपरः नश्चाभ्यामित्यत्रैवानुस्वारेऽवयवत्वावच्छिन्नविधेयताश्रयत्वरूपागमत्वस्वीकारे बाधकाभावत् । अत एव महाँ इन्द्र इत्यादौ भोभगो इति यत्वं सिध्यति । अन्यथानुस्वारविशिष्टस्याकारत्वेन ग्रहणाभावे यत्वं दुरुपपादं स्यादिति वाराणसेयास्तदयुक्तम् । उरण् रपर इत्यत्र व्याख्यानात् षष्ठ्यर्थबहुव्रीह्याश्रयणेन परशब्दस्यावयवत्वशिष्टपरत्वावच्छिन्नवाचकत्वेपि केवलपरशब्दस्य तादृशार्थबोधकत्वे मानाभावात् । किञ्च केवलस्यापि तादृशार्थकत्वे परश्चेति सूत्रैकवाक्यतया विहितानां सर्वेषामपि प्रत्ययानामवयवत्वं प्रसज्येत । अत एव पूर्वावितिपदस्यावृत्त्या ऐचोरवयवत्वसाधनपरहरदत्तग्रन्थसङ्गतिः । पूर्वपरशब्दयोरत्रावयवत्वविशिष्टपूर्वत्वाद्यवच्छिन्नबोधकत्वे आवृत्तिं विनैव तत्सिद्धौ तदसङ्गतिः स्पष्टैव । वस्तुतस्तयोरवयवत्वं तस्यानभिमतमित्यन्यदेतत् । किञ्चात्र परशब्दस्यावयवत्वविशिष्टपरत्वावच्छिन्नबोधकत्वेऽनुनासिकादिति पञ्चम्या अनुपपत्तिः । तस्य परमाम्रेडितमिति निर्देशेनावयववाचिपरशब्दयोगे तस्याप्रवृत्तेः । किञ्च केवलपूर्वपरशब्दयोः तादृशार्थबोधकत्वे मिदचोन्त्यादिति सूत्रस्थभाष्यविरोधः । तत्र हि किं पुनरयं पूर्वान्तः, आहोस्वित्परादिः, आहोस्विदभक्तः, कथं वायं पूर्वान्तः कथं वायं परादिः कथंवाऽभक्त इत्याशङ्क्य यद्यन्त इति वर्तते, ततः पूर्वान्तः, अथादिरिति वर्तते, ततः परादिः, अथोभयं निवृत्तं, ततोऽभक्त इत्युक्तम् । केवलपरशब्दस्याप्यवयवार्थकत्वे

खरीति । विसर्गाक्षिप्तस्याप्यवसानस्य न सम्बन्धो, व्याख्या-

---

ऽन्तपदानुवृत्तिं विनापि पूर्वान्तत्वे सिद्धे तदनुवृत्त्या तत्साधनमसङ्गतमेव स्यात् । किञ्चोरण् रपर इति सूत्रे परशब्दस्य शुद्धपरत्वावच्छिन्नबोधकताया एव तैरभ्युपगतत्वेन तद्विरुद्धतयाऽत्रावयवत्वविशिष्टपरत्वावच्छिन्नबोधकत्वाश्रयणं सुतरामयुक्तमेव । यदप्यनुस्वारस्यावयवत्वाश्रयणे महाँ इन्द्र इत्यादावनुस्वारपक्षे भोभगो इति यत्वसिद्धिः फलमिति तैरुक्तम्, तदप्यसत् । तस्य छान्दसत्वेन तत्रानुस्वारघटिततादृशप्रयोगोपलम्भे बहुलं छन्दसीत्यपूर्वत्वाभावेऽपि यत्वसिद्धौ तदर्थमनुस्वारस्यावयवत्वकल्पनाया निष्फलत्वात् । संस्कर्तेत्यादावभियुक्तोक्तानुस्वारद्वित्वस्यासिद्धेश्चेति सुधीभिर्विभावनीयम् ॥

ननु मूले खरीति दुर्लभम् । न च खरवसानयोरित्यत एकदेशे स्वरितत्वप्रतिज्ञया मण्डूकानुवृत्त्या च निर्वाह इति मनोरमोक्तदिशा तत्सुलभमिति वाच्यम् । खरवसानयोरिति सूत्रस्थस्य खरीत्यस्यैतदातिरिक्तस्थलेषु कुत्राप्यनुवृत्तेरनावश्यकतया एतदर्थमक्लृप्तस्यैकदेशे स्वरितत्वस्य मण्डूकानुवृत्तेश्च कल्पनायां गौरवादित्याशङ्क्य विसर्जनीयेन खरीत्येतदर्थादुपस्थितमित्याशयिकां भाष्यकृद्दर्शितां सरणिमनुरुध्याह । विसर्गाक्षिप्तस्यापीति । विसर्गस्य द्वयोरपि सम्भवेन तेन खर इवार्थादुपस्थितस्यापीत्यर्थः । न सम्बन्ध इति । सम्बन्धाभावो ज्ञाप्यत इति भावः । व्याख्यानादिति । यद्यविशेषेण खरवसानयोरुभयोरपि विसर्गस्य सत्वं स्यात्तदा लाघवानुरोधेन खरवसानयोस्स इत्येव सूत्रयितव्ये खरवसानयोर्विसर्जनीयः, विसर्जनीयस्य स इति गुरुभूतन्यासकरणं व्यर्थं स्यादित्येवंरूपादित्यर्थः । अवसानस्य न सम्बन्ध इति शेखरग्रन्थस्यावसानस्य सकारेण सम्बन्धो न भवतीति वाच्यार्थः । स च सम्बन्धः स्वप्रयोज्यविसर्गस्थानिकत्वरूपः । अवसानप्रयोज्यविसर्गस्योक्तरूपाद्व्याख्यानात्सत्वं नेति यावत् । न च यथाश्रुतगुरुभूतन्यासकरणस्य खर्परविसर्गस्य सत्वं नेत्यर्थ-

ज्ञापनेनापि सार्थक्यसम्भवे त्वदुक्तरीत्यैव ज्ञापनीयमिति कोऽयं निर्बन्ध इति वाच्यम् । शर्परे विसर्जनीय इति सूत्रारम्भसामर्थ्येन वैपरीत्यस्य वारयितुं शक्यत्वात् । विपर्ययेण ज्ञापने कः त्सरुरित्यादौ सत्वाभावाद्विसर्गोऽस्त्येवेति किन्तद्विधानेन? न च वासः क्षौममद्भिः प्सात इत्यादाव ≍ क ≍ पयोर्निवृत्त्यर्थं तदावश्यकमिति वाच्यम् । तावन्मात्रफलकत्वे कुप्वोः ≍ कः ≍ पौ चाशरीति न्यासेनैव सिद्धौ शर्परे विसर्जनीय इति गुरुभूतन्यासकरणस्य व्यर्थत्वात् । किञ्च प्रत्यय इत्यादिनिर्देशैरपि वैपरीत्यं वारयितुं शक्यम् । स्पष्टं चेदं विसर्जनीयस्य स इति सूत्रे भाष्यकैयटयोः । एवञ्चोक्तरीत्याऽवसाने विसर्गस्य सत्वाभावे पारिशेष्यात् खर्परविसर्गस्यैव सत्वलाभेन परममूले खरीति निमित्तप्रदर्शनं फलितार्थकथनपरमेव, न त्वनुवृत्त्या नाक्षेपेण वा लभ्यं, मण्डूकानुवृत्तावेकदेशे स्वरितत्वकल्पनायां च गौरवात् । आक्षिप्तस्य शाब्दान्वयित्वाभावाच्चेत्यवधेयम् ॥

एतेन विसर्गाक्षिप्तस्येति प्रतीकमुपादाय इदमयुक्तम् , आक्षिप्तस्य शाब्देऽनन्वयादिति वदन्त आचार्याः, इदमन्यरीत्येति वदन्तो मिश्राश्च परास्ताः ॥

इदं सर्वं मूलस्थखरीत्यक्षरस्वारस्यानुरोधेनोक्तम् । वस्तुतस्तु अवसानेसत्ववारणाय मोनुस्वार इत्यादावनुवृत्त्यर्थं क्लृप्तस्वारितकस्य हलि सर्वेषामिति सूत्रस्थहलीत्यस्यानुवृत्तिरेवोचिता । न च तदनुवृत्तौ मध्ये मय उञो वो वेत्यत्रापि तत्सम्बन्धे शमुनः शमुयोरित्यादावपि वत्वं स्यादिति वाच्यम् । अथवा सम्बन्धमनुवर्तिष्यत इति भाष्येणैव समाधानात् । लोपपदसम्बद्धं हल्ग्रहणमनुवर्तत इति पूर्वयोगेषु कार्यान्तरेण न सम्बध्यते । इह तु हलीति वर्तते, लोप इति निवृत्तमित्यर्थ इति तदाशयं कैयट आह । प्रागुक्तपक्षद्वयापेक्षयाऽस्मिन्नेव पक्षे भाष्यकृतो निर्भरः । अत एव ज्ञापकेनावसाने सत्वं वारयित्वा पुनस्तत्र सत्ववारणायाथवा हलीति वर्तत इति पक्षान्तरमुक्तम् । अनेन च पूर्वपक्षे प्रतिपत्तिगौरवादयुक्तता सूचिता । अस्य भाष्यस्यात्र पक्षे महतो वंशस्तम्भाल्लट्वानु-

**नात्। सो वक्तव्य इति। 'समः सुटि' इत्यादिसूत्रत्रये स इत्युपसंख्याय, 'समः सुटि' इत्यत्र सकारं प्रश्लिष्य वा एतैः सकार एव विधेय इत्यर्थः। एवञ्चास्यासिद्धत्वाद्रुत्वाभावेन विसर्गाभावे तत्तद्विधीनामप्राप्तिरेवेति भावः। स्पष्टं चेदं भाष्ये। विसर्गस्यानेन सत्वविधाने तु गौरवं स्फुटम्। लोपस्यापीति। यत्तु 'उपधारञ्जनं**

---

कृष्यत इति ऋलकसूत्रस्थभाष्यविरोधोऽतो भाष्ये पक्षान्तरमाह, अथवेतीत्यवतरणपरोद्योतग्रन्थेन चायमर्थः स्फुटीकृतः। यद्यपि भाष्ये एतदुत्तरं पुनरथवेत्यादिना खरीत्यस्याप्यनुवृत्तिर्दर्शिता, तथापि न सा सिद्धान्त्युक्तिः। हलीत्यनुवर्त्तत इति भाष्यस्य सम्बन्धानुवृत्तिरित्याशयमज्ञात्वा शमुनः शमुयोरित्यादावेकदेशिना दोष उद्भाविते तदनुरोधेनैवाथवा खरीति वर्तत इति पक्षान्तरस्य प्रवृत्तेः। अत एवान्ते "अथवा सम्बन्धमनुवर्तिष्यत" इति स्वाशयप्रकाशनेन तं दोषं परिहृत्य हलीत्यनुवर्तत इति पक्ष एवोपसंहृतस्सिद्धान्तिना। अक्लृप्तस्वरितकस्यैकदेशस्य खरीत्यस्य स्वरितत्वकल्पनापेक्षया क्लृप्तस्वरितकस्य समासाघटकस्य हलीत्यस्य स्वरितत्वकल्पनमेव युक्तमिति तदाशयः। हल्चात्र योग्यतया खररूप एव सम्भवतीति मूले खरीत्युक्तमित्यवधेयम्॥

समस्सुटीत्यादिसूत्रत्रयेण रुत्वं विधाय सम्पुंकानामित्यनेन विसर्गस्य सत्वविधाने गौरवादाह। **सूत्रत्रय इति।** स इत्युपक्रम्य क्रमेण सूत्रत्रयं पठनीयमिति भावः। इतोपि लाघवात् पक्षान्तरमाह। **सकारं प्रश्लिष्य वेति।** अत्रापि पक्षे समस्सुटि, पुमः खय्यम्पर इति सूत्रद्वयानन्तरं कानाम्रेडित इत्यस्य पाठ इति, व्याख्यानात्स इत्यस्य मध्येऽसम्बन्ध इति वा बोध्यम्। एतैस्सकारविधाने फलं दर्शयति। **एवञ्चेति। गौरवमिति।** ज्ञानगौरवमित्यर्थः। लोपपक्षेऽनुनासिकानुस्वारयोः प्रवृत्तौ प्रातिशाख्यविरोधमाशङ्क्य परिहरति। **यत्त्वित्यादिना। प्रकृतिभाव इति।** अत्र प्रकृतिभावशब्देन

कुर्यान्नमो रुकरणे सति । लोपे प्रकृतिभावे वा नोपधारञ्जनं मतम्' ।
उपधारञ्जनमनुनासिकानुस्वारागमरूपम् । नमोर्नकारमकारयोः ।
प्रकृतिभावोदाहरणं नॄन्पाहीति, तत्तु प्रातिशाख्यत्वात्तच्छाखामा-
त्रविषयमिति भावः । अत एव भाष्ये 'समादिषु सत्वं वक्तव्यम्'
इत्युक्तम् । रुत्वपक्षे चानुनासिकाद्यापत्तिर्दोषत्वेन नोक्ता । ननु
लोपपक्षे एव द्वित्वेन द्विसकारस्य सिद्धत्वात् 'समः सुटि' इति
व्यर्थमित्यत आह । त्रिसकारकमपीति । स्कोरिति लोपस्तु न, अस्या-

---

स्वाभाविकमवस्थानमुच्यते, न तु शास्त्रीयस्सः, तदाह । प्रकृतिभावोदा-
हरणमिति । प्रातिशाख्यत्वादिति । प्रतिशाखं भवं प्रातिशाख्यमिति
समाख्याबलादेकसम्बन्धितच्छाखामात्रविषयं तदिति भावः । यत्त्वस्यैवं रीत्या
संकोचाकरणेपि लोप इत्यस्य पूर्वान्वयित्वेन वाशब्दस्यैवार्थकत्वेन च न
कश्चिद्दोष इति भट्टाः, तत्तु लोपे प्रकृतिभावे वेत्यक्षरस्वारस्यविरोधादुपेक्ष्यम् ।
उक्तार्थे मानमाह । अत एवेति । तस्य तच्छाखामात्रविषयत्वादेवेत्यर्थः ।
इत्युक्तमिति । अन्यथा रुत्वपक्षेऽनुस्वारानुनासिकयोः प्राप्त्या सत्वपक्षे तद-
प्राप्त्या च फलभेदस्य स्पष्टतया तदसङ्गतिः स्पष्टैवेति भावः । ननु समस्सुटी-
त्यादिभी रुत्वविधानेऽनुस्वारानुनासिकयोः प्राप्त्या तदभावायैव समादिषु सत्वं
वक्तव्यमिति भगवतोक्तमिति न तद्विरोध इत्यत आह । रुत्वपक्षे चेति ।
समादिष्वनुनासिकाद्यप्रवृत्तेरेव भाष्याभिप्रेतत्वे समादिषु सत्वं, वक्तव्यं रुविधौ
ह्यनिष्टप्रसङ्गः, इत्युक्त्वा रुत्वविधाने वा शरि, इदुदुपधस्य चाप्रत्ययस्येत्याद्य-
निष्टप्रतिपादनवदनुनासिकादिरूपानिष्टप्रतिपादनमपि कार्यं स्यात् । तथाऽकर-
णेन च सत्वपक्षेऽपि तयोः प्रवृत्तिरिष्टैवेत्यवश्यं वाच्यम् । प्रागुक्तप्रातिशाख्य-
स्य तच्छाखामात्रविषयत्वानङ्गीकारे तदसङ्गतिः स्पष्टैवेति भावः । असिद्ध-
त्वादिति । इदश्च स्कोरित्यस्यात्र प्राप्तिमभ्युपेत्य, वस्तुतस्तत्रानुवृत्तस्य झली-

सिद्धत्वात्। पुनर्द्वित्वेन त्रिसकारस्य सिद्धिरिति तु न युक्तं, लक्ष्ये-लक्षणस्येति न्यायात्। एतेन समः सुटीत्यत्र वेति पाठेनैव पक्षे मोऽनुस्वारेण सिद्धे 'अनुनासिकात्परः' इति व्यर्थमित्यपास्तम्। ननु व्यञ्जनात्परस्यैकस्यानेकस्य वोच्चारणे विशेषाभावोऽत आह। अनुनासिकवतामिति। तत्रोच्चारणे विशेषाभावकल्पने इदं वचनं व्यर्थमेव स्यादिति भावः। हयवरट्सूत्रभाष्योक्ते शर्षूपसंख्याने फलमाह। अनुस्वारवतामिति। अपिना कस्य सङ्ग्रहः। लक्ष्ये लक्ष-णस्य सकृदेव प्रवृत्तेराह। वचनान्तरेणेति। 'यणो मयः' इत्यनेन। एकस्यैव शास्त्रस्य पुनः प्रवृत्तौ हि स न्याय इति भावः। पूर्वत्रा-सिद्धत्वेन पूर्वद्वित्वस्य पूर्वं प्रवृत्त्या तेन द्वितीयस्य साधुत्वे

---

त्यस्य झलादिप्रत्ययपरतायास्सिद्धान्तयिष्यमाणतया प्रकृते तस्यात्र प्राप्तिरेव नेति बोध्यम्। एतेनेति। लक्ष्ये लक्षणस्येतिन्यायेन पुनर्द्वित्वाप्रवृत्त्याऽनुस्वार-घटितत्रिसकारकरूपासाधनेनेत्यर्थः। इदं वचनमिति। शरः खय इति वचन-मित्यर्थः। नहि व्यञ्जनात्परस्येत्यादि भाष्यन्तु विशेषो दुर्लक्ष्य इत्याशयकमेव, न तु सर्वथा तदसत्त्वप्रतिपादकमिति न तद्विरोधः। ननु पूर्वत्रासिद्धीयमद्वित्व इत्यनेन द्वित्वभिन्ने पूर्वत्र कर्तव्ये परमसिद्धमित्यर्थकेन परस्यासिद्धत्वनिषेधा-द्विरोधाभावेन विप्रतिषेधे परमित्यस्याप्रवृत्तत्वाच्चोभयोरप्येकवारमेव प्रवृत्त्या एकाद्विरुच्चारणस्यैव साधुत्वस्य युक्तत्वेन पुनर्द्वित्वमशुद्धमत आह। पूर्वत्रासिद्ध-त्वेनेति। पूर्वत्रासिद्धीयमद्विर्वचन इत्यस्य तु फले विशेषाभावादत्राप्रवृत्तिरित्या-शयः। एतेन तया परिभाषया परद्वित्वस्यैव पूर्वं प्रवृत्तेर्युक्तत्वादिदमयुक्तमिति वदन्त आचार्याः परास्ताः। द्वितीयस्येति। यर इति षष्ठ्याः कारकविभक्ति-त्वस्य न्याय्यत्वादुच्चारण इत्यध्याहारेणोच्चारणद्वयस्य विधेयत्वेऽपि तत्रान्यवर्णो-च्चारणवेदकतकारोच्चारणस्य सिद्धत्वेनैकस्यैव विधितात्पर्यविषयता। तत्राप्याग-

बोधिते तदनन्तरं परद्वित्वप्रवृत्त्या तयोर्मध्ये पुनरन्यस्य साधुत्वं बोध्यत इति त्रितस्य निर्वाहो बोद्धव्यः । 'अनचि च' इत्यत्र 'यणो मयः' इत्यस्योपसंख्यानात् 'अचो रहाभ्याम्' इत्यतस्तस्य परत्वं बोद्धव्यम् ॥

पुमः ख्य । अम्पर इति बहुव्रीहिः । ×क×पयोरिति । 'कुप्वोः' इतिसूत्रविधेययोरित्यर्थः । 'इदुदुपधस्य' इति सूत्रेऽप्रत्ययस्येत्यस्य प्रत्ययावयवभिन्नस्येत्यर्थादिति भावः । अव्युत्पत्तीति । तत्पक्षे प्रकृतिप्रत्ययविभागाभावादिति भावः । षत्वेति । इदमनुनासिकपक्षे । अनुस्वारपक्षे तु 'कुप्वोः' इत्यस्यैव प्राप्तिः, अनुस्वारव्यवधानेनोदुपधत्वाभावात् । पुंक्षीरमिति । क्षरधातोरुपधाया ईत्वेऽच्प्रत्यये क्षीरमिति भावः । नश्छवि । अप्रशानिति षष्ठ्यर्थे प्रथमा । नॄन्पे । नॄनिति द्वितीयान्तानुकरणम् । षष्ठयाः सौत्रो लुक् । नलोपस्तु

---

न्तूनामन्ते निवेश इति न्यायेन द्वितीयतकारोच्चारणस्यैव पूर्वद्वित्वेन साधुत्वं बोध्यत इति भावः । अन्यस्येति । तकारोच्चारणस्येत्यर्थः ॥

बहुव्रीहिरिति । परग्रहणसामर्थ्यादिति भावः । विसर्गसंग्रहायाह । सूत्रविधेययोरिति । न चैवं द्विवचनमनुपपन्नमिति वाच्यम् । ककारे पकारे च परे द्वयोर्द्वयोरेव विधेयत्वेन तदुपपत्तेः । एतेन तयोर्विधायकस्य शास्त्रान्तरस्याभावादिदं व्यर्थमिति वदन्त आचार्याः परास्ताः । इत्यर्थादिति । कविभिः कृतमित्यादौ षत्ववारणाय प्रत्ययपदस्य प्रत्ययसम्बन्धिपरत्वमाश्रित्य तादृशार्थस्याश्रयणीयत्वादिति भावः । ननु क्षीरशब्दस्य घसेः किच्चेत्यौणादिकसूत्रेणेरनि कित्त्वादुपधालोपे चर्त्वे षत्वे च निष्पन्नतया तस्मिन्परे चर्त्वस्यासिद्धत्वात्खय्परत्वमेव नास्तीत्यम्पर इत्यस्य प्रत्युदाहरणदानमयुक्तमत आह । क्षरधातोरिति । क्षीरमिति क्षरतेर्घसेर्वेत्युभयथापि क्षीरशब्दस्य निरुक्तकारैर्व्युत्पा-

सौत्रत्वान्न । एवं क्तानित्यत्रापि । चाद्विसर्ग इति । 'शर्परे' इति सूत्रात्तदनुकर्षश्चेनेति भावः । येन नेति । 'येन नाप्राप्ते यो विधिरारभ्यते स तस्य बाधकः' इति न्यायेनेत्यर्थः । येन नेत्यादेर्यत्कर्तृकावश्यप्राप्ताविल्यर्थः । नञ्द्वयस्य प्रकृतार्थदार्ढ्यबोधकत्वात् । प्राप्त इति भावे क्तः । तदप्राप्तियोग्यविषयेऽचारितार्थ्यं हि बाधकत्वे बीजम् । तदुक्तं 'शर्पूर्वाः' इति सूत्रे भाष्ये 'शर्पूर्वा इत्येतद्धलादिःशेषस्य बाधकम् । ननु विषयभेदे कथं बाधकत्वम् । इदं तावदयं प्रष्टव्यः, यदि तन्नोच्येत किमिह स्यात्, हलादिःशेषश्चेत्—नाप्राप्ते तस्मिन्नारम्भादिदं तद्बाधकं भविष्यति' इति । 'अजादेर्द्वितीयस्य' इति

---

दितत्वादिति भावः । प्रसङ्गान्न्यायार्थमाह । येन नेत्यादेरिति । अवश्यप्राप्ताविति । अवश्यंशब्दपर्यायावश्यशब्दस्य प्राप्तिशब्देन समासः । लुम्पेदवश्यमः कृत्ये इति स्मरणात्प्राप्तिशब्दे परे लोपाभावादिति भावः । प्राप्तावावश्यकत्वं चोद्देश्यतावच्छेदकव्यापकत्वम् । सिद्धसाध्यसमभिव्याहारन्यायात्सतिसप्तम्या निमित्तनिमित्तिभावो बोध्यते । ततश्च स्वोद्देश्यतावच्छेदकव्यापकप्राप्तिनिमित्तको यत्कर्मकः प्रारम्भस्स तस्यापवाद इत्यक्षरार्थः । तादृशी च प्राप्तिर्व्यापकधर्मावच्छिन्नोद्देश्यकस्यैवेति व्यापकधर्मावच्छिन्नोद्देश्यकस्य व्याप्यधर्मावच्छिन्नोद्देश्यकं बाधकमिति यावत् । एवञ्च विषयभेदेपि बाधकता नानुपपन्ना । प्रपञ्चितश्चैतत्परिभाषेन्दुटिप्पणे । अस्यार्थस्योपपत्तिं दर्शयति । तदप्राप्तीति । यत उत्सर्गाप्राप्तियोग्यविषयेऽचारितार्थ्यमात्रं बाधकताबीजं, न तु सर्वथा निरवकाशत्वमतो विषयभेदेऽप्यपवादत्वं नानुपपन्नमिति भावः । अत्रार्थे मानमाह । तदुक्तमिति । नन्वितरनिवृत्तिपूर्वकावस्थानस्यैव शेषपदार्थत्वेनादिहलवस्थानस्येव अन्यहल्निवृत्तेरपि तद्विधेयतया शर्पूर्वाः खय इत्यस्य सर्वथा निरवकाशत्वमेवास्तीति न तदुक्तार्थे मानं भवतीत्याशयेनाह । अजादेरिति । ननु शर्पर इत्यस्याबाधे-

सूत्रे भाष्येऽपि स्फुटमेतत् । न तु शर्पर इति । न चास्य विसर्गस्य ≍क≍पौ दुर्वारौ, किं चास्यैव तौ स्यातां, 'खरवसानयोः' इति विहितस्य तु एतयोरसिद्धत्वात्सत्वमेव स्यादिति वाच्यम् । 'शर्परे' इति सूत्रं कुप्वोरित्यत्रानुवर्त्य शर्परयोः कुप्वोः ≍क≍पयोरपवादो विसर्गस्य विसर्ग इति वाक्यभेदेन व्याख्यानेनादोषात् । स्पष्टश्चेदं भाष्ये । वार्त्तिके कान्ग्रहणं शक्यमकर्तुमित्याह । यद्वेति । एवं सम्ग्रहणमपि त्यक्तुं शक्यम् । पुम्ग्रहणं त्वावश्यकमेव । अनुनासिकपक्षे इणः परत्वेन षत्वापत्तेः । एष्विण इति । गणे कृतसत्वषत्वानामेव पाठादिति भावः । ≍क≍पयोरपवाद इति । तद्विहितविसर्गस्यापीत्यपि बोद्धव्यम् । काँस्कानिति । वीप्सायां द्वित्वम् ॥

संहितायाम् । संहिता च स्वारसिकार्धमात्राकालव्यवाये-

---

ऽपि तत्प्रवृत्त्युत्तरं तद्विहितविसर्गस्य कुप्वोरिति कुतो नेति शङ्कते । न चेति । नन्वर्थाधिकारानुरोधात् खरवसानयोरितिसूत्रविहितविसर्गस्यैतत्स्यादत आह । किञ्चेति । अस्यैव तौ स्यातामिति । पूर्वत्रेति शास्त्रबाधकल्पनापेक्षयाऽर्थाधिकारबाधस्यैवौचित्यादिति भावः । षत्वापत्तेरिति । इणष इत्यतष्ष इत्यस्यानुवृत्तिरिति पक्षे इदम् । यद्यपि गणे कृतषत्वसत्वानामेव पाठ इति पक्षे कांस्कान् संस्कृतमितिवत्पुंस्कोकिल इत्यस्य पाठेपि न षत्वापत्तिः, तथापि तादृशानां बहूनां लक्ष्याणां गणे पाठे गौरवमिति भावः । नन्वतः कृकमीत्यत्रेण इत्यस्य विच्छेदादिण उत्तरस्येति वृत्तिरसङ्गतेत्यत आह । गण इति । तथा च कस्कादिषु यथा पठितं, तथैव साधु भवतीत्यर्थादयमर्थः फलतीति भावः । नन्व≍क≍पयोरप्राप्तियोग्ये विसर्गपक्षेऽस्य चारितार्थ्यात्कथं तदपवादत्वमत आह । तद्विहितेति । सर्वथा निरवकाशत्वेना≍क≍पबाधकत्वं, तक्रकौण्डिन्यन्यायेन तु तद्विहितविसर्गबाधकत्वमिति बोध्यम् ॥

**नोच्चारणम् । ततोऽधिकार्धमात्राकालेनोच्चारणे एतदधिकारोक्तकार्य-व्यावृत्तये इदं, तदधिककालव्यवाये तु न साधुत्वं, नापि बोध इष्यत इति वृद्धा इति तेषां शास्त्रविषयतैव नेति भावः । छे च । छे इत्यकार उच्चारणार्थस्तेनाच्छिन्नमित्यत्र तुक् । 'ह्रस्वस्य पिति' इत्यतो ह्रस्वस्येति तुगिति च वर्त्तते । जश्त्वेनेति । स्वशब्दे उपपदे छ्यतेः के स्वच्छशब्दो निर्मले रूढः, एवं नञ्पूर्वाच्छादयतेर्डे अच्छ-शब्द इति पदान्तत्वं बोद्धव्यम् । स्पष्टश्चेदममरटिप्पणे । आङ्माङोः ॥ आङ्साहचर्यान्माङव्ययमेव । दीर्घस्यायमिति । वक्ष्यमाणज्ञापका-द्व्याख्यानाद्वा दीर्घादिति षष्ठ्यर्थे पञ्चमीति भावः । एओङ्सूत्र-भाष्ये ध्वनितमेतत् । चेच्छिद्यत इति । तुको हलादिःशेषस्तु न । अभ्याससञ्ज्ञाप्रवृत्तिकाले स्थानिद्वारा साक्षाद्वा संनिहितानां**

---

तदधिकेति । स्वारसिकार्धमात्राकालाद्योऽधिकोऽर्धमात्राकालस्तदधिके-त्यर्थः ॥

छ्यतेः क इति । निष्पन्न इति शेषः । ननु माङित्यनेन धातोरपि ग्रहणे प्रमाच्छेद्य इत्यत्र क्विबन्तमाधातोर्नित्यतुगापत्तिरत आह । **अव्ययमे-वेति । वक्ष्यमाणज्ञापकादिति ।** सेनासुराच्छायेति ज्ञापकादित्यर्थः । ननु नैतज्ज्ञापकम्, अस्य सूत्रस्यापदान्तविषयत्वादुक्तलक्ष्यस्य च पदान्तविषयत्वात्त-द्विषयस्य च वैकल्पिकत्वाच्चेत्यत आह । **व्याख्यानाद्वेति ।** तदेव दर्शयति । **ध्वनितमिति ।** तत्र हि वर्णैकदेशा वर्णग्रहणेन गृह्यन्त इति पक्षे आलूय प्रलूयेत्यादौ ह्रस्वस्येति तुकमाशङ्क्य छे चेत्येव सिद्धे दीर्घादिति तुग्विधाना-ज्ज्ञापकान्न दीर्घावयवस्य ह्रस्वत्वप्रयुक्तस्तुग्भवतीत्युक्तम् । यदि छस्यायं तुकस्या-त्तदा ह्रस्वस्य पूर्वेण छस्य त्वनेनेति विशेषस्य स्पष्टतया तस्य ज्ञापकत्वकथनम-सङ्गतमेव स्यादिति तेनेदं ध्वनितमिति भावः । **प्रवृत्तिकाल इति ।** प्रथम-

हलामेव तेन निवृत्तेः। अत एव 'नुगत' इत्यादि चरितार्थम्। दीर्घात्पदान्तादिति। पदान्तस्य दीर्घस्येत्यर्थः। योगविभागोऽनयोः 'एओङ्' इति सूत्रे भाष्ये स्पष्टः। दीर्घान्तस्य पदस्येत्यर्थेन सिद्धेऽन्तग्रहणं पदान्तविधित्वमस्य, न पदविधित्वमितिबोधनद्वारा समर्थपरिभाषानुपस्थित्यर्थम्। तेनासामर्थ्येऽप्यस्य प्रवृत्तिरिति समर्थसूत्रे कैयटः॥

इति हल्सन्धिः॥



---

प्रवृत्तिकाल इत्यर्थः। एतेन स्थानिवत्सूत्रोक्तदिशा पुनरभ्याससंज्ञाप्रवृत्त्या तत्काले तस्य सन्निहितत्वेपि न दोष इति बोध्यम्। अत एवेति। हलादिश्शेषे तादृशविशेषाङ्गीकारादेवेत्यर्थः। अन्यथा नुकोऽपि निवृत्त्यापत्तौ यंयम्यत इत्यादौ नुकः श्रवणाभावेन तद्वैयर्थ्यं स्पष्टमेव। पदान्तस्य दीर्घस्येति। अर्थाधिकारानुरोधादिति भावः। ननु प्रकृतसूत्रस्थेनेको यणचीति सूत्रस्थेन च भाष्येणास्यैकयोगत्वस्यैव लाभाद्योगविभागेन व्याख्यानमयुक्तमत आह। योगविभाग इति। परिभाषानुपस्थित्यर्थमिति। अत्रत्यमन्तग्रहणं साक्षात्पदोद्देश्यकविधावेव समर्थपरिभाषाप्रवृत्तिरित्यर्थबोधनद्वारा प्रकृते तदप्रवृत्तिसम्पादनायेति भावः। असामर्थ्येपीति। समर्थः पदविधिरिति सूत्रभाष्योदाहृते तिष्ठतु कुमारीच्छत्रं हर देवदत्तेत्यादावित्यर्थः॥

॥ इति हल्सन्धिः॥



विसर्जनीयस्य सः । प्राग्व्याख्यातमपि विसर्जनीयपदानुवृत्तिप्रदर्शनाय स्मारितम् । शर्पर इति बहुव्रीहिः । विशेष्यश्चावध्यवधिमतोः साजात्याद्विसर्जनीयाक्षिप्तः खरेव । विसर्गस्य विसर्गविधौ फलमाह । न त्वन्यदिति । अन्यदेव विवृणोति । इहेति । त्रैरूप्यमिति । विकल्पद्वयसामर्थ्यादिति भावः । सोप । अपदाद्योरिति ।

## ॥ अथ विसर्गसन्धिप्रकरणम् ॥

विसर्गस्याज्झल्रूपत्वेन विनिगमकाभावादस्य प्रकरणस्य प्रागुक्तप्रकरणयोरनन्तर्भावं मत्वा प्रकरणान्तरमारभते । **विसर्जनीयस्य स इत्यादिना** । एतेन विसर्गस्यापि हल्त्वेन हल्सन्धावेवास्यान्तर्भावः । तथापि ब्राह्मणवसिष्ठन्यायेन श्रोतॄणां प्रतिपत्तिसौकर्याय पृथक्कथनमिति वदन्त आचार्याः परास्ताः । पौनरुक्त्यशङ्कापरिहारायाह । **प्राग्व्याख्यातमपीति** । अस्य प्रसङ्गसङ्गत्येत्यादिः । **अनुवृत्तिप्रदर्शनायेति** । यद्यपि झलां जशोऽन्ते कस्कादिषु चेत्यादीनामिव सन्दर्भशुद्ध्यर्थमत्रास्य कथनमित्यपि वक्तुं शक्यं, तथाप्यत्रास्य कथने फलान्तरमपीति सूचनायैवमुक्तमिति बोध्यम् । **बहुव्रीहिरिति** । न तु कर्मधारयः, परग्रहणाद्वा शरीत्युत्तरसूत्रारम्भसामर्थ्याच्चेति भावः। **विसर्जनीयाक्षिप्त इति** । विसर्जनीयेनार्थत उपस्थित इत्यर्थः । **खरेवेति** । नावसानं, तस्याभावरूपत्वेन वैजात्यादित्यर्थः । खर्यवसाने च विसर्गस्य साधुत्वेऽप्यत्र शर्पर इत्यस्यान्यपदार्थविशेषजिज्ञासायामवध्यवधिमतोस्साजात्याच्छर्परकावसानस्यासम्भवाच्च खरेवात्रान्यपदार्थत्वेनाश्रयणीय इति भावः । एवञ्च सन्वल्लघुनि चङ्पर इत्यादौ णेरिवात्र खरीत्यस्य शर्पर इति पदेनैवोपस्थित्या न शाब्दान्वयित्वभङ्गः । एतेन खरीत्यस्य शाब्दान्वयित्वसम्पत्तये शर्परे खरीति पदसमुदायार्थे तदेकदेशस्य शर्पर इति पदस्य शक्तिं स्वीकृत्य क्लिश्यन्तो मिश्राः परास्ताः ॥

सूत्रे सौत्रत्वादेकवचनम् । अनव्ययस्येति । अत्राव्ययीभावातिरिक्ताव्ययस्यैव ग्रहणं, व्याख्यानात् । तेनोपपयस्काम्यतीत्यादौ सत्वसिद्धिरिति स्पष्टम् 'अव्ययीभावश्च' इत्यत्र भाष्ये । गीः काम्य-

---

व्याख्यानादिति । तच्चात्राव्ययीभावश्चेति सूत्रस्थं भाष्यमेव । तत्र ह्यव्ययीभावस्याव्ययत्वे प्रयोजनं लुङ्मुखस्वरोपचाराः । लुक्, उपाग्नि प्रत्यग्नि, अव्ययादिति लुक् सिद्धो भवति । मुखस्वरः—उपाग्निमुखः प्रत्यग्निमुखः, नाव्ययदिक्शब्देत्येष प्रतिषेधस्सिद्धो भवति । उपचारः—उपपयःकारः उपपयःकामः, अतः कृकमिकंसकुम्भपात्रकुशाकर्णीष्वनव्ययस्येति प्रतिषेधस्सिद्धो भवति । किं पुनरिदं परिगणनमुदाहरणमात्रं वा । परिगणनमित्याह । यदि परिगणनं क्रियते, नार्थोऽव्ययीभावस्याव्ययसंज्ञया । कथं यान्यव्ययीभावस्याव्ययत्वे प्रयोजनानि, नैतानि सन्ति । यत्तावदुच्यते लुगिति, आचार्यप्रवृत्तिर्ज्ञापयति भवत्यव्ययीभावाल्लुगिति । यदयं नाव्ययीभावादत इति प्रतिषेधं शास्ति । उपचार इति । अनुत्तरपदस्थस्येति वर्तते । तत्र मुखस्वर एकः प्रयोजयति । न चैकं प्रयोजनं योगारम्भं प्रयोजयति । यद्येतावत्प्रयोजनं स्यात्तत्रैवायं ब्रूयात् । नाव्ययादव्ययीभावाच्चेतीत्येवं प्रकारेण तत्सूत्रं प्रत्याख्यातम् । अत्रोपचारपदस्य, अतः कृ, इति सूत्रविहितविसर्गस्थानिकसत्वमेवार्थः, न तु सामान्यतो विसर्गस्थानिकसत्वमित्यवश्यमभ्युपेयम् । अन्यथाऽनुत्तरपदस्थस्येतिप्रतिषेधेन तत्सिद्धिमाश्रित्य तत्प्रत्याख्यानस्यासङ्गत्यापत्तेः । एवञ्चाव्ययीभावस्याव्ययत्वे तादृशप्रयोजनत्रयस्यैव परिगणनेनान्यत्प्रयोजनं नास्तीत्यवगम्यते । यद्येतत्सूत्रशेषभूतानव्ययस्येति वार्तिकेऽव्ययपदेनाव्ययीभावस्यापि ग्रहणं स्यात्तदा उपपयस्काम्यतीत्यादौ सत्वाप्रवृत्तिरूपप्रयोजनान्तरस्यापि सत्त्वेन तस्यापरिगणनं सूत्रप्रत्याख्यानं चायुक्तमेव स्यादिति तेनात्राव्ययीभावातिरिक्तस्यैवाव्ययस्य ग्रहणमिति लभ्यत इति भावः ॥

तीति । वाः काम्यतीत्यस्याप्युपलक्षणमिदम् ॥

इणः षः ॥ 'इदुदुपधस्य' इत्यस्यासिद्धत्वात्सर्पिष्पाशमित्यादौ सत्वनिवृत्त्यर्थं, गीष्पाशं दोष्कल्पमित्याद्यर्थश्चेदम् । अत्रानव्ययस्येत्यपदादाविति काम्ये इति च संबद्ध्यते । तेनोच्चैःकल्पं, दोः पश्य,

---

यत्त्वव्ययीभावस्याऽव्ययत्वे लुङ्मुखस्वरोपचारा इति परिगणनारम्भप्रत्याख्यानयोः फलैक्यायोपपयस्काम्यतीत्यादीनामनभिधानमित्याचार्याः, तन्न । उपचारपदस्यातः कृकमीति सूत्रविहितसत्वमेवार्थ इति प्रागुपदर्शितत्वेनारम्भप्रत्याख्यानयोः फलभेदाभावात् । स्पष्टं चेदमुद्योते ॥

यदपि वाः काम्यतीत्यस्याप्यनभिधानं, सोपदादावितिसूत्रे रोः काम्ये इति वाच्यम् , किं प्रयोजनं, नियमार्थं, पयस्काम्यति, क्व माभूत्, गीः—काम्यतीति भाष्यात् । अन्यथा संग्राह्योदाहरणं सत्वस्य, व्यावर्त्यं तु षत्वस्यापीत्यर्धजरतीयापत्तिरित्याचार्यास्तदप्ययुक्तम् । अस्य वार्तिकस्योत्तरसूत्रेऽपि सम्बन्धसूचनाय तथोदाहृतत्वेन तावन्मात्रेणास्यानभिधानकथनस्यान्याय्यत्वात् । स्पष्टं चेदं तत्रैवोद्योते ॥

नन्विणष्ष इत्यस्यैतत्सूत्रापवादत्वेन तद्विषयातिरिक्तेऽकारादुत्तरविसर्ग एवास्य प्रवृत्तेर्न्याय्यतया गीः काम्यतीत्यत्रास्याप्राप्त्या काम्ये रोरेवेत्यस्येणष्ष इत्यत्रैव पाठे कार्ये पूर्वसूत्रे पाठो व्यर्थोऽत आह । वाःकाम्यतीत्यस्यापीति । एतेन वस्तुतस्तु सोऽपदादावित्यत्र काम्ये रोरेवेत्यस्य, इणष्ष इत्यत्र काम्ये रोरेवेत्यस्य चैकमेव गीः काम्यतीति फलम् । अन्यथा सोपदादावित्यत्र तदभावे सत्वमिणष्ष इत्यत्र च तदभावे षत्वं दुर्वारं स्यात् । एवञ्चोपलक्षणतया व्याख्यानं निष्फलमेवेत्यौत्तराहोक्तमपास्तम् ॥

नन्विदुदुपधस्येत्येव सिद्धे इदं व्यर्थमित्याशङ्क्याह । इदुदुपधस्येति ।

**गीः काम्यतीत्यादौ षत्वं न । अत एवात्र प्रकरणे सर्वत्र सत्वमेव विधेयमिण उत्तरस्य विसर्गस्थानिकसस्यानेन षत्वमिति भाष्यो-क्तपक्षान्तरं सङ्गच्छते । विसर्जनीयस्थानिकेत्युक्त्या पुँस्पुत्र इत्यादौ न दोषः । तत्र हि मस्थानिकः सः । अत्र विसर्जनीयस्येत्यनुवृत्त्यै-तदर्थलाभः । अनव्ययस्येत्यादि त्वत्र पक्षेऽत्र न संबद्ध्यते, तेन द्विष्कृतं दुष्काम्यतीत्यादौ षत्वसिद्धिः । गीः काम्यतीत्यादौ सकारा-भावादेव न दोषः । अपदादाविति च न संबद्ध्यते । तेन दुष्करो-तीति षत्वसिद्धिः । परन्त्वयं पक्षोऽसङ्गतः । उत्तरसत्वस्यासिद्धत्वेन निष्कृतमित्यादौ षत्वासिद्धेः । 'प्रकरणे प्रकरणमसिद्धं न योगे**

---

अनव्ययस्येत्यादेरत्रापि सम्बन्धे मानमाह । अत **एवेति** । **सस्येति** । सोपदादावित्यतोऽनुवृत्तस्य स इत्यस्य षष्ठ्या विपरिणाम इति भावः । अत्र पक्षे षसपदयोरग्रे मण्डूकानुवृत्तिर्नेति लाघवमिति भावः । **संगच्छत इति** । अन्यथा स्वातन्त्र्येण षत्वविधायकत्वपक्षे उच्चैःकल्पमित्यादौ षत्वप्राप्त्या इण उत्तरस्य विसर्गस्थानिकसस्यानेन षत्वमिति पक्षे चैषु सकाराभावेन षत्वाप्राप्त्या च फलभेदस्य स्पष्टतया तदसङ्गतिस्स्पष्टैवेति भावः । **अनव्ययस्येत्यादीति** । आदिना काम्ये रोरेवेत्यस्य ग्रहणम् । ननु काम्ये रोरेवेत्यस्यात्रासम्बन्धे गीः काम्यतीत्यत्रापि षत्वापत्तिरित्याशङ्क्याह । **सकाराभावादेवेति** । अत्र पक्षे एतत्सूत्रे तदसम्बन्धेऽपि सोऽपदादावित्यत्र तत्सम्बन्धादिति भावः । नन्वेवं लाघवानुरोधात्स एव पक्षः कुतो नादृत इत्यत आह । **परं त्विति** । **उत्तर-सत्वस्येति** । अत्र पक्षे निष्कृतमित्यादाविदुदुपधस्येति सूत्रेण सत्वस्यैव विधेयतया तस्य चेणष्व इत्येतदृष्ट्याऽसिद्धत्वेन विसर्गस्थानिकसकाराभावात्तत्र षत्वं न स्यादिति भावः । नन्वेतत्सूत्रे भाष्ये प्रकरणे प्रकरणमसिद्धं, न योगे योग इति पक्षमाश्रित्यैतद्दोषस्य वारितत्वेनायं पक्षो नासङ्गत इत्यत आह । **प्रकरण इति** । षत्वसत्वयोर्विधेयभेदेऽपि कुप्वोरिति निमित्तैक्यात्प्रकरणैक्यं बोध्यम् ॥

**योग' इति पक्षस्तु नास्त्येव, ज्ञापकासम्भवादिति 'उपसर्गादसमासे-**

---

**ज्ञापकासम्भवादिति** । अयं भावः । उपसर्गादसमासेऽपीत्यत्रान्तरेणाप्यसमासेऽपिग्रहणे विशेषानुपादानात्समासाऽसमासयोर्णत्वसिद्ध्या किमर्थमसमासेऽपीति । न च पूर्वपदादित्यस्यानुवृत्त्या समास एव स्यादिति तन्निवृत्तिद्योतनार्थैव तदिति वाच्यम् । तस्यास्वरितत्वादेव निवृत्तिसिद्धेः । न च पूर्वपदात्संज्ञायामग इत्यस्य समास एव प्रवृत्त्या तत्र च निमित्तनिमित्तिनोः समानपदस्थत्वाद्रषाभ्यामित्येव सिद्धे तस्य पूर्वपदस्थान्निमित्तात्परस्य नस्य यदि णत्वं स्यात्तदा संज्ञायामेवेति नियमार्थतयाऽत्रासमासेपीतिपदाभावे तेन नियमेन समासेऽसंज्ञायां णत्वासिद्ध्या तत्र णत्वसम्पादनार्थैवासमासेऽपीति वाच्यम् । पूर्वपदादित्येतद्दृष्ट्या उपसर्गादसमासेऽपीत्यस्यासिद्धतया तेन नियमेनोपसर्गादिति णत्वस्य व्यावर्तयितुमशक्यत्वात् । एवञ्चासमासेऽपीति पदं व्यर्थं सत् प्रकरणे प्रकरणमसिद्धं न योगे योग इति ज्ञापयति । तथा सति णत्वप्रकरणस्यैकत्वात्पूर्वपदादिति सूत्रदृष्ट्या उसर्गादित्यस्यासिद्धत्वाभावेन तादृशनियमेन समासेऽसंज्ञायां णत्वासिद्धौ तदर्थमसमासेऽपीतीत्येवंरीत्या तस्य ज्ञापकत्वमुक्तम् । वस्तुतस्समानग्रहणसामर्थ्येन निमित्तानाधिकरणनिमित्तिमत्पदाघटितत्वरूपाखण्डपदस्यैव समानपदशब्देन ग्रहीतव्यतया दृणसः खरणस इत्यादौ तादृशसमानपदत्वस्याभावेनाप्राप्तणत्वविधानार्थमेव पूर्वपदादिति सूत्रमिति नियामकतायाः खपुष्पायमाणतया प्रागुक्तज्ञापकता न सम्भवतीति स्पष्टार्थमेवासमासग्रहणम् । इणष्व इति सूत्रस्थं भाष्यन्तु समानपद इत्यस्य समानग्रहणसामर्थ्यलब्धार्थापरिज्ञानेन प्रवृत्ततया एकदेश्युक्तिरिति । स्पष्टं चैतदुद्योते ॥

यद्यपि प्रकृतसूत्रे उद्योते वस्तुतस्तु सूत्रे सूत्रमसिद्धमिति पक्षेऽपि न दोषः । परेषामसिद्धत्वे सोऽपदादाविति सत्वे एवास्य प्रवृत्तिः स्यात् । तथा चापदादौ विसर्गस्यैव षत्वविधानेन सिद्धे सस्य विभक्तिविपरिणामेन स्थानि-

त्वकल्पनस्य वैयर्थ्यं स्यादिति तत्सामर्थ्यादुत्तरेषामसिद्धत्वाभाव इत्युक्त्वाऽयमपि पक्षस्सिद्धान्तितः, तथाप्युत्तरत्र यद्वैतदोषादयं पक्षोऽसङ्गत इति तात्पर्यमित्युक्त्याऽत्रापि पक्षे विभक्तिविपरिणामस्य निष्कृतमित्यादौ दोषवारणाय सामर्थ्याश्रयणस्य चावश्यकतयाऽद्यपक्षापेक्षया गौरवस्यैव सत्त्वेनायं पक्षोऽसङ्गत एवेति स्वाशयस्सूचित इति बोध्यम् ॥

यत्तु परे तु इडाया वा इत्यतः प्रागिणष्ष इति सूत्रं कर्तव्यम् । इण उत्तरस्य विसर्गस्थानिकसकारस्य षो भवतीति तदर्थः । विसर्गस्थानिकेत्युक्त्या पुँस्पुत्र इत्यादौ मकारस्थानिकविसर्गस्य न षः । समस्सुटि पुमःखय्यम्परे कानाम्रेडिते इति सूत्रत्रयेण सकारस्यैव विधानेन तस्यासिद्धत्वाद्रुत्वाद्यभावे विसर्गस्थानिकसकारस्याभावात् । सोऽपदादावित्यारभ्य इणष्ष इत्यतः प्राक्तनैस्सर्वैस्सूत्रैस्सकार एव विधेयः । तथा च कुत्रचित्स एव, कुत्रचित् ष एव, कुत्राचिदुभयमनुवर्तत इति कल्पना न कर्तव्या भवति । किञ्चेणष्ष इत्यत्रानव्ययस्य, काम्ये रोरेवेति वार्तिकद्वयसम्बन्धश्च न कर्तव्यो भवति । अपदादावित्यत्र स्वरितत्वं च न कल्पनीयं भवतीति महल्लाघवम् । उच्चैःकल्पं दोःपश्य गीःकाम्यतीत्यादौ विसर्गस्थानिकसकारस्यैवाभावेन षत्वाप्राप्तेः । एतेन परन्त्वयं पक्षोऽसङ्गत इत्युक्तिरेवासङ्गतेति प्राहुरिति वाराणसेयास्तदयुक्तम् । यथाश्रुतपक्षेऽपि प्रकृतसूत्रस्थभाष्योक्तदिशा सम्बन्धानुवृत्त्यङ्गीकारेण मण्डूकानुवृत्तिप्रयुक्तगौरवस्य वारयितुं शक्यतया शास्त्रस्मरणपूर्वकप्रयोग एव धर्मोत्पत्त्याऽत्रापि पक्षे सर्पिष्करोतीत्यादिषत्वघटितप्रयोगेषु बहुषु शास्त्रद्वयानुसन्धानप्रयुक्तगौरवस्यार्थाधिकारं परित्यज्य स इत्यस्य विभक्तिविपरिणामकल्पनाप्रयुक्तगौरवस्य च सत्त्वेन यथाश्रुतपक्षेऽवशिष्टतदुक्तगौरवेणास्य निमातुं शक्यतया चापाणिनीयत्वदोषस्य दुर्वारत्वात् । अत एव प्रकृतसूत्रे भाष्ये एतत्पक्षसमर्थनाय प्रकरणे प्रकरणमसिद्धं, न योगे योग इत्यसिद्धान्तभूतः पक्ष आश्रितः ।

ऽपि' इत्यत्र निरूपयिष्यामः। विसर्जनीयस्यैव षत्वमिति मूलोक्तपक्षे तु सकारषकारयोः स्वरितत्वेऽपि यथायोगं सम्बन्धो मण्डूकप्लुत्येत्यन्यत्र विस्तरः। नमस्पु॥ इत उत्तरमपदादाविति न सम्बद्ध्यते, व्याख्यानात्। साक्षात्प्रभृतित्वादिति। ऊर्यादित्वाद्गतित्वं स्वरादिपठितस्य तु गतित्वाभावस्तेन साक्षात्प्रभृतिषु च्व्यर्थवचनेऽपि न क्षतिरित्यन्ये॥

---

अन्यथा सूत्रविपर्यासमेवाश्रयेत्। अनेन च पक्षद्वयेऽपि लाघवगौरवयोस्साम्येन सूत्रविपर्यासेऽपाणिनीयत्वं दोष इति तदाशयः प्रतीयते। किञ्च बृहच्छेखरे निष्कृतमित्यादिदोषवारणायास्या अपि रीतेराश्रिततत्वेन नैषा नागेशानभिज्ञाताऽपूर्वा सरणिः। परन्त्वेषा भाष्यकृदसम्मतेत्याशयेन प्रकृतसूत्र उद्योते वस्तुतस्त्वित्यादिना यथाश्रुतेनैव सिद्धे विभक्तिविपरिणामेन व्याख्यानसामर्थ्यात्परेषां नासिद्धत्वमिति कल्पनयाऽयं पक्षस्समर्थितः। वस्तुतस्त्वत्रापि पक्षे सामर्थ्याश्रयणस्य विभक्तिविपरिणामकल्पनायास्सर्पिष्करोतीत्यादिषत्वघटितप्रयोगेषु सूत्रद्वयानुसन्धानस्य चावश्यकतयाऽद्यपक्षापेक्षया गौरवस्यैव सत्त्वेनायं पक्षोऽसङ्गत एवेत्याशयेन तदुत्तरं यद्वेत्यादिनाऽस्य पक्षस्यासाङ्गत्यमेव सिद्धान्तितमुद्योते। हरदत्तेनाप्यनेनैव हेतुनास्य पक्षस्यासाङ्गत्यं प्रदर्शितमित्यवधेयम्। ननु मूलोक्तपक्षे सत्वषत्वयोर्द्वयोरप्युत्तरसूत्रेष्वनुवृत्तेराश्रयणीयतया नमस्पुरसोरित्यादिना षत्वस्य द्विस्त्रिश्चतुरित्यादिना सत्वस्य चापत्तिरित्यत आह। **विसर्जनीयस्यैवेति**। **मण्डूकप्लुत्येति**। इदमुपलक्षणं, सम्बन्धानुवृत्तेः॥

**व्याख्यानादिति**। देवान्नमस्करोतीत्यादिभाष्यप्रयोगरूपादित्यर्थः। ननु नमस्करोतीत्यादौ नमश्शब्दस्य च्व्यर्थवृत्तित्वाभावात् साक्षात्प्रभृतित्वादिति मूलमसङ्गतमत आह। **ऊर्यादित्वादिति**। **गतित्वाभाव इति**। अयं भावः।

**इदुदु ॥** अप्रत्ययस्येति पर्युदासो, लाघवात् । तत्र प्रत्ययपदं तत्सम्बन्धिपरं, तेन प्रत्ययसम्बन्धिभिन्नस्येत्यर्थः । अत एव कविभिः कृतमित्यादौ न षत्वं, स्पष्टश्चेदं भाष्ये इत्यन्यत्र विस्तरः । एकादेश-

---

देवेभ्यो नमः देवान्नमस्करोतीत्यादिप्रयोगदर्शनाद्वाचको द्योतकश्चेति द्विविधो नमश्शब्दोऽस्तीत्यभ्युपेयम् । तत्रोर्यादिषु द्योतकस्यैव ग्रहणं, क्रियायोग इत्यर्थाधिकारानुगुण्यात् । स्वरादिषु तु वाचकस्यैव ग्रहणम् । एवञ्च द्योतकनमश्शब्दमादाय सत्वघटितस्य साधुत्वं, यदा नमश्शब्दः स्वार्थमभिधत्ते करोतिरुत्पत्तिं, तदा नमश्शब्दस्य वाचकत्वेन गतित्वाभावान्नमः करोतीति सविसर्गमपि साध्विति । एतेनास्य ग्रन्थस्य विसर्गघटितमसाध्वित्याशयं वर्णयन्त आचार्याः परास्ताः ॥

**तत्सम्बन्धिपरमिति ।** प्रत्ययलोपे प्रत्ययलक्षणमितिसूत्रे आद्यप्रत्ययग्रहणेन प्रत्ययावयवेपि प्रत्ययपदबोध्यत्वस्य ज्ञापयिष्यमाणतया तेनादेशप्रत्यययोरित्यत्रेवात्रापि प्रत्ययपदं तदवयवपरमपीति भावः । एवं व्याख्याने फलमाह । **अत एवेति । इत्यादाविति ।** आदिना स्युः प्याडित्यमरप्रयोगस्य संग्रहः । **न षत्वमिति ।** प्रत्ययपदस्य यथाश्रुतार्थपरत्वमेवाश्रित्य प्रत्ययत्वपर्याप्त्याधिकरणभिन्नस्येत्येवं व्याख्यादर्शोक्तरीत्या सामानाधिकरण्येनान्वये तु तत्स्यादेवेति भावः ॥

यत्तु वस्तुतस्तु प्रत्ययभिन्नविसर्गस्येदुदुपधस्य ष इति सामानाधिकरण्येनान्वयेपि न क्षतिः । न च कविभिः कृतमित्यादौ षत्वं दुर्वारं स्यात् । भिसः प्रत्ययत्वेपि विसर्गस्य तद्भिन्नत्वादिति वाच्यम् । प्रत्ययस्य लुगिति सूत्रात्प्रत्ययस्येत्यनुवृत्त्यैव सिद्धे प्रत्ययलोप इति सूत्रे प्रत्ययग्रहणसामर्थ्येन षष्ठीप्रकृतिप्रयोज्यप्रत्ययत्वावच्छिन्नविषयता प्रत्ययावयवेऽपि स्वीक्रियत इत्यर्थेन प्रकृते विसर्गेऽपि

तद्विषयतासत्त्वेन प्रत्ययभिन्नविसर्गाभावेनादोषात् । स्पष्टं चेदं प्रत्ययलोप इति सूत्रे शेखरे । प्रत्ययपदं तत्सम्बन्धिपरमिति शेखरस्तु यत्र पर्युदस्यमानो वर्णः, पर्युदाससमर्पकं च समुदायबोधकं पदं, तत्र तत्पदं तदवयवे लाक्षणिकम् । यथा नश्छव्यप्रशान्, शेषो घ्यसखि, अत्वसन्तस्य चाधातोरित्यादौ । एवं प्रकृतेपीत्याशयेन योजनीय इत्योत्तराहाः । अत्रेदं वक्तव्यम् । किमेषां नागेशोक्तार्थखण्डने आग्रहः । उत दीक्षितमतस्थापने । नाद्यः । तदुक्तार्थस्य नागेशोक्तार्थादविशिष्टत्वेनान्यत्वेन प्रत्यायनप्रयत्नस्य व्यामोहनपर्यवसायित्वाद्व्यामोहनमूलकत्वाद्वा । प्रत्ययपदं तत्सम्बन्धिपरमिति शेखरग्रन्थस्य प्रत्ययपदस्य तत्सम्बन्धिनि लक्षणेत्याशयकत्वकल्पनन्तु सुतरामनुचितं, प्रत्ययलोप इति सूत्रेऽत्र प्रत्ययपदस्य लक्षणानावश्यकतायाः कण्ठतो वक्ष्यमाणत्वात् । नाप्यन्त्यः । अत्र प्रत्ययपदस्य प्रत्ययावयवपरताया दीक्षितानभिप्रेतत्वेन तन्मते कविभिः कृतमित्यादौ दोषस्य दुर्वारत्वात् । अत एव प्रकृतसूत्रे मनोरमायामप्रत्ययस्येत्यस्याप्रत्ययो यो विसर्ग इत्येवंरूपेण सामानाधिकरण्येनान्वयं प्रदर्श्य तदुत्तरं विसर्गस्य प्रत्ययत्वमप्रसिद्धमित्याशङ्क्याग्निः करोतीत्यादौ स्थानिवद्भावेन तत्प्रसिद्धमिति समाधाय पुनरतिदेशदृष्ट्या त्रिपाद्या असिद्धत्वात्स्थानिवद्भावाऽप्रवृत्त्या न तत्प्रसिद्धिरित्याशङ्क्याप्रत्ययस्येति निषेधेनैव तस्य सिद्धत्वं ज्ञापितम् । यदि प्रत्ययपदस्य प्रत्ययावयवपरत्वं तदभिप्रेतं स्यात्तदाऽतिदेशं विनैव कविभिः कृतमित्यादौ निषेधसार्थक्येन तस्य ज्ञापकत्वप्रतिपादनमसङ्गतमेव स्यात् । किञ्च पुमःखय्यम्पर इति सूत्रे च मनोरमायां व्युत्पत्तिपक्षेऽप्रत्ययस्येतिपत्वपर्युदासादः कः पयोः प्राप्ताविति कौमुदीग्रन्थोऽप्रत्ययस्येत्यस्य वैयधिकरण्येनान्वय इति प्राचां मतेन प्रवृत्त इत्युक्त्वा वक्ष्यमाणरीत्या सामानाधिकरण्येनान्वये तु व्युत्पत्तिपक्षेपि षत्वप्राप्तिरेवेति प्रतिपादितम् । प्रत्ययपदस्य प्रत्ययावयवपरत्वे तु तत्र विसर्गस्य प्रत्ययावयवभिन्नत्वाभावेन सामानाधिकरण्येनान्वये षत्वप्राप्तेर्दुरुपपादतया तद-

**शास्त्रेति । एकादेशशास्त्रसम्पन्नरेफस्थानिकत्वेन विसर्जनीयस्यैकादेशशास्त्रनिमित्तकत्वं बोद्धयम् । स्पष्टश्चेदमत्र सूत्रे 'उरण् रपर' इति सूत्रे च भाष्ये इत्यन्यत्र विस्तरः । प्रत्ययभिन्नसम्बन्धिन इति तु नार्थः । अग्निः करोतीत्यादावपि प्रत्ययभिन्नसमुदायसम्बन्धित्वेन षत्वापत्तेः । तपरकरणं किम् । गीः करोति । उपधाग्रहणं व्यर्थम् । 'उपधाग्रहणं न करिष्यते, इदुद्भ्यां तु परं विसर्जनीयं विशेषयिष्याम' इति हयवरट्सूत्रभाष्योक्तेः । तिरसोऽन्य ॥ अत्र गतिग्रहणं नानुवर्त्तते, पराभवे तिरस्कारशब्दप्रयोगात् । अन्तर्धाविव तिरसो गतित्वात् ॥**

**द्विस्त्रि ॥ कृत्वोऽर्थ इति न विसर्गविशेषणं, चतुःशब्देऽसं-**

---

सङ्गतिः स्पष्टैव । एवञ्च मनोरमाग्रन्थपरिशीलनेनाप्रत्ययस्येत्यस्य प्रत्ययत्वपर्याप्त्यधिकरणभिन्नस्येत्येवार्थः स्पष्टमवगम्यत इति तत्पक्षे कविभिः कृतमित्यादौ दोषस्य दुर्वारतया तत्पक्षस्थापनाभिनिवेशो विफल एवेति सुधीभिर्विभावनीयम् ॥

ननु विसर्जनीयस्यैकादेशशास्त्रनिमित्तकत्वं कथमत आह । **एकादेशशास्त्रेति** । एवञ्च परम्परया विसर्गस्यापि तन्निमित्तकत्वमिति भावः । अप्रत्ययस्येत्यस्य वैयधिकरण्येनान्वय इति हरदत्ताद्युक्तं खण्डयति । **प्रत्ययभिन्नेति । षत्वापत्तेरिति** । तथा चाप्रत्ययस्येत्यस्य वैयर्थ्यापत्त्या तथा नार्थ इति भावः । **गीः करोतीति** । इदमुपलक्षणं, पूःकरोतीत्यस्यापि । **तिरस्कारशब्दप्रयोगादिति** । अनादरः परिभवः परीभावस्तिरस्क्रियेति कोशादिति भावः ॥

द्विस्त्रिश्चतुरित्यत्रेतिशब्द इत्येषामित्यर्थकः । **न विसर्गविशेषणमिति** ।

**भवात्, किं तु द्विरादीनामित्याह । वर्तमानानामेषामिति । इसुसो-रितिसूत्रवक्ष्यमाणरीत्या 'सुचः' इति सूत्रयितुमुचितम् । सुजन्ता-न्तस्य पदस्येत्यर्थात् । चतुष्कपाल इति । इदुदुपधस्येति नित्यं षः ।**

---

प्राधान्यात्तद्विशेषणत्वस्य प्रसक्तत्वेऽपि लक्ष्यानुरोधाच्छ्रुतत्वाच्च द्विरादीनामेव विशेषणमिति भावः । ननु सुच इतिन्यासे सुचःप्रत्ययत्वेन प्रत्ययग्रहणपरि-भाषया सुजन्तस्य पदस्येत्यर्थात्परमद्विष्करोतीत्यादौ षत्वं न स्यात् । उत्तर-खण्डस्य सुजन्तत्वेऽप्युत्तरपदत्वे चेति प्रत्ययलक्षणप्रतिषेधेन पदत्वाभावात् । समुदायस्य च सुजन्तत्वाभावाच्चेत्याशङ्क्याह । वक्ष्यमाणरीत्येति । नित्यं समास इति सूत्रस्थानुत्तरपदग्रहणेन विशेष्यान्तरसत्त्वेऽपि क्वचिच्छब्दस्वरूपं विशेष्यमादाय तदन्तविधिरित्यर्थज्ञापनस्य वक्ष्यमाणतया तद्रीत्या सुजन्ता-न्तस्य पदस्येत्यर्थान्न परमद्विष्करोतीत्यादौ षत्वानापत्तिरिति भावः । **उचितमिति** ॥

ननु कृत्वोऽर्थ इति न्यासस्य चतुःकरोतीत्यादौ नित्यत्वापत्त्या स्वेनैव दूषयिष्यमाणतया तादृशदोषस्यात्रापि दुर्वारत्वेनास्य न्यासस्यौचित्यकथन-मयुक्तमेव । न च सूत्रे कृत्वोऽर्थ इति पदमपहाय तत्स्थाने सुच इति न्यासकरणेऽस्य तात्पर्यमित्याचार्योक्तदिशा निर्वाह इति वाच्यम् । सूत्र-यितुमुचितमित्यक्षरस्वारस्याननुगुणत्वात् । तेन तावन्मात्रसूत्रकरण एव ग्रन्थकृत्तात्पर्यावगमादिति चेदत्र भट्टाः । चतुःकरोतीत्यादावस्यासिद्धत्वान्नि-त्यषत्वस्यैव प्रवृत्तावस्याप्राप्तविभाषात्वस्यैव फलितत्वेन तादृशाशयकत्वे तिर-स्सुचोरन्यतरस्यामित्येकयोगेऽपि यथायथं षत्वमनयोरन्यत्रवाऽत्रापि सम्बन्धे-नोपपत्तौ योगविभागो व्यर्थ एवेति तत्सामर्थ्यादस्यासिद्धत्वाभावः कल्प्यते । तथाचोभयत्रविभाषेयम् । पूर्वं चतुःकरोतीत्यत्रेदुदुपधेति प्राप्ते निषिध्यते । तत ऐकरूप्यं प्रापितेषु द्विरादिषु वा विधीयते । इसुसोरन्यतरस्यामितिवदिति न

कश्चिद्दोषः । न चोक्तरीत्या कृत्वोर्थ इति न्यासेऽपि दोषस्सुवार इति वाच्यम् । तत्र न्यासे कृत्वोर्थांशे इदुदुपधेतिविशेषणान्वयस्यावश्यकत्वेन द्वन्द्वाप्राप्त्या 'तिरसोऽन्यतरस्यां कृत्वोऽर्थे' इति व्यस्तपाठे वाक्यार्थद्वयावश्यंभावेनैकयोगे विभागे वा साम्येन सामर्थ्याभावादसिद्धत्वबाधस्य कल्पयितुमशक्यत्वादिति वदन्ति ॥

वस्तुतस्तु अत्र न्यासे इदुदुपधस्येत्यनुवर्त्य इदुदुपधस्य सुजन्तस्य पदस्य यो विसर्जनीयः तस्य षत्वं भवतीत्यर्थो वाच्यः । न च सुजन्तपदे इदुदुपधत्वस्याव्यभिचरितत्वेन तदनुवृत्तिर्व्यर्थेति वाच्यम् । चतुश्शब्दांशे विशिष्य षत्वबोधनाय तत्सार्थक्यात् । एवञ्चास्य निरवकाशत्वेनापवादत्वादसिद्धत्वाभावेनाऽत्र न्यासे न नित्यषत्वापत्तिः । न चैकशब्दादपि सुचो विधानेन सुजन्तस्येदुदुपधत्वमव्यभिचरितमिति न वक्तुं शक्यमिति वाच्यम् । तथापि तत्र प्रकृतेः सकृदादेशविधानेन हल्ङ्यादिना सुचो लुप्ततया तत्र विसर्गस्यासम्भवात् । न च प्रकृतसूत्रे भाष्ये द्विस्त्रिश्चतुर्ग्रहणं शक्यमवक्तुमित्यादिना कृत्वोर्थ इति न्यासस्य स्थापितत्वेन कैयटेन च इदुदुपधस्य कृत्वोर्थवृत्तेर्नाप्राप्ते नित्यषत्वेऽस्यारम्भादस्यापवादत्वमित्यपवादो वचनप्रामाण्यान्नासिद्धो भवतीत्येवंरीत्या तदाशयस्य वर्णितत्वेन च तत्र न्यासे दोषप्रदर्शनमस्यौचित्यप्रतिपादनं च ग्रन्थकृतोऽसङ्गतमेवेति वाच्यम् । अत्र न्यासे पञ्चकृत्वः करोतीत्यादौ षत्ववारणायेदुदुपधस्येत्यस्यानुवृत्तेराश्रयणीयतया विशिष्टानुवृत्तिप्रयोजकस्वरितत्वकरणस्य सामर्थ्याभावेन उकारेपि स्वरितत्वं प्रकल्प्य तत्सामर्थ्यादपवादत्वस्य वक्तव्यतया तदपेक्षया सुच इति न्यासे विशिष्टानुवृत्तिप्रयोजकस्वरितत्वकरणसामर्थ्येनापवादत्वकल्पनायां लाघवात्कृत्वोर्थ इतिन्यासापेक्षयाऽस्य न्यासस्यौचित्यमिति तदाशयात् । ग्रन्थकृता कृत्वोर्थ इति न्यासे दोषप्रदर्शनन्तु तन्न्यासस्थापनपरप्रकृतसूत्रस्थभाष्यस्य यथाश्रुतार्थपरत्वाश्रयणेन तत्र दोषदानपरवृत्तिग्रन्थानुरोधेनैव ॥

चतुःशब्दोऽव्युत्पन्न इति अप्रत्ययस्येति पर्युदासो न । अत एव 'चतुष्पाद्भ्यो ढञ्' इत्यादिनिर्देशाः सङ्गच्छन्ते । चतुष्पश्चाशदित्यत्रापि षत्वं भवत्येव । न चेदुदुपधस्य सस्य यो विसर्ग इति हयवरट्सूत्रभाष्योक्तेः कथमत्र षत्वमिति वाच्यम् । विसर्गस्य पाठाभावेनोपधात्वासम्भवात्तत्स्थानिनिमित्तमुपधात्वं ग्राह्यमिति भाष्य-

---

वस्तुतस्तु प्रागुक्तरीत्या कृत्वोर्थं इति न्यासोऽपि सुवच एव । परन्तु तदपेक्षया सुच इति न्यासे प्रागुक्तरीत्या औचित्यमिति नागेशगूढाशयः । ध्वनितं चेदमिदुदुपधस्य कृत्वोर्थवृत्तेर्नाप्राप्त इत्यादिकैयटे उदुपधस्येतियुक्तः पाठ इति वदतोद्योतकृता । यद्यपि सुच इति न्यासे विसर्गान्ते सुजन्तत्वाय भूतपूर्वगत्याश्रयणस्यावश्यकतया कृत्वोर्थं इतिन्यासापेक्षयाऽतिरिक्तं गौरवमत्राप्यस्त्येव, तथापि तादृशगौरवस्य कृत्वोर्थं इति न्यासे मात्रागौरवेण निमातुं शक्यतया प्रागुक्तमुकारांशेऽपि स्वरितत्वकल्पनाप्रयुक्तगौरवं कृत्वोर्थं इति न्यासेऽतिरिक्तमस्त्येवेत्यवधेयम् ॥

एतेनास्य ग्रन्थस्य द्वित्रिभ्यां सुच्, चतुरो लोपश्चेतिन्यासेन चतुष्करोतीत्यादौ विसर्गस्य प्रत्ययसम्बन्धित्वेन नित्यषत्वाप्राप्त्याऽदोष इत्याशयं वदन्त औत्तराहाः, इणष इति सूत्रानन्तरमेतन्न्यासकरणे तात्पर्यं वर्णयन्तोऽन्ये च परास्ताः ॥

ननु चतुश्शब्दस्य चतेरुरन्नित्युणादिसूत्रेण निष्पन्नतयाप्रत्ययस्येति पर्युदासात्कथमिदुदुपधस्येत्यनेन षत्वमत आह । अव्युत्पन्न इति । अत्र मानमाह । अत एवेति । अव्युत्पन्नत्वादेवेत्यर्थः । इत्यादीति । आदिनाऽपाच्चतुष्पाच्चतुष्पाद्भ्यो गर्भिण्येत्यनयोस्संग्रहः । एवञ्चैतन्निर्देशैरस्योणादिषु व्युत्पादनमप्रामाणिकमिति भावः । चतुःशब्दांशे नित्यषत्वप्रवृत्तौ भाष्यविरोधमाशङ्क्य परिहरति । न चेत्यादिना । तत्स्थानिनिमित्तमिति । तत्रत्यं सग्रहणं विसर्गस्थान्युपलक्षण-

तात्पर्यात्। अत एव 'समः सुटि' इतिसूत्रभाष्ये संपुङ्कानामित्यनेन-रुविधिरेवास्त्वित्याशङ्क्य पुंस्कामेत्यत्र षत्वापादनं सङ्गच्छते। न च कृत्वोर्थे इत्येव कृत्वोऽर्थे विद्यमानस्य पदस्येदुदुपधस्य यो विसर्ग इत्यर्थान्न पञ्चकृत्वः करोतीत्यादौ दोषो, नापि चतुष्करोतीत्यादावव्याप्तिरिति द्विस्त्रिश्चतुरिति व्यर्थमिति वाच्यम्। कृत्वोऽर्थे इत्यस्यासिद्धत्वेन चतुःशब्दे इदुदुपधस्येति नित्यषत्वापत्तेः। प्रकरणे प्रकर-

---

मिति भावः। अत एव निरोऽपि निष्कृतमिति षत्वं सिद्ध्यति। सुबुत्पत्तेः प्राक्समासेऽपि पाशकल्पककाम्येष्वित्युक्त्या नात्रेणष्ष इति सूत्रेण षत्वसिद्धिः। अत एवाथत्रोपधाग्रहणं न करिष्यते, इदुद्भ्यां तु परं विसर्जनीयं विशेषयिष्याम इति वक्ष्यमाणपक्षान्तरेणाऽस्य न फलभेदः। अन्यथाऽत्रपक्षे चतुष्पञ्चाशदित्यत्र षत्वप्राप्त्याऽन्यपक्षे तदप्राप्त्या च फलभेदः स्पष्ट एव। पूर्वोक्तभाष्ये सस्येत्यस्य विसर्गस्याप्युपलक्षकत्वे भाष्यान्तरमपि साधकमित्याह। **अत एवेति**। **संपुंकानामित्यनेनेति**। समादिपदघटितेन समस्सुटीत्यादिसूत्रत्रयेणेत्यर्थः। **षत्वापादनमिति**। इदुदुपधस्येत्यनेनेत्यर्थः। अन्यथा तस्य सस्थानिकत्वाभावाद्भाष्यमनुपपन्नं स्यादिति भावः। वृत्तिकृद्रीत्या कृत्वोर्थे इति न्यासे दोषं दर्शयति। **नित्यषत्वापत्तेरिति**। अत्रत्यं तत्त्वमुपपादितं प्राक्॥

यत्तु द्विस्त्रिरितिवक्तव्ये कृत्वोर्थप्रत्ययान्तसामान्ये प्रवृत्त्यर्थं कृत्वोर्थग्रहणमिति चतुःकरोतीत्यत्र नित्यं षत्वं बाधित्वा विकल्पप्रवृत्त्या न कश्चिद्दोषः। स्पष्टं चेदं प्रकृतसूत्रे कैयट इत्याचार्याः। तन्न। कैयटेऽस्यार्थस्यानुपलम्भात्। द्विस्त्रिरित्येतन्मात्रोक्तावर्थे कार्यस्य सम्भवादपत्यं पशुरित्यादाविव स्वंरूपमित्यस्याप्रवृत्त्या पदावयवविसर्गस्य द्विवारं त्रिवारं षो भवतीत्यर्थापत्त्या तद्वारणायेतिशब्दस्याप्यावश्यकतया तत्करणे कृत्वोर्थे इत्यपेक्षया लाघवाभावेन सामर्थ्यस्य वक्तुमशक्यत्वाच्च॥

**णमसिद्धमिति पक्षस्तु 'उपसर्गादसमासेऽपि' इति सूत्रे कैयटे 'पूर्वपदात्' इति सूत्रे भाष्ये च दूषित एव। उपसर्गादिति सूत्रे चोपपादयिष्यते। किं च पूर्वत्रेति पूर्वशब्देन प्रकरणग्रहणेऽव्यवहितप्रकरणे एव त्रिपाद्या असिद्धत्वं स्यात्, न सम्पूर्णसपादसप्ताध्याय्याम्। किं चास्याधिकारत्वात्प्रतिसूत्रमुपस्थित्या प्रतियोगमसिद्धत्वं दुर्वारमित्यन्यत्र विस्तरः॥**

---

दूषित एवेति। दूषितप्राय इत्यर्थः। तत्सूत्रे भाष्ये समानग्रहणसामर्थ्येन समानपदमेव यन्नित्यमित्युक्त्या तस्य विध्यर्थत्वप्रतिपादनेनासमासेऽपीत्यस्य ज्ञापकत्वासम्भवादिति भावः। न केवलमत्र पक्षे मानाभाव एव, अपि त्वतिप्रसङ्गोऽपीत्याह। **किञ्चेति**। अव्यवहितप्रकरण इति॥

अयं भावः। प्रकरणे प्रकरणमसिद्धमिति पक्षस्य पूर्वत्रासिद्धमित्यस्य परिभाषात्वाङ्गीकार एव सम्भवः, न त्वधिकारत्वे। तथा च तत्पक्षे पूर्वशब्देन स्वावधिकपूर्वत्वविशिष्टस्य स्वाव्यवहितस्यैव प्रकरणस्य ग्रहणे तद्दृष्ट्यैव त्रिपाद्यसिद्धं स्यान्न सम्पूर्णसपादसप्ताध्याय्याम्। यदि तु स्वावधिकपूर्वत्वविशिष्टस्य स्वव्यवहितस्यापि प्रकरणस्य ग्रहणेन तदपेक्षया परप्रकरणस्यासिद्धत्वं बोध्यते, तदा सपादसप्ताध्याय्यामपि पूर्वप्रकरणापेक्षया परं प्रकरणमसिद्धं स्यात्। अथ व्यवहिताव्यवहितसाधारण्येन स्वावधिकपूर्वप्रकरणापेक्षया स्वावधिकपरप्रकरणस्यासिद्धत्वं प्रतिपाद्यते, तदा त्रिपाद्यां पूर्वप्रकरणापेक्षया परप्रकरणस्यासिद्धत्वं न स्यादिति॥

नन्वस्याधिकारत्वेऽपि तत्तत्प्रकरणस्थाद्यसूत्रेष्वेवास्योपस्थित्या पूर्वप्रकरणदृष्ट्या तत्तत्प्रकरणस्यासिद्धत्वं बोध्यत इति न प्रागुक्तदोषलेशोऽपीत्यत आह। **किञ्चेति। अधिकारत्वादिति**। अयं तस्य प्रतिसूत्रमुपस्थितौ हेतुः। तदुक्तं

**इसुसोः** ॥ अत्रेसुसोः प्रातिपदिकावयवयोर्ग्रहणम् । तेन पेचुः काष्ठैः, सख्युः पाकः, कविभिः कृतमित्यादौ षत्वं न । "नित्यं समासे" इति सूत्रोदाहरणे समासविषये तयोरेव सम्भवेनार्थाधिकारानुरोधात् साहचर्याच्च । इसुसन्त-

---

षष्ठीस्थाने योग इति सूत्रे भाष्ये "अपरोऽधिकारः प्रतियोगं तस्यानिर्देशार्थ इति योगे योगे उपतिष्ठत" इति । एवञ्चास्याधिकारत्वे प्रतिसूत्रमुपस्थित्या तत्तच्छास्त्रस्यैवासिद्धत्वं बोध्यत इत्यसिद्धासिद्धिमतोःसाजात्यात्पूर्वशब्देनापि तत्तच्छास्त्राणामेव ग्रहणस्यौचित्येन सूत्रे सूत्रमसिद्धमिति पक्षस्यैव लाभः, न तु प्रकरणे प्रकरणमसिद्धमित्यस्येति भावः ॥

**प्रातिपदिकावयवयोरिति** । इसुसन्तरूपप्रातिपदिकावयवयोरित्यर्थः । नित्यं समास इति सूत्रेऽनुत्तरपदस्थस्येत्युक्त्या उत्तरपदस्थस्य विसर्गस्येसुसन्तरूपप्रातिपदिकावयवेसुस्सम्बन्धिन एव सम्भवात्पर्युदासन्यायेन तद्भिन्नस्यापि तादृशस्यैव ग्राह्यतयाऽर्थाधिकारानुरोधादत्रापीसुसन्तरूपप्रातिपदिकावयवेसुस्सम्बन्धिन एव विसर्गस्य ग्रहणादयमर्थः फलतीति भावः । **सख्युरिति** । प्रतिपदोक्तपरिभाषयात्र निर्वाह इति तु न युक्तम् । सिद्धान्तभूतेऽव्युत्पत्तिपक्षे एतत्सूत्रविषये इसुसोर्लाक्षणिकप्रतिपदोक्तत्वविभागस्य दुर्वचत्वात् । **कविभिरिति** । नात्रार्थवद्ग्रहणपरिभाषया निर्वाहः । अव्युत्पत्तिपक्षेऽर्थवत इसोऽसम्भवेन तत्परिभाषाया अप्रवृत्तेः । यदुक्तमिसुसोः प्रातिपदिकावयवयोर्ग्रहणमिति, तत्र मानमाह । **नित्यं समास इति** । इतोऽपि लाघवात्प्रकारान्तरेणामुमर्थं साधयति । **साहचर्यादिति** । परस्परसाहचर्यादित्यर्थः । एतत्सूत्रविषये अनादेशभूतस्यैवेसस्सम्भवेन तत्साहचर्यादुसोऽप्यनादेशभूतस्यैव ग्रहणम् । तादृशस्योसः पदसंज्ञाप्रयोजकप्रत्ययानवयवस्यैव सम्भवेन तत्साहचर्यादिसोऽपि तादृशस्य ग्रहणमित्यर्थात्प्रातिपदिकावयवयोरित्यर्थस्सिध्यतीति भावः ।

एवमुत्तरसूत्रेऽप्यर्थाधिकारानुरोधादीदृशयोरेव ग्रहणमित्योजोभिः कृतं, सख्युः पाक इत्यादावलुक्समासे चक्रुःपेचुरित्याद्याख्यातमाख्यातेनेतिसमासे च नोत्तरसूत्रेण षत्वापत्तिरिति बोध्यम्। न चात्राव्युत्पत्तिपक्षाश्रयणे सुपीः पचति सुबूः पचतीत्यादौ षत्वापत्तिः। तत्पक्षेऽर्थवद्ग्रहण इति लक्षणप्रतिपदोक्तयोरिति च परिभाषयोस्संचारयितुमशक्यत्वादिति वाच्यम्। इसुसन्तपदाभावेन तदप्राप्तेः। स्थानिवद्भावेन तु न तल्लभ्यम्, अशास्त्रीयत्वात्। अर्थाधिकविकारेण विकृतावयवनिबन्धनत्वेन चैकदेशविकृतन्यायेनापि न तल्लाभः। न च सर्पिष्करोतीत्यादाविवात्रापि भूतपूर्वगत्या तल्लाभ इति वाच्यम्। भूतपूर्वगतेश्शास्त्रारम्भसामर्थ्यमूलकत्वेन सकारांशमात्रे तदाश्रयणेन तत्सार्थक्योपपत्ताविकारांशेऽपि तदाश्रयणे मानाभावात्॥

एतेन तयोरेव सम्भवेनेति प्रतीकमुपादायाव्युत्पत्तिपक्षाश्रयणेनेदम्, इदमयुक्तम्। तदाश्रयणे हि जग्मुःपेचुरिति यस्यां क्रियायामित्याख्यातमाख्यातेनेति समासे नित्यं समास इति षत्वापत्तेः। एवं षष्ठ्या आक्रोश इत्यलुकि सख्युः पुत्र इत्यत्रापि षत्वापत्तिः। सुपीः पचति सुबूः पचतीत्यादौ प्रातिपदिकावयवयोरिसुसोस्सामर्थ्य इति षत्वापत्तिः। तस्मादिसुसोस्सामर्थ्य इत्येतद्विषये व्युत्पत्तिपक्ष एवाश्रयणीयः। तथासति प्रत्ययाप्रत्यययोः प्रत्ययस्य ग्रहणमर्थवद्ग्रहणे नानर्थकस्य ग्रहणं, लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणमिति परिभाषाभिस्सख्युः पाक इत्यादौ न षत्वम्। परस्परसाहचर्येण कृतोरेवेसुसोर्ग्रहणात्पेचुः काष्ठैरित्यादावपि न षत्वमित्येव युक्तमिति वदन्त आचार्याः परास्ताः॥

भट्टास्तु तिङ्भिन्नेसस्साहचर्यादुस् तिङ्भिन्नः। सुबवयवभिन्नप्रतिपदोक्तोसा साहचर्यादिसपि तथैवेत्येवंरीत्या परस्परसाहचर्यमङ्गीचक्रुः। तदयुक्तम्। अव्युत्पत्तिपक्षे लक्षणप्रतिपदोक्तपरिभाषासंचारस्य कर्तुमशक्यतया तादृशसाहचर्यस्य दुरुपपादत्वात्॥

पदावयवविसर्गस्येत्यर्थः । पदस्येत्यधिकारात् । न च प्रत्ययग्रहणपरिभाषया परमसर्पिष्करोतीत्यादौ षत्वानापत्तिरवयवस्येसुसन्तत्वेऽपि "उत्तरपदत्वे च" इति निषेधेनापदत्वादिति वाच्यम् । अनुत्तरपदस्थस्येति निषेधेन क्वचि दुपात्तविशेष्यसत्त्वेऽपि शब्दरूपं विशेष्यमादाय तदन्तविधिज्ञापनेन शब्दरूपं विशेष्य-

---

वाराणसेयास्तु इस्साहचर्यादुस् तिङनवयवो गृह्यते । तादृशोस्साहचर्याच्चेस् सुबनवयवो गृह्यते । तेन प्रातिपदिकावयवयोर्ग्रहणमित्यर्थाल्लब्धमित्याहुः । तदप्यसत् । तिङनवयवस्योसस्सख्युरित्यादौ सुबवयवस्यापि सम्भवेन तत्साहचर्यात्सुबनवयवस्यैवेसो ग्रहणमिति वक्तुमशक्यत्वात् ॥

**पदावयवविसर्गस्येति** । फलितार्थकथनमिदम् । वाच्यार्थस्तु इसुसन्तं विसर्गान्तं यत्पदं तदन्तस्यानुत्तरपदस्थस्यालप्षत्वमिति बोध्यम् । सर्पिषा यजुषेत्यादावादेशप्रत्यययोरिति षत्वसिद्धये व्युत्पत्तिपक्ष एवेसुसन्तस्याश्रयणीय इति नित्यं समास इति सूत्रस्थकैयटानुसारेण शङ्कते । **न चेति** । **उत्तरपदत्वे चेति** । तस्य कार्यित्वस्य वस्तुतः पदान्तविधित्वस्य च सत्त्वादिति भावः ॥

भट्टास्तु षत्वस्य प्लुतात्परत्र सत्त्वेन नैतस्मिन्नुत्तरपदत्वे चेति निषेधप्रवृत्तिरित्याहुः । तन्न । नलोपादिविधौ प्लुत्यन्ते लुमता लुप्ते प्रत्ययलक्षणं न भवतीति पक्षान्तरस्य परमदिवेत्यादावुत्वापत्त्या दूषितत्वात् ॥

**उपात्तविशेष्यसत्त्वेऽपीति** । उपात्तत्वञ्च तत्र साक्षादुक्त्याऽनुवृत्त्या वेत्याशयः । **तदन्तविधिज्ञापनेनेति** । न च पूर्वसर्पिःप्रिय इत्यादौ मध्यमपदत्वाक्रान्ते सर्पिश्शब्दे उत्तरपदत्वे चेति निषेधाप्राप्त्या इसन्तस्य पदत्वेन निषेधश्चरितार्थ इति कथमुक्तार्थज्ञापकत्वमिति वाच्यम् । परमं सर्पिःप्रियं यस्येति त्रिपदे बहुव्रीहावस्याप्रवृत्तये समासेन कवर्गपवर्गाव्यवहितपूर्वत्वाविशिष्टस्ये-

**मादाय प्रत्ययग्रहणपरिभाषया लब्धतदन्तार्थकस्य पदविशेषणतया इसुसन्तान्तस्येत्यर्थेनादोषात् । अत एव 'वनोरच' इत्यादौ न दोषः । ब्राह्मणस्य सर्पिष्करोतीत्यादौ सापेक्षत्वेनासामर्थ्यं नाशङ्क्यं, तस्यैकार्थीभावसामर्थ्यविषयत्वात् । 'अधात्वभिहितं समानाधिकरणमसमर्थवत्' इत्युक्तेः सर्पिः कालकमित्यादौ न षत्वम् । अधात्वभिहितमित्युक्तेः सर्पिष्पीयते इत्यत्र षत्वसिद्धिः । धातुसहचरितप्रत्ययाभिहितार्थेन समानाधिकरणमसमर्थवन्नेति तदर्थः ।**

---

सन्तस्य पूर्वपदस्यैव ग्रहणीयतया पूर्वसर्पिःप्रिय इत्यादाविसन्ते पूर्वपदत्वाभावेन षत्वाऽप्राप्त्या न तत्रापि निषेधचारितार्थ्यमिति ज्ञापकपरभाष्याशयात् । न चैवमप्ययशब्दस्यायुश्शब्देन समासे ततः कामशब्देन समासे आयुःकाम इत्यत्र परादिवद्भावेनोत्तरपदत्वस्य पूर्वसमासोत्तरसुपमादाय पदत्वस्य च सत्त्वात्तत्र निषेधार्थमनुत्तरपदग्रहणं चरितार्थमिति वाच्यम् । ज्ञापनपरभाष्यप्रामाण्येनोत्तरपदत्वानधिकरणस्यैव पूर्वपदस्य ग्रहणेन प्रकृते चायुःशब्दस्य तदधिकरणत्वेन षत्वाप्राप्त्या तत्र चारितार्थ्यस्य वक्तुमशक्यत्वात् । **तदन्तार्थकस्येति**। इसुसन्तस्येत्यर्थः । ननु सर्पिःकालकमित्यादावसमासे परस्पराकाङ्क्षारूपव्यपेक्षायास्सत्त्वेन षत्वविकल्पः स्यादत आह । **समानाधिकरणमसमर्थवदिति**। समानाधिकरणं समर्थवन्नेति तदर्थः । एतन्निषेधभूतस्याधात्वभिहितमित्यस्य फलं दर्शयति। **अधात्वभिहितमिति**। **धातुसहचरितेति**। धातुपदं धातुसहचरिते लाक्षणिकमिति भावः। इदं समर्थसूत्रस्थकैयटानुरोधेन स्नुक्रमोरिति सूत्रस्थभाष्यरीत्या तिङां कर्मादिद्योतकत्वे तु यथाश्रुतमेव सम्यगिति समर्थसूत्रे उद्योते स्पष्टम् । **असमर्थवन्नेति** । इदञ्च फलितार्थप्रदर्शनम् । वस्तुतस्तु पर्युदासस्य न्याय्यत्वेन धात्वभिहितभिन्नं समानाधिकरणमसमर्थवदित्यर्थो बोध्यः। एवं व्युत्पत्तिपक्षे नित्यं समास इति सूत्रस्थभाष्योक्तदिशा परमसर्पिष्करोतीत्यादौ दोषं निरा-

यदा तु सर्पिरादिकमव्युत्पन्नं प्रातिपदिकं—पाणिनेरुणादिष्वव्युत्पत्ति-पक्ष एवेति 'आयनेयीनी' इति सूत्रे भाष्ये स्पष्टमुक्तेः। तत्र हि शङ्ख इत्यादावादेशानाशङ्क्य 'उणादीनां प्रतिषेधो वक्तव्यः, प्रातिपदिक-विज्ञानाच्च भगवतः पाणिनेः सिद्धम्' इत्युक्तम्। 'अयामन्ताल्वाय्ये त्निवष्णुषु' इति सूत्रं पाणिनेर्व्युत्पत्ति पक्षस्यापि स्वीकार इत्यस्यापि गमकं, व्याकरणान्तररीत्यैव, सर्वनामस्थानमितिमहासञ्ज्ञावत्। अत एव भाष्ये उणादयोऽव्युत्पन्नानीत्येवोक्तम्, न तु 'अनेकार्था अपि धातव' इतिवदव्युत्पन्नान्यपीत्युक्तं, तदा 'इदुदुपधस्य' इति नित्ये षत्वे प्राप्तेऽनेन विकल्प इति प्रत्ययग्रहणाभावात्तत्परिभाषा-नुपस्थितेः परमसर्पिष्करोतीत्यादौ षत्वविकल्पः सिद्धः। 'नित्यं

---

कृत्य सिद्धान्तभूतेऽव्युत्पत्तिपक्षे न दोषशङ्काकलङ्कोऽपीत्याह। यदा त्विति। वक्तव्य इति। एतदुत्तरं न वक्तव्यः। ऋतेरीयङित्येव सिद्धे ईयङ्विधानेन धातुप्रत्ययानामादेशा न भवन्तीति ज्ञापनादिति शेषः। ततो भाष्ये सिद्धान्त-माह। प्रातिपदिकविज्ञानादिति। अत एवेति। पाणिनेरुणादिष्वव्युत्पत्ति-पक्षस्यैवाभिमतत्वादेवेत्यर्थः। अव्युत्पन्नान्यपीति। जातिव्यक्तिपक्षयोरिव लक्ष्यानुरोधाद्द्वयोरप्यनयोर्व्यवस्थितत्वे एवमेव ब्रूयादिति भावः। अनेन। इसु-सोरित्यनेन। विकल्प इतीति॥

नन्वेवमाविष्करोति, निष्क्रामति, दुष्करोतीत्यादावनेन विकल्पापत्तिः। अत्र पक्षे प्रत्ययाप्रत्यययोरिति परिभाषाया अर्थवद्ग्रहणपरिभाषाया वा संचार-यितुमशक्यत्वादिति चेदत्र गुरुचरणाः। पृथगुपस्थितयोरर्थयोः परस्पराकाङ्क्षाया एव व्यपेक्षापदार्थत्वेन निपातानां च स्वसमभिव्याहृतपदस्यार्थविशेषद्योतकत्वेन ततः कस्याप्यर्थस्य पृथगुपस्थितेरभावान्निरुक्तव्यपेक्षाया अभावान्न प्रागुक्तेषु विकल्पापत्तिरिति वदन्ति॥

**समासे' इति सूत्रमनुत्तरपदस्थस्येतिप्रतिषेधार्थम् । नित्यग्रहणं तु न कर्तव्यमेव । समासे नित्यषत्वस्य इदुदुपधस्येत्येव सिद्धेः । सर्पिष्पेत्यादौ षत्वं त्वत्र पक्षे क्वचिदन्यदेवेत्यर्थकाद् बहुलग्रहणादिति**

---

नन्वेवं समासे इदुदुपधस्येत्येव षत्वसिद्धौ नित्यं समास इति व्यर्थमत आह । प्रतिषेधार्थमिति । नित्यग्रहणन्त्विवति । समासग्रहणन्तूत्तरार्थम्, पूर्वपदाध्याहारायेहार्थं चावश्यकमिति भावः । इत्यादाविति । आदिना प्रतिदीव्न इत्यादेस्संग्रहः । षत्वमिति । इदमुपलक्षणम्, दीर्घादीनामपि ॥

यत्त्वत्राचार्याः 'अन्ये तु अयामन्ताल्वाय्येत्न्विष्णुषु', तितुत्रतथसरकसेषु चेति सूत्रद्वयप्रणयनान्यथानुपपत्त्या पाणिनेर्व्युत्पत्तिपक्ष एव सम्मतः । नित्यं समास इति सूत्रे नित्यग्रहणाच्च, अव्युत्पत्तिपक्षे हि नित्यं समास इत्यस्य षत्वप्रतिषेधमात्रफलकत्वेन नित्यग्रहणवैयर्थ्यं स्पष्टमेव । किञ्चाव्युत्पत्तिपक्षस्यैवाश्रयणे जग्मुः पेचुरितियस्यां क्रियायामि त्याख्यातमाख्यातेनेति समासे दोषापत्तेः । तदेतदभिप्रेत्य नित्यं समास इति सूत्रे भगवतोक्तम्, अथ चेत्कृदन्तमेतादिति, अथ चेत्संविज्ञानमिति पक्षान्तरावलम्बनं तु प्रौढिवादमात्रम् । तदेतदभिप्रेत्याव्युत्पत्तिपक्षे त्वाश्रीयमाणे सर्पिष्पेत्यादि न सिध्यतीति व्युत्पत्तिपक्ष एवेसुसन्तस्याश्रयणीय इति नित्यं समास इति सूत्रे कैयटेनोक्तम् । आदिपदेन जग्मुः पेचुरित्यादिपूर्वोक्तदोषसंग्रहः । किञ्चेसुसोर्विषयेऽव्युत्पत्तिपक्षाश्रयणे सर्पिःकालकमित्यादावसामर्थ्यादनेन षत्वाप्रवृत्ताविदुदुपधस्येति नित्यषत्वापत्तिः । एवं देवदत्तस्येदं सर्पिः फाण्टमिदं यज्ञदत्तस्येत्यत्रेदुदुपधस्येति षत्वापत्तिः । कस्कादिषु सर्पिष्कुण्डिकाशब्दपाठस्तु व्यपेक्षायां तदभावेऽसमासे च नित्यार्थः । असमासे व्यपेक्षाविरहे चेदुदुपधस्येति षत्वासिद्धेरित्याहुरिति वदन्ति । तदयुक्तम् । अयामन्तेत्यादिसूत्रप्रणयनं व्याकरणान्तररीत्यैवेति सिद्धान्तभूतेऽव्युत्पत्तिपक्षे नित्यं समास इति सूत्रे नित्यग्रहणमनावश्यकमेवेति च ग्रन्थकृता कण्ठत

स्पष्टं भाष्ये । व्यपेक्षेति । व्याख्यानात् । एकार्थीभावसामर्थ्यग्रहणे परमसर्पिःकुण्डिकेत्यादौ समासे विकल्पापत्तिः । अनुत्तरपदस्थस्येति निषेधादुत्तरसूत्रस्य न प्रवृत्तिरिति भावः ॥

नन्वनेनैव सिद्धे कस्कादिषु सर्पिष्कुण्डिकाशब्दपाठो व्यर्थ इत्यत आह । कस्कादिष्विति । एतेन तत्सामर्थ्यादुत्तरपदस्थस्यापि षत्वमित्यपास्तम् । व्यपेक्षाविरहेऽपीति । आनय सर्पिष्कुण्डिका तिष्ठतीत्यादौ । व्यपेक्षायामिति । इदं सर्पिष्कुण्डिकाया इत्यत्र ।

---

एवोक्तत्वात् । अत्र पक्षे समासे नित्यषत्वस्येदुदुपधस्येत्यनेनैव सिद्ध्याऽनुत्तरपद-स्थस्येति प्रतिषेधार्थमेवोत्तरसूत्रारम्भ इति भगवतोक्तत्वेन जग्मुः पेचुरिति समासे विसर्गस्य प्रत्ययसम्बन्धिभिन्नत्वाभावेन षत्वाप्राप्त्याऽदोषाच्च । वस्तुत आख्यातमाख्यातेनेति समासस्य लोण्मध्यमपुरुषमात्रविषयकताया अन्यत्र व्यवस्थापितत्वेन तादृशसमासस्यैव दुरुपपादत्वाच्च । अथ चेत्संविज्ञानमिति भाष्यस्य प्रौढिवादत्वकल्पनन्तु सुतरामनुचितम् । प्रातिपदिकविज्ञानाच्च भगवतः पाणिनेस्सिद्धमित्यायनेयीनीयिय इति सूत्रस्थभाष्येणास्यैव सिद्धान्त्युक्तित्व-लाभेनाथचेत्कृदन्तमेतदितिपूर्वभाष्यस्यैव पक्षान्तरपरतया योजनस्य युक्तत्वात् । प्रागुक्तनित्यं समास इति सूत्रस्थकैयटस्तु चिन्त्य एव । सर्पिषेत्यादौ बहुलग्रह-णेन क्वचिदन्यदेवेत्यर्थकेन षत्वस्य सिद्धत्वात् । स्पष्टं चेदं तत्रैवोद्योते । यदप्यत्र पक्षे सर्पिःकालकं देवदत्तस्येदं सर्पिः फाण्टमिदं यज्ञदत्तस्येत्यादावसामर्थ्यादनेन विकल्पाभावे इदुदुपधस्येति नित्यषत्वापत्तिरिति, तदपि न । अत्र पक्षे तत्र नित्यषत्वस्यैव न्याय्यत्वात् । भाष्ये तत्र सविसर्गपाठस्य व्युत्पत्तिपक्षाभिप्राय-कत्वादिति सुधियो विभावयन्तु ॥

व्याख्यानादिति । लक्ष्यानुरोधरूपादित्यर्थः । स्पष्टं चेदमुत्तरसूत्रे प्रदीपोद्योतयोः। सामर्थ्य इत्यनुवृत्त्यैव सिद्धे उत्तरसूत्रे समासग्रहणसामर्थ्यरूपा-

**प्रत्ययभिन्नविसर्गस्येत्यर्थम्—'इदुदुपधस्य' इत्यत्र व्याचक्षाणानां व्याख्यादर्शकृतां मतेऽव्यपेक्षायां तेन सिद्धेरिति भावः। एतेन कस्कादिपाठस्याव्यपेक्षायां चारितार्थ्येन व्यपेक्षायां तस्यासिद्धत्वाद्विकल्प एवोचित इत्यपास्तम्। प्रत्ययसंबन्धिभिन्नविसर्ग-**

---

दित्यर्थ इति श्रीधरवाराणसेयाद्युक्तन्तु न युक्तम्। उत्तरसूत्रे समासग्रहणसामर्थ्येनात्रैकार्थीभावरूपसामर्थ्यस्यैव ग्रहीतुमशक्यत्वेऽपि तस्याप्यत्र ग्रहणं स्यात्। तथा सत्युत्तरसूत्राविषये परमसर्पिः कुण्डिकेत्यादावनेन विकल्पापत्तेरपरिहारात्। **सिद्धेरिति भाव इति** ॥

अयं भावः। असमासे व्यपेक्षाविरहेपि षत्वार्थ इति ग्रन्थोऽप्रत्ययस्येत्यस्य प्रत्ययसम्बन्धिभिन्नविसर्गस्य षत्वमित्येवार्थ इति इसुसन्तविषये व्युत्पत्तिपक्ष एवाश्रयणीय इति चाशयेन प्रवृत्तः। अन्यथाऽसमासे व्यपेक्षाविरहे चेदुदुपधस्येत्यनेन षत्वसिद्ध्या षत्वार्थ इत्यस्यासङ्गतेः। व्यपेक्षायां नित्यार्थश्चेति तु व्याख्यादर्शकृद्रीत्या प्रवृत्तः। तन्मतेऽप्रत्ययस्येत्यस्य प्रत्ययभिन्नविसर्गस्येत्यर्थेन व्यपेक्षाविरहे षत्वस्येदुदुपधस्येत्यनेनैव सिद्ध्या तत्फलस्य वक्तुमशक्यत्वात्। एवञ्च षत्वार्थ इत्ययं ग्रन्थासिद्धान्तभूतो, व्यपेक्षायां नित्यार्थश्चेति ग्रन्थस्त्वन्यदीय एव। नायं सर्वोग्रन्थ एकमतानुसारी। चशब्दस्त्वप्यर्थकः। स च सर्वथा कस्कादिपाठस्यावश्यकत्वेन तत्सामर्थ्यादुत्तरपदस्थस्यापि षत्वमिति कथनमनुचितमितिसूचनाय प्रयुक्तः। इदुदुपधस्येतिसूत्रस्थमनोरमाग्रन्थस्तु व्याख्यादर्शानुसारेणेति न तद्विरोध इति। एकमतानुसारेण सर्वो ग्रन्थो योजनीय इत्याग्रहे त्विन एवारुचेराह व्यपेक्षायामितीति योज्य इति बोध्यम् ॥

**एतेनेति**। व्यपेक्षायां नित्यार्थश्चेति ग्रन्थस्य प्रत्ययभिन्नविसर्गस्य षत्वमित्यर्थतात्पर्येण प्रवृत्तत्वेनेत्यर्थः। **अपास्तमिति**। तादृशार्थे व्यपेक्षाविरहे षत्वस्य इदुदुपधस्येत्यनेनैव सिद्ध्या तत्र गणपाठस्य चारितार्थ्यकथनस्या-

स्येत्यर्थे तु तदप्राप्तिरेवेति व्यपेक्षायां विकल्प एवेति बोद्धयम् ॥

अतः कृ ॥ कृशब्देन तदादिग्रहणं, समासाक्षिप्तोत्तरपदस्य विशेष्यत्वात् । 'विष्वग्देवयोः' इति सूत्रे वप्रत्ययग्रहणेन धातोर्विशेषणत्वे तदादिविधिज्ञापनात् । अयस्कुम्भीत्यादौ लिङ्गविशिष्ट-

---

शक्यत्वादिति भावः । विकल्प एवेति । नन्वनेन विकल्पेऽप्येतदभावे व्यपेक्षायां कस्कादिषु चेतिनित्यषत्वं दुर्वारम् । न चेतद्बोधिताभावांशेन निषेधाश्च बलीयांस इति न्यायात्तत्प्राप्तषत्वस्यापि बाध इति वाच्यम् । एतद्दृष्ट्या तस्यासिद्धत्वादिति चेन्न । व्युत्पत्तिपक्षे प्रत्ययसम्बन्धिभिन्नविसर्गस्येत्यर्थेऽस्य सूत्रस्य सर्पिष्करोतीत्यादौ षत्वाप्राप्त्या कस्कादिपाठात्सर्पिष्कुण्डिकाशब्दे षत्वप्राप्त्या चोभयत्र विभाषात्वलाभेन तत्सूत्रप्राप्तषत्वस्याप्यनेन निषेधेनादोषात् । इदञ्च इसुसन्तविषये व्युत्पत्तिपक्ष एवेति कैयटानुसारिदीक्षितमतानुसारेण । स्वसिद्धान्तभूतेऽव्युत्पत्तिपक्षे त्वव्यपेक्षायां षत्वस्येदुदुपधस्येत्यनेनैव सिद्ध्या तत्र कस्कादिपाठस्य चारितार्थ्याभावाद्व्यपेक्षायां गणपाठसामर्थ्येनासिद्धत्वाभावे नित्यषत्वमेव न्याय्यमिति विभावनीयम् । एतेन इदमयुक्तम्, विकल्पेन मुक्ते कस्कादित्वान्नित्यषत्वप्रवृत्तेस्सुलभत्वात् । किञ्चाव्युत्पत्तिपक्षस्यैव स्वेनाश्रयणेनाव्यपेक्षायामिदुदुपधस्येत्यनेनैव षत्वसिद्ध्या व्यपेक्षायां पाठसामर्थ्येनैव नित्यषत्वसिद्धिरित्याचार्योक्तमपास्तम् । अव्युत्पत्तिपक्षेऽपीसुसोरित्यस्य इदुदुपधस्येति षत्वापवादत्वादिसुसोरित्येतद्दृष्ट्या कस्कादिषु चेत्यस्यासिद्धत्वाच्च विकल्प एवेति भाव इति वाराणसेयोक्तन्तु न युक्तम् । तत्पक्षे गणपाठसामर्थ्येन कस्कादिषु चेत्यस्यासिद्धत्वाभावात् । समासाक्षिप्तेति । लक्ष्यानुसाराद्ध्याहृतेत्यर्थः । ननु समासाक्षिप्तोत्तरपदस्योपस्थितत्वात्कुम्भादिरूपस्यैव ग्रहणं स्यादित्ययस्कुम्भीत्यत्र न स्यादत आह । अयस्कुम्भीत्यादाविति ॥

इति विसर्गसन्धिः ।

परिभाषया सत्वं बोद्ध्यम् । भास्कर इति । तपरकरणात् 'अतः कृ' इत्यस्याप्राप्तिः ॥

इति विसर्गसन्धिः ॥

---

यत्तु स्वौजसित्यत्र रुरेव पाठ्यः, सर्वत्र सुग्रहणे रुग्रहणमेवास्त्विति, तन्न । यशोऽत्रेत्यादौ रोरसिद्धत्वादुत्वानापत्तेः, 'अतो रोः'

---

# ॥ अथ स्वादिसन्धिप्रकरणम् ॥

रुरेवेति । प्रक्रियालाघवायेति भावः । सर्वत्र सुग्रहण इति । सौ च, सुपि चेत्यादावित्यर्थः । उत्वानापत्तेरिति । न चाहन्नित्यनेन रुत्वविधानाज्ज्ञापकादुत्वदृष्ट्या रुत्वस्यासिद्धत्वं नेति कल्प्यत इति वाच्यम् । अहस्स्वित्यत्र रोस्सुपीति विसर्गार्थमहोभ्यामित्यादावनिष्टयत्वार्थं च तस्यावश्यकत्वेन ज्ञापकत्वासम्भवात् । एवं रूपरात्रिरथन्तरेषु रुत्वं वाच्यमित्यनेन रुविधानमप्यनिष्टयत्वसम्पादनार्थमेवेदानीं स्यादिति न तदप्यत्रार्थे ज्ञापकम् । यद्यपि हरिवो मेदिनं त्वेत्यादौ रुत्वार्थं कृतेन संयोगान्तलोपो रोरुत्व इति वार्तिकेनोत्वदृष्ट्या रुत्वस्य सिद्धत्वं ज्ञापयितुं शक्यम्, तथापि ज्ञापकेन शास्त्रबाधकल्पनायां यथान्यासापेक्षयाऽत्र न्यासे न किञ्चिल्लाघवमित्याशयः ॥

केचित्तु संयोगान्तलोपो रोरुत्व इति वार्तिकारम्भसामर्थ्यादुत्वदृष्ट्या रुत्वस्य सिद्धत्वकल्पनया यशोऽत्रेत्यादावुत्वं साधयितुं शक्यमिति नोत्वानापत्तिरत्र न्यासे दोषः । किन्तु राम इत्यत्र सुपि चेति दीर्घापत्तिः । न च सुपि चेत्यस्य स्थाने यभि चेतिन्यासेन यादौ भादौ च प्रत्ययेऽदन्ताङ्गस्य दीर्घ इत्यर्थकेनात्रापि न दोष इति वाच्यम् । तथान्यासेऽवभ्रट इत्यादावपि दीर्घापत्तेः । न च तत्राभ्रटच एव विधानाददोष इति वाच्यम् । एवमपि सारसायन-

भक्त इत्यादौ दीर्घापत्तेः । तत्राप्यभक्तल एव विधानाददोष इति तु वक्तुमशक्यम् । तथासत्यैषुकारिभक्त इत्यस्यासिद्धेः । न च सुपि चेत्यस्य स्थाने आपि चेतिन्यासेन राम इत्यादावदोष इति वाच्यम् । तथान्यासे गौरवात् । संज्ञावाचकेष्वपीण इति तिस्रो मात्रा इति भाष्येण लाघवगौरवपर्यालोचनस्य सूचनात् । किञ्च सिद्धान्ते सुपि चेति सूत्रमनावश्यकम् । रामाभ्यामित्यादौ दीर्घस्तु अतो दीर्घो यञीत्यत्र सार्वधातुकग्रहणस्य निवृत्त्या सिद्धः । न च तत्र सार्वधातुकग्रहणाननुवृत्तौ केशव इत्यादावपि दीर्घापत्तिरिति वाच्यम् । शृङ्गबृन्दाभ्यामारकनित्यारकन्याकारोच्चारणसामर्थ्येन तद्धितेष्वतो दीर्घो यञीत्यस्याप्रवृत्तिज्ञापनात् । न च शृङ्गशब्दाण्णिजन्तात्क्विप्यल्लोपणिलोपयोः कृतयोस्तत आरकन्याकारश्रवणार्थमाकारोच्चारणस्य सावकाशत्वेन न ज्ञापकत्वसम्भव इति वाच्यम् । एवमप्यतो दीर्घ इत्यत्र विभक्ताविति करणेन केशवादावदोषात् । न चैवं बहुवचने झल्येदित्यत्रापि विभक्तावित्यस्यानुवृत्तौ पचध्वमित्यत्राप्येत्वापत्तिरिति वाच्यम् । बहुवचने स्भ्येदितिन्यासेन दोषाभावात् । सकारादौ भकारादौ च बहुवचनेऽदन्ताङ्गस्यैत्वमिति तदर्थः । न चैवं न्यासे सम्पूर्वाद्गमेराशीर्लिङि समो गमृच्छिभ्यामित्यात्मनेपदे वा गम इत्यनेन सीयुटः कित्त्वादनुनासिकलोपे संगसीरन्नित्यत्राप्येत्वापत्तिरिति वाच्यम् । भकारसाहचर्येण सकारादिबहुवचनस्यापि सुप एव ग्रहणेनादोषात् । एवञ्च वौंजसमौडितिन्यासे राम इत्यत्रातो दीर्घो यञीति दीर्घापत्तिर्दोष इति वदन्ति ॥

वस्तुतस्तु प्रक्रियालाघवाय पथिमथ्यृभुक्षां लोप इत्युक्तावपि नकारस्य लोपे इकारस्येतोऽत्सर्वनामस्थान इत्यनेनात्वे रुपि चेत्यनेन वा अतो दीर्घ इत्यनेन वा दीर्घे पन्था इत्यादिरूपसिद्धावाकारविधानसामर्थ्यात्सावस्य दीर्घस्याप्रवृत्तिज्ञापनाद्राम इत्यादावपि दोषो वारयितुं शक्यः । परन्तु ज्ञापकादिना तत्र तत्र दोषवारणे न किञ्चिल्लाघवमत न्यासे इति नागेशगूढाशयः ।

**इत्यस्य प्रथमैकवचने चारितार्थ्यात् । तद् ध्वनयन्नाह । स्वौजसेति । पदस्येत्यनुवृत्तं ससजूभ्यां विशेष्यते, तेन तदन्तविधिः । आदेशस्त्व-लोऽन्त्यस्येत्यन्त्यस्य । तत्फलितमाह । पदान्तस्येत्यादिना । सजूरित्यत्र व्यपदेशिवद्भावेन सिद्धिः । 'व्यपदेशिवद्भावोऽप्रातिपदिकेन' 'ग्रहणवता प्रातिपदिकेन तदन्तविधिर्न' इति परिभाषाद्वयं प्रत्यय-विधिविषयमिति 'असमासे निष्कादिभ्य' इत्यत्र भाष्ये स्पष्टम् । इदञ्जश्त्वापवादः । श्रेयानित्यादौ त्वस्यासिद्धत्वात्संयोगान्तलोप**

---

राम इत्यत्र दोषमनुक्त्वा यशोऽत्रेत्यत्र दोपप्रतिपादनं तूत्वस्यात्रोपस्थितत्वा-दित्यवधेयम् ॥

ननूत्वदृष्ट्या रुत्वस्यासिद्धत्वेऽतो रोरिति व्यर्थं स्यादित्यत आह । **प्रथमै-कवचने चारितार्थ्यादिति** । अत्र न्यासे शिवोऽर्च्य इत्यादौ रोःस्वतस्सिद्धत्वेना-सिद्धत्वाभावात्तत्रोत्वस्य चारितार्थ्यादाश्रयात्सिद्धत्वं वक्तुमशक्यमिति भावः । न चैवमप्लुताद्ग्रहणं व्यर्थम् । एहि सुस्रोत३ अत्र स्नाहीत्यादौ रुत्वासिद्धत्वेनै-वोत्ववारणसम्भवादिति वाच्यम् । आगच्छतु देवदत्त३ अत्र स्नातु, तिष्ठतु देव-दत्त३ अग्निरित्यादौ तत्सार्थक्यात् । **जश्त्वापवाद इति** । सर्वत्र पदान्तसकारे जश्त्वप्राप्त्या रुत्वविधायकस्य वैयर्थ्यापत्त्या रुत्वं जश्त्वापवाद इति भावः । नन्वेवं जश्त्वदृष्ट्या रुत्वस्यासिद्धत्वाभावाय रुत्वशास्त्रे पूर्वत्रासिद्धमित्यस्यानुप-स्थितौ रुत्वस्य कमपि प्रत्यसिद्धत्वाभावेन संयोगान्तलोपं परत्वाद्बाधित्वा रुत्वे यणः प्रतिषेधाज्झलन्तत्वाभावाच्च संयोगान्तलोपाप्राप्त्या श्रेयानित्यादौ दोषोऽत आह । **श्रेयानित्यादाविति** । अस्य=रुत्वस्य । **असिद्धत्वादिति** । पूर्वत्रेति संग्राहकमेव, श्रृङ्गग्राहिकयैव तु तत्तच्छास्त्रं प्रति तस्य तस्यासिद्धत्वं प्रतिपाद्यते । तेनापवादस्य यं प्रत्यपवादत्वं तत्रासिद्धत्वाभावेऽप्यन्यत्रासिद्धत्वं भवत्येवेति पूर्वत्रासिद्धमित्यत्र ग्रन्थकृता प्रतिपादितत्वेन जश्त्वदृष्ट्या रुत्वस्यासिद्धत्वाभावे-

एवेति दिक् । यत्वस्यापवाद इति । यदीदं न स्यात्तर्हि यत्वं प्राप्नोतीत्येतावता । कृते त्वस्मिन् यत्वस्यासिद्धत्वादुत्वगुणयोर्यत्वाप्राप्तिरेवेति भावः ॥

प्रथमयोः ॥ व्याख्यानात् प्रथमयोरित्यनेन प्रथमाद्वितीयारूपसुब्विभक्त्योर्ग्रहणम्—तदाह । प्रथमाद्वितीययोरिति । पूर्वग्रहणं किम् । अग्नी इत्यत्र पक्षे परसवर्णो मा भूदिति । दीर्घग्रहणं तु त्रिमात्रस्य स्थानिनस्त्रिमात्रो मा भूदिति । सवर्णग्रहणं तु स्पष्टार्थम् । पूर्वस्यादीर्घत्वात् पूर्वजातीय इत्यर्थेनेष्टसिद्धेरिति स्पष्टं भाष्ये ।

---

ऽपि संयोगान्तलोपदृष्ट्यासिद्धत्वं भवत्येवेति भावः । ननूत्वदृष्ट्या यत्वस्यासिद्धत्वात्कथं येन नाप्राप्तिन्यायेनास्य तदपवादत्वमत आह । यदीदमिति । ननु कृतेऽप्युत्वे स्थानिवद्भावेन रुत्वाद्यत्वं स्यादत आह । गुणेति । व्याख्यानादिति । अत्र प्रथमयोरित्यनेन न यस्य कस्यचिद्ग्रहणम्, किन्तु वा सुपीत्यतस्सुब्ग्रहणानुवृत्तेस्सुब्विभक्त्योरेव । तयोरपि न प्रथमवचनयोर्ग्रहणम् । अचीत्यधिकारात्सावचोऽसम्भवात् । तस्माच्छस इत्यत्र कृतस्य पूर्वसवर्णदीर्घार्थकतच्छब्दस्य, दीर्घाज्जसीति निषेधसूत्रस्य चासाङ्गत्यापत्तेश्चेति भावः । परसवर्णो मा भूदिति । एकः पूर्वपरयोरित्यधिकारात्पूर्वपरयोरुभयोरप्युपस्थित्या पर्यायेण कदाचित्परसवर्णस्यापि प्राप्तिरिति भावः । त्रिमात्रस्य स्थानिन इति । हरी इत्यादावित्यर्थः । पूर्वस्यादीर्घत्वादिति । रामानित्यादावित्यर्थः । पूर्वजातीय इति । पूर्वपदं तज्जातीये लाक्षणिकमिति भावः । न च बहुश्रेयसीनित्यादौ पूर्वस्य दीर्घस्य सम्भवेन तत्रास्य चारितार्थ्यात् कथं लक्षणेति वाच्यम् । तावन्मात्रफलकत्वे शसि पूर्व इत्येव वदेत् । एतन्निषेधकाभ्यामस्य ह्रस्वविषयेऽपि प्रवृत्तितात्पर्यबोधनाच्च, ऋऌवर्णयोर्मिथः सावर्ण्यमित्यनेन सिद्धान्ते समानजातीयत्वस्यैवातिदेशाद्धमृनित्यादावप्यदोष इति भावः । ननु गुणबाध-

**आद्गुण इति । 'तौ सत्' इति निर्देशेन भ्रष्टावसरन्यायस्यात्र शास्त्रेऽनाश्रयणादिति भावः । देवदत्तहन्तृहतन्यायस्य तु नात्र प्रवृत्तिः । देवदत्तहन्तृहनने हि नोज्जीवनं, देवदत्तहननप्रसक्तहनने त्वस्त्येव देवदत्तजीवनं, प्रकृते तु न हननस्थानीया वृद्धिहन्तुः पूर्वसवर्णदीर्घस्य लक्ष्ये प्रवृत्तिः, किं तु हननोद्यमसजातीयं प्रसक्तिमात्रं, प्रसक्तस्य निषेधे बाध्योज्जीवने न बाधकमिति । स्पष्टं चेदं 'स्वादिषु' इतिसूत्रे कैयटे ॥**

---

कस्य प्रथमयोरित्यस्य नादिचीत्यनेन निषेधेऽपि भ्रष्टावसरन्यायेन पुनर्गुणो न स्यादत आह । **भ्रष्टावसर इति ।** नन्वेवमपि देवदत्तहन्तृहतन्यायेन गुणो न स्यादित्याशङ्क्य तस्य प्रकृते विषय एव नेत्याह । **देवदत्तेत्यादिना । नात्र प्रवृत्तिरिति ।** शिवोऽर्च्य इत्यादावित्यर्थः । **वृद्धिहन्तुरिति ।** गुणवृद्धिहन्तुरिति पाठ आसीदिति विषमीव्याख्यानादवगम्यते । तत्र गुणेति प्रकृताभिप्रायकम् । **न बाधकमितीति ।** इतिर्हेतौ । एवञ्च ताविति निर्देशेन देवदत्तहन्तृहतन्यायस्यानित्यत्वप्रतिपादनं कस्यचिदयुक्तमेवेति बोध्यम् ॥

भट्टास्तु तावितिनिर्देशाद्देवदत्तेतिन्यायानित्यत्वमिति कस्यचिदुक्तिं कटाक्षयति । नात्रेतीत्येवममुं ग्रन्थमवतारयन्ति । तत्तु पूर्वग्रन्थसंदर्भं नातीव पुष्णातीति बोध्यम् ॥

सुश्रोतश्शब्दे तत्पुरुषसमासाश्रयणे तदर्थस्यागमनक्रियाकर्तृत्वासम्भवः । बहुव्रीह्याश्रयणे तु कप्प्रसङ्गः । वैकल्पिकत्वेन धर्माधिक्यफलकस्यापि कपोऽप्रवृत्तिं सम्पाद्य यौगिकत्वप्रतिपादने न कोऽपि पुरुषार्थः । किञ्च भाष्यकृद्दर्शितेऽप्लुत इत्यस्य प्रत्युदाहरणे तिष्ठतु पय आग्निदत्तेत्यत्र संज्ञाया एव ग्रहणादत्रापि तदुदाहृते संज्ञाया एव ग्रहणमिति भाष्याशयो वक्तुं युक्त इत्याशयेनाह । **कस्य चित्संज्ञेति ।** एतेनैतत्प्रतीकमुपादय 'इदं हूयमानार्थकनाम्न

सुस्रोत ३ इति। सुस्रोतश्शब्दः कस्यचित्सञ्ज्ञा। संबुद्धौ 'दूराद्धूते च' इति प्लुतः। तत्सामर्थ्यादिति। प्रतियोगित्वेन तदाश्रयणसामर्थ्यादित्यर्थः। आश्रयात्सिद्ध इति भाष्योक्तेः

---

एव प्लुत इति भ्रमेणेत्याचार्योक्तमपास्तम्। प्रथमैकवचनेऽत्वसन्तस्येति दीर्घे तपरव्यावर्त्यत्वादेहीत्यादिमध्यमपुरुषप्रयोगेणास्य सम्बुद्ध्यन्तत्वस्यैव न्याय्यत्वाच्चाह। सम्बुद्धाविति। सामर्थ्यादित्यर्थ इति। यथा रुत्वमनूद्योत्वविधेस्सामर्थ्यादसिद्धत्वेन रुत्वस्योत्वस्थानित्वं न विहन्यते, एवं भेदप्रतियोगित्वेन प्लुतस्याश्रयणसामर्थ्यादुत्वनिमित्तभूताकारनिष्ठप्लुतस्यासिद्धत्वेन भेदप्रतियोगित्वं न विहन्यत इति भावः। अप्लुतादिति विशेषणोपादानेन प्लुतविध्येकवाक्यतापन्नपूर्वत्रासिद्धशास्त्रघटकपूर्वत्रपदेन उत्वविध्यग्रहणमिति ज्ञाप्यत इति तात्पर्यकथनन्तु न युक्तम्। तथा सति तपरकरणेनैव व्यावृत्तिसिद्धौ स्वांशे चारितार्थ्यस्य दुर्निरूपत्वात्। अप्लुतादप्लुत इत्यनयोरन्यतरस्य वैयर्थ्यापत्तेश्च। किञ्च तुल्यन्यायाद्रुत्वमनूद्योत्वविधानसामर्थ्येन रुत्वविध्येकवाक्यतापन्नपूर्वत्रासिद्धशास्त्रघटकपूर्वपदेनोत्वविध्यग्रहणमित्यर्थस्य ज्ञापने स उच्चारणं रुच्चारणमिति षष्ठीसमासे सुश्रोतसः रुच्चारणमिति पुनः षष्ठीसमासे सस्य रुत्वे रोरीतिलोपस्यासिद्धत्वाद्धशि चेत्युत्वापत्तिः। उत्वदृष्ट्या ङसन्तसकारस्थानिकरुत्वस्यासिद्धत्वाद्धशपरत्वं नास्तीति तु वक्तुमशक्यम्। रुत्वविध्येकवाक्यतापन्नपूर्वत्रपदेन उत्वविधेरग्रहणमित्यर्थस्य ज्ञापितत्वात्। अतो ज्ञापकत्वमयुक्तमेवेति बोध्यम्। तत्सामर्थ्यान्नासिद्धत्वमिति मूलस्य निरुक्तरीत्या व्याख्याने मानं दर्शयति। भाष्योक्तेरिति। ननु यद्युत्वदृष्ट्या प्लुतस्याश्रयात्सिद्धत्वमुच्यते, तदा पयस्यटति पयो ददातीत्यर्थे पयश्शब्दपूर्वादटतेः क्विपि ददातेश्च के सम्बुद्धावुत्वात्परत्वादाद्येऽट्शब्दाकारस्य दूराद्धूत इत्यनेनान्त्ये यकाराकारस्य गुरोरनृत इत्यनेन च प्लुते आद्येऽप्लुतपरत्वाभावादन्त्येऽप्लुतात्परत्वाभावा-

पयस्यदति पयो ददातीत्यर्थे 'आगच्छ हे पयो३द्' 'आगच्छ हे पयो३ द' इत्यादावेकपदस्थवर्णद्वयसापेक्षमन्तरङ्गमुत्वं प्रति वाक्यसंपादकपदान्तरसापेक्षप्लुतस्यासिद्धत्वादुत्वे प्लुतसिद्धिः । अन्यथा प्लुतस्योत्वदृष्ट्या सिद्धत्वात्परत्वात् प्लुते आद्येऽप्लुतपरत्वाभावादन्त्येऽप्लुतात्परत्वाभावादुत्वं न स्यात् । परिभाषादृष्ट्या बहिरङ्गासिद्धत्वेऽपि न क्षतिः । स्वदृष्ट्याऽसिद्धस्यापि परं प्रत्यसिद्धत्वप्रतिपादनसंभवात् । स्वदृष्ट्याऽविद्यमानस्य परं प्रत्यविद्यमानत्वप्रतिपादनवत् । अन्तरङ्गस्यासिद्धत्वे तु प्रतिपाद्याभावे इव कं

---

चोत्वं न स्यादत आह । आगच्छ हे पयोऽित्यादिना । एकपदस्थेति । समस्तेत्यर्थः । वर्णद्वयेति । स्थानिनो निमित्तत्वाभावादिति भावः । अन्यथा वर्णत्रयापेक्षत्वेन द्वयेत्यसङ्गतं स्यात् । प्लुतसिद्धिरिति । प्रतियोगित्वेनाश्रयणसामर्थ्यात्पूर्वत्रासिद्धमित्यसिद्धत्वमेव प्रत्यासत्त्या बाध्यते, न तु बहिरङ्गासिद्धत्वमौपसंख्यानिकं वाह ऊठित्यत्र ज्ञापितं च, विप्रकृष्टत्वात् । किञ्चोत्वविषये पूर्वत्रासिद्धमित्यसिद्धत्वस्यैव नाप्राप्त्या तस्यैव प्लुतस्य प्रतियोगित्वेनाश्रयणसामर्थ्याद्बाधो न तु बहिरङ्गासिद्धत्वस्यापीति भावः । अन्यथेति । आश्रयणसामर्थ्येनासिद्धत्वमात्रबाधन इत्यर्थः । ननु पाष्ठीं परिभाषां प्रति प्लुतस्यासिद्धत्वेन कथमनया प्लुतस्यासिद्धत्वं प्रतिपादयितुं शक्यमित्याशङ्क्याह । परिभाषादृष्ट्येति । असिद्धस्यापीति । बहिरङ्गस्येत्यर्थः । परम्प्रतीति । अन्तरङ्गं प्रतीत्यर्थः । परिभाषादृष्ट्या तस्य सिद्धत्वादन्तरङ्गशास्त्रत्वस्यैव परिभाषोपस्थापकलिङ्गत्वादिति भावः । निरुक्तमर्थं लोकदृष्टान्तेनोपपादयति । स्वदृष्ट्येति । स्वदृष्ट्याऽविद्यमानस्य घटादेः परं प्रत्यविद्यमानत्वप्रतिपादनदर्शनादिति भावः । त्रैपादिकान्तरङ्गेष्वन्तरङ्गपरिभाषाया अप्रवृत्तिमुपपादयति । अन्तरङ्गस्यासिद्धत्वे त्विति । प्रतिपाद्याभाव इवेति । प्रतिपत्तिक्रियायास्सक-

प्रत्यसिद्धत्वं प्रतिपाद्येत । तत्राद्ये 'वाक्यस्य टेः' इत्यद्शब्दाकारः प्लुतः, अन्त्ये रेफदकारसंयोगपरत्वेनाकारस्य गुरुत्वात् 'गुरोः' इति प्लुतः । आश्रयेण तु येननाप्राप्तिन्यायेन प्रत्यक्षत्वेन च पूर्वत्रासिद्धत्वमेव बाध्यते न त्विदम् । सुस्रोत ३ इत्यादौ त्वेक-वाक्यमात्रसापेक्षत्वात् प्लुतोऽन्तरङ्गो, भिन्नवाक्यस्थाकारसापेक्ष-त्वादुत्वं बहिरङ्गमिति स्पष्टं भाष्ये । उकारानुबन्धेति ।

---

कर्मकत्वेन प्रतिपाद्यरूपकर्मणोऽभावे यथा प्रतिपादनं न सम्भवत्येवं परिभाषा-दृष्ट्याऽन्तरङ्गादर्शने कम्प्रति बहिरङ्गासिद्धत्वं परिभाषा बोधयेदिति भावः । ननु प्रतियोगित्वेनाश्रयणसामर्थ्यात्पूर्वत्रासिद्धमित्यसिद्धत्वस्येव बहिरङ्गासिद्ध-त्वस्यापि कुतो न बाध इत्याशङ्क्याह । आश्रयेण त्विति । प्रत्यक्षत्वेनेति । पाणिनिना साक्षादुच्चारितत्वेनेत्यर्थः । प्रत्यक्षत्वेन प्रथमोपस्थितस्य बाधेनोपपत्त्या-वानुमानिकत्वेन विलम्बोपस्थितिकस्य बाधकल्पना न युक्तेति भावः । ननु प्रकृतेऽप्युत्वदृष्ट्या प्लुतस्य बहिरङ्गासिद्धत्वादुत्वं कुतो नेत्यत आह । सुस्रोत ३ इत्यादाविति । स्पष्टं भाष्य इति । अतो रोरप्लुतादिति सूत्रे इत्यर्थः । नन्वेवं प्लुतप्रगृह्या अचीतिसूत्रे भाष्ये प्लुतस्यासिद्धत्वात्स्वरसन्धिर्भवि-ष्यतीत्याशङ्क्य प्रकृतिभाववचनसामर्थ्यात्प्लुतस्य सिद्धत्वं ज्ञापयित्वा एका-देशात्प्लुतो विप्रतिषेधेनेत्युक्तम् । तदसङ्गतं स्यात् । प्लुतस्यान्तरङ्गत्वेऽन्तरङ्ग-बहिरङ्गयोर्विप्रतिषेधायोगादिति चेन्न । परत्वेनान्तरङ्गत्वेन वा पूर्वं प्लुत-प्रवृत्तौ विशेषाभावेन स्थितमप्यन्तरङ्गत्वमुपेक्ष्य विप्रतिषेधस्योक्तत्वेनादोषात् । न चैवमप्येकादेशात्प्लुतो विप्रतिषेधेनेति भाष्यस्य कैयटेन प्लुतस्यैकपदाश्रयत्वा-दन्तरङ्गत्वेनैकादेशस्य तु पदद्वयापेक्षत्वाद्बहिरङ्गत्वेन चिन्त्यतोक्ता । प्लुतस्यापि वाक्यत्वसम्पादकपदान्तरसापेक्षत्वादेकादेशस्य समत्वाच्चिन्त्यमेव चिन्त्यमित्यु-द्योतोक्तिर्विरुद्ध्येतेति वाच्यम् । तद्ग्रन्थस्य प्लुतस्याऽपि पदद्वयाश्रितत्वेन

उकारेत्सञ्ज्ञकरेफस्येत्यर्थ इति भावः। तेन देव रुदीत्यादौ न दोषः॥

भोभगो ॥ "रोः सुपि" इत्यतो रोरिति वर्त्तते, न तु "रो रि" इत्यतो र इति, प्रातस्त्रेत्यादावतिप्रसङ्गात्। अशाब्दान्तद्वन्द्वेन पूर्वशब्दस्य बहुव्रीहिमभिप्रेत्याह। एतत्पूर्वस्येति। नन्वेवं पूर्वरूपापत्तिरत आह। असन्धिरिति। भगोऽघोशब्दौकारयोरकाराभ्यां प्राप्तपूर्वरूपात्मकसन्धिकार्याभाव इत्यर्थः।

---

समत्वात्कैयटोक्तदिशा तस्यान्तरङ्गत्वं न युज्यत इति कैयटग्रन्थखण्डनमात्र एव तात्पर्येणादोषात्। अतो रोरितिसूत्रस्थभाष्योक्तदिशा तस्यान्तरङ्गत्वमस्त्येवेत्यन्यदेतत्। नन्वनुबद्धयत इत्यनुबन्ध इति व्युत्पत्त्या उकारपररेफस्य ग्रहणेन प्रातरत्रोतिव्यावृत्तावपि रुधातोरवारणमत आह। उकारेत्संज्ञकेति। सूत्रेऽनुनासिकोकारेण निर्देशादीदृशार्थलाभः। न चार्थवद्ग्रहणपरिभाषया अर्थवत एव रोर्ग्रहणाद्यशोऽत्रेत्यादावनर्थके उत्वं न स्यादिति वाच्यम्। इको गुणेतिनिर्देशेन तत्परिभाषाया अत्राप्रवृत्तेः॥

अशाब्दान्तद्वन्द्वेनेति। न चैवमल्पाच्तरमित्यकारस्य पूर्वनिपातापत्तिरिति वाच्यम्। पूर्वनिपातप्रकरणस्यानित्यत्वेनादोषात्। पूर्वरूपापत्तिरिति। अनुकार्यानुकरणयोर्भेदविवक्षायां पदत्वेन तत्प्राप्तिरिति भावः। मूलेऽसन्धिस्सौत्र इति। सूत्रे कृतस्सौत्रः। कृतलब्धक्रीतकुशला इत्यण्। न चात्र पक्षेऽप्यनुकरणश्चानितिपरमिति निपातत्वेनौदिति प्रगृह्यत्वे प्रकृतिभावेऽसन्धिर्न्याय्य एवेति वाच्यम्। अनुकरणमित्यादित्रिसूत्र्या अभिधानस्वाभाव्यात्कृञो योग एव प्रवृत्तेरन्यत्रोक्तत्वात्। न च प्राग्दीव्यतोऽणिति सूत्रस्थभाष्यप्रामाण्यादशास्त्रीयविकारेऽप्येकदेशविकृतन्यायप्रवृत्त्या तेन न्यायेन निपातैकदेशे भो इत्यादावनुकार्ये निपातत्वातिदेशे प्रकृतिवदनुकरणमित्यतिदेशेनानुकरणेऽपि निपातत्वात्प्रगृह्यत्वं सुलभमेवेति वाच्यम्। निपातत्वस्योक्तपरि-

**इदं प्राचामनुरोधेन । वस्तुनः सूत्रे रान्तानामेवानुकरणमसन्धिन्र्याय्य एवेति बोद्धव्यम् । न ह्ययमिति । इदमर्वाचामनुसारेण ।**

---

माणनिष्ठत्वेनैकदेशविकृतन्यायाप्रवृत्तेः । नन्वोकारान्तानुकरणेन भो इत्यादिपूर्वस्य रोरित्यर्थे विभोरिदं रघोरिदमित्यादावपि यत्वापत्तिः । अर्थवद्ग्रहणपरिभाषाया लक्षणप्रतिपदोक्तपरिभाषाया वा संचारे तु विभाषा भवादितिवार्त्तिकनिष्पन्नेष्वपि यत्वं न स्यादत आह । **इदमिति** । सिद्धान्तमाह । **वस्तुत इति** । अत्र पक्षेऽघोशब्दान्तद्वन्द्वे षष्ठ्यास्सौत्रो लुक् । भो इत्यादीनां त्रयाणामन्त्यस्य रोरपूर्वस्य च रोर्यत्वमित्यर्थः । **अर्वाचामनुरोधेनेति** । अनल्विधावित्यस्य स्थानिवद्भावप्रयोज्यः अल्मात्रवृत्तिस्तद्घटितो वा यो धर्मः तदाश्रये विधौ न स्थानिवदित्येवार्थं वदतां प्राचामनुरोधेनेत्यर्थः ॥

यत्त्वत्र वाराणसेयाः वस्तुतस्तु अनल्विधावित्यस्याद्यार्थास्वीकारेण मूलं सम्यगेव । धिन्वन्तीत्यादौ पञ्चमीसमासेन स्थानिवद्भावाद्यणः परनिमित्तकत्वेन बहिरङ्गत्वाद्वा न दोषः । एः अजः, यजः, तस्यापत्यमैयाजिरित्येव भवति, न तु याजिरितीति न तदर्थमपि तत्स्वीकारः । अल्त्वव्याप्येक्त्वावच्छिन्नस्थानितानिरूपितादेशताश्रयेकारधर्मिकारोपप्रकारीभूतपदान्तत्वस्य ऐजागमीयोद्देश्यतायाः साक्षादनवच्छेदकत्वेनाद्यार्थकानल्विधावित्यस्याप्राप्तेः । अत एव साम्नीत्यादौ स्थानिवद्भावेन द्विवचनत्वातिदेशात्प्रगृह्यत्वं सिध्यति । अन्यथाऽल्त्वव्याप्यौकारविभक्तित्वावच्छिन्नस्थानिताश्रयेकारधर्मिकारोपप्रकारीभूतद्विवचनत्वस्य प्रगृह्यसंज्ञोद्देश्यतायास्साक्षादवच्छेदकत्वेन स्थानिवत्त्वाप्राप्त्या द्विवचनत्वातिदेशासम्भवेन प्रगृह्यत्वं दुर्लभं स्यात् । न चाद्यार्थकानल्विधावित्यस्यास्वीकारे प्रकृतसूत्रस्थभाष्यविरोध इति वाच्यम् । हल्ङ्याबितिसूत्रस्थभाष्यविरोधेन, कृन्मेजन्त इति वार्तिकभाष्यविरोधेन, ग्रहोऽलिटीतिसूत्रस्थभाष्यविरोधेन चैतस्यैकदेश्युक्तित्वेनादोषात् । न च स्थानितायामल्त्वव्याप्यधर्मा-

वच्छिन्नत्वस्योद्देश्यतायां प्रकारीभूतधर्मेण साक्षादवच्छिन्नत्वस्य च निवेशा-न्नोक्तभाष्यविरोध इति वाच्यम्। तदुभयं निवेश्य निष्फलाद्यार्थकानल्विधा-विति स्वीकारापेक्षया तदुभयमनिवेश्यैतस्यैकदेश्युक्तित्वकल्पनाया एव ज्याय-स्त्वादित्याहुस्तन्न॥

धिन्वन्तीत्यादाविण्णिवृत्तेः फलस्य सत्त्वेन तदर्थस्य निष्फलत्वकथनस्या-युक्तत्वात्। पञ्चमीसमासेनात्र स्थानिवद्भावान्न दोष इति तु न युक्तम्। तेनापि स्वविधौ स्थानिवद्भावस्यानिष्टत्वात्। अन्यथा यन्निति शत्रन्तेन नञ्समासे अयन्नित्यत्र पूर्वस्मान्निमित्तत्वेनाश्रितादित्यर्थेऽपि नुडापत्तिः। धिन्व-न्तीत्यत्र स्थानिवद्भावप्रवृत्तावपीडागमदृष्ट्या यणः परनिमित्तकत्वेन बहिरङ्ग-त्वेनासिद्धत्वाददोष इति तदुक्तिरपि न युक्ता। अपरनिमित्तकमन्तरङ्गमिति स्वीकारे नुटस्तथात्वेन तद्दृष्ट्या दीर्घस्यासिद्धत्वेनामीति न्यासेपि नुट्प्रवृत्तेस्सुल-भतया तत्र न्यासे "कृते दीर्घे न नुड्भवे"दिति दोषप्रतिपादनपरभाष्यविरो-धापत्त्या तत्परिहारायापूर्वनिमित्तकत्वे सतीति विशेषणस्यावश्यकतया प्रकृतेऽप्य-ङ्गात्परस्य वलादेरित्यर्थे इटोऽन्तरङ्गत्वस्य वक्तुमशक्यत्वात्। प्राचीननयेऽङ्गसंज्ञा-द्यपेक्षणेनेट एव बहिरङ्गत्वाच्च। किञ्चापरनिमित्तकमन्तरङ्गमिति युगपत्प्राप्तौ पूर्वप्रवृत्तिनियामकमेव, ज्ञापकसाजात्यात्। एवञ्चात्रासिद्धत्वस्य प्रसक्तिरेव न। किञ्च भविष्यतीत्यादिसिद्धये इड्विषयेऽसिद्धपरिभाषा न प्रवर्तत इत्यन्यत्र स्पष्टतया न तयाऽत्र निर्वाहाशा कार्या। किञ्चाद्यार्थस्वीकारादेव इश्चाजश्च यजं, तस्यापत्यमित्यर्थे याजिरित्यत्र नय्वाभ्यामित्यस्याप्रवृत्तिः। यकारे पदान्तत्वस्य प्रकृतनिषेधेनानतिदेशात्। ऐयजिरित्येव तत्र भवतीत्यपि न युक्तम्। उद्देश्य-तायां साक्षादवच्छिन्नत्वनिवेशानावश्यकतायास्तन्निवेशस्य ग्रन्थकृदनभिप्रेतत्वस्य च स्थानिवत्सूत्रे निरूपितत्वेन निषेधाप्रवृत्तेर्वक्तुमशक्यत्वात्। ऐयजिरित्यादि-प्रयोगाणामनभिधानस्य हरदत्तेन सूचितत्वाच्च। किञ्च इधातोरेरच्यय इति

जाते तेन सुशब्दस्य समासे स्वयिकेत्यत्र सुनायिकेत्यादाविव धात्वन्तयकोरित्य-स्याप्रवृत्तिरप्याद्यार्थस्वीकारे फलम् । भोभगो इति सूत्रभाष्येण तत्र वैकल्पिकेत्व-प्रवृत्तेरिष्टत्वानुमानात् । आद्यार्थस्वीकारेपि हल्ङ्याबित्यादिसूत्रस्थभाष्यविरोधादेः स्थानिवत्सूत्रे परिहृतत्वेन विना विरोधं भोभगो इति सूत्रस्थभाष्यस्यैकदेश्युक्ति-त्वकथनमाद्यार्थस्य निष्फलत्वकथनञ्च नागेशवचनखण्डनदुराग्रहमूलकमेव । प्रपञ्चितश्चेदं स्थानिवत्सूत्रे गुरुप्रसादे गुरुचरणैरिति बोध्यम् ॥

यदप्याचार्याः, स्थानिवदादेश इत्यत्रोत्तरसूत्रानुरोधात्प्रायोगिकस्यैव स्थानिनो ग्रहणम् । तत्र णिलोपस्य स्थानिवद्भावाय प्रायोगिकस्य स्थानिनो ग्रहणात् । विशिष्टं ह्येषोऽनलमाश्रयते, इटं नामेति स्थानिवत्सूत्रभाष्ये एष इत्यनेन लोपः परामृश्यते । भोभगोअघो इति सूत्रस्थं भाष्यं, तदनुसारी स्थानिवत्सूत्रस्थः ग्रहोऽलिटि दीर्घ इत्यत्रेट एव स्थानित्वं नाच इति कैयटग्रन्थश्च प्रौढिवादेनैव प्रवृत्तम् । उक्तभाष्यादिविरोधात्, बहुलक्ष्यासिद्धेश्चेति वदन्तः, वारिणीत्यत्र द्विवचनत्वस्य स्थान्यल्वृत्तित्वेनादेशे तदलाभे प्रगृह्यत्वानापत्तिः । किञ्च ऋधातोः क्तप्रत्यये ऋत इद्धातोरितीत्वे हलि चेतिदीर्घः, वीगतीत्यत्र प्रश्लिष्टस्य गुणे उपेतीत्यत्र एङि पररूपमिति पररूपमादीद्ध्ये इत्यत्र एरनेकाच इति यण्, ऊवे इत्युत्तमपुरुषे उवङादेशश्च न स्यात् । धातुत्वप्रत्ययत्वादीनां स्थान्यल्वृत्ति-त्वात् । किञ्च राजेत्यादौ नित्यत्वाद्धल्ङ्यादिलोपे दीर्घानापत्तिः । एवं दीर्घाहो निदाघेत्यत्र हल्ङ्यादिलोपे रुत्वापत्तिरिति च दोषाभासानाहुः ॥

अत्रेदं चिन्त्यम् । प्रायोगिकस्यैव स्थानिनो ग्रहणेऽत्रातिप्रसङ्गसत्त्वेन सूत्रोपात्तस्य तस्य ग्रहणे तद्वारणेन च विपरीतलेखनं किंमूलकमिति । अथा-द्यार्थस्वीकारे प्रागुक्तेष्वतिप्रसङ्ग इति तदाशयः, तथापि तदयुक्तमेव । औङित्यस्य संज्ञात्वमनङ्गीकृत्य साम आकमित्यत्र सकारोच्चारणेन साम्त्वस्य स्थानिता-वच्छेदकत्ववदत्र ङकारोच्चारणेनौङ्क्त्वस्यैव स्थानितावच्छेदकत्वस्वीकारेण

तस्य चौङ्यपि सत्त्वेनाल्त्वव्याप्यत्वाभावादनल्विधावित्यस्याप्राप्त्या वारिणी-त्यत्र दोषाभावात् । अदिदित्यादौ तकारविरहितस्यैव बोधकताया उच्चारणार्थ-कवर्णघटितनिर्देशे सूत्रोपात्तरूपस्य स्थानितावच्छेदकत्वस्यैवैतन्निषेधोपयोगित्वा-ङ्गीकारेणेत्वस्थानिताया अनल्वृत्तिधर्मेण ऋत्वेनावच्छिन्नतयाऽनल्विधावित्यस्या-प्राप्त्या ईर्णमित्यत्रापि दोषाभावात् । गुणविधावङ्गत्वस्य एत्वविधौ टित्वस्यैव च स्थानितावच्छेदकत्वेन तस्य चाल्त्वव्याप्यत्वाभावेनानल्विधावित्यस्या-प्राप्त्या धातुत्वप्रत्ययत्वादीनामतिदेशेन सुलभतया नोपेतीत्यत्र पररूपानापत्तिः, नाप्यूवे, आदीध्ये, इत्यादावुवङाद्यनापत्तिः । हल्ङ्यादिसूत्रेऽपि सुत्वादीनामेव स्थानितावच्छेदकतया राजेत्यादावपि न दोषः । एवञ्चाद्यार्थस्वीकारेऽपि दोषा-भावेन धिन्वन्तीत्याद्यर्थं तस्यावश्यकत्वेन भोभगो इति सूत्रस्थभाष्यसम्मतत्वेन च तदाश्रयणीयमेवेति विभावनीयम् ॥

वस्तुतस्त्वनल्विधावित्यस्य स्थानिसम्बन्धी योऽल् तन्मात्रवृत्तिर्यो धर्मः तद्घटितधर्माश्रये विधौ न स्थानिवदित्येक एवार्थः । अल एव स्थानित्वे तु तत्र स्थानिसम्बन्धित्वं व्यपदेशिवद्भावेन । स्पष्टं चेदं स्थानिवत्सूत्रे उद्योते । अर्थभेदव्यवहारस्तु व्यपदेशिवद्भावलम्भ्यार्थं पृथक्कृत्यैव प्रवृत्तः । तन्मात्रवृत्ति-रित्यस्य तद्वृत्तिस्तदितरावृत्तिरित्यर्थः। तदितरश्च तद्घटितप्रकृतस्थान्येव विवक्षितः। स्थानिसम्बन्धित्वं व्यपदेशिवद्भवातिदिष्टमपि गृह्यते । तद्घटितप्रकृतस्थानीत्यत्र तद्घटितत्वं तु व्यपदेशिवद्भावानतिदिष्टमेव ग्राह्यम् । भोभगो इति सूत्रस्थभाष्य-प्रामाण्यात् । एवञ्च धिन्वन्तीत्यादौ स्थानिसम्बन्धी योऽल्व्यपदेशिवद्भावेनो-कारः तद्वृत्तिधर्म आर्धधातुकत्वरूपः, स च स्थान्यलुकारेतरतद्घटितस्थानिनो-ऽभावात्तन्निरूपितवृत्तित्वस्य सुतरामभावात्स्थान्यलितरतद्घटितप्रकृतस्थानि-निरूपितवृत्तित्वाभाववाञ्जातः । तद्घटितो धर्मः व्यपदेशिवद्भावेन तदेवार्धधातु-कत्वं तदाश्रयत्वादिटो न स्थानिवत्त्वमितीष्टं सिद्धम् । प्रपञ्चितं चेदं स्थानि-

**भाष्ये तु रेफस्य विसर्गस्थानित्वेन तद्वृत्तिरुत्वाश्रयमपीदमल्विधिरेव । स्थान्यल्वृत्तिधर्माश्रयत्वात् । अग्रहीदित्यत्र च दीर्घे लोपे च इट्त्वेनैव निवेश इति विशेषः । अतः पयःस्वित्यादौ दोषः । तत्र हि 'रोः सुपि' इति विसर्गः । नियमशास्त्राणि च विधायकान्येव वाच्यवृत्त्या । आर्थिकार्थमादाय तु निषेधकानीति । तत्रापि रो रेफस्य विसर्ग इत्यर्थे त्वरुग्रहणं व्यर्थमित्युक्तम् । नन्वेवं हे रामेत्यादौ संबुद्ध्यवयवस्य हलः सस्य लोपे तद्वृत्तिसुप्त्वस्याल्धर्मत्वेन स्थानिवत्त्वाभावे पदत्वासिद्धिरिति चेन्न । आनुमानिकादेशस्य**

---

वत्सूत्रे गुरुप्रसादे । नन्वेवमतिदिदिक्षितधर्मेऽल्मात्रवृत्तित्वनिवेशस्यात्रापि मते सत्त्वेन प्राचीनमतादस्यावैलक्षण्येन, इदमर्वाचामनुरोधेन, इत्युक्त्वा भाष्ये त्वित्यादिनाऽस्य मतस्यान्यादृशत्वप्रतिपादनमसङ्गतं स्यादिति चेन्न । प्राचीननये स्थानिसम्बन्धित्वं व्यपदेशिवद्भावानतिदिष्टमेव । अत्र तु व्यपदेशिवद्भावेनातिदिष्टमपीति भेदस्य सत्त्वेन तस्य युक्तत्वात् । भोभगो इति सूत्रस्थं भाष्यमप्यत्रैव गमकम् । यद्वा प्राचीननये तन्मात्रवृत्तिरित्यत्र तदितरशब्देन तद्घटितप्रकृतस्थानिन एव ग्रहणमिति नियमाभावः । अत्र तु भाष्यप्रामाण्यात्तस्यैव ग्रहणमित्यपि तयोर्भेदो वक्तुं शक्य इति बोध्यम् । सिद्धान्तमाह । **भाष्ये त्वित्यादिना । स्थान्यल्वृत्तिधर्माश्रयत्वादिति** । अल्त्वव्याप्यधर्मावच्छिन्नस्थानितानिरूपितादेशताश्रयेऽतिदिदिक्षितो यो धर्मस्तदाश्रयत्वादित्यर्थः । **एवमिति** । अतिदिदिक्षितधर्मस्याल्मात्रवृत्तित्व इवैतद्भाष्यप्रामाण्यात्सूत्रोपात्तस्य स्थानिनोऽल्रूपत्वेऽप्यनल्विधाविति निषेधप्रवृत्त्यभ्युपगम इत्यर्थः । **अल्धर्मत्वेनेति** । स्थानिरूपो योऽल् तद्वृत्तिधर्मत्वेनेत्यर्थः । एङ्ह्रस्वादिति सूत्रे हल एव स्थानित्वादिति भावः । **पदत्वासिद्धिरिति** । पदत्वाभावे च 'हे राम पाहि मामित्यादौ पाहीत्यस्य पदात्परत्वाभावेन तिङतिङ इति

**रामेत्यस्य स्थानिवद्भावेन सुबन्तत्वस्य तत्प्रयुक्तकार्यस्य वा लाभेन तत्सिद्धेः । प्रत्ययलक्षणेनापि न प्रत्ययवृत्तिधर्मलाभः । लक्षणपदो-**

---

निघातो न स्यादिति भावः। न च रामेत्यस्याविद्यमानवद्भावेन हेशब्दमेवाश्रित्य निघातोऽस्त्विति वाच्यम्। पदसंज्ञाया इवामन्त्रितसंज्ञाया अप्यनल्विधाविति निषेधादप्रवृत्तावविद्यमानवद्भावस्याप्रवृत्तेः। स्थानिवत्सूत्रेण तत्तन्निमित्तरूपकार्य व्यवहार एवातिदिश्यत इति पक्षेणाह। **सुबन्तत्वस्येति**। प्रधानकार्यस्यैव तेनातिदेश इति मतानुसारेणाह। **तत्प्रयुक्तकार्यस्य वेति**। न च सुबन्त-त्वस्य स्थानिसम्बन्ध्यल्वृत्तिधर्मघटितधर्मत्वेनानुमानिकस्थानिवद्भावेपि न सुबन्तत्वलाभ इति वाच्यम्। सुप्त्वस्य स्थानिसम्बन्ध्यल्वृत्तित्वेऽपि तन्मात्र-वृत्तित्वाभावेन सुबन्तत्वस्याल्मात्रवृत्तिधर्मघटितधर्मत्वाभावादनल्विधावित्यस्या-प्रवृत्तावादेशे तस्य सुलभत्वात्। **तत्सिद्धेरिति**। पदसंज्ञासिद्धेरित्यर्थः॥

यत्त्वत्रवाराणसेयाः, वस्तुतस्तु अल्त्वव्याप्यहल्त्वावच्छिन्नस्थानितानिरूपि-तादेशताश्रयलोपधर्मिकारोपप्रकारीभूतसुप्त्वस्य पदसंज्ञीयोद्देश्यतायास्साक्षादनव-च्छेदकत्वेनानल्विधावित्यस्याप्राप्त्या श्रौतादेशे श्रौतस्थानिवृत्तिसुप्त्वस्य स्थानि-वद्भावेन सुलभतयाऽनुमानिकस्थान्यादेशभावकल्पनापर्यन्तमनुधावनं वृथेति वदन्ति, तदसत्। साक्षादवच्छिन्नत्वनिवेशे फलाभावस्य नागेशानभिप्रेतत्वस्य च प्रागुपदर्शितत्वेन श्रौतस्थान्यादेशभावस्य प्रकृते वक्तुमशक्यत्वात्॥

नन्वनल्विधावित्युक्तेः श्रौतस्थानिवद्भावस्याप्रवृत्तावपि प्रत्ययलक्षणेन सुप्त्वातिदेशः कुतो न? वर्णाश्रये नास्ति प्रत्ययलक्षणमिति निषेधस्य वर्ण-मात्रवृत्तिधर्मातिदेश एव प्रवृत्तेरित्यत आह। **प्रत्ययलक्षणेनापीति**। मध्य-मणिन्यायेनास्योभयत्रान्वयः। पूर्वान्वयित्वे निपातानामनेकार्थत्वादपिशब्दो विकल्पार्थकः। आनुमानिकस्थानिवद्भावेन प्रत्ययलक्षणेन वा सुबन्तत्वस्य तत्प्रयु-क्तकार्यस्य वा लाभ इति भावः। परान्वयित्वे त्वपिरुक्तार्थसमुच्चायकः। **प्रत्यय-**

पादानेन प्रत्ययनिमित्तककार्यस्य तन्निमित्तकव्यवहारस्य वाऽतिदे-

---

**वृत्तिधर्मलाभ इति** । तन्मात्रवृत्तिधर्मलाभ इत्यर्थः । स्थानिवद्भावेन प्रत्ययलक्षणेन वा प्रत्ययमात्रवृत्तिधर्मस्य सुप्त्वस्यातिदेशः कर्तुमशक्य इति भावः । स्थानिवद्भावेन तदनतिदेशे हेतुरुक्तः । प्रत्ययलक्षणेन तदनतिदेशे बीजमाह । **लक्षणपदोपादानेनेति** । **प्रत्ययनिमित्तककार्यस्येति** । पद-संज्ञाया इत्यर्थः । न च प्रत्ययस्य पदसंज्ञाकार्यकोटौ प्रवेशेन कथं तस्याः प्रत्ययनिमित्तत्वं, कार्यमनुभवन्निति निषेधादिति वाच्यम् । कार्यानुभवकर्तुरेव कार्यिणो निमित्तत्वाभावस्य परिभाषया लाभादत्र प्रत्ययस्य पदसंज्ञारूपकार्यानु-भावाभावेन निमित्तत्वे बाधकाभावात् । अत एव न लुमताङ्गस्येति सूत्रे लुप्तप्रत्यये परतो यः पूर्व इति विशेषणदानेन लुप्तप्रत्ययविशिष्टोद्देश्यककार्येष्वे-तन्निषेधाप्रवृत्तौ पञ्चेत्यत्र प्रत्ययलक्षणेन पदसंज्ञा सिध्यतीति वक्ष्यमाणं संग-च्छते । एतेनैतत्प्रतीकमुपादाय प्रकृतिसम्बन्धिन इति शेषः । अत एव नख-निर्भिन्न इत्यादावैत्त्व । तथा च पदसंज्ञायाः प्रकृतिप्रत्ययोभयसम्बन्धित्वेन न प्रत्ययलक्षणसाध्यत्वमित्यर्थः । प्रत्ययस्य कार्यकोटौ प्रवेशेन पदसंज्ञानिमित्त-त्वाभावादिति व्याचक्षाणा आचार्याः परास्ताः । शास्त्रातिदेशपक्ष आह । **तन्निमित्तकव्यवहारस्येति** । स चाशास्त्रीयोऽपि, संकोचे मानाभावाद्दोषा-भावाच्च । एवञ्च सुबन्तत्वादिकं प्रत्ययलक्षणेनातिदेष्टुं शक्यमेवेति भावः । इदञ्च नखनिर्भिन्न इत्यादावैत्त्वादिवारणाय प्रत्ययलोप इति सूत्रे लक्षणपदस्या-वश्यकत्वं वदतां केषांचिन्मतेन। वस्तुतस्तु नखनिर्भिन्न इत्यादौ प्रत्ययलक्षणेना-हार्यभिस्बुद्धावप्युच्चारणप्रसङ्गरूपस्थानषष्ठ्यर्थाभावादैसोऽप्राप्त्या लक्षणपदमना-वश्यकमेवेति प्रत्ययलोप इतिसूत्रे वक्ष्यमाणतया सुप्त्वादिकमपि प्रत्ययलक्षणे-नातिदेष्टुं शक्यमेवेति बोध्यम् । तुष्यतु दुर्जन इति न्यायेन एङ्ह्रस्वादित्यत्रेव हल्ङ्याबित्यत्रापि हल एव स्थानित्वमिति वदतां मतमभ्युपेत्य तद्विषये

**शात्। एवं दीर्घाहो निदाघेत्यादौ हल्ङ्यादिलोपे उक्तरीत्या स्थानिनि जायमानस्याऽसुपीति रत्वनिषेधस्यादेशे दीर्घाहन्शब्देऽतिदेशेन प्रवृत्त्या न रेफ इति दिक्। तेषां रोरिति। इदञ्च निपातानास्थाय 'विभाषा भवत्' इति वार्त्तिकं प्रत्याचक्षाणस्य वृत्तिकृतो मतेन।**

---

प्रसक्तमतिप्रसङ्गं वारयति। एवमिति। हे रामेत्यादाविवेत्यर्थः। उक्तरीत्येति। आनुमानिकस्थानिवद्भावेनेत्यर्थः। दिगिति॥

तदर्थस्तु अनल्विधावित्यस्याल्त्वव्याप्यधर्मावच्छिन्नस्थानितानिरूपितादेशताश्रयेऽतिदिदिक्षितो यो धर्मः तद्धर्माश्रये विधौ न स्थानिवदित्यर्थाद्धल्ङ्याबित्यनेन सुतिसिरूपस्यैव हलो लोपविधानेन लोपस्थानिताया सुत्वादिनैवावच्छिन्नतयाऽनल्विधाविति निषेधाप्रवृत्तौ श्रौतस्थानिवद्भावेनाप्यत्र दोषो वारयितुं शक्य इति। आनुमानिकस्थानिवद्भावेन दीर्घाहो निदाघेत्यत्राप्यतिप्रसङ्गवारणन्तूपायान्तरपरमित्यवधेयम्॥

भट्टास्तु। एवमिति। यथाग्रहीदित्यत्रेट्त्वेन स्थानितेति तद्वृत्तीट्त्वातिदेशात्सलोपस्तथेत्यर्थः। उक्तरीत्येति। अनल्निष्ठधर्मत्वेन सुत्वादिनेत्यर्थः। हलिति सुतिसीनां विशेषणमिति भावः। उक्तरीत्या यः स्थानी तत्रेत्यन्वयः, स्थानिनि सकारे जायमानस्य सावपि पदमिति पक्षे प्राप्तरत्वाभावाय प्रवर्तमानस्य रत्वनिषेधस्यादेशे लोपे परतः अतिदेशेन प्रवृत्त्या दीर्घाहन्शब्दे न रेफ इति योजना। आदेश इति तु नोत्तरेण समानाधिकरण"मित्यमुं ग्रन्थं योजयन्ति। परन्त्वेषा योजना एवमित्यक्षरस्वारस्याननुगुणमिति सुधियो विभावयन्तु॥

**वृत्तिकृतो मतेनेति।** तेन हि भोसित्यादीनां चादेराकृतिगणत्वात्तत्रान्तर्भावं कृत्वा निपातत्वमभिहितम्। वार्तिकसत्त्वे तु भाष्योक्तदिशा विभ-

**परे तु तेषामपि रोरित्यर्थः । अपिना 'विभाषा भवद्भगवदघवतामो-च्चावस्य' इतिवार्त्तिकनिष्पन्नसङ्ग्रहः । एषामन्त्यस्य रुः स्याद्वस्य चौकारः संबुद्धाविति तदर्थः । अवग्रहणसामर्थ्यात् 'अलोऽन्त्यस्य' इति नेति बोद्धव्यम् । वार्त्तिकनिष्पन्नानां त्रयाणां भोश्शब्दनिपातस्य चावश्यकत्वमन्यत्र स्पष्टमित्याहुः ॥**

---

क्त्यन्तप्रतिरूपकत्वेनैव निपातत्वे सिद्धे तदसङ्गतिः । अतो वार्तिकमनावश्यक-मेवेति तदाशय इति भावः । विभाषा भवदिति वार्तिकमारम्भणीयमेवेति भाष्यकृन्मये मूलं योजयति । **परे त्वित्यादिना । एषामन्त्यस्येति** । मतु-वसोरिति सूत्रेऽस्य पाठात्तत्रेवात्राप्यलोन्त्यपरिभाषाप्रवृत्तिः स्यादत आह । **अवग्रहणसामर्थ्यादिति** । नानर्थक इति परिभाषा तु नास्त्येवेति न तयात्र निर्वाह इति भावः । **अन्यत्रेति** । मनोरमायामित्यर्थः । अनेनारुचिस्सूचिता । तद्वीजन्तु भो हरिहरौ, भो विद्वद्वृन्द, भो गङ्ग इत्याद्यर्थं भोसितिनिपातस्या-वश्यमाश्रयणीयतया तस्यापि सम्बोधनान्तभवदादिसमानार्थकत्वात्सम्बोधन-विभक्त्यन्तत्वेन तेनैवामन्त्रितकार्यसिद्धिः । निपातोप्ययं भवच्छब्दसमानार्थ एवेति हे भो इत्यस्यापि नासङ्गतिः । इतराभ्योऽपि दृश्यन्त इत्यनेन विहित-योस्त्रतसोर्भवदादियोग एवेष्टत्वेऽप्यादिपदेन निपातभोश्शब्दस्यापि ग्रहणात्तत्र भो इत्यादेरपि निपातेनैव सिद्ध्या विभाषा भवदिति वार्तिके भवच्छब्दग्रहणस्य नोपयोग इति । ध्वनितश्चेदं शब्दरत्ने ॥

भट्टास्तु निपातभोश्शब्देनैव सर्वेषां फलानामन्यथासिद्धिं प्रदर्श्य द्वयो-रेवावश्यकत्वमुक्तं शब्दरत्ने । तत्कथमुच्यते त्रयाणामावश्यकत्वमितीत्याशङ्क्य वार्तिकविहितस्यौकारस्यासिद्धत्वेन रोस्त्वाश्रयात्सिद्धत्वेनातः पररोस्सत्त्वेनोत्वे ओत्वस्यासिद्धत्वेनातः परत्वादाद्गुणे पूर्वरूपे भोऽच्युतेत्यादेस्सिद्धिर्वार्तिकनिष्प-न्नसम्बोधनान्तभोश्शब्दाङ्गीकारे फलमिति वदन्ति । अत्रेदं चिन्त्यम् । रुत्वौ-

**व्योर्लघु ॥ यद्यपि वर्णसमाम्नाये यस्य प्राथम्यात् यवोरित्युचितं, तथापि 'लोपो व्योः' इतिलोपवारणाय सौत्रत्वमाश्रयणीयं स्यात्, अतो व्योरित्युक्तम् । लघुतरः प्रयत्नो यस्योच्चारणे स लघुप्रयत्नतरः । अन्यपदार्थसम्बन्धोत्तरं वर्त्तिपदार्थप्रकर्षविवक्षया साधुः । प्रयत्ने लघुतरत्वं चैषां शैथिल्यजनकत्वमेव । लघूच्चारणाविति । लघुतरोच्चारणावित्यर्थः । सूत्रे सौत्रत्वादेकवच-**

---

कारयोरसन्नियोगशिष्टत्वेन पूर्वत्रासिद्धमित्यसिद्धत्वेनौकारेऽप्रवृत्तत्वज्ञाने सन्नियोगशिष्टन्यायेन रुत्वेऽप्याहार्यतद्बुद्धौ कथमुत्वादिप्रवृत्तिरिति ॥

ननु वर्तिपदार्थस्यान्यपदार्थेन प्रकर्षेण च युगपदन्वयविवक्षायां परत्वात्तरपि ततो बहुव्रीहौ लघुतरप्रयत्न इति स्यादत आह । **अन्यपदार्थसम्बन्धोत्तरमिति** । तथा च वार्तिकं "पूर्वपदार्थातिशये आतिशायनिकाद्बहुव्रीहिस्सूक्ष्मवस्त्रतराद्यर्थ" इति । अत्र बहुव्रीहिरित्यस्य पूर्वविप्रतिषेधेनेति शेषः । लघुप्रयत्नतर इति निर्देश एवात्र मानमिति बोध्यम् । **वर्तिपदार्थप्रकर्षविवक्षयेति** । न च वर्तिपदार्थस्यान्यपदार्थविशेषणत्वात्कथं तत्र प्रकर्षयोग इति वाच्यम् । शुक्लतरः पट इत्यादौ विशेषणप्रकर्षबोधकस्य तरपो बहुषु दृष्टत्वात् । अवयवार्थगतप्रकर्षविवक्षायामपि समुदायादेव प्रत्ययो, नावयवात् । एकार्थीभावबलेन ततस्तदनुत्पत्तेः । **एषामिति** । जिह्वाग्रादीनामित्यर्थः । **शैथिल्यजनकत्वमेवेति** । एतज्जनकयत्नस्य लघुत्वेऽनयोरुच्चारणे जिह्वाग्रादीनि शिथिलानि भवन्तीति भावः । यत्त्वनेन सूत्रेण पादमात्रकयोरेव विधानमिति वाराणसेयास्तन्न । मानाभावात् । ननु मूले लघूच्चारणौ वयौ वा स्त, इति वृत्तिरयुक्ता, सूत्रे विधेये द्विवचनाभावादत आह । **सौत्रत्वादिति** । अन्यथा भोभगो इति सूत्राद्य इत्यस्यानुवृत्त्या द्वयोरप्येको यकार एव लघुप्रयत्न आदेशः स्यात् । इदानीं तु द्वित्वसंख्याविशिष्टयोर्विधेयत्वलाभेनानन्विता-

नम् । वकारोदाहरणम् "असावादित्य" इति वृत्तिः ॥

ओतो ॥ व्योरित्यत्र यकारसाहचर्याद्वकारोऽपि धात्वनवयव एव । अत्राप्यर्थाधिकारात्तथैव । तेन स्मृतोवच्युतेत्यादौ न दोषः—तदाह । यस्येति । तादृशवस्यासम्भवादिति भावः । भोभगो इति तु नानुवर्त्तते, विच्छेदात्—तद्ध्वनयन्वक्ष्यति 'पदान्तस्य किं,

---

र्थकत्वाद्य इत्यस्याननुवृत्तावान्तरतम्याद्यकारस्य यकारः वकारस्य च वकार आदेशस्सिद्ध्यतीति भावः । वृत्तिरिति । अत्रारुचिबीजन्तु रोरित्यनुवर्त्य रोः स्थाने यौ व्यौ तयोरित्यर्थेनात्राप्राप्तिरेवेति । अत्र सूत्रे वग्रहणन्तु लोपश्शाकल्यस्येत्युत्तरार्थमेव । अत एव हरयिह विष्णविहेत्यादावस्य सूत्रस्य नोल्लेख इति बोध्यम् ॥

यकारसाहचर्यादिति । तत्र सूत्रे भोभगो इत्यादेरनुवृत्त्या तत्पूर्वस्य धात्वनवयवस्यैव यकारस्य सम्भवेन तत्साहचर्यादपूर्वस्यापि तादृशस्यैव तत्र ग्रहणं, तत्साहचर्याद्वकारस्यापि तत्र धात्वनवयवस्यैव ग्रहणमिति भावः । एतेन त्वमचका यत्रेत्यादौ सस्य रुत्वे यत्वे धात्ववयवस्यापि यस्य सम्भवाच्चिन्त्यमिदमिति भट्टोक्तमेव चिन्त्यमिति बोध्यम् । स्मृतोवच्युतेति । स्मृतः उः शम्भुः येन सः स्मृतोः, स्मृतां वाति गच्छतीति स्मृतोवाः, तमाचक्षाण इत्यर्थे ण्यन्तात्क्विपि अच्युतशब्देन योग इति भावः । वस्यासम्भवादिति । एवञ्चात्र वकारग्रहणानुवृत्तावपि धात्वनवयवस्यैव तस्य ग्रहणीयतया तादृशस्यौकारात्परस्यासम्भवेनात्र तन्नानुवर्तत एवेति उत्तरार्थमनुवृत्तमप्यसम्भवादत्र न सम्बध्यत इति वा वाच्यमिति भावः । विच्छेदादिति । लोपश्शाकल्यस्येत्यत्राननुवृत्तेरिति भावः । तत्र हि शाकल्यस्येत्युक्त्या तन्मत एव लोप इत्यर्थलाभेन भो इत्यादिपूर्वस्य तु गार्ग्यमतेपि लोपसत्त्वेन वाच्यार्थविरोधान्न तत्सम्बन्ध इति

तोयम्' इति । इदं लघुप्रयत्नयोर्न, गार्ग्यश्रुतेः—तदाह । अलघुप्रयत्नस्येति । पूजार्थमिति । व्याख्यानादिति भावः । तादृशश्च भोसादिपूर्वक एवेत्याशयेनाह । भो अच्युतेति । भाष्यानुसारिणस्तु भो इत्याद्यनुवृत्तेः स्मृतोवित्यादौ न दोषः । तस्यानभिधानाच्च ।

---

भावः । गार्ग्यश्रुतेरिति । शाकटायनमत एव तयोर्विधानाद्गार्ग्यमते तयोरभावादिति भावः । व्याख्यानादिति । भो इत्याद्यनुवृत्त्या लोपश्शाकल्यस्येत्यनेनैव सिद्धे "ओकाराल्लोपवचनं नित्यार्थ"मिति भाष्यरूपादित्यर्थः । तादृशश्चेति । ओकारात्परपदान्तयकार इत्यर्थः । ननु उ इतीत्यत्र उञ इति प्रगृह्यत्वविकल्पात्पक्षे यणि मिथो वितीत्यादावोकारात्परस्यधात्ववयवस्य पदान्तस्य वकारस्य सम्भवात्तदनुवृत्तिः स्यादेवेत्यत आह । भाष्यानुसारिणस्त्विति । अयं भावः । प्रकृतसूत्रे भाष्ये किमर्थमिदमुच्यते, न लोपश्शाकल्यस्येत्येव सिद्धम् इत्याशङ्क्य ओकाराल्लोपवचनं नित्यार्थम्, ओकाराल्लोपवचनं क्रियते, किमर्थं, नित्यार्थम्, नित्यार्थोऽयमारम्भ इति समाहितम् । लोपश्शाकल्यस्येत्यत्र भोभगो इत्यादेरननुवृत्तावेतत्सूत्रविषये तस्य प्राप्तेरेवाभावेन तेन गतार्थत्वशङ्कायाः, नित्यार्थोऽयमारम्भ इति समाधानस्य चासङ्गत्यापत्तिः । अतः पूर्वसूत्रे भोभगो इत्याद्यनुवर्तत एव । तथा च पूर्वत्र हलि सर्वेषामित्युत्तरत्र च भो इत्याद्यनुवृत्तेर्भाष्यसम्मतत्वेनात्र तदननुवृत्तौ मानाभावेनात्रापि तदनुवृत्तिः । तत्र भोभगोअघोपूर्वत्वे लोपश्शाकल्यस्येति विकल्पं बाधित्वाऽत्र सूत्रे गार्ग्यग्रहणस्य पूजार्थत्वादनेन नित्ये लोपे पारिशेष्यादपूर्वयोरेव तेन लोपो भवतीति तत्र सूत्रेऽवर्णपूर्वयोरिति वृत्तिः परिशेषार्थकथनपरैवेति ॥

न दोष इति । एवञ्चैतद्दोषवारणाय साहचर्यादिकमनावश्यकमेवेति भावः । इदञ्च तेषामभिधानमङ्गीकृत्योक्तम् । वस्तुतस्तेषामनभिधानमेवेत्याह । अनभिधानाच्चेति । न पदान्ता हलोऽणस्सन्तीति लण्सूत्रस्थभाष्यादिति भावः ॥

अपूर्वस्येति तु ओत इत्यनेन विरोधान्न सम्बध्यते । 'लोपः शाकल्यस्य' इत्येव भोभगो इत्याद्यनुवृत्त्या सिद्धे नित्यत्वार्थमिदमित्याहुः ॥

उञि च ॥ भोइत्यादिपूर्वस्य पूर्वेण सिद्धेराह—अवर्णपूर्वयोरिति । एतदपि नित्यमेव । अत्रापि गार्ग्यग्रहणानुवृत्त्याऽलघुप्रयत्नस्यैव लोपः । एतेन भोइत्यादिपूर्वे लघुप्रयत्नलोपार्थमत्रापि तदनुवृत्तिरित्यपास्तम् । वकारोदाहरणन्तु 'असा उ एकाग्निः' इति वृत्तिः । उत्तरार्थमिति । 'ङमो ह्रस्वादचि' इत्यर्थमित्यर्थः । एतत्तत्रैव निरूपितम् । 'हलि सर्वेषाम्' इत्यादौ तु न सम्बद्ध्यते, व्यवहिते ङम इत्यत्रैव प्रयोजनकथनपरभाष्यप्रामाण्यात् । अत एव 'लिट्त्सु' इत्यादौ धुडादयः । अन्यथा सादौ पदे इत्यर्थान्न स्युः । अत एव

---

पूर्वेण सिद्धेरिति । तथा चात्र सूत्रे भो इत्यादेरनुवृत्तावपि फलाभावादसम्बन्ध इति भावः । नित्यमेवेति । अन्यथा लोपश्शाकल्यस्येत्यनेनैव सिद्धे इदं व्यर्थमेवेति भावः । एतेनेति । गार्ग्यग्रहणानुवृत्त्याऽलघुप्रयत्नस्यैवानेनापि लोपविधानेनेत्यर्थः । वृत्तिरिति । अत्रारुचिबीजन्तु हलि सर्वेषामित्यत्र रोरित्यनुवृत्तेर्भोभगो इति सूत्रे उद्योते उक्तत्वेन मध्येऽत्रापि तत्सम्बन्धाद्रुस्थानिकयोरेव लोपविधानादत्राप्राप्तिरेवेति । पदे किम्, तन्त्रयुतमित्यादिप्रकृतसूत्रस्थं भाष्यन्तु रुग्रहणाननुवृत्तावप्यत्र पद इत्यस्यानावश्यकत्वप्रतिपादनपरमेवेति बोद्धव्यम् । ननूत्तरार्थं पदग्रहणमिति भाष्येणान्यत्रापि तत्सम्बन्धलाभान्ङमो ह्रस्वादचीत्यर्थमिति विवरणमयुक्तमत आह । हलि सर्वेषामिति । मध्ये तदसम्बन्धे मानमाह । व्यवहित इति । अत एवेति । मध्येऽसम्बन्धादेवेत्यर्थः ॥

'माभ्याम्' इत्यादौ 'हलि सर्वेषाम्' इति लोपसिद्धिरिति दिक् ॥

हलि स ॥ भोभगो इत्याद्यनुवर्त्तते । तत्रौकारात्परस्य लघूच्चारणस्यैवानेन लोपः । अलघूच्चारणस्य तु 'ओत' इत्येव सिद्धम् । अपूर्वे तूभयोरपि । न चापूर्वालघुप्रयत्ने अस्यासिद्धत्वात् 'लोपः शाकल्यस्य' इति प्राप्नोतीति वाच्यम् । लघुप्रयत्नस्यैवानेन लोपे व्योरिति सूत्रेऽचीति करणेन हलि विधानाभावेनैव सिद्धावस्य सूत्रस्य वैयर्थ्यापत्त्या तद्बाधात् । न चालघुप्रयत्नयोरेव लोपः स्यात्, व्योरित्यर्थाधिकारादिति वाच्यम् । ऋषिमात्रग्रहणार्थस्य सर्वेषा-

---

उभयोरपीति । शाकटायनमतेऽस्यासिद्धत्वात् व्योर्लघुरित्यनेनादेशे तदुत्तरं लघूच्चारणस्य, मतान्तरेऽलघूच्चारणस्य च द्वयोरपि लोप इत्याशयः । न चात्र सूत्रे सर्वेषांग्रहणेन शाकटायनमतेऽपि लोपस्य बोधनात्तस्य च निरवकाशत्वे-नादेशबाधकतया शाकटायनमतेऽप्यलघूच्चारणस्यैव लोपेनेदमयुक्तमेवेति वाच्यम् । असम्भव एव बाधकत्वमिति वार्तिकमते हलि सर्वेषामित्यस्योत्सर्गशास्त्रप्रवृत्त्युत्तरं चारितार्थ्येन बाधकत्वायोग इत्याशयात् । असिद्धत्वादिति । अप्राप्तत्वा-दित्यर्थः । भो इत्यादिपूर्वस्य लघूच्चारणस्यैवानेन लोपविधानात्तत्साहचर्येणा-पूर्वस्यापि लघूच्चारणस्यैव लोपः । एवञ्चालघुप्रयत्नेऽस्याप्राप्तत्वाल्लोपश्शाकल्य-स्येति प्राप्नोतीति भावः । एतेनास्यासिद्धत्वाल्लोपश्शाकल्यस्येत्यस्य प्रवृत्तावपि तदभावेऽनेन लोपे न कोऽपि दोष इतीयं शङ्का निर्दलेत्यपास्तम् । अचीति करणेनेति । मोऽनुस्वार इत्यत्र हलीति कर्तव्यम् । सर्वेषां ग्रहणं योगविभागश्च मास्त्वित्याशयः । तद्बाधादिति । एतत्सूत्रसामर्थ्यादपूर्वालघुप्रयत्ने साहचर्य-प्रयुक्तलोपाप्राप्तेर्बाधादित्यर्थः । एवञ्चापूर्वालघुप्रयत्ने लोपश्शाकल्यस्येत्यस्य प्रवृत्तावपि तदभावेऽनेन लोपे न कोऽपि दोष इति भावः । अलघुप्रयत्न-योरेवेति । तथा च भो इत्यादिपूर्वस्यौत इत्यनेनैव सिद्धत्वादपूर्वालघुप्रयत्न

मित्यस्य वैयर्थ्यापत्तेः । विकल्पस्य विच्छिन्नत्वेन नित्यत्वसिद्धेः । अत्र च यकार एवानुवर्त्तते, न वकारः, वृत्तौ तथैवोक्तेः, फलाभावात्, अव्यपरे इत्यादिनिर्देशाच्च । अन्यथा तत्र सौत्रत्वान्नाश्रयणीयं स्यात्—तदाह । लघ्वलघूच्चारणस्येति ॥

न तु सुपीति । पर्युदासे हि सुप्सदृशे प्रत्यये एव स्यात् । एवश्चाहर्भातीत्यत्र न स्यात् । यदि तु सुब्भिन्ने शब्दे स्यात्, दीर्घाहो निदाघेत्यत्रापि स्यात् । सुबन्तेत्यर्थस्तु न । 'उत्तमैकाभ्याम्' इत्यादिनिर्देशैः सप्तमीनिर्दिष्टे प्रत्यये तदन्तविध्यभाव-

---

एवास्य प्रवृत्तिरिति भावः । वैयर्थ्यापत्तेरिति । तद्धि गार्ग्यग्रहणनिवृत्त्या लघुप्रयत्नयोरपि लोपो यथा स्यादित्येतदर्थं कृतम् । तत्सत्त्वेऽप्यर्थाधिकारमाश्रित्यालघुप्रयत्नयोरेव यदि लोपस्स्यात्तदा तद्व्यर्थमेवेति तत्सामर्थ्यात्तद्बाध इति भावः । ननु नित्यार्थमेव सर्वेषांग्रहणमस्तु, न तु ऋषिमात्रग्रहणार्थमिति नोक्तार्थलाभ इत्यत आह । विकल्पस्येति । विकल्पार्थकशाकल्यस्येत्यस्येत्यर्थः । विच्छिन्नत्वेनेति । ओतो गार्ग्यस्य, उञि च पद इत्यनयोस्तदननुवृत्तेरिति भावः । ननु उश्च इश्च वी, न वी अवी, तयोरव्योरित्यत्र वलोपार्थमेव वकारानुवृत्तिरिति फलाभावादित्ययुक्तमत आह । अव्यपर इत्यादीति । आदिना हयवरट् सूत्रस्थाव्युपधादिति भाष्यप्रयोगस्य ग्रहणम् । एवश्चात्र वकारानुवृत्तेरभावेन अव्योरित्यादौ लोपो नैवेष्ट इति भावः ॥

ननु लाघवात्पर्युदास एव कुतो नेत्यत आह । पर्युदास इति । ननु सुप्पदेन प्रत्ययग्रहणपरिभाषया तदन्तविधौ सुबन्तभिन्न इत्यर्थे अहर्भातीत्यत्र रत्वं, दीर्घाहो निदाघेत्यादौ तदभावश्च सिद्ध एवेति न प्रागुक्तदोष इत्यत आह । सुबन्तेति । निर्देशैरिति । यदि सप्तमीनिर्दिष्टेऽपि तदन्तविधिः स्यात्तदा सुपि चेत्यत्रापि तदापत्तौ दीर्घानापत्तिरिति भावः । नन्वेवमपि

ज्ञापनात्। लक्ष्यानुरोधेन क्वचित्प्रत्ययग्रहणे शब्दस्वरूपस्य विशेषणताया एवाश्रयणाच्च। अत एव 'रदाभ्यां निष्ठा' इत्यादौ न दोषः। अहरहरिति। 'नित्यवीप्सयोः इति द्वित्वम्। 'न लुमता' इति निषेधात्सुप्परत्वाभावः। गतमह्नो रात्रिरिति। केचित्तु भाष्ये आतिदेशिकस्याहोरात्रस्यैवोदाहरणात्, 'न लोपः प्रातिपदिकान्तस्य' इति सूत्रे 'न हि रूपरात्ररथन्तरेषु रौ रे वा विशेषोऽस्ति' इत्यत्र प्रायेण रात्रेति पाठाच्चेदृशानामनभिधानमेवेत्याहुः। अनन्यत्वादिति। रात्रिशब्दान्तात् समासादचि समासान्ते 'यस्येति च' इति लोपेऽपि रात्रिशब्दत्वाक्षतेरिति भावः।

---

रदाभ्यां निष्ठातो न इत्यादौ निष्ठापदेन प्रत्ययग्रहणपरिभाषया तदन्तविधौ रदाभ्यां परस्य निष्ठान्तावयवतकारस्य नत्वमित्यर्थे दृषत्तीर्ण इत्यादौ धातुतकारस्यापि नत्वापत्तिरत आह। लक्ष्यानुरोधेनेति। क्वचिदिति। पञ्चम्यन्तात्परः प्रत्ययो यत्र कार्यान्तरविधानायाश्रीयते तत्रेत्यर्थः। एवञ्च प्रत्ययग्रहणे चापञ्चम्या इति परिभाषा न्यायसिद्धा। उत्तमैकाभ्यामित्यादिनिर्देशा अपीदृशस्थले विशेषणविशेष्यभावव्यत्यास एव तात्पर्यग्राहका इति भावः। सुपि च स्यतासी ललुटोरित्यादिसप्तमीनिर्देशेषु सुपि परत इत्याद्यर्थे नियमेनावध्याकाङ्क्षायास्सत्त्वादुपस्थितधात्वङ्गयोरेवावधित्वेनान्वयात्पञ्चम्यन्तात्परत्वमस्तीति न तदन्तविधिरित्याशयः। अत एवेति। लक्ष्यानुरोधेन क्वचिद्विशेषणविशेष्यभावव्यत्यासस्याश्रयणादेवेत्यर्थः। न दोष इति। तदन्तविधिप्रयुक्त इत्यादिः। निषेधादिति। लुमत्प्रत्यये परतो य पूर्वः तत्प्रकृतिभूतः लब्धाङ्गसंज्ञकस्तदुद्देश्यकं कार्यमाङ्गमानाङ्गं वा न भवतीति तदर्थादिति भावः। केचित्त्विति। भाष्यानुयायिन इत्यर्थः। ननु न चोदाहरणमादरणीयमितिन्यायेन रात्रिशब्दपरत्वेऽपि रत्वप्रवृत्तौ न बाधकमिति नेदं भाष्यमनभिधाने मानमत आह। नलोपः प्रातिपदिकान्तस्येति। रात्रिशब्दत्वाक्षतेरिति। आनुमानिक-

अनुवादे रेफविशिष्टस्योपादानाद्रेफस्य रेफविधानं व्यर्थमत आह—विसर्गापवाद इति ॥

ढ्रलोपे ।' नायं तत्पुरुषोऽनीयरि चचारेत्यादौ च दोषापत्तेः । नापि बहुव्रीहिर्व्यधिकरणत्वात् । अतो णिजन्तात्कर्मण्यण्युपपदसमास इत्याह—ढरेफावित्यादि । भाष्ये तु व्यधिकरणबहुव्रीहिरेव दर्शितः । न चाजर्घा इत्यादौ 'सिपि धातोः' इति रुत्वस्य, लीढ इत्यादौ ढत्वादीनां, पितू राज्यमित्यादौ संयोगान्तलोपस्यासिद्धत्वात्कथं दीर्घ इति वाच्यम् । ढग्रहणेन, लणसूत्रेऽजर्घा इति भाष्यो-

---

स्थानिवद्भावेनेति भावः । एकदेशविकृतन्यायस्य तु नात्र प्रवृत्तिः, रात्रिशब्दत्वस्य परिच्छिन्नपरिमाणवृत्तित्वात् । नन्वहन्शब्दे रोऽसुपीति नित्ये प्राप्तेऽनेन विकल्पविधानं सार्थकमिति कथं विसर्गबाधोऽत आह । अनुवाद इति ॥

नन्वनीयर्यदोषः, तत्र रेफं परित्यज्य पकारादेरप्यनुबन्धुं शक्यत्वात् । उपोत्तमं रितीत्यत्राप्युपोत्तमं पितीति वाच्यमत आह । चचारेति । दोषापत्तेरिति । तत्पुरुषसमासाश्रयणेऽत्रैव स्यात् । पुना रमत इत्यादौ रोरीत्यस्यासिद्धत्वादेतन्न स्यादिति भावः । न च लक्षणप्रतिपदोक्तपरिभाषया प्रतिपदोक्तरेफलोप एवास्य प्रवृत्त्यङ्गीकाराद्रोरीति लोपविषय एवास्य प्रवृत्तिः, न त्वत्रेति वाच्यम् । आरम्भसामर्थ्यात्प्रत्यक्षसिद्धपूर्वत्रासिद्धमित्यस्य बाधकल्पनापेक्षया लक्षणप्रतिपदोक्तपरिभाषाबाधस्यैवौचित्येनात्र दोष इत्याशयात् । ननु णिजन्तात्कर्मण्यणि वृत्तित्रयकल्पनमिति गौरवमत आह । भाष्ये त्विति । व्यधिकरणबहुव्रीहिरिति । सप्तमी विशेषण इति सूत्रे सप्तमीग्रहणेन व्यधिकरणानामपि तज्ज्ञापनादिति भावः । ढग्रहणेनेति । एतच्छास्त्रदृष्ट्या ढत्वादीनामसिद्धत्वेऽत्र सूत्रे ढग्रहणस्य वैयर्थ्यापत्त्या तत्सामर्थ्यात्तद्विषयेऽसिद्धशास्त्रस्याप्रवृत्तिरिति भावः । रेफलोपविषयेऽप्यसिद्धशास्त्राप्रवृत्तौ मानं दर्शयति । अजर्घा इतीति । इदमुपलक्षणं, ढसाहचर्यात्तदप्रवृत्तेरपि । रग्रहणसामर्थ्ये-

**दाहरणेन च तत्तच्छास्त्रैकवाक्यतापन्नपूर्वत्रासिद्धमितिसूत्रस्थपूर्वग्रहणेनैतत्सूत्राग्रहणबोधनात् । अणः किमिति । अच इत्येवसिद्धमिति प्रश्नः । तृंह्व इति पाठे 'नकारजावनुस्वारपञ्चमौ' इति वृद्धोक्तेः 'अनिदिताम्' इति नलोपे तृढ इति रूपम्, अत्राग् पूर्वेणैव, व्याख्यानात् ॥**

---

नासिद्धशास्त्रबाधस्तु वक्तुमशक्यः, पुना रमत इत्यादौ तच्चारितार्थ्यात् । तत्तच्छास्त्रेति । सिपिधातोः, होढः, संयोगान्तस्य लोप इत्येतच्छास्त्रेत्यर्थः ॥

ननु हल्ङ्याबितिसूत्रस्थशब्दरत्नग्रन्थविरोधः । तत्र हि हल्ङ्यापस्सोरिति सूत्रयितुमुचितमिति मनोरमाकारेणोक्ते तत्र सुपदं तिस्योरप्युपलक्षणम् । अन्यथाऽबिभा राज्यमित्यत्र संयोगान्तलोपस्यासिद्धत्वाद्दीर्घत्वं न स्यादित्युक्तम् । इह च दीर्घं प्रति संयोगान्तलोपस्य सिद्धत्वमुच्यत इति चेदत्रोच्यते । हल्ङ्याबिति सूत्रस्थभाष्यानुरोधेन तिस्योरपि ग्रहणं कर्तव्यमित्यत्रैव शब्दरत्नकृतो निर्भरः, न त्वबिभा राज्यमित्यादौ दीर्घसिद्धिरेव तत्फलमित्यत्रापि । तदभावेऽपि ढसाहचर्येणाजर्घा इति भाष्योदाहरणेन च ढ्रलोप इत्येतदृष्ट्या संयोगान्तलोपस्य सिद्धत्वकल्पनया तत्र दोषाभावादिति । तिस्योर्ग्रहणस्यासाधारणफलं त्वभिनोऽत्रेत्यादावुत्वसिद्धिः । अन्यथा संयोगान्तलोपस्यासिद्धत्वात्तन्न स्यात् । न चात्रापि हरिवो मेदिनं त्वेत्याद्यर्थमावश्यकेन संयोगान्तलोपो रोरुत्वे, इति सिद्धत्ववचनेनैवोत्वसिद्धिरिति वाच्यम् । हरिवो मेदिनं त्वेत्यस्य छान्दसवर्णविकारेणापि सिद्धतया तदर्थमस्यानावश्यकत्वेनैतदर्थमपूर्वतादृशवचनारम्भापेक्षया तिस्योर्ग्रहणकरणमेव ज्याय इति तदाशयात् । स्पष्टं चेदं हल्ङ्याबितिसूत्रे उद्योते । दिगित्यनेन शब्दरत्नकृताप्ययमर्थस्सूचित इत्यवधेयम् ॥

**अच इत्येवेति** । अचश्चेति परिभाषया लब्धमिति भावः । **व्याख्यानादिति** । यद्यत्र परेणाण्ग्रहणं स्यात्तदा हल्रूपाणि फलाभावादुक्ततात्पर्यक-

विप्रतिषेधे । विप्रतिपूर्वात्कर्मव्यतिहारे वर्त्तमानात्सेधतेर्घञि परस्परविरोधार्थो विप्रतिषेधशब्दस्तत्र नित्यस्यावश्यकतयाऽन्तरङ्गस्य ज्ञापकादिनाऽपवादस्य वचनप्रामाण्याद् बाधकत्वे स्थिते तद्भिन्नोऽस्य विषय इत्याह । तुल्यबलेति । द्वयोः शास्त्रयोः क्वचिल्लब्धावकाशयोरेकत्र प्रयोगे युगपदसम्भवि स्वकार्यसमर्पणञ्च सः । तत्र प्रायेणैकस्य कार्यद्वययोगकृतेऽसम्भवे एतस्य प्रवृत्तिः । यथा "वृक्षेभ्य" इति । तत्र हि दीर्घैत्वयोर्युगपत्प्रवृत्तौ स्वस्वनिमित्तानन्तर्यासम्भवः ।

---

मेवाण्ग्रहणं भविष्यतीति तदभावेऽप्यचश्चेतिपरिभाषयैव तत्सिद्धिर्भविष्यतीत्येवंरूपादित्यर्थः ॥

**परस्परविरोधार्थ इति** । परस्परं प्रतिकूलं गमनमित्यर्थेऽयमर्थः फलतीति भावः । तेनासिद्धत्वविषयेऽन्यतरविरोधेऽपि परस्परविरोधाभावान्नास्य प्रवृत्तिः । ननु परस्परविरोध इत्येतन्मात्रस्यैवार्थस्य सूत्राक्षराल्लाभेन तुल्यबलविरोध इति मूलमयुक्तमित्याशङ्क्य परिशेषसिद्धं तदित्याह । **तत्रेत्यादि** । परस्परविरोध इत्यर्थः । **आवश्यकतयेति** । अक्लृप्ताभावकस्याभावकल्पनापेक्षया क्लृप्ताभावकस्यैव तत्कल्पनस्य न्याय्यत्वेनेत्यर्थः । विरोधपदार्थं दर्शयति । **द्वयोश्शास्त्रयोरिति** । **समर्पणञ्चेति** । चो वाक्यालङ्कारे । **तत्रेति** । असम्भवरूपे विरोध इत्यर्थः । **कार्यद्वययोगकृतेऽसम्भव इति** । कार्यद्वययोगकृते स्वस्वनिमित्तयोरानन्तर्यस्यासम्भव इत्यर्थः । **युगपत्प्रवृत्ताविति** । एकस्मिन्स्थानिन्यकार इति शेषः । **स्वस्वनिमित्तानन्तर्यासम्भव इति** । अत्राकारस्य स्थाने आ, ए, इति ए, आ, इति वा युगपदादेशद्वयप्रवृत्तौ स्वस्वनिमित्तयोरानन्तर्यस्यासम्भव इति भावः । ननु सर्वत्र निमित्तमुद्देश्यविशेषणमेव, न तु विधेयविशेषणम् । तस्यासिद्धत्वेन तद्विशेषणत्वायोगात् । एवञ्च विधेयनिमित्तयोरानन्तर्यस्य केनाप्यबोधितत्वेन तस्यासम्भवेऽपि न क्षतिरितीद-

**क्वचित्केवलासम्भवेऽपि, यथा 'शिष्टात्' इत्यादौ। अत्र हि तातङ्शा-**

---

मयुक्तमिति चेदत्र गुरुचरणाः। सुपि चेत्यादीनां सर्वेषामपि विधिशास्त्राणां यञादिसुबव्यवहितपूर्वत्वविशिष्टस्याजन्ताङ्गस्य दीर्घो भवति यञादिसुबव्यवहित-पूर्वत्वविशिष्टो दीर्घस्साधुर्भवति स च प्रयोक्तव्य इत्येतावत्पर्यन्तं तात्पर्येण तत्र साधुत्वविधायकवाक्ये विधेयनिमित्तयोरानन्तर्यस्य बोधितत्वेन तादृशा-नन्तर्यस्यासम्भव इत्याशयः। स्पष्टश्चेदमनन्तरे यञि दीर्घस्साधुरनन्तरे झल्येत्वं साध्वित्यर्थ इतीको गुणवृद्धी इति सूत्रस्थोद्योतग्रन्थेनेति वदन्ति। एतेन तत्तन्नि-मित्तानामावृत्त्योभयविशेषणत्वकल्पने मानाभावात्फलाभावाच्च चिन्त्यमिदमिति वदन्त औत्तराहाः परास्ताः। यदुक्तं प्रायेणेति तत्फलमाह। क्वचिदिति॥

श्रीधरास्तु डस्सि धुडित्यादावुभयनिर्देशान्निर्देशद्वयस्याप्यचारितार्थत्वेन तन्मूलकपरिभाषाद्वयस्याप्यचारितार्थ्याद्विप्रतिषेधाभावेन विप्रतिषेधे परमित्यस्य प्रवृत्तिर्न स्यादत आह। प्रायेणेतीति प्रायेणेत्यस्य फलमाहुः। एवञ्च डस्सी त्यादौ विरोधाभावेऽपि विप्रतिषेधशास्त्रप्रवृत्तिरिति तदाशयः। तदयुक्तम्। डस्सीत्यादावपि डकारात्सकारे धुडित्यर्थे तस्सिन्नित्यस्य प्रवृत्तावुपस्थितडकार-स्यागमित्वं, तस्मादित्यस्य प्रवृत्तावुपस्थितसस्य तत्त्वमित्यसम्भवरूपविरोधस्य सत्त्वात्। स्पष्टश्चेदं डस्सि धुडितिसूत्रे शब्दरत्ने। किञ्च प्रायेणेत्यस्य तादृशा-शयकत्वेऽत्र क्वचिदित्यस्यास्वारसिकत्वाच्च॥

**केवलासम्भवेऽपीति।** इको गुणवृद्धी इत्यादिसूत्रस्थभाष्यप्रामाण्यादे-कस्य कार्यिणः कार्यद्वययोगकृतासम्भवाभावेऽपि सामान्यतोऽसम्भवमादाय विप्रतिषेधशास्त्रस्य प्रवृत्तिरिति भावः॥

यत्तु वाराणसेयाः। शिष्टादित्यादौ केवलस्वस्वनिमित्तानन्तर्यासम्भवः। वृक्षेभ्य इत्यादौ तु केवलासम्भवः स्वस्वनिमित्तानन्तर्यासम्भवश्चेति वदन्ति,

भावयोर्युगपत्प्रवृत्तौ स्वस्वनिमित्तानन्तर्यासम्भवः । यद्यपि तातङादेः स्थानिवत्त्वेनास्त्येव तत्, तथाप्यतिदेश आदेशप्रवृत्त्युत्तरमेव, न तु तत्प्रवृत्तिकाले इति युगपदसम्भवोऽस्त्येवेति परत्वात्तातङि सकृद्गतिन्यायेन न शादेशः । स्पष्टश्चेदं सर्वं प्रकृतसूत्रे 'इको गुणवृद्धी' 'अदसो मात्' इत्यादावाकरे । तत्र युगपदुभयोः कार्ययोरसम्भवात्पर्यायेण तृजादिवच्छास्त्रद्वयप्रसङ्गे नियमार्थमिदम्—परमेवेति । तेन तिसृणामित्यत्र यौगपद्यासम्भवेन परत्वात्तिस्रादेशे पुनः स्थानिवत्त्वेन त्रयादेशो न । तत्पठ्यते—

---

तदयुक्तम् । वृक्षेभ्य इत्यादावकारस्य स्थाने दीर्घैत्वयोराए इति ए आ इति वा युगपत्संभवस्य सत्त्वेन केवलासम्भवस्य तदभिमतस्य तत्राभावात् ॥

हयग्रीवस्तु आदेशद्वयस्यैकस्थानिकत्वं केवलत्वं, निमित्तानन्तर्यरूपं त्वन्यदित्यनयोर्भेदमाह । तदप्ययुक्तम् । शिष्टादित्यादावादेशद्वयस्यैकस्थानिकत्वाभावेन केवलासम्भवस्य शिष्टादित्युदाहरणपरशेखरग्रन्थासङ्गतेः । केवलासम्भवस्य मेद्यतीत्युदाहरणपरेको गुणवृद्धी इति सूत्रस्थभाष्यासङ्गतेश्च ॥

ननु शिष्टादित्यादौ स्थानिवद्भावेन स्वस्वनिमित्तानन्तर्यस्य सम्भव इत्यभिप्रेत्य शङ्कते । **यद्यपीत्यादिना** । **न तु तत्प्रवृत्तिकाल इति** । भाष्यप्रामाण्यादादेशप्रवृत्तिकालिकमेव विप्रतिषेधमाश्रित्येदं प्रवर्तते, न तु तत्प्राक्कालिकं तदुत्तरकालिकं वेति भावः । **युगपदसम्भव इति** । युगपत्प्रवृत्तौ स्वस्वनिमित्तानन्तर्यासम्भव इत्यर्थः । **तत्रेति** । विरोधविषय इत्यर्थः । **यौगपद्यासम्भवेनेति** । त्रेस्त्रय इत्यनेनामव्यवहितपूर्वत्वविशिष्टत्रयादेशस्य, त्रिचतुरोरित्यनेन विभक्त्यव्यवहितपूर्वत्वविशिष्टतिस्रादेशस्य च साधुत्वबोधनेन त्रिशब्दस्य स्थाने युगपदुभयोः प्रवृत्तौ स्वस्वनिमित्तानन्तर्यासम्भवेनेति भावः । **त्रयादेशो नेति** । एतन्नियमवशेन पूर्वशास्त्रे त्रेस्त्रय इत्यादौ तिस्रादेशप्रवृत्ति-

'सकृद्गतौ विप्रतिषेधे यद्बाधितं तद् बाधितमेव' इति। यद्वा यथा तुल्यबलयोरेकः प्रेष्यो भवति स तयोः पर्यायेण कार्यं करोति, यदा तमुभौ युगपत्प्रेषयतो नानादिक्षु च कार्ये भवतस्तदोभयोर्न करोति, यौगपद्यासम्भवात्, तथा शास्त्रयोर्लक्ष्यप्रेष्ययोः क्वचिल्लक्ष्ये यौगपद्यासम्भवादप्रतिपत्तौ प्राप्तायामिदं 'परं भवति' इतिविध्यर्थम्। तत्र कृते यदि पूर्वस्यापि निमित्तमस्ति, तदा तदपि

---

योग्यतातिरिक्तत्वेन तिस्रादेशघटितातिरिक्तत्वेन च संकोचादिति भावः। सकृद्गताविति। परस्परविरोधविशिष्टयोर्द्वयोश्शास्त्रयोरेकत्र प्राप्तौ सकृदेकवारं यद्बाधितं तद्बाधितमेव, न पुनः प्रवर्त्तत इति परिभाषार्थः। एवं शास्त्रीयदृष्टान्ताश्रयणेन सकृद्गतिन्यायमुपपाद्य लौकिकदृष्टान्तेन पुनः प्रसङ्गन्यायमुपपादयति। यद्वेति। लक्ष्यप्रेष्ययोरिति। लक्ष्यार्थयोरित्यर्थः। शास्त्रयोर्लक्ष्योपकारकत्वादेवं व्यवहारः। अप्रतिपत्ताविति। अप्रवृत्तावित्यर्थः। अत्र प्रेष्यस्थानीयं लक्ष्यम्। स्वामिस्थानीये च शास्त्रे। यथा एकः प्रेष्यः परस्पराविरुद्धकार्यकरणेन चरितार्थयोः स्वामिनोर्नानादिगधिकरणकत्वेन युगपदसम्भवि कार्यद्वयं न करोति, तथान्यत्र चरितार्थयोश्शास्त्रयोर्युगपदसम्भवि कार्यद्वयं लक्ष्यं न भजतीति भावः। प्रकृतसूत्रे उद्योतकृतापि तत्र यथा एकः प्रेष्य उभयोर्न करोति, तथा प्रकृते उदाहरणरूपा व्यक्तिरुभयोरपि कार्यं नाश्रयिष्यतीत्यर्थ इति ग्रन्थेनायमेवार्थः स्फुटीकृत इति बोध्यम्। एवंस्थितेऽत्र प्रेष्यशब्दस्य यथाश्रुतार्थपरत्वमेवाश्रित्य शास्त्रयोरेव प्रेष्यस्थानीयत्वं ग्रन्थकृतोऽभिप्रेतमित्युत्प्रेक्ष्य वस्तुतस्तु भृत्यसदृशं लक्ष्यं प्रेषणक्रियासदृशी संस्कारक्रिया पर्यायेण कार्यकरणस्थानापन्नश्च शास्त्रविहितकार्यस्वीकार इत्यादिना यदाचार्याणामेतद्ग्रन्थखण्डनप्रयासः, तत्केवलं भ्रममूलकमेव व्यामोहनाय वेति सुधीभिरूह्यम्। तत्र कृते इति। परस्मिन्कृत

भवत्येव । तत्पठ्यते–'पुनः प्रसङ्गविज्ञानात्सिद्धम्' इति । यथा भिन्धीत्यत्र परत्वात्तातङि पुनर्धिर्भवति । अत्र तातङ्धिभावयोर्युगपदेकस्थानिसम्बन्धस्याङ्गरूपानिमित्तानन्तर्यस्य वा न सम्भव

---

इत्यर्थः । पुनःप्रसङ्गविज्ञानादिति । पुनःप्रसङ्गपरिज्ञानाद्बाध्यशास्त्रप्रवृत्तेर्द्वारं सिद्धमित्यर्थः । सति प्रसङ्गे बाधितमपि शास्त्रं पुनः प्रवर्तनीयमिति भावः । पुनर्धिर्भवतीति । तातङभावपक्ष इत्यर्थः ॥

अयं भावः । वाविभाषादिपदानामभावसामानाधिकरण्यमर्थः । तथा च विकल्पार्थकपदघटितेषु तुह्योस्तातङित्यादिषु भावाभावयोरुभयोरपि शब्दतो विधेयत्वलाभेन परत्वाद्धिभावं बाधित्वा तातङ्तदभावयोः प्रवृत्तावभावेन बाधितोऽपि धिभावः पुनःप्रसङ्गन्यायाश्रयणेन तातङभावपक्षे पुनरपि सिद्ध्यतीति ॥

एतेन चिन्त्यमिदम् । "भिन्तादितिरूपासिद्धेः । न च भिन्धीत्येकमेव रूपं भवति, न तु भिन्तादिति वाच्यम् । भिन्तादित्यादिसिद्धये तातङि स्थानिवत्त्वेत्वप्रतिषेधो वक्तव्यः, न वक्तव्यः । सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेवेति स्थानिवत्सूत्रस्थभाष्यवार्तिकविरोधात् । न च तुह्योरिति शास्त्रस्य वैकल्पिकत्वेन भावाभावोभयविधायकत्वात्तद्विधेयेनाभावेन धेर्बाधो मा भूदित्येवंपरतयाऽयं ग्रन्थो योजनीय इति वाच्यम् । तुह्योरितिशास्त्रस्याप्राप्तविभाषात्वेनाभावस्य सिद्धत्वात्तद्विधानासम्भवेन तत्समानाधिकरणभावस्यैव विधेयत्वात् । अन्यथा मुचोऽकर्मकस्येत्यस्यापि भावाभावोभयविधायकत्वे मुमुक्षते वत्स इत्यादावभावविधानेऽत्र लोप इत्यभ्यासलोपापत्तिरित्यौत्तराहोक्तमपास्तम् । अप्राप्तविभाषास्वभावांशस्य सिद्धतयाऽपूर्वबोध्यत्वाभावेन तत्र विधेयताविश्रान्तेरभावेऽपि शब्दतस्तस्यापि विधेयत्वबोधनेन तस्य धिभावबाधकताया वक्तुं शक्यत्वात् । अत्र लोपोऽभ्यासस्येत्यस्य व्याख्यानाद्भावरूपादेशविषय एव

इति भाष्ये स्पष्टम् । कार्ये परत्वञ्च परशास्त्रविहितत्वम् । कार्य

---

प्रवृत्त्यभ्युपगमेन प्रधानविधेयविषय एव प्रवृत्त्यभ्युपगमेन वा गुणाभावपक्षे मुमुक्षते वत्स इत्यादावभ्यासलोपस्य वारयितुं शक्यत्वाच्च ॥

यत्तु विकल्पशास्त्राणामभावेऽपि तात्पर्यं स्वीकृत्य एतद्ग्रन्थयोजनं तु न युक्तम् । विकल्पशास्त्राणामभावे तात्पर्यं हि, यस्येति संघातग्रहणं चेत्क्यस्य विभाषायां दोषो भवति । यदा लोपस्तदा सर्वस्य लोपः । यदाऽलोपस्तदा सर्वस्यालोप इति यस्य हल इति भाष्यानुरोधात्कल्प्यम् । तच्च भाष्यं सूत्रान्तरस्थानेकभाष्यविरोधादेकदेश्युक्तिरिति यस्य हल इति सूत्रे विवरणे उक्तम् । तथा च तत्र तथा वदन् शून्यहृदय इव तद्विरुद्धं कथमत्र वदेदित्याचार्यास्तन्न । प्राप्तविभाषासु भावस्य सिद्धतयाऽभावतात्पर्यकताया एव वक्तव्यत्वेनोभयत्रविभाषासूभयतात्पर्यकतायाश्च वक्तव्यत्वेन विकल्पशास्त्राणां सर्वथा अभावतात्पर्यकत्वाभावस्य वक्तुमशक्यत्वात् । अप्राप्तविभाषास्वभावतात्पर्यकताया अभावेऽपि शब्दतस्तस्यापि बोधनेन तमादाय विप्रतिषेधशास्त्रप्रवृत्तेर्वक्तुं शक्यत्वात् । क्यस्य विभाषेत्यस्य येन नाप्राप्तिन्यायेनाल्लोपबाधकतया तद्बोध्याभावांशस्य न तेन न्यायेनाल्लोपबाधकत्वं वक्तुं शक्यम् । समिध्यतीत्यादौ क्यलोपाभावस्य सत्त्वेन तत्राल्लोपप्राप्तेरभावेनाभावविषयेऽल्लोपस्य नाप्राप्तेरभावात् । द्वितीयतृतीयचतुर्थतुर्याण्यन्यतरस्यामित्यस्यापि येन नाप्राप्तिन्यायेनैव षष्ठीसमासबाधकतया न तद्बोध्याभावांशस्य तद्बाधकत्वमित्येतदभावपक्षे षष्ठीसमासप्रवृत्तिप्रतिपादनपरद्वितीयतृतीयचतुर्थतुर्याणीतिसूत्रस्थभाष्यविरोधः, यस्य हल इति सूत्रस्थोद्योतग्रन्थविरोधश्च नेति बोध्यम् ॥

ननु पूर्वत्वपरत्वयोः शास्त्रेष्वेव सत्त्वेन परं कार्यमित्यनुपपन्नमत आह । **कार्ये परत्वं चेति** । ननु परिभाषाणां कार्यकालत्व एव त्रिपाद्यां प्रवृत्तेर्ङमो ह्रस्वादचीत्यत्र तत्तल्लिङ्गवशात्तस्मिन्निति तस्मादिति परिभाषयोर्द्वयोरप्युपस्थि-

**कालपक्षेऽप्यष्टाध्यायीपाठकृतपरत्वमेव नियामकम् । अत एव 'ङमो ह्रस्वात्' इत्यादौ त्रिपादीस्थे कार्यकालपक्षे एव परिभाषयोः प्रवृत्त्या एकदेशस्थत्वेऽपि परत्वात् 'तस्मादित्युत्तरस्य' इत्यनेनैव व्यवस्थेति सङ्गच्छते । त्रिपादीस्थेन शास्त्रेण विरुद्धपरिभाषाद्वय-मध्ये परैव काल्यते आकृष्यते न पूर्वेति तत्त्वम् । सञ्ज्ञानां तु कार्यकालपक्षे प्रदेशे एव वाक्यार्थेन तद्बोधोत्तरमेव विरोधप्रति-सन्धानं कार्यज्ञानञ्चेति तत्रत्यपरत्वमेवैतत्सूत्रप्रवृत्तौ बीजम् । अत**

---

तावुभयोरप्येकदेशस्थत्वेन पौर्वापर्याभावादुभयनिर्देशे पञ्चमीनिर्देशो बलीयान् परत्वादिति तस्मिन्निति सूत्रस्थभाष्यासङ्गतिरत आह । **कार्यकालपक्षेऽपीति ।** अपिना यथोद्देशसंग्रहः । ननु कार्यकालपक्षे ङमो ह्रस्वादचीत्यत्रोपस्थितताया-स्तस्मिन्निति परिभाषाया निरवकाशत्वेन कथं तस्याः परया बाध इत्यत आह । **त्रिपादीस्थेनेति ।** एवञ्च तत्र पूर्वस्याबाधो नाम विप्रतिषेधशास्त्रबलाद्विधि-शास्त्रेणानाकर्षणमेवेति भावः । ननु कार्यकालपक्षेऽप्यष्टाध्यायीपाठकृतपौर्वा-पर्यस्यैव विप्रतिषेधशास्त्रप्रवृत्तिनियामकत्वे कार्यकालपक्षाशयकमयादिभ्यः परैव प्रगृह्यसंज्ञेत्यदसो मादिति सूत्रस्थं भाष्यं विरुद्धचेतेत्यत आह । **संज्ञानां त्विति । तत्रत्यपरत्वमेवेति ।** प्रत्यासत्त्या यद्देशावच्छेदेन विरोधप्रतिसन्धानं कार्यज्ञानञ्च, तत्रत्यपरत्वस्यैव विप्रतिषेधशास्त्रप्रवृत्तिनियामकत्वादिति भावः । तत्र च प्रगृह्यसंज्ञासूत्रस्थं भाष्यमेव मानं, परिभाषासु तदनङ्गीकारे मानन्तु प्रागुक्तं तस्मिन्नितिसूत्रस्थं भाष्यमेवेति बोध्यम् । अत्र संज्ञानां त्विति तुनाऽरुचिर्बो-धिता । तद्बीजन्तु तेषामप्यष्टाध्यायीपाठकृतपरत्वमेवैतच्छास्त्रप्रवृत्तौ नियाम-कम् । अन्यथा कार्यकालपक्षे तत्तच्छास्त्रैकवाक्यतापन्नयोर्भपदसंज्ञयोराकडारी-यत्वाभावेन समावेशापत्त्या राज्ञ इत्यादौ दोषापत्तेः । अयादिभ्यः परैव प्रगृह्य-संज्ञेत्यदसो मादिति सूत्रस्थं भाष्यन्तु प्रगृह्यसंज्ञाप्रयुक्तप्रकृतिभावस्यायाद्यपेक्षया

एव 'कार्यकालपक्षेऽयादिभ्यः परैव प्रगृह्यसञ्ज्ञा' इति 'अदसो मात्' इति सूत्रे भाष्ये उक्तम् । परिभाषाणां तु तत्पक्षे तद्देशत्वेऽपि स्वस्वदेशेऽर्थबोधोऽस्त्येवेति तासां पाठकृतमेव तदेतत्सूत्रप्रवृत्तौ नियामकमिति बोद्धव्यम् । यद्यपीयं परिभाषा तथापि कार्यग्रहणेन कार्यमात्रग्रहणात्तस्मिन्निति तस्मादितिपरिभाषयोरपि व्यवस्थापिका । कार्यकालपक्षेऽपि नैषा इक्परिभाषादिवद्विध्येकवाक्यतयाङ्गत्वात्स्वकार्यनिष्पादिका, किं तु वाक्यभेदेनैव कार्यं व्यवस्थापयति । यथा—वृक्षेभ्य इत्यत्रैत्वदीर्घत्वयोः प्राप्तयोः परमेत्वं प्रवर्तयति, एवम् 'असिद्धं बहिरङ्गम्' इत्यादयोऽपीति 'ग्वरवसानयोः' इत्यत्र कैयटे स्पष्टम् । एवञ्च विप्रतिषेध इत्येषा यथोद्देशैवेति

---

परत्वप्रतिपादनपरमिति न तद्विरोधः । कथं "कार्यकालं संज्ञापरिभाष"मितितदुत्तरभाष्यन्तु परैव प्रगृह्यसंज्ञेति भाष्यस्य निरुक्ताशयकत्वाज्ञानेन प्रवृत्तत्वादेकदेश्युक्तिः । स्पष्टञ्चेदं तत्रैवोद्योते । **परिभाषाणां त्विति** । निपातानामनेकार्थत्वादत्रत्यतुशब्दस्याप्यर्थत्वात्संज्ञानामपि स्वदेशीयत्वमेवेति सूचितम् । नन्वस्याः परिभाषात्वेन गुणानाञ्च परार्थत्वादिति न्यायेन संज्ञापरिभाषाविषयेऽनया व्यवस्था नोचितेत्यभिप्रेत्याशङ्कते । **यद्यपीति** । **कार्यग्रहणेनेति** । विप्रतिषेधे परमित्येतावतैव सिद्धे कार्यग्रहणसामर्थ्यादिति भावः । **परिभाषयोरपीति** । अपिना संज्ञानां ग्रहणं बोध्यम् । अस्याः परिभाषात्वेन विध्युपकारप्रकारमाह । **कार्यकालपक्षेपीत्यादिना** । **विध्येकवाक्यतयेति** । विधिशास्त्रेण सह पदैकवाक्यतयेत्यर्थः । **वाक्यभेदेनैवेति** । वाक्यैकवाक्यतयेत्यर्थः । प्रसङ्गादाह । **एवमिति** । **एवञ्चेति** । कार्यकालपक्षेऽपि वाक्यैकवाक्यतया विध्युपकारकत्वे चेत्यर्थः । **यथोद्देशैवेति** । कार्यकालत्वाङ्गी-

**स्थितम् । त्रिपाद्यां कार्यकालपक्षेऽप्यप्रवृत्तेः । पूर्वदृष्ट्या परावस्थानाभावादित्यन्यत्र विस्तरः । इति लोपे इति । उत्वं नित्यमिति तु न । 'भोभगो' इतिसूत्रोक्तरीत्या लोपस्याल्विधित्वात् । स्थानिवत्त्वेन तद्धर्मातिदेशोऽपि उच्चारणप्रसङ्गरूपस्थानषष्ठ्यर्थाभावेन लोपे तदप्राप्तेश्च ॥**

---

कारे फलाभावादिति भावः, तदाह । **त्रिपाद्यामिति । अल्विधित्वादिति ।** अल्मात्रवृत्तिधर्मावच्छिन्नोद्देश्यताककार्यत्वादित्यर्थः । एवञ्चातिदिदिक्षितधर्मस्याल्मात्रवृत्तित्वाभावेऽपि लोपस्थानिताया अल्त्वव्याप्यधर्मेण रत्वेनावच्छिन्नतया भोभगो इति सूत्रस्थभाष्योक्तदिशाऽनल्विधाविति निषेधाल्लोपोत्तरमुत्वाप्राप्त्या न तस्य नित्यत्वमिति भावः । अत्र लोपस्याल्विधित्वादिति ग्रन्थकृतोक्ते तत्र लोपस्येति पदमदृष्ट्वा "अल्त्वव्याप्यरत्वावच्छिन्नस्थानितानिरूपितादेशताश्रयधर्मिकारोपप्रकारीभूतरुत्वेन साक्षादवच्छिन्नोद्देश्यताकत्वादुत्वविधायकस्येत्यर्थ इत्यौत्तराहाणां विवरणं साहसमात्रमेवेति बोद्धव्यम् । कैयटादिमतेऽप्याह । **स्थानिवत्त्वेनेति । तद्धर्मेति ।** रुत्वेत्यर्थः । **उच्चारणप्रसङ्गरूपेति ॥**

अयं भावः। अनिर्धारितसम्बन्धविशेषायाः षष्ठ्याः षष्ठीस्थान इति परिभाषया स्थानपदाध्याहारेण तदनुयोगिकः सम्बन्धोऽर्थो वाच्यः। स्थानशब्दश्च प्रसङ्गवाची । प्रकृत्यर्थस्य विषयविषयिभावेन स्थानपदार्थेऽन्वयः । स्थाने इति यस्य च भावेनेति सप्तमी । तदर्थस्सत्ताज्ञाप्यसत्ता । एवञ्चेग्विषयकाहार्यज्ञानसत्ताज्ञाप्यसत्ताश्रयो यणित्यादिरीत्या बोधः । स्थानिविषयकमाहार्यज्ञानं च तदुच्चारणप्रयोजकमुच्चारणप्रयोज्यं वा सम्भवति । अर्थबोधनाय शब्दप्रयोगात् । उच्चारितस्यैव च प्रत्यायकत्वात् । एवञ्चात्र लोपे स्थानिवद्भावेन रुबुद्धावपि रुघटितेनार्थबोधनायोच्चारणप्रसक्तेरभावान्नोत्वप्राप्तिरिति ॥

एतेन चिन्त्यमिदं, वृत्तिविशेष्यतावच्छेदकतावच्छेदकताकेष्टसाधनत्व-

एतत्तदोः ॥ अनुकार्यस्वरूपभङ्गभिया कोशे इवैकशेषाभावः ।

---

प्रकारकभ्रमविषयत्वप्रकारकज्ञानीयविशेष्यतावच्छेदकावच्छिन्नविशेष्यताकेष्टसाधनत्वप्रकारकप्रमाविषयत्वप्रकारकज्ञानीयविशेष्यतावच्छेदकतावच्छेदकतारूपेऽभावरूपे ज्ञानरूपे वा स्थानपदार्थे उच्चारणस्याप्रविष्टत्वात् । किञ्च स्थानपदार्थस्योच्चारणघटितत्वे दर्भाणां स्थाने शरैः प्रस्तरितव्यमित्यादौ स्थानपदार्थत्वानुपपत्तिरिति वाराणसेयोक्तमपास्तम् । तदुक्तार्थस्य परिभाषाप्रकरणे गुरुचरणैर्निराकृतत्वात् । स्थानपदार्थस्योच्चारणाघटितत्वेऽपि वर्णविषये उच्चारणप्रसक्तेरेवाभावात् । दर्भाणां स्थाने शरैः प्रस्तरितव्यमित्यत्र दर्भाणां द्रव्यरूपत्वेनोच्चारणासम्भवाच्छ्रौतविनियोगप्रसक्तेरेव सम्भवेन तत्र स्थानपदार्थानुपपत्तेरभावाच्चेति बोध्यम् ॥

एतत्तदोरितिसूत्रे वृत्तौ च त्यदादीनीत्यनेनैकशेषप्राप्तिमाशङ्क्याह । **अनुकार्येति** । **एकशेषाभाव इति** । यत्तु चिन्त्यमिदम् । एतत्तदोरित्यनयोः त्यदादिघटकैतत्तच्छब्दबोधकत्वेऽपि त्यदाद्यर्थाबोधकत्वेन त्यदादीनां मिथस्सहोक्ताविति शास्त्रस्याप्राप्तेः । प्राधान्येन स्वीयसर्वार्थवाचकानामेव त्यदादीनां तत्र ग्रहणात् । किञ्च कोश इवेति दृष्टान्तोप्यसङ्गतः । विष्णुर्नारायण इत्यादिकोशे एकरूपावच्छिन्नस्यैकरूपावच्छिन्नसंसर्गेणैकरूपावच्छिन्नेऽन्वयबोधेच्छारूपसहविवक्षाया अभावेन "विरूपाणामिति" शास्त्राप्राप्तेरिति वाराणसेयास्तदयुक्तम् । वैयाकरणनये सर्वेषामपि शब्दानां शब्दार्थयोरुभयोरपि शक्तत्वेनात्रार्थस्य विभक्त्या सह पौर्वापर्यासम्भवाद्विशेष्यत्वाभावेऽपि प्रकारतया भानस्यावश्यमाश्रयणीयतया प्रकृते तयोः स्वीयसर्वार्थवाचकत्वाक्षतेः । शब्दस्यापि स्वीयत्वेन प्राधान्येन तद्वाचकत्वमप्यक्षतमेव । अप्येकदन्तहेरम्बलम्बोदरगजानना इत्यादिसर्वपर्यायद्वन्द्वस्थले सहविवक्षाया अवश्यमाश्रयणीयतया तत्र द्वन्द्वं बाधित्वा प्राप्तस्य तद्रीत्या सहविवक्षामाश्रित्य विष्णुर्नारायण इत्यादौ प्राप्तस्य चैकशेष-

एतत्तदोरनन्तर इत्यर्थः । तेन परमस ददातीत्यादौ न दोषः । गौणे तु न दोषः । तत्र त्यदाद्यत्वाभावेन हल्ङ्यादिलोपस्य दुर्वारत्वात् । सु इति प्रथमैकवचनमेव, व्याख्यानात् । अनञ्समासे किमिति । तस्य पूर्वपदार्थप्रधानत्वादुपसर्जनत्वात्त्यदाद्यत्वाभावेन हल्ङ्यादिलोपो दुर्वार इति प्रश्नः । उत्तरपदार्थप्रधानः स इत्युत्तरम् । सोऽचि ॥ ससिति प्रथमान्तस्य लुप्तषष्ठीकमनुकरणम् । सेमामविड्ढीति । द्वादशाक्षरपादा जगती छन्दः । स एवमुक्त्वेति । लोपेऽत्र पादापूर्तेर्न लोप इति भावः । अवधारणन्त्विति । वृद्धैर्व्याख्यात-

---

स्यैवमेव वारणीयतया कोश इवेति दृष्टान्तस्यासङ्गतत्वकथनमसङ्गतमेवेति विभावनीयम् ॥

पश्चम्यभावात्परमित्यर्थालाभेन विहितपदाध्याहारेऽनञ्समास इत्यस्य वैयर्थ्येन चानन्तर इति पदाध्याहारेण योजयति । अनन्तर इत्यर्थ इति । एवं व्याख्याने फलमाह । तेनेति । विहितपदाध्याहारेऽत्र न स्यादिति भावः । नन्वेवं व्याख्याने गौणेपि सुलोपापत्तिः । तद्वारणाय विहितपदाध्याहारे परमस ददातीत्यत्रापि सुलोपो न स्यादित्याशङ्क्य गौणे सर्वथा सुलोपो दुर्वार एवेति न तदर्थमत्र यत्नान्तरावश्यकतेत्याशयेनाह । गौणे त्विति । व्याख्यानादिति । उत्तरत्र तस्यैव सम्भवेनार्थाधिकारानुरोधादनुनासिकोकारविशिष्टस्योच्चारणाद्वेति भावः । पूर्वपदार्थप्रधानत्वादिति । अस इत्यसात्तद्भिन्न इत्याकारकबोधस्य नैयायिकैरभ्युपगतत्वादिति भावः । उत्तरपदार्थप्रधान इति । सर्वत्रारोपितत्वस्यैव नञर्थत्वेनारोपितस्स इति बोधान्नञ्समासे उत्तरपदार्थप्राधान्यमिति भावः । स्पष्टञ्चेदं मञ्जूषायाम् ॥

लुप्तषष्ठीकमिति । अन्यथा ससोचीति स्यादिति भावः । प्रभृत्यन्त एव पाद इति भ्रमनिरासायाह । द्वादशाक्षरेति । वृद्धैरिति । एवञ्च

मवधारणन्त्वित्यर्थः । बहुलेत्यादि । गमकान्तराभावादिति भावः । एवञ्च तदनुवृत्त्यैव क्वचिदप्रवृत्तौ सिद्धायामवधारणपरतया व्याख्यानं व्यर्थमिति भावः । सर्वमेतदवधारणन्त्विवति तुना सूचित- मित्यलम् ॥

॥ इति स्वादिसन्धिः ॥



---

मूलकारस्य न सम्मतमिति सूचितम् । व्यर्थमिति । विरोधायेदं व्यर्थमिति विग्रहः । शाकपार्थिवादित्वाद्रोधशब्दस्य लोपः । अवधारणपरतया व्याख्याने सोहमाजन्मशुद्धानामित्यत्रैव सास्मा अरमित्यत्रापि लोपासिद्ध्या विरोधायैवेदं व्याख्यानम् । बहुलग्रहणानुवृत्त्या क्वचिदप्रवृत्तिकथने तु न काप्यनुपपत्तिरिति भावः । तदाह । सर्वमेतदिति । इति शम् ॥

इति श्रीमद्गुरुचरणकमलसेवासंजातशेमुषीवैशद्येन श्री श्री श्री विजयनगरमहाराज
संस्कृतकलाशालाध्यापकेन व्याकरणशिरोमणिना व्याकरणस्थापकेन
पेर्युपनामक वेङ्कटेश्वर शास्त्रिणा विरचिते
गुरुप्रसादशेषे स्वादिसन्धिप्रकरणम् ॥

॥ इति स्वादिसन्धिः ॥



## II. TELUGU and SANSKRIT

### (a) CATALOGUES

**No. 11. A descriptive catalogue of the Telugu Manuscripts in the Tanjore Palace Library**—Edited by P. P. S. Sastri, M.A., Government Oriental Manuscripts Library, Madras. (Rs. 1-8-0)

### (b) CRITICISM

**No. 8. Kavithwathathwa Vicharamu** (3rd edition)-by Dr. C. Ramalinga Reddy, M.A., (Cantab) Hon. D. Litt. (Andhra), M.L.C., Vice-Chancellor, Andhra University, Waltair. (Rs. 1—8—0)

**Kona Budhareddy's Ranganatharamayanam**—Edited by Veturi Prabhakara Sastri. (in the press)

**Guruprasada and Guruprasada sesha**—Edited by Mahamahopadhyaya Kalaprapurna Tata Subbaraya Sastri, and Peri Venkateswara Sastri. (in the press).

### (c) GRAMMAR

**No. 6. Chitraprabha**—A commentary on Haridikshita's Laghusabdaratna—by B. Hari Sastri-Edited with notes by Mahamahopadhyaya Tata Subbaraya Sastri, Maharajah's Sanskrit College, Vizianagaram. (Rs. 3—0—0.)

**No. 7. Sangameswarakrodam on Jagadisa's Siddhantalakshanam**—by G. Sangameswara Sastri. (Re. 0—12—0)

**No. 15. Vaiyakarana Parijatamu**—by V. Ch. Seetharamaswami Sastri, Pandit, University College of Arts, Waltair. (Rs. 3—0—0)

### (d) LITERATURE

**No. 2. The University Lectures on Vemana**—by R. Anantakrishna Sarma, Lecturer, Maharajah's College, Mysore (Re. 0-12-0)

**No. 10. History of Sanskrit Literature—Part I,** Vedic Period (in Telugu) by M. Suryanarayana Sastri, Pandit, University College of Arts, Waltair (Rs. 2—4—0)

**No. 13. History of Sanskrit Literature—Part II** Laukic Period (in Telugu) by the same author (Rs. 2—4—0)

**No. 18. History of Telugu Language**—by Dr. C. Narayana Rao, M. A., Ph. D., L. T. Lecturer, C. D. College, Anantapur (in two volumes) Each volume (Rs. 6—0—0)

**No. 21. Vyasa Manjari or collected Essays in Telugu**—by Dr. C. R. Reddy M. A. (Cantab), M. L. C., Hon. D. Litt. (Andhra), Vice-Chancellor, Andhra University, Waltair (Rs. 1—8—0)

### (e) PHILOSOPHY

**No. 9. Andhra Mimamsa Nyaya Muktavali—(in Telugu)**—A treatise on Purva Mimamsa Darsana—by K. Gopalakrishnamma, M.A., L.T., Lecturer in Oriental Languages, Government Arts College, Rajahmundry (Rs. 1—8—0)

### (f) SCIENCE

**No. 14. Viswarupamu**—(dealing with the Physical Universe) written in popular Telugu-by K. Kondayya, M. Sc., Chemistry Department, Benares Hindu University, Benares (Rs. 2—0—0)

**No. 20. Telugu Equivalents of Technical Terms in Physics**—by A. Balankeswara Rao, B. Sc., (Hons.), Department of Physics, J. V. D. College of Science and Technology, Waltair (Re. 0—12—0) (Inclusive of postage).

**Text book on Zoology and Physiology** (in Telugu)—by R. V. Seshaiya, M.A., Annamalai University, Annamalainagar. (in the press)

**Text book on Trigonometry**—(in Telugu) by K. Rangachari, M.A., B.L., M. R. College, Vizianagaram. (in the press)

NOTE :—Copies of the above publications can be had either from the Registrar or from any leading book-sellers.